श्रीः

# जयतितरां मुनित्रयम्.

विदितमेतदशेषाणां विदुषां यदेतव्द्याकरणं नाम वाक्कालुष्यापनयने कतकबीजायत इति। एकस्य शब्दस्यापि यथावत्परिज्ञानेन स्फोटब्रह्मप्राप्तिरप्युक्तात्रैव भाष्यकारादिभिः। व्याकरणविषयेऽनेके ग्रन्था उपलभ्यन्ते। तत्र चैतत्सारस्वतं नाम प्रायश उदीच्यविषयेषु बहुशः प्रचलति। एतच्च सटीकं केवलं च बहुशो बहुभिरङ्कितं प्रथितं च सर्वत्र। चन्द्रकीर्तिटीकासंवलितोऽस्य पूर्वार्धोऽपि नूत्नतयैकेन प्राकाशि। इयं चन्द्रकीर्तिप्रणीता टीका छात्राणामतीवोपकारिणी। यतोऽत्र सूत्रस्थानामन्येषां च शब्दानां यावत्प्रयोजनं साधनिका विशदतयाकारि। अध्येतृभिरेषा प्रतिपदं निरीक्षिता चेदल्पायासेन महतेऽर्थलाभाय स्यात्। इत्याद्यालोच्यैतत्पुस्तकमस्माभिः प्रादुरकारि। अत्र च सारस्वतमूलपाठं स्थूलाक्षरैरवतार्य तदधश्चन्द्रकीर्तिटीका सूक्ष्माक्षरैरवतारिता। विषमपदबोधिनी टिप्पणी च तदधः सूक्ष्मतराक्षरैः स्थापिता। अङ्कितपूर्वे पुस्तके चन्द्रकीर्तिटीकायाः पूर्वार्ध एवोपलभ्यते। परमस्माभिः सा समग्रा समगृह्यत। एतत्परिशोधनं च यावच्छक्यं निपुणया दृशाकारि। छात्राश्चैतदभ्यस्य वाङ्मयं परिज्ञाय सफलीकुर्वन्त्वस्मदभिलषितम्। यदत्रावद्यमपतत्तच्च सुधीभिः क्षन्तव्यमित्यलं बहुना।

| | |
|---|---|
| मोहमयी. शुद्धा सप्तमी श्रावणस्य बुधवासरः शकाब्दाः १८१२ } | संस्कर्ता दामोदराचार्यः |

# अथास्य ग्रंथस्यानुक्रमणिका.



इत्यनुक्रमणिका.

अथ

# सारस्वतं प्रारभ्यते.



### श्रीगणेशायनमः ।

**प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ॥**
**सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥ १ ॥**

नमः श्रीविघ्नराजाय ॥ नमोऽस्तु सर्वकल्याणपद्मकाननभास्वते ॥ जगत्रितयनाथाय पराय परमात्मने ॥ १ ॥ नमः श्रीगुरवे चारुबुद्धये दत्तसिद्धये ॥ मतिमदानशीलायै सरस्वत्यै नमो नमः ॥ २ ॥ अथ श्रीमत्परमहंसपरिव्राजकाचार्यः श्रीमाननुभूतिस्वरूपो निःशेषविघ्नसङ्घातशान्त्यर्थं सत्स्वपि देवेष्वपरेष्वैहिकामुष्मिकफललिप्सुस्तांश्च फलदानाक्षमानपास्य भगवन्नमस्कृतिपूर्वकं सारस्वतीं प्रक्रियां चिकीर्षुः सरस्वतीदत्तवर आदावेव प्रस्तावनाश्लोकमाह **प्रणम्येत्यादि** । अथैतस्य साधनापूर्वं व्याख्यालेशः प्रारभ्यते । णम् प्रह्वीभावे, णम् । **आदेः ष्णः स्नः** । नम् प्रपूर्वः । **समासे क्यप्** । इति क्यप्प्रत्ययः । स्वरहीनं परेण संयोज्यम् । **प्रादेश्च तथा तौ सुनमाम्** । इति नकारस्य णकारः । प्रथमैकवचनं सि । **अव्ययाद्विभक्तेर्लुक्** । इति सिलोपः । प्रणम्येति सिद्धम् । अग्रे, परमात्मानम्, परा प्रकृष्टा मा लक्ष्मीः कान्तिर्वा यस्य स परमः, यद्वा परैर्योगिभिर्मीयते ज्ञायते इति परमः, यद्वा परान् शत्रून् रागद्वेषादीन् मिनाति हिनस्तीति परमः, यद्वा मा मानं ज्ञानं । परं प्रकृष्टं मा ज्ञानं यस्य स परमः । अत सातत्यगमने । अतति सातत्येन गच्छति तांस्तान् भावानित्यात्मा । **अतिवाहिभ्यां मनिण्** । इति मनिण् प्रत्ययः । मनो णित्त्वात् आदिस्वरस्य ञ्णिति वृद्धिः परमश्चासावात्मा च परमात्मा तं परमात्मानम् (द्वि.ए.) अम् । **नोपधायाः** । इति दीर्घः । त्म इत्यस्य त्मा । स्वरहीनं० । **मोऽनुस्वारः** । परमात्मानं । अग्रे, बालधीवृद्धिसिद्धये कलू वलू कामधेनु वल् । वलंति दीव्यंति गृहेष्विति वालाः, यद्वा वलंति चलंति दुर्व्रतेति वालाः । ज्वलादेर्णः णप्रत्ययः । **अतउपधायाः** । इति वृद्धिः वङ्त्यस्य वा । स्वरहीनं० । अग्रे । ध्यै चिन्तायाम् । ध्यायत इति धीः । **क्विप्** । इति क्विप् प्रत्ययः । सि । ध्यायतेः क्विपि संप्रसारणम् । ध्यै इत्यस्य धी, क्विप्, सर्वापहारी लोपः, धी इति

सिद्धम्।अग्रे, वृध् वर्धने वर्धनं वृद्धिः स्त्रियां भावे क्तिः।इति क्तिप्रत्ययः ति । तथोर्धः ।ति स्थाने धिः।झबे जबाः। इति धस्य दः स्वर०।अग्रे,षिधू माङ्गल्ये।षिध्। आदेः ष्णः स्नः । सिध् सेधनं सिद्धिः क्तिप्रत्ययादिकं प्राग्वत् । शब्दापशब्दानभिज्ञा बाला ननु स्तनन्धयाः, यद्वा अधीतान्यशास्त्रा अप्यनभ्यस्तशब्दशास्त्रा बालाः । सर्वशास्त्रेषु शब्दशास्त्रं प्रधानं । यतः, ' अनधीत्य शब्दशास्त्रं, योऽन्यच्छास्त्रं समीहते मूढः । सोऽहेः पदानि गणयति, निशि तमसि जले चिरगतस्य ' । इति वचनात्, धियो वृद्धिः धीवृद्धिः तेषां बालानां या धीवृद्धिः बुद्धेर्वृद्धिः तस्याः सिद्धिः बालधीवृद्धि सिद्धिस्तस्यै बालधीवृद्धिसिद्धये चतुर्थ्येकवचने ए ङिति द्धिइत्यस्य द्धे एऽय् स्वर० बालधीवृद्धिसिद्धये। अग्रे।सारस्वतीं सृगतौ सृ ।वचादेरस् । गुणः स्वर० सरः प्रसरणं मुखे ऽस्त्यस्या इति । अस्त्यर्थे मतुः । इति मतुः ततः । मान्तोपधा द्रुतिवनौ।इति मकारस्य वः वत्। क्वितः इति ईप् स्वर० ततः, सरस्वत्या प्रणीतानि सूत्राणि सारस्वतानि ततः सारस्वतेभ्यः सूत्रेभ्यो जाता सारस्वती। कारका क्रियायुक्ते। इति अण् प्रत्ययः अ आदिस्वरस्य ञ्णिति वृद्धिः सइत्यस्य सा। यस्य लोपः । इति ईकारलोपः स्वरहीनं०अण ईप्।इति ईप् प्रत्ययः।यस्य लोपः।स्वर० ( द्वि.ए. ) अम् अम्शसोरस्य लोपः सरस्वतीप्रणीतानि सूत्राणीति युक्त्या वृद्धाच्छ इति पाणिनीयछप्रत्ययस्य संभवाच्छस्य ईयादेशः तदा सारस्वतीया इति भवति । तेन सरस्वत्या प्रणीता या सा सारस्वती तां सारस्वतीमित्येके । अग्रे ऋजुं (द्वि.ए. ) अम्शसोरस्य । इत्यकारस्य लोपः । मोऽनुस्वारः डुकृञ् करणे । कृञ् आत्मनेपदे वर्तमानादुत्तमपुरुषैकवचनं ए । तनादेरुप् । इति उप् प्रत्ययः ।उ गुणः कर् स्वरहीनं० करु । ङित्यदुः । क इत्यस्य कु । उर्व । राचपोद्विः जलतुम्बि- का० स्वर० पुनः डुकृञ् करणे प्रपूर्वः । प्रक्रियन्ते व्युत्पाद्यन्ते साध्यन्ते शब्दाः अनयेति प्रक्रिया सदोणादय इति अप्रत्ययः ।अपक्विकृ इत्यस्य क्रि। नुधातोःइति इय् क्रिय् स्वर०।आवन्तः स्त्रियां सवर्णे तां प्रक्रियां (द्वि.ए.) दीर्घः अम्।अम्शसोरस्य । मोनुस्वारः । कृञिर्यापजाभावे । कृञोवारिङ् । क्रिया कृत्याः अथवा शान्ताः क्रियादयः शान्ता निपात्याः प्रक्रियायां तु कृञः श च कृञो भावादौ शः स्यात् क्यप् च स्त्रियां शित्त्वात् भावे यक् रिङादेशः प्रपूर्वः प्रक्रिया। अग्रे, स्तृ विस्तारे स्तृ विपूर्वः विस्तरतीति विस्तरः। पचनन्दिग्रहादेरयुणिनि । अप्रत्ययः गुणस्तर स्वर० अतिपूर्वः अतिविस्तरः नञ्पूर्वः न विद्यते अतिविस्तरः शब्दबाहुल्यं यस्यां सा नातिविस्तरा तां नातिविस्तरान् नातिविस्तरामित्यत्र नाकादित्वात् नञोऽना-

देशप्रतिषेधः। यद्वा केचित्तु बहुव्रीहौ नञोऽनादेशमेव नेच्छन्ति । सवर्णे० आवत-स्त्रियां आप् प्रत्ययः सवर्णे० ( द्वि.ए. ) अम् । अमृशसोरस्य । मोनुस्वारः। इति प्रथम श्लोकसाधना ॥ अथ व्याख्या ॥ प्रणम्य १ परमात्मानं २ बालधीवृद्धिसिद्ध ये ३ । सारस्वतीम् ४ ऋजुं ५ कुर्वे ६ प्रक्रियां ७ नातिविस्तराम् ८ एवमस्मिन् श्लोकेऽष्टौ पदानि सन्ति । अथान्वयः । अहमनुभूतिस्वरूपाचार्यः सारस्वतीं प्रक्रियाम् ऋजुं सरलां कुर्वे विदधे, लोकप्रसिद्धशब्दव्युत्पादनार्थम् ईषद्रचयामी-त्यर्थः । कुर्वे इत्यत्र पठनपाठनादुत्पन्नस्य पुण्यरूपफलस्य कर्तृगामित्वादात्मनेपद-प्रयोगो युक्त एव। किंनामधेयां प्रक्रियां सारस्वतीं सरस्वतीप्रणीतसूत्रसम्बन्धिनी मित्यर्थः। ननु शास्त्रादौ मङ्गलाचरणं विना शास्त्रसमाप्तिर्न स्यादत आह । किं कृ-त्वा, परमात्मानं परमेश्वरं प्रणम्य प्रकर्षेण कायवाङ्मनोभिर्नत्वा परमात्मनि न मस्कृते सर्वेऽपि देवा नमस्कृताः स्युः, यतः, ' यथातरोर्मूलनिषिञ्चनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ॥ प्राणोपहाराच्च यथेन्द्रियाणि तथैव सर्वार्हणमच्युतेज्यया ॥ १ ॥ इति। तथा च प्रशब्दस्य माङ्गलिकार्थत्वात् आदौ प्रयोगः।यतः, 'प्रशब्द-श्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कंठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावु-भौ ॥ १ ॥ इति । ननु प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते। अतः प्रक्रियाया ऋजुकरणे किं प्रयोजनमित्यत आह । कस्यै बालधीवृद्धिसिद्धये,सत्स्वपि महाभा-ष्यादिषु तेषां गहनत्वेन बालानां सम्यगप्रबोधात् स्वल्पबुद्धीन् जनांस्तेषु चा-नादरं कुर्वाणान् संभाव्येमां प्रक्रियां वैयाकरणजनबुद्धिवर्धननिष्पत्त्यर्थं कुर्वे इत्य-र्थः। चिकिर्षितायामपि प्रक्रियायां वक्रत्वकरणे भूयांसो जना निरादरा बोभू-यंते तन्निरासार्थमाह।ऋजुमिति। सरलामित्यर्थः।सरस्वतीदत्तसूत्राणां क्रममुत्सृज्य प्रयोगसाधनार्थं यत्र तत्र स्थितानां सूत्राणामनुक्रमप्रमेलनेन ऋजुं सरलां कुर्वे इत्य-र्थः। ऋजुरपि प्रक्रिया विस्तरबाहुल्यादध्येतुमशक्या, अत आह। नातिविस्तरां। विस्तरः शब्दबाहुल्यं तेन रहितां स्वल्पग्रन्थां प्रचुरार्थामित्यर्थः । एतावता स-र्वाण्यपि सूत्राण्यादाय उदाहरणसाधनार्थं बालव्युत्पत्त्यर्थं च दीपिकाकल्पामि-मां प्रक्रियां कुर्वे इति भावः। अत्र बालधीवृद्धिः प्रयोजनं १ । शब्दा विषयाः २ । अधिकारिणो बालाः । ३ । प्रतिपाद्यप्रतिपादकभावः संबंधः ४ ॥ इति प्रथमश्लो-कस्य व्याख्या ॥ १ ॥

॥ इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः॥
॥ प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम्॥२॥

ननु विस्तरः कथं निरस्त इत्याशंकानिवारकं स्वगर्वापहारसूचकं च द्वितीय-

श्लोकमाह इन्द्रादयइति। अथैतस्य साधना। इदि परमैश्वर्ये इन्दति ईष्टे इतीन्द्रः। इदिचदिशकिरुदिभ्यो रः।इद् अग्रे रप्रत्ययः इदितो०इति नुमागमः इ अग्रे न् । नस्यापदांते झसे। इति नकारस्यानुस्वारः स्वर० अग्रे,डुदाञ् दाने दा आङ्पूर्वः आदीयतइत्यादि० नट्की इत्यादिकिप्रत्ययः। इ आतोनपि इत्याकारलोपः स्वर०सवर्णे०इन्द्र आदिर्येषां तेइन्द्रादयः(प्र. ब.)जस् एओजसि दि इत्यस्य दे ए अय् स्वर० । स्रो० । इन्द्रादयः । अग्रे, अपि ( प्र. ए.) अव्ययात् सिलोपः यद् ( ष. ए. ) त्यदादेष्टेरः स्यादौ । इति यद् इत्यस्य यः। ङस्स्य । अग्रे, अंतः अम् अमृशसोरस्य । मोऽनुस्वारः । अग्रे, न ( प्र. ए. अव्ययाद्वि० । अग्रे, या प्रापणे या परोक्षप्रथमपुरुषबहुवचनं उस् । द्वित्व, द्वित्वं या या उस् इति स्थिते ह्रस्वः पूर्वयास्थाने यः। आतोनपीत्याकारलोपः । स्वर० स्रो०। अग्रे । शब्दवारिधेः । शप् आक्रोशे शपति आक्रोशति जिह्वामिति शब्दः। उणादिषु दप्रत्ययः। चपा अबे जबाः इति पस्य बः स्वर० स्रो० अग्रे, डुधाञ् धारणपोषणयोः धा वारिपूर्वः। वारि धीयते यत्र स वारिधिः उपसर्गकर्माधारेषु दाधोः किः। इति किप्रत्ययः इ अतोनपीत्याकारलोपः स्वर० शब्दानां वारिधिः शब्दवारिधिः ।यद्वा शब्दा एव वारीणि धीयन्ते अस्मिन्निति शब्दवारिधिः (ष.ए.) ङिति धि स्थाने धे । ङस्य इत्यकारलोपः स्रो० अग्रे, प्रक्रियां ( द्वि. ए. ) अम् । अमृशसोरस्य। अग्रे तद् त्यदादेष्टे० ङस् स्य । अग्रे कृत्स्नस्य (ष. ए.) ङस्स्य।अग्रे, क्षमू सामर्थ्ये क्षम् क्षमते इति क्षमः पचिनंदिग्रहादेरयुणिनि अप्रत्ययः स्वर० स्रो०। वच् परिभाषणे वच्। तुम् तदर्थायां भविष्यति ।इति तुम् प्रत्ययः, चोःकुः, स्वर० ( प्र.ए ) अव्यय० ।अग्रे, नॄ विक्षेपे नॄ स्रियते विक्षिप्यते कामादिभिः नरः। स्वरादेः अप्रत्ययः गुणः नर् स्वर० (प्र.ए.) स्रो०। अग्रे किम् (तृ.ए.) टा आ। तत्रादिर्गणो विभक्त्यर्थे निपात्यते इति विभक्तिसहितस्य किम् इत्यस्य कथं इति निपातः। इति द्वितीयश्लोकसाधना॥अथ व्याख्या॥ इन्द्रादयोऽपि० । इन्द्रादयः १ अपि २ यस्य ३ अन्तं ४ न ५ ययुः ६ शब्दवारिधेः ७ ॥ प्रक्रियां ८ तस्य ९ कृत्स्नस्य १० क्षमः ११ वक्तुं १२ नरः १३ कथम् १४ ॥ एवमस्मिन् श्लोके चतुर्दश पदानि ॥ अथान्वयः। इन्द्रादयोऽपि देवा अथवा इन्द्रादयोऽष्टौ महाव्याकरणकर्तारोऽपि यस्य शब्दवारिधेः शब्दसमुद्रस्य अन्तं पारं न ययुर्न प्रापुः तस्य कृत्स्नस्य समग्रस्य शब्दवारिधेः प्रक्रियां शब्दव्युत्पादनविधां वक्तुं नरः मल्लक्षणो मनुष्यः कथं क्षमः कथं समर्थो भवति, अपितु न समर्थो भवतीत्यतः कारणात्संक्षेपतः कथयामीत्यर्थः। इन्द्र आदिर्येषां ते इन्द्रादयः, यतः, ' इन्द्रश्चन्द्रः काश

कृत्स्नापिशलीशाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥ १ ॥
इति द्वितीयश्लोकस्य व्याख्या ॥ २ ॥

## तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ॥

अथ प्रथमं संज्ञाप्रक्रियायां विवक्षितायां संज्ञाव्याख्यानसूचिकां फक्किकामाह **तत्रतावदिति** । तत्र तस्यां सारस्वतीप्रक्रियायां तावत् आदौ प्रथममेव स्वरादीनां संज्ञा नाम संगृह्यते । कस्मै संव्यवहाराय सम्यक् शास्त्रव्यवहाराय शास्त्रं हि संज्ञां विना न सम्यगवबुध्यते, यथा किल लोकेऽपि श्रूयते; अयं राजा, अयममात्यः, अयं देवदत्तः, अयं यज्ञदत्तः, इत्यादि, तथात्रापि समानादिसंज्ञा शास्त्रव्यवहाराय संगृह्यत इति भावः । तत्र मातृकायां प्रथमं पठितत्वात् प्रथमं स्वराणामेव संज्ञामाह । सूत्रम् ।

## अइउऋऌसमानाः ।

**अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते । तेषां समानसंज्ञा च विधीयते । नैतेषु सूत्रेषु संधिरनुसंधेयोऽविवक्षितत्वात् । विवक्षितस्तु संधिर्भवतीति नियमात् । लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च ॥**

अश्च इश्च उश्च ऋश्च ऌश्च अइउऋऌ (प्र. ब.) साङ्केतिकत्वाज्जस्लोपः यतः 'सूत्रे विभक्तिर्नैवास्ति वृत्तौ यत्रोपलभ्यते ॥ एकत्वं च बहुत्वं च तत्साङ्केतिकमुच्यते ॥ १ ॥' समानाः, समानं मानं तुल्यं परिमाणं येषां ते समानाः (प्र. ब.) सवर्णदीर्घः । यद्वा । अ इ उ ऋ ऌ इति प्रत्येकं प्रथमैकवचनान्तानि साङ्केतिकानि पञ्चैव भिन्नानि पदानि समाना इति प्रथमाबहुवचनान्तम् एवं षट्पदमिदं सूत्रं षट्पदत्वमेव युक्तं यतः ' संहितैकपदे नित्या नित्या धातूपसर्गयोः ॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥ ' इति । यद्यपि अइकौ च मत्वर्थे इत्यादौ च समासेऽपि सन्धिर्न तथाप्यसावैत्रिकोयं विधिरिति । क्वचित्तु एकाविति सन्धिरेव दृश्यते । एतत्सूत्रं कार्यद्वयविधायकं वर्णपरिगणनानिरूपकं समानसंज्ञानिरूपकं चेत्यर्थः । तदेवाह । **अनेनेति ।** अनेनोक्तवक्ष्यमाणसूत्रसमुच्चयेन प्रत्याहारग्रहणाय वर्णा अक्षराणि परि सामस्त्येन गण्यन्ते संख्यायन्ते परिपाट्या प्रकाश्यन्ते, च पुनस्तेषां पूर्वोक्तानाम् अइउऋऌ अक्षराणां समानसंज्ञा समानइति नाम विधीयते क्रियतेऽथवाऽभिधीयते कथ्यते ननु पंचानामकारादीनां न्यासवैसदृश्ये कथं समानसंज्ञा संजाघटीतीत्यप्रोच्यते ।

एकमात्रत्वेन समानत्वमेतेषाम् । ननु अ इ उ ऋ ऌ इत्यादिसूत्रेषु सन्धिः कथं न कृतस्तत्राह **नैतेष्विति** । एतेषूक्तवक्ष्यमाणसूत्रेषु संधिर्नानुसन्धेयो न कर्तव्यः, कस्मात् अविवक्षितत्वात् वक्तुमिष्टो विवक्षितः, यद्वा वक्तुमिच्छा विवक्षा, विवक्षा जाता यस्येति विवक्षितः न विवक्षितोऽविवक्षितः तस्य भावोऽविवक्षितत्वं तस्मादविवक्षितत्वात् वक्तुरवाञ्छितत्वात् । हेत्वन्तरमाह **विवक्षितास्त्विति** । तु पुनर्विवक्षित एव सन्धिर्भवति नाविवक्षित इति नियमात् गुर्वाम्नायनिश्चयात् यत्र सन्धौ कृते कार्यभ्रंशो भवति सोऽविवक्षितः सन्धिः यथा अ इ उ ऋ ऌ । यत्र च सन्धौ कृते कार्यसिद्धिर्भवति स विवक्षितसंधिः ईच ऊच एच य्वे इत्यादि । पुनर्निषेधहेतुमाह **लौकिकेति** । लोक्यन्ते विलोक्यन्ते शब्दापशब्दा अनेनेति लोको व्याकरणं लोके भवा लौकिका अनादिसिद्धास्ते च ते प्रयोगाश्च लौकिकप्रयोगास्तेषां निष्पत्तिः सिद्धिस्तस्यै लौकिकप्रयोगनिष्पत्तये समयमात्रत्वात्सूचनामात्रकृतत्वात् विभक्त्यादिसंकेतरूपत्वात् शास्त्रस्येति सन्धिर्न कृतः च शब्दो हेत्वन्तरसूचकः । अत्र केप्याहुः । **लौकिकेति** । लौकिका बालास्तेषां प्रयोगनिष्पत्तिस्तस्यै सूचनमेवोक्तमत्रास्तीति भावः । अस्य व्याकरणस्य संकेतरूपत्वाद्विभक्त्यनुपलम्भेऽपि अर्थानुसारेण सांकेतिकं पदं व्यवहर्तव्यं, कृते हि सन्धिकार्ये अय्वृतइति पदं भवति, तत्पाठे मन्दबुद्धयो जनाः सायासा जायन्ते, यकारादीनां च स्वरसंज्ञाप्रसक्तिर्भवति, अतोऽत्र संधिर्न कृतः॥ १ ॥ अथैतानेव भिन्नतया विवृण्वन्नाह **ह्रस्वेति** ।

**ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ।**

**एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । लोकाच्छेषस्य सिद्धिरिति वक्ष्यति।ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्याः । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । व्यञ्जनं चार्धमात्रकम् ॥**

ह्रियते दीर्घापेक्षयेति ह्रस्वः, दृणाति विदारयति उच्चार्यमाणो मुखमिति दीर्घः प्लुवते लंघते ह्रस्वदीर्घाविति प्लुतः, ततो ह्रस्वाश्च दीर्घाश्च प्लुताश्च ह्रस्वदीर्घप्लुतास्ते च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः ( प्र.ब. ) सवर्णे० स्रो० सदृशा वर्णाः सवर्णाः ( प्र.ब. ) सवर्णे० स्रो० ।

---

१ अल्पकालसापेक्षो भवति ।

एतेषां समानानां ह्रस्वदीर्घप्लुतभेदाः परस्परमन्योन्यं सजातीयेन सह सवर्णा भण्यन्ते कथ्यन्ते। यथा अ १ ह्रस्वः, आ २ दीर्घः, आ ३ प्लुतः, इ १ ह्रस्वः, ई २ दीर्घः, ई ३ प्लुतः, उ १ ह्रस्वः, ऊ २ दीर्घः, ऊ ३ प्लुतः, ऋ १ ह्रस्वः, ॠ २ दीर्घः, ॠ ३ प्लुतः, ऌ १ ह्रस्वः, ॡ २ दीर्घः, ॡ ३ प्लुतः एतेषां समानामेव सवर्णत्वं नतु सन्ध्यक्षराणां तेन हरे ए इत्यत्र। सवर्णे दीर्घः सह इति न भवति। ननु सरस्वतीदत्तसूत्रेष्वनुक्तं ह्रस्वादीनां लक्षणं कुतो ज्ञायते इत्यत आह लोकादित्यादि। शेषस्य इह व्याकरणे अनुक्तस्य सिद्धिर्निष्पत्तिर्लोकादन्यव्याकरणाज्ज्ञेया, लोकाद्गुरुपारंपर्याद्वाऽवगंतव्येति शेषः। अस्य ग्रन्थस्यान्ते इति पदं वक्ष्यति कथयिष्यति। तत इति। ततस्तस्मात्कारणाल्लोकतोऽन्यव्याकरणादेव ह्रस्वादिसंज्ञा ज्ञातव्या॥तथाहि लोकोक्तमेव ह्रस्वादीनां लक्षणमाह।

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते॥
त्रिमात्रस्तु प्लुतो ज्ञेतो व्यञ्जनं चार्धमात्रकम्॥
चाषस्त्वेकां वदेन्मात्रां द्विमात्रं वायसो वदेत्॥
त्रिमात्रं तु शिखी ब्रूयान्नकुलश्चार्धमात्रकम्॥

एका मात्रा उच्चारणकालविशेषो यस्य स एकमात्रो ह्रस्व उच्यते 'मात्रा कालविशेषः स्यात्, (इत्यभिधानम्), द्विमात्रो दीर्घः द्वे मात्रे उच्चारणकालविशेषौ यस्य स द्विमात्रो दीर्घः। तिस्रो मात्रा उच्चारणकालविशेषा यस्य स त्रिमात्रः प्लुतः। अर्धमात्रायां भवम् आर्द्धमात्रकं व्यञ्जनमुच्यते। केचिद्व्यञ्जनं चार्द्धमात्रकमिति नोच्चरन्ति व्यंजनस्यात्रानधिकारित्वात्। यतः 'चाषो वदत्येकमात्रां द्विमात्रं वायसो वदेत्। त्रिमात्रं च शिखी ब्रूयान्नकुलश्चार्द्धमात्रकम्, इति॥ किमेतावन्त एव भेदा इत्याशंक्याह।

एषामन्येऽप्युदात्तादिभेदाः सन्ति। उच्चैरुपलभ्यमान उदात्तः। नीचैरनुदात्तः। समवृत्त्या स्वरितः। स पुनः सानुनासिको निरनुनासिकश्च।

एषां समानानां ह्रस्वादिभिन्नानामप्यन्येऽपि लोकगम्या उदात्तादयः 'उदात्तः १ अनुदात्तः २ स्वरितः ३ इति, त्रयो भेदाः सन्ति। उदात्तादीनां लक्षणमाह उच्चैरित्यादि। वेदपाठकरन्यासे उच्चैःस्थाने उपलभ्यमानः उच्चार्यमाणो वा

१ भाष्यमाणः।

उदात्तः प्रोच्यते। नीचैः स्थाने उच्चार्यमाणोऽनुदात्तः । नोच्चैर्न नीचैरिति समवृत्त्या स्वरितः। उदात्तादीनां तु प्रयोजनं वेदेष्वेव, अत्र तु प्रसंगादुक्तं[1] । मुखनासिकाभ्यां कृत्वा उच्चार्यमाणो वर्णः सानुनासिकः, तद्विपरीतो निरनुनासिकः, निर्गता नासिका उच्चारणकाले यस्मात्स निरनुनासिकः किंतु केवलेन मुखेनैवोच्चार्यमाण इत्यर्थः । सानुनासिको निरनुनासिकश्चेति पदे क्वचिन्न दृश्येते अनयोरत्र लक्षणस्यानुक्तत्वात् । अथैतेषां समाहारकथनम् । यथा पंच समाना ह्रस्वदीर्घप्लुतभेदात् पंचदश तेऽप्युदात्तानुदात्तस्वरितभेदात् पंचचत्वारिंशत् भवन्ति ते च सानुनासिकनिरनुनासिकभेदान्नवतिः । एवं नवतिर्भेदाः समानानां ॥

## एऐओऔ संध्यक्षराणि ।

## एषां ह्रस्वा न सन्ति ।

द्विपदमिदं सूत्रम् । एऐओऔ सांकेतिकत्वाज्जसो लोपः । यद्वा ए ऐ ओ औ सांकेतिकानि चत्वारि पदानि । सन्धावक्षराणि । सन्ध्यक्षराणि यद्वा समानानामेव सन्धिना कृत्वा एषां निष्पत्तिः । यथा अकारेकारयोगे एकारः । अकारैकारयोगे ऐकारः । अकारोकारयोगे ओकारः अ ओ योगे औ यद्वा समानानां व्यंजनानां च सन्धौ मध्ये वर्तन्त इति सन्ध्यक्षराणि इति सन्ध्यक्षरसिद्धिः । सन्ध्यक्षर (प्र.व.)जश्शसोःशिः, इ। नुमयमः । इकारात्पूर्वं नकारागमः । नोपधायाः रस्य स्थाने रा पुर्नोणाऽनन्ते । स्वर० ए ऐ ओ औ एतानि चत्वार्यक्षराणि सन्ध्यक्षरसंज्ञानि भवन्ति, ततश्च एषां संध्यक्षराणां ह्रस्वभेदा न भवन्ति दीर्घप्लुता भवन्ति परं सवर्णत्वं न, एतेषां अष्टचत्वारिंशद्भेदा भवन्ति ४८ । यथा चतुर्णां सन्ध्यक्षराणां दीर्घप्लुत भेदात् अष्टौ, तेषां चाष्टानां प्रत्येकमुदात्तानुदात्तस्वरितभेदाच्चतुर्विंशतिः, तेषां च सानुनासिकनिरनुनासिकभेदादष्टचत्वारिंशदिति ॥ ३ ॥ अथ समानसन्ध्यक्षराणां मिलितानां संज्ञामाह । सूत्रम् ।

## उभये स्वराः ।

## अकारादयः पञ्च एकारादयश्चत्वारश्चोभये स्वरा उच्यन्ते । अइउऋऌ एऐओऔ ॥

द्विपदं सूत्रं। उभौ अवयवौ येषां ते उभये उभय(प्र.व.)जसी । अ इ ए। स्वर० स्वय मनाश्रितत्वेन राजन्ते शोभन्ते इति स्वराः । सवर्ण० अकारादयः पञ्च अ इ उ ऋ

---

१ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः ।

लृ चत्वार एकारादयश्च ए ऐ ओ औ एते उभये मिलिता नव संख्याः स्वरा उच्यन्ते कथ्यन्ते दीर्घभेदमेलने चतुर्दश स्वरा भवन्ति यथा अ आ इ ई उ ऊ ऋ ॠ लृ लॄ ए ऐ ओ औ। केचित्तु अकारादयः पंच उभये उभयप्रकाराः ह्रस्वदीर्घा इति चत्वार एकारादयश्च स्वरा उच्यन्त इति व्याकुर्वन्ति, परं तत् सूत्रानुसारि न; यत उभये इत्यनेन अकारादय एव उभयप्रकारा गृह्यन्ते तदा चत्वार एकारादय इति कुतः प्राप्यते ॥ अथैष्वेवं विशेषमाह । सूत्रम्

## अवर्जा नामिनः ।

अवर्णवर्ज्याः स्वरा नामिन उच्यन्ते ॥ अनुक्रान्तास्तावत्स्वराः ।

द्विपदमिदं सूत्रं । अं अवर्णं वर्जयन्तीत्यवर्जाः सवर्णे० स्नो० नामिनः स्वर० अवर्णवर्जा अकाराऽऽकाररहिताः स्वराः इ ई उ ऊ ऋ ॠ लृ लॄ ए ऐ ओ औ एते नामिन उच्यन्ते नमनं नामः तदस्त्येष्विति नामिनः । अवर्णो नामी नोच्यते लिपिन्यासे तस्य सरलत्वात् ॥ अथ स्वरोपसंहारमाह अनुक्रान्ता इत्यादि ।

तावदादौ स्वरा अनुक्रान्ता अनुक्रमेण कथिताः ॥ अथ व्यञ्जनान्याह ।

## प्रत्याहारजिग्राहयिषया व्यञ्जनान्यनुक्रामति ॥

प्रेति ।व्यज्यन्ते प्रकटीक्रियन्ते अर्थाः प्रत्याहारा वा एभिरिति व्यञ्जनानि प्रत्याहारजिग्राहयिषया ग्राहयितुमिच्छा जिग्राहयिषा प्रतिकार्यं कार्यंकार्यंप्रति आन्हियन्ते आनीयन्ते इति प्रत्याहारा अबादयः तेषां प्रत्याहाराणां जिग्राहयिषा प्रत्याहार जिग्राहयिषा तया प्रत्याहारजिग्राहयिषया कृत्वा व्यञ्जनानि अनुक्रामति अनुक्रमेण कथयति । सूत्रम् ।

## हयरलव ञणनङम झढधघभ जडदगब खफछठथ चटतकप शषस आद्यन्ताभ्याम् ।

प्रत्याहारं जिघृक्षताद्यन्ताभ्यामेते वर्णा ग्राह्याः आदिवर्णोऽन्त्येन गृह्यमाणस्तन्नामा प्रत्याहारः । तथाहि । अकारो बकारेण गृह्यमाणोऽबप्रत्याहारः । स च अइउऋलृएऐओऔहयरलवञणनङमझढधघभजडदब इति अबप्रत्याहारः । झढधघभ इति झभप्रत्याहारः। एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं भवति स स तत्र तत्र ग्राह्यः प्रत्याहाराणां संख्यानियमस्तु नास्ति ।

२

**हयरलवेति** । हश्च यश्च यावत् सश्च इति द्वंद्वः ( प्र. ब. ) सांकेतिकं हय-यावदाद्यन्ताभ्यां द्विपदं आदिश्च अन्तश्च आद्यन्तौ ताभ्यां ( तृ. द्वि. ) अद्रि यद्वा हयरलेति त्रयस्त्रिंशदपि प्रथमैकवचनान्तानि सांकेतिकानि पदानि आद्यन्ताभ्यां तृतीयाद्विवचनान्तं एवं चतुस्त्रिंशत्पदं सूत्रं । केचित्तु आद्यन्ताभ्यां इत्येकपदं सूत्रं पृथक् मन्यन्ते । क ख ग घ ङ इति क्रमं विहाय ह य व र लेति क्रमः प्रत्याहारग्रहणार्थं कृतः । **प्रत्याहारमिति** । प्रतिकार्यमाह्रियत इति प्रत्याहारस्तं प्रत्याहारं जिघृक्षता ग्रहीतुमिच्छता छात्रेण पुरुषेण वा आद्यन्ताभ्यां कृत्वा आद्यन्तवर्णाभ्यां सह एते हकारादयः सकारपर्यन्ता वर्णास्त्रयस्त्रिंशद्धसा ग्राह्याः ॥ प्रत्याहारं व्यञ्जयन्नाह **आदिवर्ण इति** । आदौ वर्ण आदिवर्णः सोऽन्तस्थेन वर्णेन अक्षरेण सह गृह्यमाणो अबप्रत्याहारादिस्तन्नामा प्रत्याहार उच्यते । **अकार इत्यादि** । सुगमं । स च अबप्रत्याहारः इत्येतावत्संख्याक इति इत्यमुना प्रकारेण एतावतीं एकोनत्रिंशद्वर्णपरिमाणां संख्यां यावत् सम्पद्यते एवं च ट त क प इति पञ्चभिरक्षरैश्चपप्रत्याहारो भवति आद्यन्तयोश्चकारपकारयोर्ग्रहणेन चपः एवं ज ड द ग ब इत्यत्र जकारबकारयोर्ग्रहणेन जबः । एवं झ ढ ध घ भ इत्याद्यन्तयोर्झकार-भकारयोर्ग्रहणेन झभः । एवं अमुना प्रकारेण यत्र यत्रोदाहरणे येन येन प्रत्याहारेण सह कृत्यं कार्यं भवति स स प्रत्याहारस्तत्र तत्रोदाहरणे ग्राह्यः संख्यानियमस्तु नास्ति । यत इयन्त एव प्रत्याहाराः सन्तीति केप्याहुः । अनियमं व्यावर्तयितुमाह । **संख्येति** । अयमर्थः । न नियमः अनियमः संख्याया अनियमः संख्या-नियमः प्रत्याहाराणां संख्याया अनियमो नास्ति किं तर्हि नियम एव, कथम् । हसो १ झबो २ जबश्चैव ३ चपो ४ अब ५ इल ६ अपः ॥ ७ ॥ अमो ८ झभः ९ खशः १० प्रोक्तो झस ११ श्च छत ईरितः ॥ १ ॥ यमो १३ हवः १४ खप १५ प्रोक्तो ङ्वश्च १६ ढभ १७ इष्यते ॥ रसो १८ वसः १९ शसः २० ख्यातो झपो २१ जस २२ उदाहृतः ॥ २ ॥ औ २३ उच्यते ततः प्राज्ञैः प्रत्याहारा उदीरिताः ॥ सौत्रा एते स्फुटं ज्ञेयास्तथान्ये च यथामति ॥ ३ ॥ यदि वा भ १ व ल एकैकस्मात् द्वाभ्यां मः २ स्यात् प वौ ४ चतुर्भ्यस्तु ॥ सः ६ बहुभ्यः स्यादित्थं प्रत्याहारास्तु विंशतिर्ज्ञेयाः ॥ १ ॥ झभ १ अव २ इल ३ छत ४ यम ५ ञम ६ यप ७ झप ८ खप ९ चप १० अब ११ हब १२ झब १३ जब १४ हस १५ बस १६ रस १७ झस १८ धस १९ शस २० एवं विंशतिः प्रत्याहाराः ॥ ६ ॥ अथ हसानां संज्ञामाह । सूत्रम् ।

हसाव्यञ्जनानि ।

हकारादयः सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति । स्वरहीनं व्यञ्जनम् । स्वरेभ्योऽन्यस्वरहीनम् । अन्यथा स्वरेषु स्वरो नास्तीति तेषां स्वराणामपि व्यञ्जनता स्यात् । यद्वा भावप्रधानो निर्देशः स्वरत्वहीनामित्यर्थः । तेष्वकारः सुखोच्चारणार्थत्वादित्संज्ञकः।

हसाः सवर्णे० । सो० । व्यज्यन्ते प्रकटीक्रियन्ते अर्था यैस्तानि व्यञ्जनानि जस् । जशूशसोःशिः । इनुमयमः । नोपधायाः । स्वर० । हकारमारभ्य सकारं यावत् त्रयस्त्रिंशदक्षराणि हसा हससंज्ञानि प्रोच्यन्ते द्वितीयनाम्ना व्यञ्जनानि प्रोच्यन्ते । व्यञ्जनलक्षणमाह । स्वरहीनामिति । तव्यञ्जनं यत्स्वरेण हीनं रहितं । यद्वा स्वरेभ्यो हीनं व्यतिरिक्तमन्यत् । यद्वा स्वरत्वहीनं अपरं यदक्षरं तद्व्यञ्जनसंज्ञं कथ्यते । ननु हकारादयः सस्वरवर्णाः कथं व्यञ्जनसंज्ञाः इत्याह । तेष्विति । तेषु व्यञ्जनेषु अकारः सुखोच्चारणार्थत्वात् सुखेनोच्चारणमेव अर्थः प्रयोजनं यस्य स सुखोच्चारणार्थस्तस्य भावस्तस्मात् ' इत् ' संज्ञकः ॥

कार्यायेत्

प्रत्ययाद्यतिरिक्तःकस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञो भवति ॥

इतो लक्षणमाह । द्विपदं । कार्य (च.ए.) ङेरक् । ए अय् सवर्णे० । स्वर० । इत् एति गच्छति इत् हसेनः पदद्वयेन सन्धिः । अइए । प्रत्ययादीति । आदिशब्दात् प्रत्ययागमादेशोपदेशेभ्योऽतिरिक्तः अधिकः प्रत्ययाद्यतिरिक्तः अप्प्रत्ययादिः आगमातिरिक्तो नुडादिः उपदेशः शिक्षारूपः हयवरलेत्यादिः । आदेशः पुंसोऽसुङादिरूपः एषु कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञको भवति ॥

यस्येत्संज्ञा तस्य लोपः । वर्णादर्शनं लोपः वर्णविरोधो लोपश् । एकं वर्ण नाशयति अन्यस्योत्पत्तिं प्रतिबध्नाति स वर्णविरोधः

मित्रवदागमः । शत्रुवदादेशः । स्वरानन्तरिता हसाः संयोगः । कुचुटुतुपुवर्गाः ।
उकारः पञ्चवर्णपरिग्रहणार्थः ।

इत्कृत्यमाह । यस्येत्संज्ञा तस्य लोप उच्यते उच्चरितप्रध्वंसिनो ह्यनुबन्धा इति । लोपलक्षणमाह । वर्णेति । वर्णानामक्षराणामदर्शनमनवलोकनं प्रध्वंसाभावो लोप उच्यते ॥ वर्णानां विरोधः सन्धिकार्यवर्जनं यस्मिन् स लोप एव लोपशू कथ्यते। एकं वर्णं विनाशयति अन्यस्योत्पत्तिं प्रतिबध्नातीति लोपशू तत्कार्यं लोपशि पुनर्न संधिः यथा त आगता इत्यादि ॥ मित्रवदागम इति । आगमो मित्रवत् । यथा मित्रं मित्रस्य समीपे आगत्योपविशति तथा आगमोप्यायाति यथा सगादिः। शत्रुवदादेशः॥ आदेशः शत्रुवत् । यथा शत्रुः शत्रुं विनाश्य तत्स्थाने तिष्ठति तथा आदेशोऽपि आदेशिनं विनाश्य तत्स्थाने भवति शकारादेशवत् ॥ अथ संयोगसंज्ञामाह । स्वरेति । अन्तरं जातं येषां ते अन्तरिताः न अंतरिताः अनंतरिताः स्वरैरनन्तरिताः स्वरानन्तरिताः स्वरान्तररहिता ईदृशा हसा व्यञ्जन वर्णाः संयोगसंज्ञया उच्यन्ते। अत्र बहुवचनं जात्यभिप्रायेण तेन द्वयोरपि हसयोः संयोगसंज्ञा स्यात् । यद्वा हसौ च हसाश्च हसाः एकशेषसमासः संयोगकार्यं 'संयोगान्तस्य लोपः' इत्यादि ॥ वर्ग संज्ञामाह । कुञ्विति । कुश्च चुश्च टुश्च तुश्च पुश्च कुचुटुतुपु (प्र.ब.) सांकेतिकं। वर्ग (प्र.ब.) सवर्णे०। सो० । एते पञ्च वर्गसंज्ञका भवन्ति तत्कार्यं स्तोश्चुभिश्चुः । ष्टुभिष्टुः । कुप्वोः ≍ क ≍ पौ वा । इत्यादि । उकारहेतुमाह । उकार इति । स्वरेषु पञ्चमी मात्रा उकारः तेन 'कु' इत्युक्ते कखगघङ। 'चु' इत्युक्ते चछजझञ। 'टु' इत्युक्ते टठडढण। 'तु' इत्युक्ते तथदधन। 'पु' इत्युक्ते पफबभम । इति पञ्च पञ्चाक्षराणि गृह्यन्ते ॥ गुणलक्षणमाह ।

## अरेदो नामिनो गुणः ।

### नामिनः स्थानका अर् ए ओ एते गुणसंज्ञका भवन्ति ।

अर् च एत् च ओत् च अरेदोत् साङ्केतिकं अत्र तपरकरणमसन्देहार्थं नामिनः(ष.ए.) स्वर०सो०हबे उओगुणः (प्र.ब.)सो० नामिनः स्थानका नामिनः स्थाने जाताः। ऋकारस्य ॠकारस्य च अर्,इकारस्य ईकारस्यच ए,उकारस्य ऊकारस्य च ओ,एते त्रयोऽपि गुणसंज्ञका भवन्ति । ऌकारस्य तु अल्। ऌ तु सावर्ण्याद्ग्राह्यः तत्कार्याणि गुणः । उपधाया लघोः इत्यादीनि ॥ अथ वृद्धिसंज्ञामाह—

## आरैऔ वृद्धिः ।

### आ आर् ऐ औ एते वृद्धिसंज्ञा भवन्ति ।

आच आर्च ऐच औच आरैऔ । सांकेतिकत्वाद्विभक्तिलोपः । वृद्धिः (प्र.ए.) सो०।

अस्य आ वृद्धिः। ऋवर्णस्य आर् इवर्णस्य एकारस्य च ऐ उवर्णस्य ओकारस्य च औ। एते चत्वारो वृद्धिसंज्ञा भवन्ति ऋकारलृकारयोः सावर्ण्यादेव लृकारस्य वृद्धिः आल् तत्कार्याणि आदिस्वरस्य ञ्णिति वृद्धिः। धातोर्नामिनः। अतउपधायाः। इत्यादीनि ॥ अथ टिसंज्ञामाह।

## अन्त्यस्वरादिष्टिः।

### अन्त्यो यः स्वरस्तदादिवर्णष्टिसंज्ञो भवति।

अन्त्यस्वरादि (प्र.ए.) टि (प्र.ए.) द्विपदं अन्ते भवो अन्त्यः अन्त्यो योऽसौ स्वरः स आदिर्यस्य सोन्त्यस्वरादिः ( प्र. ए. ) टिः ( प्र. ए. )। स्रो०मध्ये। विसर्जनीयस्यसः। इमिः इुः। स्वर०। अन्त्यो यः स्वरस्तदादिवर्णश्च सोऽन्त्यस्वर एव आदौ यस्य सोऽपि वर्णष्टिसंज्ञको भवति स्वरान्तशब्दस्य अन्तिमस्वर एव टिसंज्ञः हसान्तशब्दस्य अन्त्यो हसस्तस्माश्चात्यःस्वरश्चेति द्वावपि टिसंज्ञो इत्यर्थः। तत्कार्यं। डितिटेर्लोपः। इत्यादि यथा अचिन्त्यमहिमः ॥अथोपधासंज्ञामाह। सूत्रम्।

## अन्त्यात्पूर्व उपधा।

### अन्त्याद्वर्णमात्रात्पूर्वो यः स उपधासंज्ञो भवति ॥

अन्त्येति। हसिरत्। सवर्णे०। पूर्वं (प्र.ए.) उपधा( प्र.ए.) आपः। त्रिपदं अन्त्याद्वर्णमात्रादक्षरात्पूर्वो यो वर्णः स उपधासंज्ञो भवति। तत्कार्याणि। नोपधायाः। अत उपधायाः। इत्यादीनि। राजन्शब्दवत् ॥ अथ लघुसंज्ञामाह।

## असंयोगादिपरो ह्रस्वो लघुः।

असंयोगेति असंयोगादीनि संयोगादयः। संयोगविसर्गानुस्वाराः परे यस्मात्स संयोगादिपरः न संयोगादिपरः असंयोगादिपरः एवंभूतो ह्रस्वो वर्णो लघुरुच्यते। तथाचोक्तं प्राकृतछंदोग्रंथे। पछीउडीलहुवं कुडो केवलो वन्नोजई ॥ एतीन्युंलघुजानीयहुंअवरसवेगुरहोई ॥ १ ॥ यथा। क कि कु तथा अ इ उ ऋ लृ एतेषामग्रे विसर्गानुस्वारसंयोगा न भवन्ति तदा एतेषां लघुसंज्ञा ॥ अथ गुरुसंज्ञामाह।

## विसर्गानुस्वारसंयोगपरो दीर्घश्च गुरुः।

विसर्गानुस्वार इति विसर्गानुस्वारसंयोगाः परे अग्रे वर्तमाना यस्मात्स विसर्गानुस्वारसंयोगपरः विसर्गपरो यथा अः। अनुस्वारपरः अं। संयोगपरो यथा अस्य। दीर्घो यथा आ भू एवंभूतो ह्रस्वोऽपि पुनर्दीर्घश्च गुरुरुच्यते ॥

मुखनासिकाभ्यामुच्चार्यमाणोऽनुनासिकः ।
मुखेनोच्चार्यमाणो निरनुनासिकः । अः
इति विसर्जनीयः। वर्णशिरोबिन्दुरनुस्वारः।

अं अः इति अचः परावनुस्वारविसर्गौ । अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् जिव्हामूलीयस्य जिव्हामूलम् । नासिकाऽनुस्वारस्य। ≍ क ≍ ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिव्हामूलीयः । ≍ प ≍ फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। शषसहा ऊष्माणः । कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः ॥

हकारं पञ्चभिर्युक्तमन्तःस्थैश्चाभिसंयुतम् ॥
उरःस्थं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ॥
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥

इति संज्ञाप्रक्रिया ॥ १ ॥

मुखनासिकाभ्यामिति। रूढं पदं अन्यथा द्विवचनं न संभवति। यथोक्तं प्रक्रियाकौमुद्यां ‘ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानां ’। एषां द्वन्द्व एकवत्स्यात्यः एकवचनं भवतीत्यर्थः । प्राण्यङ्गे दन्तोष्ठं मुखनासिकं तूर्याङ्गे मार्दङ्गिकपाणविकं। सेनाङ्गे रथिकाश्वारोहं इति वचनात् मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिक संज्ञउच्यते ञमङणनमा अनुनासिका इति। मुखात् अनु पश्चात् नासिकां स्पृशतीत्यनुनासिकः। चतुर्दश १४ स्वराः त्रयस्त्रिंशद्धसाः ३३ अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः १ लुतश्च, एवं द्विपञ्चाशदक्षराणि । एतेशामष्टौ स्थानानि सन्ति तान्याह अकुहविसर्जनीयानां कण्ठः १ । इचुयशानां तालु २ । उपूपध्मानीयानामोष्ठौ ३ । ऋटुरषाणां मूर्धा ४ । लृतुलसानां दन्ताः । ५ । जिह्वामूलस्य

जिह्वामूलं ६ । अनुस्वारस्य नासिका ७ । एदैतोः कण्ठतालु ८ । ओदौतोः कण्ठोष्ठं ९ । वकारस्य दन्तोष्ठं १० । आ ई ऊ ॠ ॡ प्लुताश्च एते एतेषां सवर्णग्रहणेनैव गृह्यन्ते स्वरलैर्ङणनङ्मैश्च संयुक्तस्य हस्योरः स्थानं यतः । अष्टौ स्थानानि वर्णानामुरः १ कण्ठः २ शिरस्तथा ३ ॥ जिह्वामूलं च ४ दन्ताश्च ५ नासिकौ ६ ष्ठौ ७ च तालु च ८ ॥

इति संज्ञाप्रक्रिया ॥ १ ॥

अथाधुना स्वरसंधिरभिधीयते ॥ दधि आनय इति स्थिते । वर्णग्रहणे सवर्णग्रहणं कारग्रहणे केवलग्रहणं तपरग्रहणे तावन्मात्रग्रहणमिति शिष्टसंकेतः । तस्मिन्निति निर्दिष्टे पूर्वस्य । सप्तमी निर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् । अतो वृत्तौ परे इति व्याचष्टे । एवमन्यत्रापि ज्ञेयम् ॥

अधुनेति । संज्ञाकथनान्तरं सन्धिरभिधीयते कथ्यते । अक्षराणामन्योन्यं संधानं मेलनं सन्धिः । तत्राप्यादौ स्वरसन्धिः स्वराणां सन्धिः स्वरसन्धिः । ननु सति अकारे इकारसन्धिरेवादौ कथं प्रतिपादितः तत्रोच्यते । इकारः सावित्रीरूपः सा च सर्वजगत्सृष्टिकर्त्री तस्मात्पूर्वं प्रत्यपादि । सूत्रम् ।

## इ यं स्वरे ।

इवर्णो यत्वमापद्यते स्वरे परे । दध् य् आनय इति तावद्भवति ।

इयमिति इ ( प्र.ए. ) साङ्केतिकं य ( द्वि.ए. ) अम्शसो० मोऽनुस्वारः । स्वर० अइए । सिद्धं यद्वा इश्च ईश्च ईः नपुंसकस्येति ह्रस्वः । नपुंसकात्स्यमोर्लुक् वर्णग्रहणे सवर्णग्रहणमिति वचनात् । इकार ईकाररूपो यत्वं यकारत्वमापद्यते प्राप्नोति स्वरे परे । ह्रस्वदीर्घप्लुतभेदा इति अकारस्य स्वरत्वे आकारस्यापि स्वरत्वं सिद्धमेव । दधि÷ आनय । ‘ इयंस्वरे ’ अनेन सूत्रेण इकारस्य यकारः दध्÷य्÷ आनय इति जातं । ननु दधि आनयेत्यत्र । नामिनः स्वरेति नुभागमः कथं न क्रियते तत्राह । नामिनः स्वरे तु विभक्तिसक्तस्वरे परे भवति । नन्वत्र तर्हि यस्य लोपः कथं न क्रियते तत्राह यस्य लोपस्तु ईपि तद्धिते कृते स्वरे यकारे च परे भवति नत्वन्यत्र । दध्÷ य÷ आनयेत्यत्र संयोगान्तस्य लोपः इत्यस्य प्राप्तौ । असिद्धं बहिरङ्गमन्तरङ्गे इति यलोपनिषेधः ॥ १ ॥ कल्पान्तरमाह । सूत्रं ।

हसेर्हसः ।

स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । स्वरे परे इति वक्तव्यम् । तेन धकारस्य न पुनर्द्वित्वम् । इति धकारस्य द्वित्वम् ॥

हसेर्हसः। त्रिपदं हस (प्र. ए.)। अ इ ए । इ् च ह् च ह्ँ न ह्रँ अर्हं । हसे पः०। हस (प्र.ए.) स्रो०। हसेअर्ह। एदोतोतः इति। अकारलोपः । स्वर० । सिद्धं । स्वरात् =ह्रस्वस्वरात्परोऽग्रे वर्तमानो रेफहकारवर्जितोऽन्यो हसो हसप्रत्याहारसम्बन्धी वर्णो हसे परे सति द्विर्भवति द्वयोर्भावः द्वित्वं एकस्य द्वौ भवत इत्यर्थः । इति धकारस्य द्वित्वं द्वित्वे कृते पुनर्द्वित्वं न भवति अनवस्थादोषप्रसंगात् द्वित्वविधानात् द्वावेव शिष्येते। दध्×ध्×य×आनय इति जातं ॥

झबे जबाः

झसानां झबे परे जबा भवंति । इति पूर्वधकारस्य दकारः सवर्णत्वात् । वर्ग्यो वर्ग्येण सवर्ण इति वचनात् । यथासंख्यं वक्तव्यम् । दद् ध य् आनय इति सिद्धम् । पश्चात् ॥

सूत्रं झबइति । अ इए । जब सवर्णदीर्घः । स्रो० वृत्तिः सुगमा । अत्र सूत्रे झसानामिति पदं ' खसे चपा झसानाम् ' इति सूत्रादनुवर्तते अन्यत्राप्यनुवृत्तिः सरस्वतीदत्तसूत्रपाठक्रमादवगन्तव्या अत्र तु मया न कथ्यते । अनेन सूत्रेण पूर्वधकारस्य दकारः । ननु झसास्त्रयोविंशतिः जबाः पञ्चैव तेन यथासंख्यमिति धकारस्य दकार एव कथं क्रियते तत्राह । सवर्णत्वात् धकारस्य दकारो भवति । ननु धकारदकारयोः सवर्णत्वं कथमित्याह वर्ग्योवर्ग्येणेति । वर्गे भवः वर्ग्यः वर्ग्यो वर्णः वर्ग्येण स्ववर्गान्तर्वर्तिना अक्षरेणसह सवर्णो भवति इति सवर्णत्वाद्धस्य दः । यद्वा, यथासंख्यं झढघजडद इत्येननापि धस्य दः अत्र तु सवर्णत्वात् यथासंख्यमित्युभयथापि धस्य दकारो भवति परं, अग्निमथ्भ्यामित्यत्र सवर्णत्वादेव थकारस्य दकारो भवति न तु यथासंख्यम् ॥

स्वरहीनं परेण संयोज्यम् ।

श्लिष्टोच्चारणं कर्तव्यम् । दद्ध्यानय ॥

तक्रं न रोचतेऽस्माकं दुग्धं वा मधुरप्रिये ॥

अन्नप्ररोचनार्थाय दद्ध्यानय वरानने ॥
कृतस्य कारणं नास्ति मृतस्य मरणं नहि ॥
पिष्टस्य पेषणं नास्ति द्वितये त्रितयं नहि ॥

गौरी+अत्र इति स्थिते । इयं स्वरे
गौर् य् अत्र तावद्भवति । यत्वे कृते अर्हे
इति विशेषणान्न रेफस्य द्वित्वं । किंतु

स्वरहीनमिति । स्वरेण हीनं रहितं यदक्षरं तत् परेण अग्रस्थितेन सस्वरेण वर्णेन सह संयोज्यं दद्ध्यानयेति सिद्धं । ईकारोदाहरणमाख्याय ईकारोदाहरणमाह । गौरी+अत्र । इ यं स्वरे । गौर्+य्+अत्र इति जातं । ततोऽर्हे इति सूत्रोक्तहसविशेषणात् रेफहकारयोर्द्वित्ववर्जनादत्र रेफस्य द्वित्वं न भवति । ततः किं कर्तव्यमित्याह । सूत्रम् ।

राद्यपो द्विः ।

स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति । इति यपस्य द्वित्वं । गौर् य् य् अत्र । स्वरहीनं परेण संयोज्यम् । जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् ॥

तुम्बिका तृणकाष्ठं च तैलं जलसमागमे ॥
ऊर्ध्वस्थानं समायान्ति रेफाणामीदृशी गतिः ॥
रेफः स्वरपरं वर्णं दृष्ट्वारोहति तच्छिरः ॥
पुरः स्थितं यदा पश्येदधःसंक्रमते स्वरम् ॥

गौर्य्यत्र । स्वर इत्यनुवर्तते । एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदान्तरानुवृत्तिर्ज्ञातव्या । ग्रन्थभूयस्त्वभयान्न लिख्यतेऽस्माभिः ।

रात् (पं.ए.) । झसिरत् सवर्णे० । यपः (ष. ए.) । स्रो० । द्विः । द्वित्रिभ्यांसुः । सु स्रो० अव्ययाद्विभक्तेर्लुक् मध्ये चपाअबेजबाः यपः अग्रे द्विः । सिद्धं स्वर० पूर्व आदौ स्वरो यस्य स स्वरपूर्वस्तस्मात्स्वरात्परस्तस्माद्रेफात् परोऽग्रस्थो यपो द्विर्भवति इति यकारस्य द्वित्वं । जलेति । यथा तुम्बी जलस्योपरि तिष्ठति तथा रेफोऽपि वर्णस्योपरि गच्छति न अधः । स्वर० । गौर्य्यत्र इति सिद्धं । केचित्तु दीर्घस्वराग्रस्थात् रेफात्परस्य यपस्य

द्वित्वं नेच्छन्ति तन्मते गौर्यत्रेति सिध्यति। स्वरइति। इतोऽग्रे स्वरसन्धि यावत् सर्वेष्वपि सूत्रेषु 'स्वरे' इति पदमनुवर्तते अन्वागच्छति अनुक्तमपि ज्ञेयमित्यर्थः । यथा इयंस्वरे इत्यत्र स्वरे इति पदं तथा उवमित्यादिषु भाव्यम् इति ज्ञेयम। एवमिति। एवममुना प्रकारेण अन्यप्रयोगेष्वपि यत्र केवलसूत्राक्षरैः कार्यसिद्धिर्न भवति तत्र प्रयोगे सूत्रान्तरादन्यसूत्रात् पदान्तरस्यान्यपदस्यानुवृत्तिर्ज्ञेया। ननु बालानां बोधाय भवद्भिरनुवृत्तिरपि कुतो न लिख्यत इति चेत्तत्राह ग्रन्थेति। ग्रन्थस्य शास्त्रस्य भूयस्त्वभयात्प्राचुर्यभयात् सूत्रे सूत्रे तत्तत्पदमस्माभिर्न लिख्यते। केचित्तु आभिः सरस्वतीभिर्न लिख्यन्ते स्म इति व्याकुर्वन्ति। शेषं सुगमम् ॥ सूत्रम् ।

## उ वम् ।

**उवर्णो वत्वमापद्यते स्वरे परे। हसेर्हसः। झबे जबाः। मधु+अत्र। मध्वत्र। मधु+अरिः। मध्वरिः। मधु+आसनं। मध्वासनम्॥**

उ साङ्के०। यद्वा उश्च ऊश्च ऊ। नपुंसकस्येति ह्रस्वः। नपुंसकात् स्यमोर्लुक्। व (द्वि. ए.) अमूशसो०। मोऽनुस्वारः। तपरग्रहणं कारग्रहणं च विना वर्ण एव गृह्यते तेन उ इत्युक्ते उवर्णः उकारोकाररूपः वत्वं वकारत्वमाप्नोति स्वरे परे। मधु+अत्र। अत्र उ वमिति उकारस्य वकारः। हसेर्हसः। इति धकारस्य द्वित्वं। झबे जबाः। इति पूर्वधकारस्य दकारः। स्वर०। मध्वत्रेति सिद्धं। एवं मधु+आसनं मध्वासनं॥

## ऋ रम् ।

**ऋवर्णो रत्वमापद्यते स्वरे परे। पितृ+अर्थः पित्र्र्थः।**

ऋरम्। ऋ (प्र. ए.) सु साङ्केतिकत्वात्सिलोपः। र (द्वि ०ए०) अमूशसो० मोनुस्वारः। ऋवर्णस्य रकारो भवतीत्यर्थः स्वरे परे। पितृ+अर्थः। ऋ रम्। हसेर्हसः। स्वर०। पित्र्र्थः। सूत्रम्।

## ऌ लम् ।

**ऌवर्णो ऌत्वमापद्यते स्वरे परे। ऌ+अनुबन्धः। लनुबन्धः।**

ऌलम्। ऌ (प्र. ए.) साङ्केतिकम्। ल (द्वि. ए.) ऌवर्णस्य लकारो भवति स्वरे परे। ऌ+ अनुबन्धः। ऌ लम्। स्वर०। लनुबन्धः। ऌ लकारोऽनुबन्ध इत्संज्ञको यस्य स लनुबंध उच्यते। सूत्रम्।

## ए अय् ।

**एकारः अय् भवति स्वरे परे। ने अनं नयनम्।**

ए ( प्र० ए० ) साङ्केतिकं । अय् । ( प्र० ए० ) हसे पः । एकारस्य अय् भवति । णीञ् प्रापणे । णी । आदेःष्णःस्नः । नी । भावे युट् । यु । युवोरनाकौ । इति युस्थाने अन । गुणः । ततः । ए अय् अनेन एकारस्य अय् । स्वर० । अतोऽम् । अम्शसो० । मोनुस्वारः । 'नयनम्' इति सिद्धम् ॥

## ओ अव् ।

ओकारो अव् भवति स्वरे परे । भो अति भवति । गवादेर वर्णागमोऽक्षादौ वक्तव्यः । गो+अक्षः गवाक्षः । गो+इन्द्रः । गव+इन्द्र इति स्थिते ।

ओ अव् ओ(प्र.ए.)साङ्केतिकम् । अव् । हसेपः । वृत्तिः सुगमा । भो+ अति । ओ अव् । स्वर० । 'भवति' इति सिद्धम् । गवादेरिति । गौः आदिर्यस्य स गवादिस्तस्मात् । गवादि (पं.ए.) ङसि । दे । अवर्णस्यागमः अवर्णागमः । स्रो० । अक्ष आदिर्यस्यासौ अक्षादिः तस्मिन् । अक्षादि ङेरौ डित् । डित्त्वाट्टिलोपः । स्वर० । वक्तव्यः(प्र.ए.)स्रो० । सिद्धम् । अत्र अकारागमे एवं रूपसिद्धिः । वर्णग्रहणं तु चिन्त्यम् । यद्वा अश्चासौ वर्णश्च अवर्णः अकार एवेत्यर्थः । गो+ अक्षः अवर्णागमः । ओ अव् । स्वर० । सवर्णे० गवाक्षः ॥ गो+ इन्द्रः । अवर्णागमः । ओअव् । स्वर० । गव+ इन्द्र इति स्थिते ॥ सूत्रम् ।

## अ इ ए ।

अवर्ण इवर्णे परे सह ए भवति । तव इदं तवेदं । मम इदं ममेदं । इति सूत्रेण ए गवेन्द्रः । गो+अग्रं । गव+अग्रं ।

अ इ ए । अ ( प्र० ए० ) साङ्केतिकम् । इ ( स० ए० ) साङ्के० । ए ( प्र० ए० ) साङ्केति० । अ इ ए । अवर्ण इवर्णे परे सह उभयोर्योगेन ए भवति । तव+ इदम् । तवेदमित्युदाहरणम् । गङ्गा+ इयम् । गङ्गेयम् । अनेन सूत्रेण ए गवेन्द्रः । ॥ गो+ अग्रम् । गवादित्वादवर्णागमः । गव+ अग्रम् । सूत्रम् ।

## सवर्णेदीर्घः सह ।

समानस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा+अत्र श्रद्धात्र ॥ अदीर्घो दीर्घतां याति नास्ति दीर्घस्यदीर्घता ॥ पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ दधि+इह दधीह । मधु+उदकं मधूदकं ॥ सामान्यशास्त्रतो नूनं विशे

षो बलवान्भवेत् ॥ परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः । इति सूत्रेण सवर्णदीर्घः । गवाग्रं । गवाजिनं । स्व+ईरिणी । अव र्णागमः । अ इ ए । स्व+एरिणी ।

सवर्णेदीर्घःसह सवर्णे ( स. ए. ) अइए । सदृशो वर्णः सवर्णः । दीर्घः । स्रो० । सह ( अ. ए. ) अव्ययम् । पूर्वोत्तरयोः सदृशस्वरयोर्मीलनेनाद्यो दीर्घो भवति । श्रद्धा+ अत्र । श्रद्धात्र । यदुक्तम् । क्रमेण वैपरीत्येन गुरूणां गुरुभिः सह ॥ लघूनां लघुभिः सार्द्धं गुरूणां लघुभिः सह ॥ लघूनां गुरुभिः सार्द्धं चतुर्धेति सवर्णता ॥ १ ॥ अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ॥ पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ २ ॥ दधि + इह । दधीह । भानु+उदयः । भानूदयः । पितृ+ ऋणं । पितॄणम् । दण्ड +अग्रम् दण्डाग्रम् । दधि+इह अत्र कथम् ‘ इयं स्वरे ’ इति न यत्वं भवतीत्याह । सामान्यशास्त्रतो नित्यं विशेषो बलवान् भवेत् ॥ परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ १ ॥ नूनं निश्चितं सामान्यशास्त्रतः सामान्यसूत्रात् विशेषो विशेषशास्त्रं विशेषसूत्रं बलवान् भवेत् तत्र । बहुव्यापकं सामान्यं अल्पव्यापको विशेषः । दधि+इह इत्यत्र इयं स्वरे इति सूत्रं सामान्यं स्वराणां बहुत्वात् ‘ सवर्णे दीर्घे इति विशेषसूत्रं तस्य सवर्णस्यैकत्वात् । पक्षान्तरमाह ।

परेणेति । वा अथवा परेण अग्रकेण सूत्रेण पूर्वसूत्रस्य बाधः । यथा । ‘ इयं स्वरे, इति सूत्रं प्राक् प्रतिपादितं तस्य हि ’सवर्णे, इति सूत्रेण बाधः । तदेवाह ।

प्रायश इति। प्रायशो बाहुल्येनेह व्याकरणे एवं दृश्यते । इत्यनेन उत्सर्गापवादावुक्तौ । ततः ‘ उत्सर्गापवादयोरपवादो विधिर्बलवान् इति न्यायो दर्शितः । एकस्मिन्नेवोदाहरणे सूत्रद्वयसंभवे सामान्यविशेषयोर्यद्विशेषसूत्रं तल्लगति ‘ पूर्वोक्तपरोक्तयोः सूत्रयोर्यत् परोक्तं सूत्रं तत्प्राप्नोति न तु पूर्वोक्तमिति भावः । एवं भानु+उदयः । अत्र ‘ उवम्, इति सामान्यं ‘ सवर्णे दीर्घः सह ’ इति विशेषः एवमन्यत्रापि श्लोकार्थोऽयम् । सूत्रम् ।

## ए ऐ ऐ ।

अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । तव+ एषा तवैषा । तव+ऐश्वर्यम् तवैश्वर्यम् । इति सूत्रेण ऐ । स्वैरिणी । अवर्णागमः । अक्ष+ऊहिनी ।

ए ऐ ऐ । ए ( स. ए. ) साङ्केति० । ऐ ( स० ए० ) ऐ (प्र. ए) साङ्के० । तव+एषा । ए ऐ ऐ । तवैषा । तव +ऐश्वर्यम् । ए ऐ ऐ । तवैश्वर्यम् । इति सूत्रेण ' स्व+एरिणी ' इत्यत्र ऐ । स्वैरिणी ॥ अक्ष+ऊहिनी । अवर्णागमे । अक्ष+ अ+ऊहिनी इति स्थिते । सूत्रम् ।

## उ ओ ।

**अवर्ण उवर्णे परे सह ओ भवति । गङ्गा उदकम् । गङ्गोदकम् ।**

उ ओ । उ ( स.ए. ) साङ्के । ओ ( प्र. ए. ) साङ्के० । अर्थो वृत्तेः सकाशाज्ज्ञेयः । उदा० । तव उदकम् । तवोदकम् । उ ओ इति सूत्रेण प्रस्तुतोदाहरणे ' अ,+ऊ ' इत्यत्र ' ओ ' इति जाते । अक्ष+ओहिनी इत्यत्र । सूत्रम् ।

## ओ औ औ ।

**अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओदनः तवौदनः । तव औन्नत्यं तवौन्नत्यम् । अक्ष ऊहिनी अक्षौहिणी । प्र+ऊढः प्रौढः । इति गवादयः । अविहितलक्षणप्रयोगो गवादौ द्रष्टव्यः ।**

**' गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम् ॥**
**स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः ॥ ,**

**क्वचित्स्वरवद्यकारः । यथाध्वपरिमाणे गो यूतिः गव्यूतिः क्रोशयुगलम् । अन्यथाध्वनः परिमाणाभावे गवां मिश्रीभावो गोयूतिः ॥**

ओ औ औ । ओ ( स. ए. ) साङ्के० । औ ( स. ए. ) साङ्के० । औ ( प्र. ए. ) साङ्के० । अर्थो वृत्तेर्ज्ञेयः । उदा० तव+ओदनम् । तवौदनम् । तव+ औन्नत्यम् । तवौन्नत्यम् । इति सूत्रेण प्रस्तुतोदाहरणे ' अ+औ ' इत्यस्य स्थाने ' औ ' इति जाते । अक्षौहिणी इति सिद्धम् । प्र+ऊढः । अवर्णागमः । उ ओ । ओ औ औ । प्रौढः । क्वचिदिति । क्वचित्प्रयोगान्तरे यकारः स्वरवत् स्वरेण तुल्यः स्वरवन्

स्वरे परे सति यत्कार्यं भवति तत् यकारे परेऽपि भवतीत्यर्थः । यथा अध्वपरिमाणे मार्गपरिमाणे वाच्ये सति गो+यूतिः अत्र यकारस्य स्वरवत्त्वात्। ओ अव् । स्वर० । गव्यूतिः क्रोशद्वयं । अन्यत्र तु गवां मिश्रीभावं एकीभावो गोयूतिरित्येव तिष्ठतीति सिद्धम् । एवं पितृ +यं पित्र्यं इत्यपि ज्ञेयम् ।

## ऐ आय् ।

**ऐकार आय् भवति स्वरे परे । नै अकः नायकः ।**

**ऐ आय् ।** ऐ ( प्र. ए. ) साङ्केतिकम् । आय् ( प्र. ए. ) हसेपः । ऐकार आय् भवति स्वरे परे । नै +अकः । ऐ आय् । स्वर० । नायकः । सूत्रम् ।

## औ आव् ।

**औकार आव् भवति स्वरे परे । तौ इह ताविह ।**

**औ आव् ।** औ ( प्र. ए. ) साङ्के० । आव् ( प्र. ए. ) हसेपः । ओकार आव् भवति स्वरे परे । तौ +इह । औ आव् । स्वर० । ताविहेति सिद्धम् । सूत्रम् ।

## य्वोर्लोपश् वा पदान्ते ।

**पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति । ते आगताः । त आगताः । तयागताः । पटो इह पट इह पटविह । तस्मै आसनं । तस्मा आसनम् । तस्मायासनम् । असौ इन्दुः । असा इन्दुः । असाविन्दुः ।**

**य्वोर्लोपश् वा पदान्ते ।** य् च व् च य्वौ तयोः य्वोः ( ष. द्वि० ) स्वर० स्रो० लोपश् ( प्र. ए. ) हसेपः । वा (प्र.ए.) अव्यया० पदान्ते ( स. ए. ) अ इ ए । सिद्धं । पदान्ते आदिशब्दात् 'ए अय्' 'ऐ आय्' 'ओ अव्' 'औ आव्' एभिः सूत्रैर्जातानां अयादीनां संबन्धिनोर्यकारवकारयोर्वा लोपश् भवति । ते+आगताः । उभयत्रापि ए अय् । एकत्र यकारलोपः । अन्यत्र स्वर० । त आगताः । तयागताः । पटो+इह उभयत्रापि । ओ अव् । शेषं प्राग्वत् । एवं तस्मै+आसनम् तस्मा आसनम् तस्मायासनं । तस्मै+इदं तस्माइदं तस्मायिदम् । असौ+इन्दुः । असा इन्दुः । असाविन्दुः । तौ+इमौ ता इमौ ताविमौ । ननु त+आगता इत्यत्र सवर्णे दीर्घः । तथा पट +इह इत्यत्र अ इ ए इति सन्धिः कथं न क्रियते तत्राह ?

## लोपशि पुनर्न संधिः ।

छन्दसि तु भवति । हे सखे इति हे सखेति । हे सखयिति ॥

लोपशीति । लोपशि कृते पुनः पूर्वापरवर्णयोर्मिथो घटनरूपः सन्धिः कार्यान्तरसन्धानं च न भवति 'नोक्तमनित्यम्' इति क्वापि लोपशि कृतेऽपि सन्धिर्भवति । यद्वा छंदसि तु भवतीति तु शब्दात् कुत्रचिल्लौकिकोदाहरणे लोपशि कृतेऽपि सन्धिर्भवतीति यथा दामोदरः, राजाश्वः, पञ्चाग्निः इत्यादि । पुनर्विशेषमाह छन्दसीति । छन्दसि वेदे लोपशि कृतेऽपि सन्धिर्भवति । यथा हे सखेति । सखे इति । ए अय् । य्वोर्लोपश्चेति यकारलोपः छान्दसिकत्वान्न सन्धिनिषेधः तेन अ इ ए । सूत्रम् ।

## एदोतोऽतः ।

पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र । पटो अत्र पटोऽत्र । सर्वविधिभ्यो लोपविधिर्बलवान् ।

एदोतोऽतः । एच्च ओच्च एदोत्(प.ए.) स्वर०स्रो०एदोतः अग्रे अतःमध्ये । अतोस्युः एदोतोतः। इत्यकारलोपः । अत् (ष.ए.)स्वर०। स्रो०। एदोतः अत्र तपरकरणमसन्देहोच्चारणार्थं अतः अत्र तपरकरणं तावन्मात्रग्रहणार्थं । पदान्ते स्थितात् एकारात् ओकारात्परस्याकारस्य लोपो भवति । ते अत्र । पदान्ते स्थितौ यावेकारोकारौ ताभ्यां परस्याकारस्य लोपो भवति च । एकपथ्वासन्यायादखण्डाकारास्तिष्ठन्ति । एवं पटो अत्र पटोऽत्र । अत्र 'सामान्यशास्त्रतो विशेषो बलवान्' इति न्यायोऽङ्गीकर्तव्यस्तेन ए अय् ओ अव् इति न भवति । सूत्रम् ।

## हलादेरीषादौ टेर्लोपो वक्तव्यः ।

क्वचित्तदादिवर्णाभावे केवलस्वरस्यापि टिसंज्ञा वक्तव्या । हल ईषा हलीषा । लांगल ईषा लांगलीषा । मनस् ईषा मनीषा । शक अन्धुः शकन्धुः । कर्क अन्धुः कर्कन्धुः । सीमन् अन्तः सीमन्तः केशवेशे । अन्यत्र सीमान्तः । कुल अटा कुलटा । पतत् अञ्जलिः पतञ्जलिः । सार अङ्गः सारङ्गः पशुपक्षिणोः । अन्यत्र साराङ्गः ॥

अन्यत्रापि विशेषमाह । हलादेरिति । हल् आदिर्यस्य स हलादिः तस्याहलादिः ( ष. ए. ) ङि.ति ङस्येत्यकारलोपः । स्रो. । ईषा आदिर्यस्य स ईषादिः तस्मिन्नीषादौ ( स. ए. ) ङि ङेरौङित् ङित्वाट्टिलोपः । स्वर० । टि । अम् ( ष. ए ) ङिति ङस्य स्रो० नामिनोरः । राद्यपोद्विः लोपः ( प्र. ए.) स्रो० वक्तव्यः (प्र.ए. ) स्रो० हलादिशब्दगणस्य ईषादौ गणे परे टेः अन्त्यस्वरादिष्टिरिति टेर्लोपो वक्तव्यः । हल × ईषा । अनेन टेर्लोपः । स्वर० । हलीषा आदिशब्दात् मनस् ईषा मनीषा । लाङ्गल×ईषा लाङ्गलीषा। अद्य×ॐ अद्योम् । शक अन्धुः शकन्धुः । कुल अटा कुलटा। सीमन् अन्तः सीमन्तः। पतत् अञ्जलिः पतञ्जलिः। सार अङ्गः सारङ्गः । इत्यादयोऽपि तथैव ज्ञेयाः ॥

हलीषा लाङ्गलीषा च मनीषाद्यास्तथैव च ॥
शकन्धुरथ कर्कन्धुः सीमन्तः कुलटा तथा ॥
पतञ्जलिश्च सारङ्ग एते प्रोक्ता हलादयः ॥

ओमाङावपि ।

अवर्णात्परौ ओमाङौ टिलोपनिमित्तौ स्तः।
अद्य ओम् अद्योम् । शिव आ इहि शिवेहि ।

ओमि नित्यम् ।

ओमि परे नित्यमवर्णस्य लोपो भवति । स्वर ओम् स्वरोम्।

ओमाङावपि । ओमि नित्यम् । इति सूत्रद्वयं सवृत्तिकं सुगमम् । सूत्रम्।

ऋ अर् ।

अवर्ण ऋवर्णे परे सह अर् भवति । तव ऋद्धिः तवर्द्धिः ।
राद्यपो द्विः ।

ऋ अर् । ऋ ( स. ए. ) साङ्के० । अर् (प्र.ए.) हसेपः । अर्थो वृत्तितो ज्ञेयः । तव ऋद्धिः । ऋअर् । जलतुंबि० तवर्द्धिः ।

क्वचिदार् ।

अवर्ण ऋवर्णे परे सह आर् भवति । ऋण
ऋणम् । ऋणार्णं । शीत ऋतः । शीतार्तः ।

क्वचित् ( प्र. ए. )अव्ययाद्वि० । आर् ( प्र. ए. ) हसेपः । चपाअबे० समासान्तपद इत्यर्थः । क्वचित्प्रयोगान्तरे अवर्णं ऋवर्णे परे सति सह उभयोः योगेन आर् भवति । ऋण ऋणम् । ऋणार्णम् । क्वचिदार् । राद्यपो० । स्वर० । एवं शीतार्तः । दुःखार्तः ॥

ऋते च तृतीयासमासे एवाऽऽर् ।

अन्यत्र परमर्तः

उपसर्गादवर्णान्तादृकारादौ धातौ आर् भवति ।

उपार्छति । प्रार्छति ।

ऋकारादौ नामधातौ वा ।

उपार्षभीयति । उपर्षभीयति । प्रार्षभीयति । प्रर्षभीयति ॥

ॠकारादौ आर् नेति वाच्यम् ।

उप ॠकारीयति उपर्कारीयति ।

ऌ अल् ।

अवर्णे ऌवर्णे परे सह अल् भवति । तव ऌकारः तवल्कारः ।

ऌ अल् । ऌ ( स. ए. ) सांके० । अल् ( प्र. ए. ) हसेपः । वृत्तेरर्थो ज्ञेयः । तव+ऌकारः । ऌ अल् । राद्यपो द्विः । स्वर० ।

ऋऌवर्णयोः सावर्ण्यं वक्तव्यम् ।

ऋऌवर्णस्थानिकत्वाद्रलयोरपि सावर्ण्यं वाच्यम् । होतृ ऌकारः होतॄकारः । होत्ल्कारः । परि अङ्कः । इयं स्वरे । राद्यपो द्विः । पर्यंकः । पल्यंकः ।

रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा ॥

वदन्त्येषां च सावर्ण्यमलंकारविदो जनाः ॥

नन्वत्र ऌकारोऽस्ति रकारो नास्तीति ' राद्यपो द्विः ' कथं लगति तत्राह । रलयोरिति । रकारलकारयोः सावर्ण्यं सदृशत्वं विज्ञेयं । तेन राद्यपो द्विः । तवल्कारः । इति सिद्धम् । रकारलकारयोः उपचारात् वा ग्रहाद्वा वेदे ऋकारऌकारयोरपि सावर्ण्यं वक्तव्यम् । होतृ+ऌकारः । सवर्णे० होतॄकारः । अत्र ऋऌवर्णयोरसवर्णत्वेऽपि रलयोरित्यनेन सावर्ण्यम् । ऋऌवर्णस्थानिनोः

प्रायः सावर्ण्यं रलयोर्भवेत् तथा सवर्णत्वं स्यात् ऋकारऌकारयोः । परि+अङ्कः । पर्यंकः । एवं पलि+अंकः । पल्यङ्कः । उभयत्रापि इ यं स्वरे । राघपो द्विः । स्वर० । सिद्धम् । सूत्रम् ।

## ओष्ठोत्वोर्वौ समासे ।

**अवर्णस्य ओष्ठोत्वोः परयोः समासे सति सह वा ओ भवति बिम्ब ओष्ठः । बिम्बोष्ठः। बिम्बौष्ठः । स्थूल ओतुः स्थूलोतुः । स्थूलौतुः । असमासे किम् । तव ओष्ठः तवौष्ठः ।**

॥ इति स्वरसंधिप्रक्रिया ॥ २ ॥

**ओष्ठेति** । ओष्ठश्च ओतुश्च ओष्ठौतू तयोः ओष्ठौत्वोः(स. द्वि.)उवम् । स्वर० । वा [प्र. ए.] अव्य० । ओ (प्र. ए.) साङ्के० । ओ च औ च औ। अवर्णस्य ओष्ठौत्वोः शब्दयोः परयोः ओकारेण सह वा अकारस्य ओकारो भवति ।पक्षे ओ औ औ । समासे सति । यदा ' ओष्ठोत्वोर्वौ ' इति सूत्रं तदा ओष्ठोत्वोः परयोः अवर्णस्य वा लोपो भवति इति व्याख्या । बिम्ब+ ओष्ठः । बिम्बाकारावोष्ठौ यस्य स बिम्बोष्ठः । बिम्बौष्ठः । स्त्री चेत् बिम्बोष्ठी । बिम्बौष्ठी । अनेन एकत्र अकारलोपः। स्वर०। द्वितीये । ओ औ औ । तथैव स्थूलश्चासावोतुश्च स्थूलोतुः । स्थूलौतुर्वा । स्थूलमार्जार इत्यर्थः । समास इति किम् । हे छात्र ओष्ठं पश्य छात्रौष्ठं पश्येत्येकमेव रूपम् । तवौष्ठः ॥ इति स्वरसन्धिः ॥

## अथ प्रकृतिभाव उच्यते ।

**प्रकृतेर्यथास्थितस्य रूपस्य भवनं प्रकृतिभावः ।**

अथ स्वरसन्धिकथनानन्तरं प्रकृतिभाव उच्यते । प्रकृतेर्भावो भवनं सत्ता प्रकृतिभावः। प्रकृतेर्यथावस्थितस्वरूपस्य भावोऽवस्थितिर्वा प्रकृतिभावः । सन्धियोग्या अपि स्वराः केचित्प्रकृतिस्था एव तिष्ठन्ति तस्मात् प्रकृतिरुच्यते। एतत्सन्धेरादिमं सूत्रम् ।

## नामी ।

**अदसोऽमी संधिं न प्राप्नोति । अमी आदित्याः ।**

नामी।न(प्र.ए.) अव्यया०। अदस्(प्र.ब.) त्यदादेष्टे०। सकारलोपः।जसी।दस्य मः। अ इ ए । एरी बहुत्वे । एकारस्य ईकारः । अमी (प्र.ब.) साङ्केतिकम् । सवर्णे० । नामीति सिद्धम् । अदस् शब्दस्य जसि यो अमीशब्दो निष्पन्नः स सन्धिं न प्राप्नोति । अमीशब्देन रोगवानप्युच्यते तन्निरासार्थं 'अदस् 'इति पदं प्रयुक्तम् । तत्र सन्धिः ।

अम्यसौ । अमी+आदित्याः। इ यं स्वरे इति सूत्रप्राप्तावपि सन्धिप्रतिषेधः । अमी+उष्ट्राः । सन्धिप्रतिषेधः । एवममी+एडकाः । 'अदस्' इति किम्। अमी+असौ अम्यसौ । सूत्रम् ।

## ग्वे द्वित्वे ।

ई च ऊ च ए च ग्वे द्वित्वे ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति । मणीवादिवर्जम् । अग्नी अत्र । पटू अत्र । माले आनय । मणी इव, मणीव ।

मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ॥
ध्रियमाणौ तु तौ दम्यौ मकिस्तत्रेदमब्रवीत् ॥
रोदसी इव रोदसीव । दंपती इव दंपतीव । जंपती इव जंपतीव । जायापती इव जायापतीव ।

ई च ऊ च ए च ग्वे(प्र. ए.)साङ्केतिकम्। द्वित्वे ( स.ए.) अ इ ए इति सिद्धम् । ईकारोकारैकाराः त्रयः सिद्धा एव गृह्यन्ते परं द्विवचने द्विवचनान्तः सन् ईकारान्त ऊकारान्त एकारान्तः सन्धिं न प्राप्नोतीत्यर्थः।मण्यादयो न निषिद्धाः।मण्यादीनां तु द्विवचने ईराकान्तत्वेऽपि सन्धिर्भवति अग्नी। (प्र द्वि.) औ यू ।सवर्णे०। अग्नी+अत्र। द्वित्वात् 'इ यं स्वरे' इति यत्वनिषेधः। एवं पटू+अत्र । वत्वनिषेधः ।माला।(प्र.द्वि.) औरी । इति ईकारः । अ इ ए । माले+आनय । एअय्निषेधः । एवं हरी+एतौ, विष्णू+इमौ, गंगे+अमू, कुले+अमू इत्यादि । मणीवादिवर्जमिति किं । मणी+इव, दम्पती+इव, रोदसी+इव, सर्वत्र सवर्णेदीर्घः । द्वित्वेऽपि मणीवादीनां निषिद्धत्वात्सन्धिः कार्यः ॥ सूत्रम् ।

## औ निपातः ।

आ च औ च अ च इ च उ च ऋ च ऌ च ए च ऐ च ओ च औ।आ ओ इति पृथक् पदं वा निपातः।आकारनिपात ओकारनिपात एकस्वरश्च संधिं न प्राप्नोति । आ एवं मन्यसे । नो अत्र स्थातव्यम् । उ उत्तिष्ठ । इ इन्द्रं पश्य । अ अपेहि । आग्रहणादाङो न निषेधः । तथा चोक्तम् ।

ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ॥
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥
ओत्तमैरेक्षसे न त्वमामृतादेन्द्रतोऽखिलैः ॥
आ एवं सर्ववेदार्थ आ एवं सद्वचो हरेः ॥

**औ निपातः।** आ ( प्र.ए. ) साङ्केतिकं । औ ( प्र.ए.) निपात्यते सिद्ध एव इति निपातः ( प्र.ए. ) साङ्के० । सो० । ननु एकस्वरश्चेति पदं सूत्रे नास्ति वृत्तौ कुतो लभ्यते तदर्थं अकारादारभ्य ओकारं यावत् 'औ' इति प्रत्याहारमङ्गीकुर्वन्ति केचित् । औ (प्र.ए. ) साङ्केतिकम् । आकार, ओकार, एकार, स्वरा अत्र निपाता एव गृह्यन्ते । 'आङ्'उपसर्गवर्जः । वाक्ये स्मरणे च यो निपातरूप 'आ' इति वर्णः स सन्धिं न प्राप्नोति । तथा ओकारः आहो, अहो, उताहो, नो,हो, हंहो, अघो, भोभो इत्यादिषु निपातरूपः सोऽपि सन्धिं न प्राप्नोति । हे अम्ब ।हे ईश । तथा एकस्वरः एक एव स्वरः एकस्वरः यथा केवलस्वरमात्र एव न तु हसा युक्तः । यद्वा सदृशस्वरः अकारेकारोकाराणां निपातरूपाणां यः कश्चिदादौ भवति तादृश एव स्वरोऽग्रेऽपि भवति तदा सन्धिं न प्राप्नोति । यथा । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । 'अ' इति निर्भर्त्सने । अपेहि दूरीकुरु । 'इ' इति सम्बोधने विस्मये वा इन्द्रं पश्य । 'उ' इति सम्बोधने रोषोक्तौ वा उत्तिष्ठ । आग्रहणादाङुपसर्गेण सह सन्धिर्भवति । उदाहरणं कण्ठ्यम् । तत्र आकारनिपातस्तु ङिदङिद्भेदतो द्विधा । तत्र यः स्यात् ङित् स एव सन्धिं प्राप्नोति नत्वङित् । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ॥ एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥ आ+उत्तमः ओत्तमः । ईषदर्थे आङा सह सन्धिः । आ + ईक्षसे एक्षसे । आ+इहि एहि । इत्यादौ क्रियायोगे आङा सह सन्धिः। आमृतात् अमृतं मर्यादीकृत्य इति मर्यादायाम् । आ+ इंद्रतः एन्द्रतः । इन्द्रमभिव्याप्य इति अभिविधौ च आङा सह सन्धिः । मर्यादा सीमा अभिविधिः अभिव्याप्तिः मर्यादा च अभिविधिश्च मर्यादाभिविधिस्तस्मिन् । 'सर्वोऽपि द्वन्द्वो विभाषयैकवचनान्तः स्यात् । तत्र 'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकत्वम् । आनत्यमागमानुशासनमिति भावः । नामिनः स्वरे इति नुमागमो न किन्तु ङेरौडित् । तथा आ इति आक्षेपे आ एवं किल मन्यसे इति वाक्ये आ एवं ईश्वरवचनमिति स्मरणे अनाङ् आकारः सन्धिं न प्राप्नोति ॥

प्लुतः ।

प्लुतः संधिं न प्राप्नोति । देवदत्त ३ एहि । देवदत्त ३ अत्र गौश्चरति ॥

प्लुतः। प्लुत (प्र.ए.) । स्त्रो०। यत्र प्लुतस्तत्र सन्धिर्न भवति । भो देवदत्त+एहि । अत्र प्लुतत्वान्न सन्धिः । * का एषा प्रप्लुतांगी अत्र विचारे टेः प्लुतत्वं तेन सन्धिर्न । अत्र प्लुतत्वान्न सन्धिः । क्वचित्तु 'प्लुतोऽनितौ' इति सूत्रं पठन्ति । तेन प्लुत इति शब्दे परे सन्धिं प्राप्नोति । यथा हा तात ३ इति । हा तातेति । देवदत्तेत्यादौ सन्धिर्भवति । प्लुतलक्षणमाह ।

## दूराद्धाने च टेः प्लुतः ।

दूराद्दाव्हाने गाने रोदने विचारे गम्यमाने च टेः प्लुतो भवति । दूरादित्यत्र चकारग्रहणाद्धा ताततीत्यादौ संधिः स्यात् ।

## हैहयोः स्वरे संधिर्न वक्तव्यः ।

हे अनड्वन् ॥

## ऋतौ समानो वा ।

ऋतौ परे समानः संधिं न प्राप्नोति वा । हिम ऋतुः हिमर्तुः हिमऋतुः ॥ इति प्रकृतिभावप्रक्रिया ॥ ३ ॥

दूरादाव्हाने । दूर (पं.ए.) ङस्०। ङसिरत्। सवर्णे०। आह्वाने (स.ए.) अ इ ए। टि (ष.ए.) ङिति ङस्येत्यकार लोपः। स्रो०। प्लुतः (प्र.ए.)स्रो०। वृत्तिः कंठ्या । प्लुतस्तु उच्चारमात्र एव नतु लिखितरूप इति प्लुतलक्षणम् । इति प्रकृति भावः ।

## अथ व्यञ्जनकार्यमुच्यते ।

अथेति । अथ प्रकृतिभावकथनानन्तरं व्यञ्जनकार्यमुच्यते व्यञ्जनानां सन्धिः कथ्यते इत्यर्थः । सूत्रम् ।

## चपा अबे जबाः ।

पदान्ते वर्तमानाश्चपा जबा भवन्ति अबे परे । षट्+अत्र षडत्र । वाक्+यथा वाग्यथा ॥

चपा अबे जबाः । चकारपकाराभ्यां गृह्यमाणा वर्णाश्चपाः चप (प्र.ब.) सवर्णे० स्रो० । अकारबकाराभ्यां गृह्यमाणः प्रत्याहारो अबस्तस्मिन्(स.ए.)अब अ इ ए। जकारबकाराभ्यां गृह्यमाणा वर्णा जबाः। जब (प्र.ब.)सवर्णे० स्रो० सिद्धम् 'चपा

* एव धिक् ता च तं च मदनं च इमा च मा च इत्यादावपि ।

जबा अवे इति वक्तव्ये चपा अवे जबा इत्युक्तं तेन क्वचित्पदान्तं विनापि जबा भवन्ति । यथा सद्गुरुः भवदीयः इत्यादि । क्वचिन्न भवति वैवस्वतः, मरुत्वान्, तडित्वान्, वाचालः, वाचाटः इत्यादौ न* पदान्ते स्थिताश्चपा जबा भवन्ति च १ ट २ त ३ क ४ पा ५ .नां क्रमेण ज १ ड २ द ३ ग ४ बा ५ भवन्ति अवे परे षट् + अत्र, वाक्+ यथा उभयत्रापि सूत्रमिदम् । टस्य डः, कस्य गः । स्वर० । षडत्र । वाग्यथा । एवं अच्+अन्तं अजन्तम् । हरित्+अश्वः हरिदश्वः । ककुप् एषा ककुबेषा । दिश्+अम्बरः । दिश्+अन्तः । अत्र पदान्ताश्रयणात् दिशाम् इति कः । पश्चाच्चपा अवे जबाः । वाच्+ ईशः ।अत्रापि पदान्ताश्रयणात् चोः कुः । पश्चाच्चपा अवे जबा इति सिद्धम् । अवे इति किम् । वाक् पूतः, षट् कुर्वन्ति । सूत्रम् ।

## ञमे ञमा वा ।

**पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाक्+ मात्रं वाङ्मात्रम् । वाग्मात्रम् । षट्मम षण्मम षड्मम ।**

ञमे ञमा वा । ञकारमकाराभ्यां गृह्यमाणः प्रत्याहारो ञमस्तस्मिन् ।ञम(स. ए.)। अइए । ञकारमकाराभ्यां गृह्यमाणा वर्णा ञमाः ञम(प्र.ब.)सवर्णे० । स्रो० । वा (प्र.ए.)अव्य० । आदवे लोपश् ।चपानां ञमे परे विकल्पेन ञमा भवन्ति । च१ट२त३ क ४ पा ५ नां क्रमेण ञ १ ण २ न ३ ङ ४ मा ५ भवन्ति । वाग्रहणात्पक्षे चपा अपि भवन्ति । वाक्+मात्रम् । एकत्र ङः अन्यत्र गः स्वरः । षट्+मम । एकत्र णः । अन्यत्र डः । स्वर० । तत्+नयनम् । तन्नयनं, तद्नयनम् । अप् मयः । अम्मयः । मयटि प्रत्यये परे तु नित्यमेव ञमाः स्युः । यथा चिन्मयम्, वाङ्मयम् । अत्र न विकल्पः । तथा वाग्रहणादेव क्वचिज्जबस्यापि ञमा वा स्युः । यथा मृद्मयम्, मृन्मयम् । सूत्रम् ।

## चपाच्छः शः ।

**चपादुत्तरस्य शकारस्य छो वा भवति । अवे परे । वाक्+शूरः वाक्छूरः । वाक्शूरः ॥**

चप । (पं.ए.) ङसिरत् । सवर्णे० । चपात् । अग्रे छः । स्तोश्चुभिश्चुः । तकार स्य च- स्वर० । छ(प्र.ए.) स्रो० । विसर्जनीयस्य सः । स्तोःश्चुभिःश्चुः । स्वर० । श ( ष.ए. ) स्वर० । सिद्धम् । चपादुत्तरस्य परस्य शकारस्य छः छकारो भवति वा विकल्पेन ।

* अथवा साक्षादेव पदान्ते समासादौ त्वन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्ते इति वाच्यम् ।

वाक्÷शूरः। अनेन शकारस्य विकल्पेन छकारः। स्वर० । वाक्छूरः। पक्षे वाक्शूरः। इति सिद्धम्। छः शः इति विग्रहे विपरीतग्रहणात् वाक् श्च्योतती त्यादौ छत्वं न स्यात्। सूत्रम्।

## हो झभाः।

चपादुत्तरस्य हकारस्य झभा वा भवन्ति। नन्वेकस्य हकारस्य पञ्च झभाः प्राप्ताः केन क्रमेण भवन्ति। तत्रोच्यते यद्वर्गीयश्चपस्तद्वर्गीयश्चतुर्थो भवति। तत् हविः तद्धविः। तद्हविः। वाक् हरिः वाग्घरिः वाग्हरिः।

होझभाः। ह (ष.ए.) स्वर०। झभ (म.\ब.) सवर्णे०। यस्य वर्गस्य सबन्धी चपो हकारादग्रे भवति तस्य वर्गस्य चतुर्थाक्षरं हकारस्थाने भवति। यथा। ककारे परे घः। चकारे परे झः। टकारे परे ढः। तकारे परे धः। पकारे परे भः॥ यद्वर्गस्य चपः पूर्वं हकारात् किल दृश्यते॥ हस्य स्थाने भवेद्वर्णस्तद्वर्गस्य चतुर्थकः॥ वर्गचतुर्थो हस्य सवर्ण इति। वा ग्रहणात् क्वचिच्चपादनुत्तरस्यापि हस्य झभा भवन्ति। यथा। समिद्धोमः। यथा क्वचिदनवसानेऽप्यवसानता ग्राह्या तेन 'वावसाने' इति धस्य तः पश्चात् 'होझभाः' एवं। तद्+हितः तद्धितः। इत्यादि। तत् ÷हविः। 'होझभाः' इति हकारस्य धकारः। पश्चात् 'चपा अबे जबाः' इति तस्य दः। स्वर०। तद्धविः इति सिद्धम्। वाक्÷ हरिः। हस्य घः। पूर्ववत् 'चपा अबे जबाः' इति कस्य गः। वाग्घरिः। सिद्धम्। एवं अच् +हलम्। अज्झलम्। षट् हलानि षड्ढलानि। ककुप् ÷हासः। ककुब्भासः। सूत्रम्।

## स्तोः श्चुभिः श्चुः।

स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः। स् च तुश्च स्तुस्तस्य स्तोः समाहारे द्वन्द्वे एकत्वम्। छन्दोवत्सूत्राणीति वचनान्नपुंसकस्य पुंस्त्वम्। श् च चवश्च श्चवस्तैः श्चुभिः। चुशब्दे चवर्गस्थवर्णापेक्षया बहुवचनम्।

अकृत्वा सप्तमीमेतां तृतीयामकरोदिला ॥
ततः श्चुभिः श्चुः पूर्वेण सन्निपातः परेण वा ॥

कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रं तच्चित्रम् । तत् शास्त्रं तच्छास्त्रम् ॥

स्तोःश्चुभिः० । स् च तुश्च स्तुः तस्य स्तोः ( ष. ए. ) ङिति ङस्येत्यकारलोपः । स्रो०।श् च चवश्च श्चवस्तैः श्चुभिः ( तृ. ब. ) स्रो०।श् च चुश्च श्चुः ( प्र. ए. ) स्रो० ।अत्र एकत्वे ' द्विगुद्वन्द्वौ ' इति नपुंसकलिङ्गं युज्यते परं 'छन्दोवत्सूत्राणि' इति छान्दसत्वात्पुल्लिङ्गत्वम् । श्चुभिरित्यत्र बहुवचनमयथासंख्येन योगज्ञापकम् । तेन शकारस्य शकारचवर्गपूर्वतः परतः उभयथापि सम्बन्धे सति शकारः स्यात् तवर्गस्य शकारचवर्गयोगे चवर्गः स्यात् । कस् चरति । कस् शूरः । उभयत्रापि शकारः । स्वर० । कश्चरति । कश्शूरः । तत्+चित्रम् । तस्य चः । स्वर० । तत् श्रवणम् । तत्शास्त्रम् । उभयत्रापि तस्य चः । 'चपाच्छः शः' इति शस्य छः । कस्+छादयति । कश्छादयति । तत्+झञ्झा । स्तोश्चुभिः श्चुः । चपा अबे० । चस्य जः, स्वर० । तज्झञ्झा । सूत्रम् ।

न शात् ।

शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । विश्नः प्रश्नः ।

नशात् । न (प्र. ए. ) अव्यया० । श [ पं. ए. ] ङसिरत् । सवर्णे० । शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । प्रश् नः । विश्+नः । रूपद्वयेऽपि तवर्गस्य चुत्वनिषेधः । किंतु स्वर० । विश्नः प्रश्नः । सूत्रम् ।

ष्टुभिः ष्टुः ।

स्तोः सकारस्य तवर्गस्य च षकारेण टवर्गेण च योगे षकारटवर्गौ यथासंख्येन भवतः। कस् षष्ठः कष्षष्ठः। कस् टीकते कष्टीकते । तत् टीकते तट्टीकते । तत् टीका तट्टीका । ष्टुभिरिति बहुवचनात्क्वचित्षकारटवर्गयोगं विनापि ष्टुत्वम् । अग्निष्टोमः ।

ष्टुभिः ष्टुः। ष् च टवश्च ष्टवस्तैः ष्टुभिः (तृ.ब.) ष् च टुश्च ष्टुः (प्र.ए.) स्रो०ष्टुभिरित्यत्रापि बहुवचनमयथासंख्यं योगसूचकम् । स्रो० । सकारचवर्गयोः षकारट-

वर्गयोगे षकारटवर्गौ यथासंख्यं भवत इत्यर्थः । सकारस्य षकारः । तवर्गस्य टवर्गः । कस्+टीकते । कस्+षष्ठः । उभयत्रापि सस्य षः । स्वर० । कष्टीकते । कः समर्थो भवतीत्यर्थः । कष्षष्ठः । तत्+टीकते । अनेन तस्य टः । स्वर० । तट्टीकते । विट् ठलः । पूर्वं ससे चपा० ततः ष्टुभिः ष्टुः । विट्ठलः । सूत्रम् ।

## तोर्लि लः ।

**तवर्गस्य लकारे परे लकारो भवति । तत्+लुनाति तल्लुनाति । भवान्+लिखति भवाँल्लिखति ।**

**तोर्लि लः ।** तु ( ष. ए. ) ङिति । तु इत्यस्य तो । ङस्य स्तो० । तोः । अग्रे ल् ( स. ए. ) स्वर० । नामिनो रः । जल० । ल ( प्र. ए. ) सो० । तवर्गस्य उदा० । तत्+लुनाति । अनेन तस्य लः । स्वर० । अत्+लोपः अल्लोपः । अग्निमथ्+लाघवं । अग्निमल्लाघवं । सम्पत्+लीला संपल्लीला । ज्ञानभुद्+लीला ज्ञानभुल्लीला । भवान्+लिखति । तोर्लिलः । इति नस्य लत्वे कृते ।

## अन्तस्था द्विप्रभेदाः ।

**रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति ।**

**अन्तस्था द्विप्रभेदाः ।** पञ्चानां वर्गाणामन्ते तिष्ठन्तीत्यन्तस्थाः अथवा उच्चारणकाले जिह्वाया अन्ते तिष्ठन्तीति अन्तस्थाः । ते के यरलवाः ते च द्विप्रकाराः कथंभूता रेफेण रकारेण वर्जिताः शेषा यवला इत्यर्थः । कथं द्विप्रभेदा इत्याह सानुनासिका निरनुनासिकाश्च । तत्र तथदधानां लकारो निरनुनासिको भवति । नकारस्य सानुनासिकत्वान्नकारस्थाने लकारोऽपि सानुनासिक एव भवति तेन पूर्ववकारस्योपरि अर्द्धानुस्वारो भवति । स्वर० । भवाँल्लिखतीति सिद्धम् । सूत्रम् ।

## न षि ।

**षकारे परे तवर्गस्य ष्टुत्वं न भवति । भवान् षष्ठः । भवान्षष्ठः ।**

**नषि ।** न ( प्र. ए. ) अव्य० । ष् ( स. ए. ) स्वर० षकारे परे तवर्गस्य टवर्गो न

भवति । भवान्+षष्ठः । अत्रानेन ष्टुभिष्टुरिति प्राप्तस्य ष्टवर्गस्य निषेधः । किंतु स्वर० । सूत्रम् ।

## टोरन्त्यात् ।

**पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुत्वं न भवति ।**

**षट्+नरः षण्नरः । षट्+सीदन्ति षट्सीदन्ति ॥**

टोरन्त्यात् । टु ( पं. ए. ) । ङिति । टु इत्यस्य टो । ङस्य । स्त्रो० टोः । अग्रे अन्त्य ( पं. ए. ) । नामिनो रः । स्वर० । अग्रे ( पं. ए. ) ङसिरत् । सवर्णे० पदान्ते वर्तमानो यष्टवर्गस्तस्मादुत्तरयोः परयोः सकारतवर्गयोः षकारटवर्गौ न भवतः । परं नाम् नवतिनगरीवर्जम्[1] । उदा० । षट् नरः । अत्र टुत्वनिषेधः । ततो ञमे ञमा वा । इति टस्य णः । स्वर० । षण्नरः । षट् सीदन्ति । अत्र षत्वनिषेधः । स्वर० सूत्रम् ।

## न सक् छते ।

**नान्तस्य पदस्य छते परे सगागमो भवति ।**

न सगिति । न ( ष. ए. ) स्वर० । स्त्रो० । सक् ( प्र. ए. ) हसे पः । छत ( स. ए. ) अ इ ए । नान्तस्य नकारान्तस्य पदस्य छते छठथचटतलक्षणे प्रत्यये परे 'सक्' इत्यागमो भवति । ककारः स्थाननियमार्थः । तमेवाह ।

## टित्कितावाद्यन्तयोर्वक्तव्यौ ।

**टित्त्वादादौ कित्त्वादन्ते । राजन्+चित्रं राजंश्चित्रम् । भवान्+तनोति भवांस्तनोति ।**

टित्कितावि‍ति । ट् इत् यस्यासौ टित् । क् इत् यस्यासौ कित् । टिच्च किच्च टित्कितौ टित्कितावागमौ क्रमेण आद्यन्तयोर्विषये भवतः । टित् आदौ कित् अन्ते इत्यर्थः । अत्र कित्त्वात् अन्ते । राजन् + चित्रम् । भवान् + तनोति । उभयत्रापि सगागमः । अकार उच्चारणार्थः । ककारः स्थाननिर्देशार्थः । एकत्र स्तोश्चुभिश्चुरिति सस्य शः । उभयत्रापि स्वर० । यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति । आगमान्तं पदमिति अपदान्तत्वात् नकारस्य 'नश्चापदान्ते झसे' इत्यनुस्वारः । सूत्रम् ।

---

१ नाम्नवतिनगरीवर्जनात् षण्णाम्, षण्णवतिः, षण्णगर्यः । अत्र टोरन्त्यादिति सूत्रं न लगति । किन्तु ष्टुभिःष्टुरिति भवति । २ ना नरौ नरः इत्यस्य नर इति बहुवचनम् ।

## शे चग्वा ।

नान्तस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः भवाञ्छूरः । भवाञ्च्छूरः भवाञ्चशूरः भवाञ्शूरः ।

शे चग्वा । श ( स. ए. ) अ इ ए । चक् ( प्र. ए. ) हसेपः । वा ( प्र. ए. ) अव्य० । नान्त इति । नकारान्तस्य पदस्य शे शकारे परे विकल्पेन ' चक् ' आगमः स्यात् । भवान् + शूरः । अत्र चपाच्छः शः । इति सूत्रस्य विकल्पेन प्राप्त्यर्थं रूपद्वये चकारागमः । पदत्रयेऽपि स्तोश्चुभिश्चुः । नस्य ञः । प्रथमरूपे चपाच्छः शः । सर्वत्र । स्वर० । भवाञ्छूरः । भवाञ् च् शूरः । तृतीयरूपे चगागमाभावे भवाञ्शूरः । सूत्रम् ।

## ङ्णनो ह्रस्वाद्विः स्वरे ।

पदान्ते स्थिता ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे । प्रत्यङ्+इदं । प्रत्यङ्ङिदम् । सुगण्+इह सुगण्णिह । राजन्+इह राजन्निह । राजन्+इदं राजन्निदं ।

ङ्णनो ह्रस्वाद्विः स्वरे । ङ् च ण् च न् च ङ्णन् ( प्र. ब. ) स्वर० । लो० ङ्णनः । अग्रे ह्रस्वात् पूर्वं । ह्वे । उ । उओ । ओ । द्विः ( प्र. ए. ) अव्य० । चपा अबे जबाः । स्वर० । अ इ ए । सिद्धम् । ह्रस्वादुत्तराः परा ये ङकारणकारनकारास्ते द्विर्भावमापद्यन्ते इत्यर्थः । स्वरे परे पदान्तविषये । अत्र पुनः स्वरग्रहणं विभक्तिस्वरनिषेधार्थम् । प्रत्यङ् इदम् । गण् संख्याने सुपूर्वः । सुष्ठु गणयतीति सुगण् क्विबन्तः । सुगण्+इह । राजन्+इह । सर्वत्रापि द्वित्वम् । स्वर० । प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह । सूत्रम् ।

## छः ।

ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥

छः । छ ( प्र. ए. ) लो० । ह्रस्वस्वरात्परः । उदाहरणम् । तव+छत्रम् । अनेन छस्य द्वित्वम् । तव छ् छत्रमिति स्थिते । सूत्रम् ।

## खसे चपा झसानाम्

झसानां खसे परे चपा भवन्ति । तव+छत्रं तवच्छत्रम् ।

खसे चपा झसानाम् । खसे ( स. ए. ) अ इ ए । चपा ( प्र. ब. ) सव-

ह सा [illegible]

र्णे० । स्रो० । झस ( ष. ब. ) नुमागमः । नामीति दीर्घः । स्वर० । मोनुस्वारः । सिद्धम् । झसानां चपा भवन्ति खसे परे । अत्र यथासंख्यगणनात् छस्य तकारः संभवति । परं वर्ग्यो वर्ग्येण सवर्ण इति वचनात् चकार एव क्रियते । स्वर० । तव च्छत्रमिति सिद्धम् । पक्षान्तरमाह ।

दीर्घादपि च वक्तव्यः ।

दीर्घादुत्तरश्छकारो द्विर्भवति । म्लेच्छः । ह्रीच्छः ।

दीर्घादित्यादि । कचित्कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले+छः । ह्री+छः । रूपद्वयेऽप्यनेन द्वित्वे विहिते प्राग्वत् । खसे चपा झसानाम् । स्वर० । ह्रीच्छ लज्जायाम् । ह्रीच्छतीति ह्रीच्छः । म्लेच्छ अव्यक्ते शब्दे म्लेच्छतीति म्लेच्छः । एवम् आच्छादयति, ह्रीच्छति, ऐच्छत्, लक्ष्मीच्छाया इत्यादौ दीर्घात्परस्य छस्य द्वित्वम् । सूत्रम् ।

अपिशब्दाद्दीर्घात्पदान्ताद्वेति वक्तव्यम् ।

लक्ष्मी+छाया लक्ष्मीच्छाया लक्ष्मीछाया ।

आङ्माङ्भ्यां च वक्तव्यम् ।

आच्छादयति । माच्छिदत् ।

मोऽनुस्वारः ।

पदान्ते वर्तमानस्य मकारस्यानुस्वारो भवति हसे परे । तम्+हसति । तं हसति । पटुम्+वृथा । पटुं वृथा । कौमारा स्त्ववसानेऽप्यनुस्वारमिच्छंति ।

मोऽनुस्वारः । म् ( ष. ए. ) स्वर० । स्रो० । मः । अग्रे अनुस्वारः ( प्र. ए. ) स्रो० । मध्ये अतोत्युः । उओ । एदोतोतः । मकारस्य हसे परे पदान्तेऽनुस्वारो भवति । उदाहरणम् । तम्+हसति, पटुम्+वृथा उभयत्राप्यनुस्वारः । ' पदान्ते ' इति किम् । गम्यते इत्यादौ अनुस्वारो न । सूत्रम् ।

नश्चापदान्ते झसे ।

नकारस्य मकारस्य चापदान्ते वर्तमानस्यानुस्वारो भवति । झसे परे । यशान्+सि यशांसि । पयान्+सि । पयांसि कम्+सः । कंसः ।

नश्चापदान्ते झसे । न् ( पं. ए. ) स्वर० । स्तो० । अग्रे च ( प्र. ए. ) अव्य० । ।वसर्जनीयस्य सः । स्तो+श्चु० । सस्य शः । स्वर० । अग्रे अपदान्ते ( स. ए. ) । स वर्णे० । अ इ ए सिद्धम् । चकारः पूर्वोक्तस्य म इत्यस्यानुकर्षणार्थः । तेन उ भयोरप्यपदान्ते पदमध्ये वर्तमानयोर्नकारमकारयोर्झसे परेऽनुस्वारो भवति । यथा स् ( प्र. ब. ) जस् । जस्शसोः शिः इनुमयमः । मिदन्त्यात्स्वरो । नोपधायाः । इति दीर्घः । स्वर० । ततः पशान्+सि । पुम्+भ्याम् । उभयत्राप्यनुस्वारः । सूत्रम् ।

## यमा यपेऽस्य ।

अनुस्वारस्य यमा भवन्ति यपे परे । नन्वेकस्यानुस्वारस्य पञ्च यमाः प्राप्ताः केन क्रमेण भवन्ति । अस्य यमस्य सवर्णाः । शान्तः ।

यमा यपेऽस्य । यम ( प्र. ब. ) सवर्णे० । स्तो० । यमाः ।अग्रे यप ( स. ए. ) अ इ ए । माक् । आदबे लोपश् विसर्गलोपः । अग्रे इदम् ( ष. ए. ) त्यदादेष्टेरः । स्यादौ दस्य मः । ङस् स्य । इदंस्थाने अ । एदोतोतः । वा ( प्र. ए. ) अव्य य० । अनुस्वारस्य यमा भवन्ति यपे परे । कथमित्यत आह अस्येति । अस्य अग्रे वर्तमानस्य यपस्य सवर्णा एव यमा भवन्ति वर्ग्येऽक्षरे परे । तवर्गस्य पंचमाक्षरं भवति । अन्यत्र यादृशो यमोऽग्रे भवति तादृश एव क्रियते , यथा कवर्गे परे ङकारः चवर्गे परे ञः । टवर्गे परे णः । तवर्गे परे नः । पवर्गे परे मः । यवलेषु परेषु यवला एव स्युः ।

## वा पदान्ते ।

पदान्ते वर्तमानस्यानुस्वारस्य यमा वा भवन्ति यपे परे । तं करोति तङ्करोति । तं तनोति तन्तनोति । तं जानाति तञ्जानाति ।

उदा० त्वम्+करोति । त्वम्+तनोति । ककारे परे ङः । तकारे परे अनुस्वारस्य नः । स्वर० । त्वङ्करोति त्वन्तनोति । सम्+यन्ता इत्यत्रानुस्वारस्य यः । यवल परे च सानुनासिकत्वात् सस्य उपरि अर्धचन्द्राकारो बिन्दुः । सँय्यन्ता । एवं सँव्वत्सरः । पुँल्लिगः । अत्र केचित् । स्वरे मः । अनुस्वारस्य मकारो भवति स्वरे परे इति सूत्रं पठन्ति । परं स्वरे परे पूर्वमनुस्वार एव न भवति किन्तु स्वरहीनएव स्यात् । जिनम् ईडे जिनमीडे । शम्+अस्ति शमस्ति । अस्माकम्+इह अस्माकमिह ।

### वर्गे वर्गान्तः ।

वर्गे परे वर्गान्तो भवति । वर्गाभावे पररूपं स्यात् । सम्+यंता सँय्यन्ता । यकारस्यान्यसवर्णाभावेऽपि यकारस्य यकार एव सवर्णः । सं+वत्सरः सँव्वत्सरः ।

मनयवलपरे हकारेऽनुस्वारस्य ते यथाक्रमं भवन्ति । किं+ह्मलयति किम्ह्मलयति । किं+न्हुते किन्ँन्हुते । किं+ह्यः कियँह्यः । किं+ह्वलयति किवँह्वलयति । किं+ल्हादयति किल्+ल्हादयाति ।

### ङ्णोः कक्टग्वा शरि । -

ङकारणकारयोः शषसे परे कक्टकावागमौ वा स्तः ॥ प्राङ्+षष्ठः प्राङ्क्षष्ठः प्राङ्षष्ठः । सुगण्+षष्ठः सुगणट्षष्ठः सुगण्षष्ठः ।

ङ्णोः कक्टक् शरि । ङकारणकारयोः शषसेषु परेषु क्रमेण कक्टकावागमौ वा स्तः । प्राङ्+षष्ठः । प्राङ्क्षष्ठः । लङ्+षु लङ्क्षु । सुगण्+षष्ठः सुगण्ट्षष्ठः । इति चतुर्थसन्ध्यनुस्वारेण । व्यञ्जनसन्धेर्विवरणं लेशतो लिखितम् ॥

### ँ छन्दसि ।

अनुस्वारश्छन्दसि ँकारमापद्यते शषसहरेफेषु परतः । चतुस्त्रिँशद्वाजिनः । सामयजूँषि । वयँसोमः । सिँह्यसि । देवानाँराजा । इति व्यञ्जनसंधिप्रक्रिया ॥ ४ ॥

### अथ विसर्गसंधिर्निगद्यते ॥

अथेति । अथ व्यञ्जनकार्यकथनानन्तरं विसर्गसन्धिर्निगद्यते । सूत्रम् ।

### विसर्जनीयस्य सः ।

विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति ।

विसर्जनीयस्य सः । विसर्जनीय ( प. ए. । अग्रे स (प्र.ए.) सिद्धम् । वि-

सर्जनीयस्य सकाररकारोत्पन्नस्य कृष्णसर्पचक्षुराकारबिन्दुद्वयरूपस्य खसे परे सकारो भवति । उदाहरणम् । कः+तनोति । अनेन विसर्गस्य सकारः । स्वर० । कस्तनोति ।

## शषसे वा ।

विसर्जनीयस्य वा सकारो भवति शषसे परे । कः+शेते कश्शेते । कः+षण्ढः कष्षण्ढः । कः+साधुः कस्साधुः ।

शषसे वा । द्विपदं सूत्रम् । विसर्जनीयस्य शषसे परे शषसा एव भवन्ति । पक्षे विसर्जनीय एव तिष्ठति । कः+शेते । कश्शेते । कः षण्ढः । कष्षण्ढः । कः +साधुः । कस्साधुः । पुनर्विशेषमाह ।

## कुप्वोः ≍क ≍पौ वा ।

विसर्जनीयस्य कवर्गपवर्गसंबंधिनि खसे परे ≍क≍पौ वा भवतः । कपौ उच्चारणार्थौ । कः+करोति । क ≍करोति । कः+पचति । क ≍ पचति । कः पचति । कः+पठति । क ≍ पठति । कः पठति ।

कुप्वोः ≍ क ≍ पौ वा । कुश्च पुश्च कुपू तयोः कुप्वोः । उत्वम् । स्वर० । अग्रे ≍ क ≍ पौ । ≍ कश्च ≍ पश्च ≍ क ≍ पौ ( प्र. द्वि. ) ओ औ औ । वा ( प्र. ए. ) अव्य० । विसर्जनीयस्य कवर्गपवर्गसम्बधिनि क ख प फ रूपे खसे परे ≍ क ≍ पौ जिव्हामूलीयोपध्मानीयसञ्ज्ञौ यथासंख्यं वा भवतः । पक्षे वि-सर्जनीय एव तिष्ठति । अयमर्थः कखयोः परयोः ≍ कः । पफयोः परयोः ≍ पः । कपौ ककारपकारावुच्चारणार्थौ । अन्यथोच्चरितुमशक्यत्वात् । अतो वज्राकारगंजाकारौ तिष्ठतः । कः+करोति । अत्र विसर्गस्य ≍ कः । क ≍ करोति । कः+पठति । क ≍ पठति एवं क ≍ खनति । क ≍ फलति ।

## वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः ।

वाचस्पतिः बृहस्पतिः कारस्करः पारस्करः भास्करः तस्करः हरिश्चन्द्रः । तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च । इत्यादि ।

वाचस्पत्यादयः संज्ञाशब्दा संज्ञावाचकाः कस्यापि नामप्रतिपादकाः शब्दास्ते नि-

पातात् साधवः सिद्धा एव ज्ञेयाः । यथा वाचस्पतिः भास्करः, श्रेयस्कर, श्रेयस्कामः, अयस्कान्तः, अयस्कुम्भः अयस्पात्रं, दिवस्पतिः, नमस्कारः, अहस्कारः, उषर्बुधः, बृहस्पतिः, तस्करः । शास्त्रान्तरे त्वित्थं दृश्यते । प्रक्रियाकौमुद्यां ' तद्बृहतोः करपत्योश्चौरदेवतयोः सुडागमस्तलोपश्च, । तत्+करः । अनेन ' स् आगमः । तलोपः तस्करः । बृहत्+पतिः । सकारागमः । तकारलोपः । बृहस्पतिः । चकारात् हरिश्चन्द्रः, मस्करः, मस्करी, कांस्कान्, कस्कः, अश्वत्थः, कपित्थः दधित्थादिषु चाधातोः सस्य तः । पारस्पत् वृक्षविशेषः, प्रायश्चित्तं वनस्पतिः, किष्किन्धा, इत्यादयः साधवः सिद्धा एव ज्ञेयाः । यल्लक्षणेनोपपन्नं दृष्टं च महाग्रन्थे तत्सर्वं निपातात्सिद्धमिति । सूत्रम् ।

## अन्हो रो रात्रिषु ।

**अन्हो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिवर्जितेषु परतः । अहः+पतिः अहर्पतिः । अहः+गणः । अहर्गणः । अहः+अत्र । अहरत्र । अरात्रिष्विति विशेषणादहोरात्रम् । अहः+रूपं । अहोरूपम् । अहः+रथन्तरं अहोरथन्तरम् । रूपरात्रिरथन्तरेषु न रेफ इत्यादि ।**

**अन्हो रो रात्रिषु** । अहन् ( ष. ए. ) अल्लोपः स्वरे । स्वर० । अन्हः अग्रे रः । हवे० उओ ( प्र. ए. ) स्रो० । रः । अग्रे अरात्रि । अतोत्युः । उओ । एदोतोतः । न रात्रयः अरात्रयस्तेषु अरात्रिषु ( स. ब. ) अहन्शब्दसम्बन्धिनो विसर्जनीयस्य पदान्ते रो भवति । रात्र्यादिवर्जितेषु शब्देषु परेषु सत्सु रकारादिरात्रिरूपरथन्तरादिवर्जितेष्वित्यर्थः । उदा० । अहन्+पतिः । अहन्+गणः । 'अन्हः' स इति सूत्रेण उभयत्रापि नस्य सः । स्रो० । अनेन सूत्रेण विसर्गस्य रः । राद्यपो द्विः । जलतुं० । अन्हः+पतिः । अहर्प्पतिः । अन्हां+गणः । अहर्ग्गणः । अत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तत्वं ग्राह्यं अरात्रिष्विति विशेषणात् । रात्र्या दिवर्जनं किम् । अहन्+रात्रम् । ' अन्ह' इति नस्य सः । अरात्रिष्विति रत्वनिषेधः । ततः । हवे । उ ओ । अहोरात्रम् । एवं अहोरूपं, अहोरथन्तरं, अन्हि रथन्तरं अहोरथन्तरं । पदान्त इति किम् । अहोभ्याम् । सूत्रम् ।

---

१ कुप्वोः ≍क≍पौ वा इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते ।

२ लक्षणसूत्रमंतरेण लोकप्रसिद्धरूपोच्चारणं निपातनमिति ।

३ प्रशस्तमहो अहोरूपम् ॥

## अतोऽत्युः ।

अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः । एदोतोऽतः । कः+अर्थः । कोऽर्थः ।

अतोऽत्युः । अत् ( पं. ए. ) स्वर० । स्रो० । अतः । अग्रे अत् ( स. ए. ) स्वर० । मध्ये अतोऽत्युः उओ । एदोतोतः । अग्रे उ ( प्र. ए. ) स्रो० । पश्चात् इयं स्वरे । स्वर० । सिद्धम् । वृत्तिः प्रसिद्धा । अति परतः अकारे परे इत्यर्थः । तपरकरणं तावन्मात्रग्रहणार्थमुभयत्रापि सवर्णनिषेधार्थम् । उदाहरणम् । कः +अर्थः । अनेन उकारः । उ ओ । एदोतोतः । कोऽर्थः। सूत्रम् ।

## हबे ।

अकारात्परस्य विसर्जनीयस्य उकारो भवति हबे परे । कः+गतः को गतः । देवः+याति देवो याति । मनः+रथः मनोरथः ।

हबे । हबे ( स. ए. ) वृत्तिः सुकरा । उदाहरणम् । कः+गतः । अत्र अकारात्परस्य विसर्जनीयस्य हबे परे उकारः । ततः । उ ओ । देवः+याति । हबे । उः । सिद्धम् । देवो याति । मनः+रथः । हबे । उ ओ इति मनोरथः । सूत्रम् ।

## आदबे लोपश् ।

अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । देवाः +अत्र । देवा अत्र । वाताः+वाताः । वाता वाताः ।

आदबे लोपश् । अ ( पं. ए. ) ङसिरत् । सवर्गे० । आत् । अब ( स. ए. ) अ इ ए । लोपश् ( प्र. ए. ) हसेपः । पूर्वं चपा० । यदि वा अश्च आश्च आ ( पं. ए. ) अस् । नपुंसकस्य इति ह्रस्वः । ङसिरत् । अवर्णात् अकाराकार रूपात् उत्तरस्य विसर्जनीयस्य लोपश् भवति अबे परे । उदाहरणम् । देवाः +अत्र । वाताः+वाताः । उभयत्रापि विसर्गलोपः । पुनर्विशेषमाह ।

## स्वरे यत्वं वा ।

अवर्णात्परस्य विसर्जनीयस्य यत्वं वा भवति स्वरे परे । देवाः+अत्र । देवायत्र । देवा अत्र ।

स्वरे यत्वं वा । स्वरे ( स. ए. ) अ इ ए. । यत्वं ( प्र. ए. ) अतोऽम् । अम् शसोः । मोनु० । वा ( प्र. ए. ) अव्य० । वाग्रहणात्पक्षे आद्ववे लोपश् । देवाः+अत्र । एकत्र यत्वम् । स्वर० । अन्यत्र लोपश् । सूत्रम् ।

## भोसः ।

भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे । भोः+एहि । भो एहि । भगोः+नमस्ते । भगो नमस्ते । अघोः+याति । अघो याति ।

भोसः । भोस् ( पं. ए. ) स्वर० । सो० । भोस इत्यत्र आद्यन्तग्रहणेन प्रत्याहारः सूचितस्तेन भोस्, भगोस्, अघोस्, इत्येतस्य पदत्रयविसर्जनीयस्यावे परे लोपश् भवति । उदाहरणम् । भोः+एहि । भगोः+नमस्ते । अघोः+याहि । भो एहि आगच्छ । हे भगो भगवन् ते तुभ्यं नमः । हे अघो हे पाप याहि । सर्वत्र ' भोस ' इति सूत्रेण विसर्गलोपश् । यो वा स्वरे । भोयेहि । सूत्रम् ।

## नामिनो रः ।

नामिनः परस्य विसर्जनीयस्य रेफो भवति अवे परे । अग्निः+अत्र । अग्निरत्र । पटुः+यजते । पटुर्यजते ।

नामिनो रः । नामिन् ( पं. ए. ) स्वर० । सो० । अग्रे रः ( प्र. ए. ) सो० । इवे । उ ओ नामिनो रः । अवर्णवर्जस्वरात् परस्य अवे परे रेफो भवति । उदाहरणम् । अग्निः+अत्र । अनेन सूत्रेण रेफः । स्वर० । अग्निरत्र । वटुः+यजते । नामिनो रः । इति रेफः । रायपो द्विः । जल० । वटु ( ब्राह्मणः ) र्यजते ( यज्ञं करोति ) । सूत्रम् ।

## रेफप्रकृतिकस्य खपे वा ।

रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः+पतिः । गीर्पतिः । गीᳲपतिः । गीःपतिः । धूः+पतिः । धूर्पतिः । धूᳲपतिः धूःपतिः ।

रेफेति । रेफप्रकृत्या उत्पन्नो रेफ एव प्रकृतिर्मूलकारणं वा यस्य स रेफप्रकृ-

---

१ ' उपसो तुवे ' उपसो विसर्जनीस्य रेफो भवति तुवे परे । उषः+बुधः । उषर्बुधः । इति चन्द्रिकापाठेऽधिकम् ।

तिकः ( प्र. ए. ) ङस्स्य । खप ( स. ए. ) अ इ ए । वा ( प्र. ए. ) अव्य० रेफाज्जातस्य विसर्जनीयस्य रेफो वा भवति खपे परे । उदा० । गिर्+पतिः हसे गिर्इत्यस्य गीः स्रो० । रेफ प्रकृति० । अनेन एकत्र रेफः । रायपो० । जल० । अत्र । कुप्वोः ᳲकᳲ पौ वा । गीर्पतिः गीᳲ पतिः गीःपतिः, एवं रूपत्रयं एवं धूर्पतिः, धूᳲपतिः, धूःपतिः । सूत्रम् ।

रः ।

रेफसंबन्धिनो विसर्जनीयस्य रेफो भवति अबे परे । प्रातः +अत्र प्रातरत्र ।

रः । र ( ष. ए. ) स्वर० । स्रो० । रः रेफसम्बन्धिनो रेफाज्जातस्य विसर्जनीयस्य रेफो भवति अबप्रत्याहारे । उदा० । प्रातर्+अत्र । अन्तर्+गतः । उभयत्रापि स्रो० । ततोऽनेन सूत्रेण पुनरपि रेफः । स्वर० । प्रातरत्र । अन्तर्गतः । एवं । स्वः+गतः । स्वर्गतः । पुनः+आगतः पुनरागतः । सूत्रम् ।

रि लोपो दीर्घश्च ।

रेफस्य रेफे परे लोपो भवति । पूर्वस्य च दीर्घः । पुनः + रमते पुनारमते । शुक्तिः + रूप्यात्मना भाति शुक्तीरूप्यात्मना भाति ।

रिलोपइति । रि ( स. ए. ) लोपः ( प्र. ए. ) स्रो० । अग्रे दीर्घः ( प्र. ए. ) स्रो० । मध्ये । हबे । उ ओ । अग्रे च ( प्र. ए. ) अव्य० । प्राक् विसर्जनीयस्य सः । स्तोश्चुभिः श्चुः । सिद्धम् । रेफेति वृत्तिः सुगमा । पुनः+रमते । ' र ' इति रेफः । ' रिलोप० ' इति रलोपः पूर्वस्य दीर्घः । न इत्यस्य ना । शुक्तिः+रूप्यात्मना भाति । नामिनो रः । रिलोपः पूर्वस्य च दीर्घः । 'क्ति' इत्यस्य दीर्घः 'क्ती' । शुक्तिः रजताकारेण भासते इत्यर्थः । एवम् हरीराजते । शम्भूरमते । सूत्रम् ।

सैषाद्धसे ।

सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे । सः चरति । स चरति । एषः हसति । एष हसति । सैषादिसंहितासमासे कृते ऽघटमाना । सा सैव दाशरथी राम इत्यादौ पादपूरणे संध्यर्था ज्ञेया ।

सैष दाशरथी रामः सैष राजा युधिष्ठिरः ॥
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥

सैषादिति । स च एष च सैपं तस्मात् सैषात् (पं. ए.) ङसिरत् । सवर्णे० । हस ( स. ए. ) अ इ ए । मध्ये । हो झभाः । चपा अबे जबाः । अत्र समासे कृते ' तदे-तदो हसे ' इति सम्भवेऽपि ' सैषाद्धसे ' इति यत् सूत्रं कृतं तत् तैः, एतैः, सकः, एपकः, नसः, असः, इत्यादौ हसे परे विसर्गलोपशप्राप्तिनिवारणार्थमित्यर्थः । केचित्पुनराहुः ' सः ' इति पृथक्पदं पंचम्येकवचनान्तं साङ्केतिकम् । ' एषात् ' पञ्चम्येकवच-नान्तम् । हसे सप्तम्यन्तम् । ' सः+एपात् ' इत्यत्रादबे लोपशिति विसर्गलोपशं विधाय पश्चात् एऐऐ । नन्वत्र लोपशि कृते पुनः सन्धिः कथं कृतः इति चे त्तत्राग्रे वक्ष्यति । सैषादिति संहितेत्यादिना । तद्, एतत्, उभयत्रापि त्यदादेष्टेरिति टिलोपः । स्तः इत्युभयत्रापि तस्य सः । एसइत्यत्र । किलात्वः सः स्रो० । सशब्दा० तदेतदोर्निष्पन्नाभ्यामित्यर्थः । शेषं कण्ठ्यम् । उदा० । सः+ चरति । एषः+हसति । उभयत्रापि विसर्गलोपश् । ' सैषाद्धसे ' इति ऋजुतया कर्तव्ये सैषादिति यत् सूत्रमध्ये योऽकारैकारयोः संहितासन्धिर्दर्शितः स स+ एषशब्दयोः ' सैष दाशरथी रामः ' इत्यादि अष्टाक्षरात्मकपादपूरणार्थंलोपशि कृतेऽपि यः ' एऐऐ ' सन्धिर्भवति तज्ज्ञापनार्थमित्यर्थः । श्लोकः । सैषः । सः+ एषः । आदबे लोपश् । एऐऐ । एवमपरपदत्रयेऽपि स+एष दाशरथिः । दशर-थस्यापत्यं दाशरथिः दशरथपुत्रो रामो वर्तते । स+एष युधिष्ठिरो राजा । युधि संग्रामे स्थिरः युधिष्ठिरः । किलात्पःसः कृतस्योत पत्वम् । ष्टुभिःष्टुः । स+एष कर्णः कर्णराजा महात्यागी महादाता वर्तते । स+एष भीमो भीमपाण्डवः महाबली अतिबलिष्ठो वर्तते इत्यादि । अर्थः सुगमः । इत्यादौ पादपूरणे सन्ध्यर्थपादपूरणे यः सन्धिः स एव अर्थः प्रयोजनं यस्याः सा । पुनर्वैदिकप्रयोगविशेषमाह ।

१ संहिता.

क्वचिन्नामिनोऽवे लोपश् ।

नामिनः परस्य विसर्जनीयस्य लोपश् भवति क्वचिदबे परे । भूमिः+आददे भूम्याददे ।

यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ॥
सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥
क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा

क्वचिदन्यदेव ॥ विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥
वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्ण
विकारनाशौ ॥ धातोस्तदर्थातिशयेन योग-
स्तदुच्यते पञ्चविधं निरुक्तम् ॥
वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ॥
षोडशादौ विकारश्च वर्णनाशः पृषोदरे ॥
वर्णविकारनाशाभ्यां धातोरतिशयेन यः ॥
योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥

क्वचिदित्यादिना प्रयुक्तम् यत्सूत्रमिहास्मिन् शास्त्रे लौकिकाय प्रयोगाय अन्यव्याकरणप्रसिद्धोदाहरणसाधनायोक्तं तद्वेदे छन्दसि बहुलम् अनिश्चितं विभजनया भवेत् क्वचिद्भवति क्वचिन्न भवति उदाहरणम् । सः +इमाम् । आदबे लोपश् । अ इ ए । भूमिः +आददे । छान्दसत्वात् क्वचिन्नामिनोप्यबे विसर्गलोपश् । इ यं स्वरे । सः+उषाम् । आदबे लोपश् । उ ओ । इत्यादीनामार्षप्रयोगाणामदुष्टता न दोष इत्यर्थः । बाहुलकं कतिधेत्यत आह ।

क्वचिदिति । क्वचित्प्रयोगेऽनुक्तस्यापि प्रवृत्तिः अप्राप्तस्य असम्भाविनः सूत्रस्य प्रापणं प्रवृत्तिः । यथा स+इमामित्यत्र ‘ लोपशि पुनर्न सन्धिः ’ इति निषिद्धत्वे ऽपि ‘ अ इ ए ’ इति सन्धेः प्राप्तिः । क्वचित्प्रयोगान्तरे उक्तस्याप्यप्रवृत्तिः कथितस्यापि सूत्रस्य निषेधः । यथा भूमिः+आददे इत्यत्र ‘ नामिनो रः ’ इत्यस्य अप्राप्तः। क्वचिद्विभाषा विकल्पः । यथा वेदे देवैः, देवेभिः । तथा शषसहरेफेषु छन्दस्यनुस्वारस्य ॱकारो वा वक्तव्यः हंसः, हॱसः । गवेशः, गवीशः । क्वचिदन्यदेवोक्तम् अन्यदेव भवति । यथा भूमिः+आददे अत्र विसर्गलोपरूपं कार्यमन्यदेव भवति । एवममुना प्रकारेण विधेर्व्याकरणसूत्रस्य विधानं करणं बहुधा बहु समीक्ष्य दृष्ट्वा बाहुलकं वैदिकप्रयोगं चतुर्विधं वदन्ति कथयन्ति । बुधा इत्यध्याहारः । वैदिकश्चतुर्धोक्तः । अथ लौकिकप्रयोगः कतिधा भवतीत्याह ।

वर्णागमइति । एको वर्णागमः च पुनः वर्णविपर्ययः पूर्वोच्चारितस्य स्थाने परसवर्णोच्चारणं, परसवर्णस्य स्थाने पूर्ववर्णोच्चारणविपर्ययः । पुनर्द्वावपरौ । कौ

1 देवास. देवाः इत्यपि प्रयोगद्वयं ‘ क्वचिद्विभाषा इत्यस्योदाहरणम्.

तौ वर्णविकारनाशौ पूर्वावस्थापरित्यागेन अवस्थान्तरापादनं विकारः, सर्वथा लोपो नाशः, वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ । पञ्चमश्च भेदो धातो स्ताभ्यां वर्णविकारनाशाभ्यां कृत्या पुनर्योऽर्थातिशयः अधिकता कश्चिद्विशेषस्तेन यो भवति स योग इति नाम्ना पञ्चमो भेदः । तस्मात् निरुक्तं निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणं पञ्चविधमुच्यते । तानेव व्यञ्जयति

वर्णागमो गवेन्द्रादाविति । गवेन्द्रादौ वर्णागमः । एवं हन् हिंसागत्योः हन् अप्रत्ययः सकारागमः । हंस इति सिद्धं । हिंस इति सिंहे वर्णविपर्ययो भवति । यथा हिंस हिंसायां मूर्तौ घन इति अप्रत्ययः ' हिंस+अ इति स्थिते हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः सस्यस्थाने हः एवं वर्णविपर्यये सिंह इति सिद्धम् । स्वो० । यथा षष् दश च इति विग्रहे षष्+दश । अत्र षष उदोढः षस्य उः दस्य डः इति वर्णविकारः । ततः उ ओ षोडश इति विकारोदाहरणम् । गूढः+आत्मा । बंधुजनः+आजुहाव । कुरवः+आत्महितम् । इत्यादिषु वर्णविकारः आकारस्य अकारं विधाय । अतोत्युः, उओ । एदोतोतः । गूढोत्मा, बंधुजनोजुहाव, कुरवोत्महितम् । पृषोदरे वर्णनाशः । यथा पृषत्+उदरम् । तकारस्यनाशः लोपः । उओ पृषत् मृगः तस्योदरमिव उदरं यस्यासौ पृषोदरः । वर्णनाशः वर्णस्याक्षरस्य नाशः ।विकारानाशभ्यां कृत्वा धातोरतिशयेनार्थो विशेषेणोत्पद्यते स प्राज्ञैः पण्डितैर्योग इत्युच्यते क्व मयूरभ्रमरादिषु मयूरः, भ्रमरः इत्याद्युदाहरणेष्वित्यर्थः । यथा रुशब्दे ( उदाहरणद्वयेऽपि ) एकत्र महीपूर्वः अन्यत्र भ्रमत्पूर्वः मह्यामतिशयेन रौतीति मयूरः । भ्रमन् सन् अतिशयेन रौतीति भ्रमरः । नाम्नि चेति डः प्रत्ययः । डित्त्वाट्टिलोपः । स्वर० । एकत्र विकारः ही स्थाने यू । अन्यत्र वर्ण नाशः तकारनाशः । मयूरः भ्रमरः इति सिद्धम् । इति विसर्गसन्धिः सम्पूर्णः ।

अथ विभक्तिर्विभाव्यते । सा द्विधा । स्यादिस्त्यादिश्च ।

अथेति । अथ सन्धिकथनानन्तरं विभक्तिर्विभाव्यते, कथ्यते । विभज्यन्ते पृथक्क्रियन्ते कर्तृकर्मादयो यया सा विभक्तिः । सा विभक्तिर्द्विधा द्विप्रकारा । एका स्यादिः ' सि औ जस् ' इत्यादिका । अपरा त्यादिः ' तिप तस् अन्ति ' इत्यादिका । विभक्तेः प्रयोजनमाह ।

विभक्त्यन्तं पदम् ।

तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते ।

विभक्त्यन्तं पदम् । विभक्तिरन्ते यस्य तद्विभक्त्यन्तं यस्यान्ते विभक्ति-

स्तत्पदमुच्यते। तत्र विभक्तिद्वयमध्ये स्यादिविभक्तिर्नाम्नोऽग्रे योज्यते स्थाप्यते। नामलक्षणमाह।

## अविभक्ति नाम।

**विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते।**

**कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा इति केचित्।**

**अविभक्ति नाम।** नास्ति विभक्तिरस्येति अविभक्ति ( प्र. ए. ) नपुंसकात्स्वेर्लोपः। नामन् ( प्र. ए. ) नपुंसकात्स्यमोर्लुक्। नाम्नो नो लोपश् धौ नस्य लोपः। सिद्धम्। विभक्तिरहितं धातोर्भ्वादेः पृथग्भूतम् अर्थयुतं शब्दरूपं एकादिवर्णरूपं तन्नाम उच्यते। शब्दरूपं नामेत्युच्यते पदस्यापि नामसंज्ञा स्यात्तन्निवारणार्थं अविभक्ति इति। तथा सति धातावतिव्याप्तिस्तन्निवारणार्थं धातुवर्जमिति। तथा सति निरर्थकस्य टसत् इत्यादिध्वनेर्नामित्वं स्यात्तन्निवारणार्थं मर्थवत् इति। ईदृग्लक्षणं नाम। **कृत्तद्धितेति।** च पुनः कृत्तद्धितसमासा अपि नामसंज्ञकाः स्युः। कृत् तृतीयवृत्तिप्रत्ययः तदन्ता धातवः तद्धितान्ताः समासाश्च नामसंज्ञका भवन्ति। केचिदिति पाणिनीयाचार्या वदन्ति। एते सर्वेऽपि प्रातिपदिकसंज्ञका नाम इति संज्ञया उच्यन्ते। तन्मते ' प्रातिपदिकम् ' इति नामपर्यायः। सूत्रम्।

## तस्मात्।

**तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति।**

**तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनं सिः।**

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| १ सि | औ | जस् |
| २ अम् | औ | शस् |
| ३ टा | भ्याम् | भिस् |
| ४ ङे | भ्याम् | भ्यस् |
| ५ ङसि | भ्याम् | भ्यस् |
| ६ ङस् | ओस् | आम् |
| ७ ङि | ओस् | सुप् |

अकारान्तः पुंल्लिङ्गो देवशब्दः । देव सि इति स्थिते । इकारः सेरिति विशेषणार्थः ।

तस्मादिति । 'सि' 'औ' 'जस्' इत्यारभ्य यावत् सुप् । तद् ( पं. ए. ) त्यदा० । दलोपः । ङसिरत् । अतः इति स्मडागमः । सवर्णे० । सिश्च औश्च जस् च यावत् सुप् च( प्र. ब. ) साङ्के० । यद्वा तस्मादिति पञ्चम्येकवचनान्तं अग्रे सि औ जस् इत्येकविंशतिरपि साङ्केतिकप्रथमैकवचनान्तानि । एवं द्वाविंशतिपदं सूत्रम् । अष्टपदमित्यपि केचित् । एताः पूर्वोक्ताः तस्मात्पूर्वोक्तान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति । तत्र 'सि औ जस्' प्रथमा । 'अम् औ शस्' द्वितीया 'टा भ्यां भिस्' तृतीया । 'ङे भ्यां भ्यस्' चतुर्थी । 'ङसि भ्यां भ्यस्' पञ्चमी । 'ङस् ओस् आम्' षष्ठी । 'ङि ओस् सु' सप्तमी । एकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति तत्रापि नाम्नि सप्तसु विभक्तिषु च अर्थमात्रस्यैकत्वविवक्षायामर्थमात्रस्य घटपटादेरेकस्य वक्तुमिच्छा क्रियते यत्र तत्र प्रथमैकवचनं 'सि' दीयते । तत्र प्रथमं देवशब्दः । दिवु क्रीडायां दीव्यतीति देवः । पचनन्दिग्रहादेरयुणिनि इति अप्रत्ययः गुणः । 'देव' इति जातम् । ततः 'देव+सि' इति स्थिते सति इकार उच्चारणार्थः सेरा इति सूत्रविशेषणार्थः । इत्संज्ञत्वादिकारलोपः । देवस् । सूत्रम् ।

## स्रोर्विसर्गः ।

सकाररेफयोर्विसर्जनीयादेशो भवत्यधातोरसे पदान्ते च । चकारात्पदान्ते उभयोर्धातुनाम्नोः । देवः । द्वित्वविवक्षायां औ । ओऔऔ देवौ । बहुत्वविवक्षायां देव जस् इति स्थिते । जकारो जसीति विशेषणार्थः । जकारस्येत्संज्ञायां तस्य लोपः । देव अस् इति स्थिते । दीर्घविसर्गौ । देवाः ।

स्रोर्विसर्गः । स् च र् च स्रौ तयोः स्रोः ( ष. द्वि. ) स्वर० । स्रो० । सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः रसे परे चकारात्पदान्ते तु धातुशब्दयोः उभयोरपि नाम्नः सकाररेफयोः रसे परे पदान्ते च विसर्गादेशः । चकारात् पदान्ते धातोरपि सकाररेफयोर्विसर्गादेशः । यथा अचकाः । रसे परे

---

२ 'सुप्' इत्यत्र पकारः पाणिनीयानां प्रथमैकवचनस्यापि 'सु' इति संज्ञा तस्माद्भेदज्ञापनार्थः सुखोच्चारणार्थश्च ।

धातोर्न । यथा आस्ते बिभर्ति । इत्यादौ अनेन विसर्गः । देवः इति सिद्धम् । द्वित्वविवक्षायां औ द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र द्विवचनम् । यथा देवश्च देवश्चेति एकशेषे 'सरूपाणामेकशेष एक विभक्तौ' इति 'देव औ' इति स्थिते । ओ औ औ । देवौ । एवं देवश्च देवश्च देवश्चेति बहूनामुक्तौ प्रथमाबहुवचनान्तो जस् । जकारो जसीति सूत्रविशेषणार्थः । 'देव+अस्' सवर्णे०।स्रो० । देवाः । विशेषमाह

**अकाराज्जसोऽसुक् क्वचिद्वक्तव्यश्छन्दसि ।**

किस्त्वादन्ते । देवासः ब्राह्मणासः । द्वितीयैकवचने देव अम् इति स्थिते ।

अकाराज्जसोऽसुक् क्वचिद्वक्तव्यश्छन्दसि । क्वचित्प्रयोगान्तरे छन्दसि अकारात्परस्य जसः असुगागमो भवति छन्दसि विषये । देव (प्र. ब.) अनेन 'अस्' आगमः । किस्त्वादन्ते । स्वर० । स्रो० ।सवर्णे० । देवासः । कर्मैकत्व[1] विवक्षायां द्वितीयैकवचने देव+अम् । सूत्रम् ।

**अमृशसोरस्य ।**

समानादुत्तरयोरमृशसोरकारस्य लोपो भवति अधातोः । देवम् ।पूर्ववत् देवौ । बहुत्वविवक्षायां देव शस् इति स्थिते । शकारः शसीति विशेषणार्थः ।

अमृशसोरस्य । अम् च शस् च अमृशसौ तयोरमृशसोः (ष. द्वि.) स्वर० । स्रो० । अ (ष. ए.) ङस्स्य । नामिनो रः । समानात्परस्य अमृशस्सम्बन्धिनोऽकारस्य लोपो भवति अधातोः अक्रियन्तशब्दादित्यर्थः । अनेनाकारलोपः । मोऽनुस्वारः । देवम् । देवौ । शेषं पूर्ववत् । द्वितीयाबहुवचनं शस् । शकारः शसीति सूत्रविशेषणार्थः इत्संज्ञः उच्चारणमात्रः । अस् शिष्यते । अमृशसोरित्यकारलोपः । सूत्रम् ।

**सो नः पुंसः ।**

पुँल्लिङ्गात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ।

सो नः पुंसः । स् (ष. ए.) स्वर० । स्रो० । न (प्र. ए.) स्रो० । पुंस्

---

१ कर्मैकत्वविवक्षायामित्यत्र अनुक्तेति कर्मविशेषणं निवेशनीयं, उक्ते कर्मणि उक्तार्थानामप्रयोग इति प्रथमाया निपतत्वात् । कर्मैकत्वं विनादियोगे अर्थैकत्वादेरुपलक्षणं, एवमग्रेऽपि बोध्यम् ।

( पं. ए. ) स्वर० । स्रो० । पुंल्लिङ्गे वर्तमानात्समानादुत्तरस्याग्रतः शसः सकारस्य नकारादेशो भवति । सूत्रम् ।

शसि ।

शसि परे पूर्वस्य दीर्घो भवति ।

शसि । शस् ( स. ए. ) स्वर० । सिद्धम् । पूर्वह्रस्वस्य दीर्घो भवति शसि परे

यदादेशस्तद्वद्भवति ।

देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबन्ध-ष्टेनेति विशेषणार्थः । उच्चरितप्रध्वंसी ह्यनुबन्धः ।

यदादेशस्तद्वद्भवतीति पूर्वस्य दीर्घः । देवान् कर्तृकरणयोरेकत्वविवक्षायां ( तृ. ए. ) देव+टा । टकारोऽनुबन्धः । उच्चरितप्रध्वंसिनो ह्यनुबन्धा इति टकारस्य लोपः । देव+आ इति स्थिते । सूत्रम् ।

टेन ।

अकारात्परष्टा इनो भवति । अइए । देवेन ।

टेन । टा ( प्र. ए. ) साङ्केतिकम् । इन ( प्र. ए. ) साङ्केति० । अकारान्त शब्दात्परतः टाविभक्तेः ' इन ' आदेशः सस्वर एव भवति । अ इ ए । देवेन । देव+भ्याम् । सूत्रम् ।

अद्भि ।

अकार आ भवति भकारे परे । देवाभ्याम् ।

अद्भि । अत् ( प्र. ए. ) हसे पः भ् ( स. ए. ) स्वर० । ' वाम्' इति सूत्रादाकारस्यानुवृत्तिः । केचित्तु ' आद्भि ' इति पठन्ति तन्मते आ अत् भि इति त्रीणि पदानि । अकारस्य विभक्तिसम्बन्धिभकारे परे आकारो भवति । देवाभ्यामिति सिद्धम् । देव भिस् । सूत्रम् ।

भ्यः ।

अकारात्परस्य भिसो भकारस्याकारो भवति ।

अ इ ए । देव एस् इति स्थिते । वृद्धिविसर्गौ । देवैः ।

भ्यः । भ् भि अ इति त्रिपदम् । भ् (ष. ए.) साङ्के० । भि (ष. ए.) साङ्के-

ति० । अ ( प्र. ए. ) स्लो० । झबे जबा इति भस्य बः । इ यं स्वरे । स्वर० । सूत्रसाधनम् । वृत्तिः कण्ठ्या । देशैकग्रहणे देशिग्रहणम् । तेन भि इत्युक्ते भिसो ग्रहणं पूर्वं भकारेकारौ विश्लिष्य वियोज्य इकारात्पूर्वं भकारं विधाय पश्चात् भस्य अः । अ इ ए । ए ऐ ऐ । स्लो० । देवैरिति सिद्धम् । अत्र तु 'भिस ऐस्' इत्येवं सूत्रं युक्तम् । सूत्रम् ।

**अकारस्य भिसि छन्दस्येकारो वक्तव्यः ।**

**देवेभिः । कर्णेभिः । चतुर्थ्येकवचने देव ङे इति स्थिते ।**

**अकारस्येति ।** अकारस्य भिसि परे छन्दसि वैदिकोदाहरणविषये एकारो वा वक्तव्यः । देवेभिः कर्णेभिरिति वैदिकप्रयोगः । संप्रदानैकत्वविवक्षायां चतुर्थ्येकवचने देव+ङे इति ङकारो ङित्कार्यार्थः इत्संज्ञकश्च सर्वत्र ङे, ङसि, ङस्, ङिषु इत्यर्थः ।

**ङेरक् ।**

**ङकारो ङित्कार्यार्थः सर्वत्र अकारात्परस्य ङे इत्येतस्यागागमो भवति । कित्त्वादन्ते । ए अय् इति सूत्रेण दीर्घः । देवाय । देवाभ्याम् ।**

**ङेरक् ।** ङे ( ष. ए. ) ङस्येत्यकारलोपः । स्लो० । अक् ( प्र. ए. ) हसेपः० । नामिनो रः । स्वर० । सिद्धम् । अकारात्परस्य 'ङे' इत्यस्य अगागमो भवति । कित्त्वादन्ते । ए अय् । सवर्णे० । स्वर० । देवाय । ( च. द्वि. ) देवाभ्याम् अद्भि ( च. ब. ) देव+भ्यस् इति स्थिते । सूत्रम् ।

**ए स्भि बहुत्वे ।**

**अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्यः । पञ्चम्येकवचने देव ङसि इति स्थिते । इकारः प्रत्ययभेदज्ञापनार्थः ।**

**एस्भि बहुत्वे ।** ए ( प्र. ए. ) साङ्के० । स्च भ्च स्भ् तस्मिन् ( स. ए. ) स्वर० । बहुत्वे ( स. ए. ) अ इ ए । अकारस्य एत्वमेकारो भवति बहुवचने सकारभकारादौ विभक्तावित्यर्थः । देवेभ्यः । अपादानैकत्वविवक्षायाम् ( पं. ए. ) देव+अस् इति स्थिते । सूत्रम् ।

## ङसिरत् ।

**अकारात्परो ङसिरत् भवति । देवात् । देवाभ्याम् । देवेभ्यः । षष्ठ्येकवचने देव ङस् इति स्थिते ।**

ङसिरदिति । ङसि ( प्र. ए. ) स्नो० । अत् ( प्र. ए. ) हसे पः । नामिनो रः । सिद्धम् । अकाराद्युत्तरो यो ङसिः सोऽत् भवति । सवर्णे० । देवात् । द्विवचने । देवाभ्याम् । अद्धि । बहुवचने देवेभ्यः । एस्मि बहुत्वे । सम्बन्धैकत्वविवक्षायां ( ष. ए. ) देव+अस् । सूत्रम् ।

## ङस् स्य ।

**अकारात्परो ङस् स्यो भवति । देवस्य ।**

ङस्स्य । ङस् ( प्र. ए. ) हसेपः । स्य ( प्र. ए. ) स्नो० । अकारादिति वृत्तिः कण्ठ्या । देवस्य । ( ष. द्वि. ) देव+ओस् इति स्थिते । सूत्रम् ।

## ओसि ।

**अकारस्य ओसि परे एत्वं भवति । एअय् देवयोः ।**

ओसि । ओस् ( स. ए. ) स्वर० । अकारस्य ओसि परे एत्वं भवति । ए अय् । स्वर० । देवयोः । षष्ठीबहुवचने देव+आम् इति स्थिते । सूत्रम् ।

## नुडामः ।

**समानादुत्तरस्यामो नुडागमो भवति टित्वादादौ उकार उच्चारणार्थः**

नुडामः । नुट् ( प्र. ए. ) हसे पः । आम् ( ष. ए. ) स्वर० । मध्ये । चपा अबे जबाः । सिद्धम् । समानात् ह्रस्वसमानात् दीर्घात्तु आबन्तेषु ईकारान्तेषु च नित्यस्त्रीलिङ्गे वर्तमानेष्विति व्याख्येयं । समानात्परस्य आमः षष्ठीबहुवचनस्येति व्याख्येयमन्यथा आम् ङे इत्याम्, स्त्रियां य्वोरित्याम्, आमौ इत्यप्याम्, किमोऽव्ययादित्याम्, कासादिप्रत्ययान्तादित्याम्, वर्तते तत्रापि व्याप्तिः स्यात् । तेन षष्ठीबहुवचनस्यामो नुडागमो भवति अधातोः टित्वादादौ उकार उच्चारणार्थः इति नुङ्त्यागमः । 'आमो नुट्' इति कर्तव्ये 'नुडाम' इति विपरीतकरणं नुटो नित्यत्वसूचकं तेन वारीणामित्यत्र नुडागमः एव स्यान्नामिनः स्वरे इति न भवति । सूत्रम् ।

## नामि ।

नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते । अइए देवे । देवयोः । बहुत्वविवक्षायां देव सुप् इति स्थिते । पकारः पित्कार्यार्थः । एस्भिबहुत्वे ।

नामि । नुट्सहित आम् नाम् तस्मिन् नामि (स. ए.) स्वर० । नुडागमसहिते आमि परे दीर्घो भवति इति दीर्घः । स्वर० । मोऽनुस्वारः । आधारैकत्वविवक्षायां (स. ए.) देव+ङि । अइए । सप्तमीद्विवचनं षष्ठीद्विवचनवत् । देवे च देवे च देवे चेत्येकशेषे सप्तमीबहुवचनं देव+सु इति स्थिते । एस्भि बहुत्वे । ततः सूत्रम् ।

## क्लिात्षः सः कृतस्य ।

कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु । अन्ते स्थितस्य तु न भवति सुपीः ।

क्लिात्षः सः कृतस्य । कुश्च इलश्च क्लिं तस्मात् (पं. ए.) ङसिरत् । सवर्णे० । (ष. ए.) स्तो० । स् (ष. ए) स्वर० । स्तो० । कृत (ष. ए.) ङस्स्य । सूत्रं सिद्धम्, वृत्तिः कण्ठ्या । न वरं केन चित् सूत्रेण कृतस्यैव सकारस्य षकारो भवति । नत्वकृतस्य । स्वाभाविकस्य अन्ते स्थितस्यापि सस्य षत्वं न भवति यथाहरिस्तत्रेत्यादौ न षत्वं तथा नुम्विसर्गान्तरेऽपि षत्वं यथा हवींषि हविःषु इत्यर्थः । अत्र 'सः षः' इति कर्तव्ये यत् 'षः सः' इति विपरीतत्वेन कृतं तत् क्वचित् क्लिं विनापि सस्य षत्वज्ञापनार्थम् । यथा अवष्टम्भः । अभ्यषुणोत् । देवेष्विति सिद्धम् । सम्बोधनमाह ।

## आमन्त्रणे सिर्धिः ।

आमन्त्रणमभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ।

आमन्त्रणे । आमन्त्र्यते आहूयते पुरुषोऽनेनेत्यामन्त्रणं तस्मिन् (स. ए.) अ इ ए । सि (प्र. ए.) स्तो० । धि० (प्र. ए.) स्तो० । आमन्त्रणमिति कोऽर्थः अभिमुखीकरणं अनभिमुखो अभिमुखः क्रियतेऽनेनेत्यभिमुखीकरणं तस्मिन्नर्थे

विहितः कृतो यः सिः प्रथमैकवचनरूपः स धिसंज्ञो भवति । उदाह० देवस् । धिसंज्ञायां किं कार्यमित्याह सूत्रम् ।

## समानाद्धेर्लोपोऽधातोः ।

समानादुत्तरस्य धेर्लोपो भवत्यधातोः ।

ह्रस्वात्समानादुत्तरस्येति ज्ञेयम् ।

**समानादिति** । समान ( पं. ए. ) ङसिरत् । सवर्णे० । धि ( ष. ए. ) ङिति ङस्येत्यकारलोपः । झबे जबाः । तस्य दः । स्वर०। लोप ( प्र. ए. ) स्रो० । नामिनो रः । जलतुम्बिकान्यायेन० । अधातुः न धातुरधातुस्तस्मात् ( पं. ए. ) ङिति ङस्येत्यकारलोपः । अतोऽत्युः । ओ औ । एदोतोतः । सिद्धम् । समानादुत्तरस्य धेर्लोपो भवति । अत्र समानादिति ह्रस्वसमानात् परस्येति व्याख्येयम् । अन्यथा हे हाहाः, हे हूहूः, हेवातप्रमीः इत्यादौ विरुणद्धि । अधातोः अक्विबन्तात् शब्दात् अक्विबन्तोऽधातुरुच्यते क्विबन्तश्च शब्दो धातुरित्यभिप्रायः । अनेन धिलोपः । पूर्वं 'हे' शब्दः । एतद्धेतुः ।

आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः ।

हेदेव हेदेवौ हेदेवाः । एवं घटपटस्तम्भकुम्भादयोऽप्यकारान्ताः पुल्लिङ्गाः । अकारान्तानामपि सर्वादीनां तु विशेषः । सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अंतर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मत् अस्मत् भवत् । एते सर्वादयस्त्रिलिङ्गाः । तत्र पुल्लिङ्गनिरूपणम् । अकारान्तः सर्वशब्दः । सर्वः सर्वौ ।

**आभिमुख्येति** । अभिमुखस्य भावः आभिमुख्यमभिमुखत्वं तस्याभिव्यक्तये प्रकटीकरणाय 'हे' शब्दः आदौ प्रयुज्यते इत्यर्थः । हेदेव । द्विवचने । औ-औ औ । बहुवचने । सवर्णेदीर्घः । स्रो० । अन्यानपि शब्दानाह **एवमिति** । कण्ठ्यं । अत्र काव्ये विभक्त्यर्थं दर्शयति । 'वृक्षस्तिष्ठति कानने कुसुमितं वृक्षं लता संश्रिता, वृक्षेणाभिहतो गजो निपतितो वृक्षाय देयं जलम् ॥ वृक्षादानय

मञ्जरीं कुसुमितां वृक्षस्य शाखोन्नता, वृक्षे नीडमिदं कृतं शकुनिना हेवृक्ष किं पश्यसि ॥ पुनर्विशेषमाह । **अकारान्तानामिति** यद्यपि सर्वादयोऽकारान्तास्तथापि सर्वादीनां विशेषो देवशब्दात् कश्चिद्भेदोऽस्ति । के ते सर्वादय इत्याह । **सर्वविश्वेति यावत् अस्मद्** । विश्वशब्दस्य सकलार्थवाचकत्वे सर्वादित्वं नतु जगद्वाचकत्वे। जगद्वाचकत्वे तु कुलशब्दवत् । समः अतुल्यार्थः सर्वार्थवाचकः। तुल्यार्थत्वे राज्ञः समायेत्यत्र न सर्वादित्वम् । सिम समग्रार्थवाचकः। नेम खण्डवाचकः। पूर्वादीनां तु व्यवस्थायामेव सर्वादित्वम् । स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्थेति स्वस्याभिधेयो यो दिग्देशकालस्वभावस्तमपेक्षते तेनैवापेक्षते इति स्वाभिधेयापेक्ष ईदृशो योऽवधेर्मर्यादाया नियमोऽवश्यंभावोऽवधिभावादभ्रंशो व्यवस्था उच्यते । दक्षिणशब्दस्य प्रावीण्ये शृंगारनायकवाचकत्वेवा न सर्वादिकार्यम् । अन्यत्र दक्षिणदिग्देशवाचकत्वे सर्वादित्वं । उत्तरशब्दस्य उत्तरदिग्वाचकत्वे सर्वादित्वं प्रतिवाक्ये तु न सर्वादिकार्यम्। अधरस्य हीनार्थत्वे सर्वादित्वं नत्वोष्ठवाचकत्वे स्वशब्दस्य ज्ञातिधनान्यवाचित्वे ज्ञातिधनार्थवर्जं किन्तु आत्मात्मीयार्थवाचकत्वे सर्वादित्वम् । स्वाः ज्ञातयः, स्वानि द्रव्याणि इत्यत्र सर्वादित्वं न अन्यत्र तु स्वस्मै रोचते, स्वे पुत्राः, स्वस्मै पुत्राय देहि, अत्र सर्ववत् । अन्तरशब्दस्य बहिर्योगे उपसंव्याने च सर्वादित्वं नान्यत्र। यतः । ' मध्ये छिद्रे विशेषे च व्यवधाने बहिर्युजि। उपसंख्यानने प्राज्ञाः षडर्थं त्वन्तरं विदुः ॥ अन्तरस्मै गृहाय नगरबाह्याय चाण्डालादिगृहायेत्यर्थः । पुरि तु न भवति । अन्तरायै पुरे कुप्यति चाण्डालादि बाह्यपुर्यै इत्यर्थः । वस्त्रान्तरेण गूहितं वस्त्रं उपसंव्यानं तत्रार्थे अन्तरे अन्तरा वा शाठकाः, अन्तरस्मै शाटकाय वस्त्रान्तरेणावृताय शाटकायेत्यर्थः । यतः ' सर्वादिः सर्वनामाख्ये नचेद्गौणोऽथवाभिधा ॥ पूर्वादिश्च व्यवस्थायां समो ऽतुल्येऽन्तरो ऽपुरि ॥ परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ॥ उभशब्दस्य भवच्छब्दस्य द्विशब्दस्य त्वच्छब्दस्य च तृतीयासमासे तथा हेत्वर्थे सर्वादेः सर्वा विभक्तयस्तदर्थं अकच्प्रत्ययार्थं च सर्वादिमध्ये ग्रहणम् । यथा उभौ हेतू उभाभ्यां हेतुभ्यां, उभयोः हेत्वोः, त्वत् हेतुः, त्वतं हेतुं, त्वता हेतुना, त्वते हेतवे, द्वौ हेतू, द्वाभ्यां हेतुभ्यां, द्वयोः हेत्वोः, भवान् हेतुः, भवन्तं हेतुं, भवता हेतुना, इत्यादि । तथा अज्ञातौ उभौ उभकौ एवं द्वकौ भवकान्, भवकन्तौ, भवकन्तः, त्वकत् इत्यादि । एते सर्वादय उच्यन्ते कथ्यन्ते । त्रिलिङ्गा लिङ्गत्रयधारिणः पुल्लिङ्गस्त्रीलिङ्ग-

---

१ अनुकूलः, दक्षिणः, शठः, धृष्टः, एते चत्वारः शृंगारनायकाः वाग्भटालंकृतिप्रसिद्धाः ।,
२ ज्ञातावात्मनि चात्मीये धने स्वाख्या प्रवर्तते । ३ अन्तरीयं निवसनमुपसंव्यानम् ।

नपुंसकलिङ्गाः । तत्र पुलिङ्गे रूपमाह । सृगतौ वप्रत्ययः । सरति प्रसरतीति सर्वः (प्र.ए.) स्रो० । सर्वः (प्र.ए.) । ओ औ औ । सर्वौ । बहुत्वे विशेषणकृत्यमाह। सूत्रम् ।

## जसी ।

**सर्वादेरकारान्तात्परो जस् ई भवति । अइए सर्वे । सर्वम् सर्वौ सर्वान् । पूर्ववत्प्रक्रिया ।**

जसी । जस् ( प्र. ए. ) साङ्के० । ई ( प्र. ए. ) सर्वा वृत्तिः सुबोधा । गुरु शिच सर्वस्येति गुरुत्वात् सर्वस्य जस् ई भवति । प्रक्रियायां तु जसः । शेषात्सर्वस्य नवरमकारान्तग्रहणं भवच्छब्दनिषेधसूचकम् । अनेन ई । अ इ ए । द्वितीयायां देववत् । तृतीयैकवचने सर्व+आ ' टेन ' इति ' इन ' आदेशे कृते । अ इ ए । ततः सूत्रम् ।

## ष्रृनों णोऽनन्ते ।

**षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्य न भवति । तेन सर्वानित्यादि ।**

ष्रृनोंणोनन्ते । ष्च र्च ऋच ष्रृतस्मात् ष्रृः ( पं. ए. ) ऋतो ङुः । स च ङित् । ङित्वाट्टिलोपः । स्वर० । ( ष. ए. ) स्रो० । नामिनोरः । जल० । ण ( प्र. ए. ) स्रो० । हबे । उ ओ । अनन्तः न अन्तो अनन्तस्तस्मिन् अनन्ते ( स. ए. ) अ इ ए । अतोत्युः एदोतोऽतः सिद्धम् । पाठसिद्धा वृत्तिः । अन्ते पदान्ते स्थितस्य व्यञ्जनस्येत्यर्थः । नन्वत्र रेफस्याग्रे नकारो नास्ति, किन्तु मध्ये वकारेकारौ स्तः, तत्कथं नकारस्य णकारः स्यादित्याह । सूत्रम् ।

## अवकुप्वन्तरेऽपि ।

**अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण सर्वाभ्याम् सर्वैः । चतुर्थ्येकवचने सर्व ङे इति स्थिते ।**

अवकुप्वन्तरेऽपि । अवश्च कुश्च पुश्च अवकुपवः तैरन्तरं अवकुप्वन्तरं तस्मिन् (स.ए.) अ इ ए । अपि (प्र.ए.) अव्यया० । एदो० । अवप्रत्या० । अवप्रत्याहारस्य अन्तरे कवर्गस्यान्तरे पवर्गस्यान्तरे अपिशब्दात् जिव्हामूलीयोपध्मानीयानुस्वारनुम्विसर्गव्यवधाने अन्तरेऽपि णत्वं वक्तव्यम् ।

सर्वेण । सर्वाभ्याम् अद्भि । सर्वैः । भ्यः । अ इ ए । ए ऐ ऐ । ( च. ए. ) सर्व +ए । सूत्रम् ।

## सर्वादेः स्मट् ।

**सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । ए ऐ ऐ । सर्वस्मै सर्वाभ्याम् सर्वेभ्यः । पञ्चम्येकवचने सर्व अत् इति स्थिते ।**

सर्वादेः स्मट् । सर्वं आदिर्यस्य सः सर्वादिस्तस्मात्सर्वादेः ( पं. ए. )ङि ति । ङस्य । अग्रे स्मट् ( प्र. ए. ) हसे पः । सिद्धम् । अनेन स्मट् । टित्वादादौ । ए ऐ ऐ ( पं. ए. ) सर्व+अस् । ङसिरत् । ततः 'सर्व+अत्' इति स्थिते ।

## अतः ।

**सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति । दीर्घः । सर्वस्मात् सर्वाभ्याम् सर्वेभ्यः । सर्वस्य सर्वयोः ।**

अतः । अत् ( ष. ए. ) स्वर० लो० । अकारान्तात् सर्वादेः शब्दात् परस्य ङसिस्थाने जातस्य 'अत्' इत्यस्य 'स्मट्' आगमो भवति । इति स्मडागमः । सवर्णे० । सर्वस्मात् । द्वित्वे बहुत्वे च देववत् । ( ष. ए. ) ङस्स्य । सर्वस्य । सर्व ( ष. द्वि. ) ओसि । ए अय् । स्वर० । लो० । ( ष. ब. ) सर्व+आम् इति स्थिते । सूत्रम् ।

## सुडामः ।

**सर्वादेरवर्णान्तात्परस्यामः सुडागमो भवति । सर्वेषाम् ।**

सुडामः । सुट् हसेपः आम् ( ष. ए. )स्वर० । लो० । चपा अबे० । सर्वादेः परस्य आमः सुडागम इति सुट् । टित्वादादौ । उकार उच्चारणार्थः । ततः एस्भि बहुत्वे किला० । स्वर० । सर्वेषाम् । ( स. ए. ) सूत्रम् ।

## ङि स्मिन् ।

**सर्वादेरकारान्तात्परो ङिः स्मिन् भवति । सर्वस्मिन् सर्वयोः सर्वेषु । हेसर्व हेसर्वौ हेसर्वे इत्यादि । एवं विश्वादीनामेकशब्दपर्यन्तानां सर्वशब्दवद्रूपं ज्ञेयम् । डतरडतमौ विहा-**

य । एतौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । तथैव विश्वशब्दः । विश्वः विश्वौ विश्वे इत्यादि । उभशब्दो नित्यं द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ हे उभौ । उभयशब्दस्य द्विवचनं नास्ति । उभयः उभये । उभयम् उभयान् । उभयेन उभयैः । उभयस्मै उभयेभ्यः । उभयस्मात् उभयेभ्यः । उभयस्य उभयेषाम् । उभयस्मिन् उभयेषु । हेउभय हेउभये । द्विवचने एतस्य प्रयोगोऽस्तीत्यपि केचित् । तन्मते सर्ववत् । अन्यः अन्यौ अन्ये इत्यादि । इतरः इतरौ इतरे इत्यादि । कतरः कतरौ कतरे इत्यादि । एवमेकशब्दपर्यन्तानां रूपं ज्ञेयम् । पूर्वादीनां तु विशेषः ।

ङि स्मिन् । ङि ( प्र. ए. ) साङ्केति० । स्मिन् ( प्र. ए. ) हसे० । सर्वादेरिति अनेन ङेः स्मिन् आदेशः । सिद्धम् । सर्वयोः । ओसि ए अय् स्वर० । स्रो० । ( स. ब. ) एस्मि बहुत्वे । किला० सर्वेषु । सम्बोधने हेसर्व समानाद्धेर्लोपो धातोः । हे सर्वौ । हे सर्वे । प्रथमावत् । एवं सर्वशब्दरीत्या । डतरडतमौ विहाय तद्वर्जानां एकशब्दपर्यन्तानां शब्दानां रूपमवसेयम् । परं पतरडतमौ विहाय वर्जयित्वा यतस्तौ प्रत्ययौ तद्धितोद्भवौ अतस्तदन्ताः कतरकतमादिशब्दा ग्राह्याः । अन्यतरस्य पृथग्ग्रहणेन अन्यतमस्य प्रतिषेधः । अन्यं सर्वादिविशेषमाह ।

पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः ।

पूर्वः पूर्वौ पूर्वे-पूर्वाः । पूर्वम् पूर्वौ पूर्वान् । पूर्वेण पूर्वाभ्याम् पूर्वैः । पूर्वस्मै पूर्वाभ्याम् पूर्वेभ्यः ।

पूर्वादीनामिति । तु पुनः पूर्वादीनां नवानां शब्दानां जस ईकारो वा वक्तव्यः । वा सर्ववज्जसीत्यर्थः । अन्यत्र पक्षे देववत् । पूर्वे पूर्वाः । परे पराः इत्यादि ।

पूर्वादिभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ।

पूर्वस्मात् पूर्वात् पूर्वाभ्याम् पूर्वेभ्यः । पूर्वस्य पूर्वयोः पूर्वेषाम् । पूर्वस्मिन्-पूर्वे पूर्वयोः पूर्वेषु । हेपूर्व हेपूर्वौ हेपूर्वे

हेपूर्वाः । परशब्दः । परः परौ परे-पराः इत्यादि । एवमन्तर-शब्दपर्यन्तानां रूपं ज्ञेयम् ।

सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाऽभिधा ॥
पूर्वादिश्च व्यवस्थायां समोऽतुल्येंऽतरोऽपुरि ॥
परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ॥

स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः कुशला इत्यर्थः ।

पूर्वादिभ्यइति । पुनः पूर्वादीनां नवानां ङसिश्च ङिश्च ङसिङी तयोः ङसिङ्योः स्मात्स्मिनौ आदेशौ वा वक्तव्यौ । पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे । अन्यत् सर्ववत् । पूर्वः पूर्वौ पूर्वे पूर्वाः । प्रथमा । पूर्वं पूर्वौ पूर्वान् । द्वितीया । पूर्वेण पूर्वाभ्यां पूर्वैः । तृतीया । पूर्वस्मै पूर्वाभ्यां पूर्वेभ्यः । चतुर्थी । पूर्वस्मात् पूर्वात् पूर्वाभ्यां पूर्वेभ्यः । पञ्चमी । पूर्वस्य पूर्वयोः पूर्वेषाम् । षष्ठी । पूर्वस्मिन् पूर्वे पूर्वयोः पूर्वेषु । सप्तमी । हे पूर्व हे पूर्वौ हे पूर्वे हे पूर्वाः । संबोधनम् ।

प्रथमचरमतयायडल्पार्धकतिपयनेमानां जसी वा ।

प्रथमः प्रथमौ प्रथमे-प्रथमाः । चरमः चरमौ चरमे-चरमाः । शेषं देववत् । तयायडौ प्रत्ययौ । तदन्ताः शब्दा ग्राह्याः । तयप्रत्ययान्तो द्वितयशब्दः । द्वितयः द्वितयौ द्वितये-द्वितयाः । एवं त्रितयशब्दः । अयट्प्रत्ययान्तो द्वयः त्रयश्च । एवं नेमपर्यन्तानां रूपं ज्ञेयम् । तीयस्य सर्ववद्रूपं ङित्सु वा वक्तव्यम् । द्वितीयः द्वितीयौ द्वितीयाः । द्वितीयं द्वितीयौ द्वितीयान् । द्वितीयेन द्वितीयाभ्याम् द्वितीयैः । द्वितीयस्मै द्वितीयाय द्वितीयाभ्याम् द्वितीयेभ्यः । द्वितीयस्मात् द्वितीयात् द्वितीयाभ्याम् द्वितीयेभ्यः । द्वितीयस्य द्वितीययोः द्वितीयानाम् । द्वितीयास्मिन् द्वितीये द्वितीययोः द्वितीयेषु । हेद्वितीय हेद्वितीयौ हेद्वितीयाः । एवं तृतीयशब्दः । अकारान्तः पुल्लिङ्गो मासशब्दः ।

**प्रथम इति ।** सुकरम् । प्रथम, चरम, अल्प, अर्ध, कतिपयानां केवलं जसि विकल्पः । शेषं देववत् । 'तय' 'अयट्' प्रत्ययान्तानां द्वयद्वितयादीनां शब्दानां जसि रूपद्वयम् । शेषं देववत् । नेमशब्दस्य जसिविकल्पः । शेषं सर्ववत् । नेमानामिति रूपं यद्दृश्यते तत् द्वन्द्वे सर्वादित्वं वेति न्यायात्सिध्यति । प्रथमे प्रथमाः । चरमे चरमाः । शेषं देववत् । तयायटौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । द्वितये द्वितयाः । द्वये द्वयाः । उभयशब्दस्य अयट्प्रत्ययान्तत्वेऽपि सर्वादिपाठाज्जसि न विकल्पः किन्तु सर्ववत् । तीयस्येति तीयप्रत्ययान्तस्य द्वितीयतृतीयशब्दयुग्मस्येत्यर्थः । ङित्सु वचनेषु विकल्पेन सर्ववद्रूपं ङित्सु ङेङसिङसङिषु वा सर्वत्वमित्यर्थः । द्वितीयस्मै द्वितीयाय द्वितीयस्मात् द्वितीयात् द्वितीयस्मिन् द्वितीये । एवं तृतीयः । शेषं देववत् । उभशब्दो द्विसंख्यावाचकत्वान्नित्यं द्विवचनान्तः । प्र. द्वि, द्वि. द्वि. ) औ औ ( तृ. द्वि. च. द्वि. पं द्वि. ) भ्याम् (ष. द्वि., स. द्वि. ) ओसि । ए अय् । स्वर० । स्रो० । सिद्धम् । उभयशब्दः सर्वशब्दवत् । उभयशब्दस्य द्विवचनाभावः प्रयोगदर्शनाभावात् इति केचित् । इति सर्वादयः । मासशब्दस्य विशेषमाह । सूत्रम् ।

## मासस्यालोपो वा ।

**मासशब्दस्याकारस्य लोपो वा वक्तव्यः । सर्वासु विभक्तिषु परतः ।**

**मासस्येति ।** मास ( ष० ए० ) ङस् स्य अस्य अकारस्य लोपः अलोपः ( प्र. ए. ) स्रो० । सवर्णे० । वा ( प्र. ए. अव्यया० । इवे । उओ । मासशब्दस्याकारस्य लोपो वा भवति शसादौ स्वरे परे । सर्वविभक्तिषु परत इत्येके । एतदेव सम्मतं, यतः अदूषितं परमतं स्वमतमेवेति । अनेन सप्तस्वपि विभक्तिषु अकारलोपः । सौ वा लोपे कृते हसेपः० । स्रो० । स्वरादौ तु स्वर० । भकारादौ स्रो० । आदवे लोपश्च । सुपि स्रो० । विसर्जनीयस्य सः । स्वर० । सूत्रम् ।

## हसेपः सेर्लोपः ।

**हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । माः-मासः मासौ-मासौ माः-मासाः । मासं-मासम् मासौ-मासौ**

---

१ प्रथमचरमेत्यादिसूत्रे देववत् नेमानामिति दृश्यते ।

२ तदुक्तम् 'परमतं स्वमते विनिवेशितं यदि न दूषितमादृतमेव तत्' इति ।

मासः-मासान् । मासा-मासेन। स्रोर्विसर्गः । आदवे लोपश्। माभ्यां-मासाभ्याम् माभिः-मासैः । मासे-मासाय माभ्यां-मासाभ्याम् माभ्यः-मासेभ्यः । मासः-मासात् माभ्यां-मासाभ्याम् माभ्यः-मासेभ्यः । मासः-मासस्य मासोः-मासयोः मासां-मासानाम् । मासि-मासे मासोः-मासयोः मास्सु-मासेषु । हेमाः-हेमास हेमासौ-हेमासौ हेमासः-हेमासाः ।
आकारान्तः पुल्लिङ्गः सोमपाशब्दः । सोमपाः सोमपौ सोमपाः । सोमपाम् सोमपौ ।

हसेपः सेर्लोपः इति । हसाश्च ईप्च हसेप् तस्मात् हसेपः ( पं. ए. ) स्वर० । स्रो० । सि ( ष. ए. ) ङस्य । स्रो० । लोप ( प्र. ए. ) स्रो० नामिनो रः जलतुम्बी० हसान्तात् व्यंजनात् शब्दात् परस्येप्प्रत्ययान्ताच्च परस्य सेर्लोपो भवति । माः मासौ मासः । मासं मासौ मासः । मासा माभ्यां माभिः । मासे माभ्यां माभ्यः । मासः माभ्यां माभ्यः । मासः मासोः मासाम् । मासि मासोः मास्सु । हेमाः हेमासौ हेमासः । लृतुलसा दन्त्या इति स्थानसवर्णत्वात् झबे जबा इति सकारस्य दकारः । माद्भ्यां माद्भिः मात्सु इत्यपि केचित् एवं अकारलोपपक्षे साधनम् । पक्षे देवशब्दवत् मासः मासौ मासाः । एवमकारान्तप्रक्रिया । अथ आकारान्तप्रक्रियामाह । तत्राकारान्तः पुल्लिङ्गः, पुमानेव लिङ्गं विवक्षितं यस्य स पुल्लिङ्गः सोमपाशब्दः । पा पाने पा सोमपूर्वः क्विप् इति क्विप् प्रत्ययः । क्विपः सर्वापहारित्वाल्लोपः नामत्वात्स्याद्ययः क्विबन्तत्वाद्धातुत्वं न जहाति, शब्दत्वं च प्रतिपाद्यते धौ धातुत्वाद्सेर्लोपो न। किन्तु स्रो० । हे सोमपः। हे सोमपोः । हे सोमपाः । ( प्र. ए. ) स्रो०( प्र. द्वि. ) ओऔऔ ( प्र. ब. ) सवर्णे० । स्रो० । (द्वि. ए.) सवर्णे०। ( द्वि. द्वि. ) औ औ औ । सोमपाः । सोमपौ सोमपाः । सोमपां सोमपौ शसि ( द्वि. ब. ) सोमपा+अस् । सूत्रम् ।

## आतो धातोर्लोपः ।

धातुसंबन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे ।

---

१ निर्जरशब्दस्य स्वरादौ विकल्पेन 'जरस्' आदेशः। निर्जरः निर्जरसौ निर्जरौ निर्जरसः निर्जराः प्रथमा । निर्जरसं निर्जरं निर्जरसौ निर्जरौ निर्जरसः निर्जरान् द्वितीया । निर्जरसा निर्जरेण । इत्यादि ।

सोमपः । क्विबन्ता धातवो यद्यपि शब्दत्वं प्राप्तास्तथापि धातुत्वं न जहति । सोमपा सोमपाभ्याम् सोमपाभिः । सोमपे सोमपाभ्याम् सोमपाभ्यः । सोमपः सोमपाभ्याम् सोमपाभ्यः । सोमपः सोमपोः सोमपाम् । सोमपि सोमपोः सोमपासु । अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हेसोमपः हेसोमपौ हेसोमपाः । एवं कीलालपा, शंखध्मा, मधुपा, विश्वपा, धनदा, वर्चोदाप्रभृतयः । आकारान्तो हाहाशब्दः । हाहाः हाहौ हाहाः । हाहाम् हाहौ हाहान् । आदन्ताच्छसो नत्वाभाव इत्येके। तेन हाहाः । सवर्णे दीर्घः सह। हाहा हाहाभ्याम् हाहाभिः । एऐऐ हाहै हाहाभ्याम् हाहाभ्यः । हाहाः हाहाभ्याम् हाहाभ्यः । हाहाः हाहौः । आकारान्तेषु आबन्तानामेव नुडागमो नान्येषामिति नियमात् । सवर्णे दीर्घः सह । हाहाम् । हाहे हाहौः हाहासु । हेहाहाः हेहाहौ हेहाहाः । तथैव हूहूशब्दः । इकारान्तः पुल्लिङ्गो हरिशब्दः। तस्य प्रथमैकवचने हरि सि इति स्थिते । स्नोर्विसर्गः । हरिः ।

आतोधातोर्लोपः । आत् ( पं. ए. ) स्वर० । स्नो० । धातु ( ष. ए. ) ङिति । ङस् स्य । स्नो० । हवे० । उओ । लोप ( प्र. ए. ) स्नो० । नामिनोरः । जल० । सूत्रं सिद्धम् । वृत्तिः सुगमा । अनेन शसादौ स्वरादावाकारलोपः । स्वर० । सकारस्य विसर्गः । ( ष. ब. ) आमि । स्वर० । मोनु० । हसादावविशेषः । सोमपासु इत्यत्र कलाभावात् किलात्षः सः इति न भवति । एवं कीलालपाः शंखध्माः विश्वे ज्ञेयाः । आकारान्तो हाहाशब्दः । तस्य च अक्विबन्तत्वाद्धातुसंज्ञा न । अतस्तस्य साधना भिन्नैव हाहाः स्नो० । हाहौ ओऔऔ । हाहाः । हाहाम् अमूशसो० । हाहौ । हाहान् । आकारान्ताच्छसो नत्वाभाव इत्येके हाहाः । ( तृ. ए. ) हाहा सवर्णे० । हाहाभ्यां । हाहाभिः । हाहै एऐऐ । हाहाभ्याम् । हाहाभ्यः । हाहाः । सवर्णे० । स्नो० । हाहाभ्याम् । हाहाभ्यः । हाहाः । हाहौः ओऔऔ, स्नो० । हाहां । पुल्लिङ्गस्य दीर्घसमानत्वात्सुडागमो न किन्तु सवर्णे० । हाहे ।

---

१ कीलालं रुधिरं पिबतीति कीलालपाः । २ विश्वं पातीति विश्वपाः ।

अ इ ए । हाहौः । हाहाम्रु । सम्बोधनं प्रथमावत् । हेहाहाः ॥ इकारान्तसाधनमाह । इकारान्तो हरिशब्दः । दशार्थवाचकः । अर्कमर्कटमण्डूकविष्णुवासववायवः ॥ तुरङ्गसिंहशीतांशुयमाश्च हरयो दश ॥१॥ हृञ् हरणे इखलि इति इप्रत्ययः । गुणः । स्वर० । हरिस् ( प्र. ए. ) स्रो० । सूत्रम् ।

## औ यू ।

इकारान्तादुकारान्ताच्च पर औकारो यूत्वमापद्यते । ई ऊ भवतः । हरी ।

औयू । औ. ( प्र. ए. ) साङ्केति० । यू ईश्च ऊश्च यू ( द्वि. ए. ) साङ्के० । इकारान्तात्परस्य औइत्यस्य ई उकारान्तात्परस्य औप्रत्ययस्य च ऊ इत्यर्थः । अनेन औस्थाने ई . सूत्रम् ।

## ए ओ जसि ।

इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । एअय् । हरयः ।

एओजसि । ( प्र. ए. ) ओ ( प्र. ए. ) साङ्केतिकम् । जस् ( स. ए. ) स्वर० । इकारस्य जसि परे एकारः, उकारस्य ओकारः । अनेन ए । ए अय् । स्वर० । स्रो० । सम्बोधने । सूत्रम् ।

## धौ ।

इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति । हे हरे हे हरी हे हरयः । हरिम् हरी हरीन् ।

धौ । धि ( स. ए. ) ङेरौ । डित्त्वाट्टिलोपः । धौविषये इकारस्य एकारः उकारस्य ओकारः । समानाद्धेर्लोपो धातोरिति धिलोपे कृते धौ इति एकारः । सर्पे नष्टे सर्पघृष्टिर्न यातीति न्यायात् । हेहरे हेहरी । औयू । हेहरयः । ए ओ जसि । ए अय् स्वर० । स्रो० । ( द्वि. ए. ) अम्शसो० । मोनुस्वारः ( द्वि. द्वि. ) औयू । सवर्णे० ( द्वि. ब. ) अम्शसोः । सोनः पुंसि । शसीति दीर्घत्वं । हरीन् ( तृ. ए. ) सूत्रम् ।

## टानाऽस्त्रियाम् ।

इकारान्तादुकारान्ताच्च परष्टा ना भवति अस्त्रियाम् । हरिणा हरिभ्याम् हरिभिः ।

टानाऽस्त्रियाम् । टा ( प्र. ए. ) साङ्के० । ना ( प्र. ए. ) साङ्के० । न स्त्री अस्त्री तस्यामस्त्रियां ( स. ए. ) य्वोः इति ङेः आम् । स्त्रीभुवोः । स्वर० । सवर्णे० । मोनुस्वारः । सिद्धम् । इकारान्तात् उकारान्ताच्च शब्दात्परो यः टा इति विभक्तिवचनस्तस्य स्थाने ना इति भवति पुल्लिङ्गे नपुंसकलिङ्गे च स्त्रीलिङ्गे तु न भवति । अनेन टाइत्यस्य ना । ष्टनोंणो० । हसादावविशेषः (च. ए.) सूत्रम्-

ङिति ।

इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति । एअय् । हरये हरिभ्याम् हरिभ्यः ।

ङिति । ङ् इत् यस्य स ङित् तस्मिन् ( स. ए. ) स्वर० । इकारान्तस्य ङेङसिङस्ङिप्स्वेकारः उकारस्य ओकारः । अनेन रिइत्यस्य रे । ए अय् । स्वर०

ङसिङसोरस्य ।

एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः हरिभ्याम् हरिभ्यः । हरेः हर्योः हरीणाम् ।

ङसिङसोरस्य । ( पं. ए., ष. ए. ) ङितीत्यनेन एकारे कृते । सूत्रम् । ङका-रेणोपलक्षितः अः ङः । तस्य ङ ( ष. ए. ) ङस्य । केचित्तु ' ङसिङसोऽत्स्य' एवं पठन्ति एकारोकाराभ्यां परस्य पञ्चमीषष्ठ्येकवचनसम्बन्धिनोऽकारस्य लोपो भवति । अनेन अकारलोपः । स्रो० । ( ष. द्वि. ) इयं स्वरे । राद्यपोद्विः । जल-तुम्बि० । स्वर० । ( ष. ब. ) नुडागमः । नामि । ष्टनोंणोऽनन्ते । मोनु० । सूत्रम् ।

ङेरौ डित् ।

इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् । डित्त्वाट्टिलोपः ।

ङेरौडित् । ङि ( ष. ए. ) ङिति ङस्य । स्रो० । औ ( प्र. ए. ) साङ्के० । नामिनोरः । डित् ( प्र. ए. ) हसेपः । सिद्धम् । इकारोकाराभ्यां परस्य सप्तम्येक-वचनस्य औ भवति स च औ डित्संज्ञकः । डित्प्रयोजनमाह । सूत्रम् ।

डिति टेः ।

डिति परे टेर्लोपो भवति । हरौ हर्योः हरिषु । एवं अग्नि-गिरिरविकविप्रभृतयः । उकारान्ताश्च विष्णुवायुभानुप्रभृ-तयोऽप्येतैरेव सूत्रैः सिद्ध्यन्ति । भानुः भानू भानवः ।

भानुम् भानू भानून् । भानुना भानुभ्याम् भानुभिः । भानवे भानुभ्याम् भानुभ्यः । भानोः भानुभ्याम् भानुभ्यः। भानोः भान्वोः भानूनाम् । भानौ भान्वोः भानुषु । हेभानो हेभानू हेभानवः । इत्यादि । एवं विष्णुवायुप्रभृतयः । सखिशब्दस्य भेदः । सखि सि इति स्थिते ।

डिति टेः । ड इत् यस्य स डित् तस्मिन् ( स. ए. ) स्वर० । टि. (ष. ए.( ङिति । ह्रस्य । स्रो० । वृत्तिः कण्ठ्या । डकार इत् याति यस्य तस्यापि विभक्तौ प्रत्यये च परे टेर्लोपो भवति इति डित्त्वाट्टिलोपः । स्वर० । केचित् ङितीत्येकारे कृते पदादेशस्तद्वद्भवतीति न्यायात् ङेरौकारमिच्छन्ति हरौ इति सिद्धम् । द्विवचने पूर्ववत् ( स. ब. ) किला० । एवं हरिशब्दवत् अग्न्यादयोऽपि शब्दा ज्ञेयाः । अग्निरविकविकपिगिरिमुनिकलिनिधिसन्धिविधिप्रभृतयः । उकारान्ताश्च वेणु विष्णुवायुभान्वादयोऽपि एतैरेवसूत्रैः सिद्ध्यन्ति । भानुशब्दस्य औइत्यस्य ऊ । सवर्णे० । जसि । ए ओ जसि । ओ अव । ङित्सु ङितीति ओकारः । धौ च समानाद्धे० । धौ इति उकारस्य ओकारः ( तृ. ए. ) टा नास्त्रियाम् ( च. ए. ) ङिति । ओ अव् ( पं. ए, ष. ए. ) ङस्येत्यकारलोपः । ( स. ए. ) ङेरौडित् । ओसि । उवम् । सुपि किला० । उकारान्तः पुंल्लिङ्गस्तितउशब्दः चालनीवाचकः तितउः तितऊ तितावः इत्यादि. इकारान्तस्यापि सखिशब्दस्य हरिशब्दापेक्षया भेदो विशेषोऽस्ति तमाह । षण् दाने सनोति ददातीति सखा सनेर्डखिप्रत्ययः डित्त्वाट्टिलोपः । सखि इति जातम् । सूत्रम् ।

सेर्डाधेः ।

सखिशब्दस्य सेरधेर्डा भवति । डित्त्वाट्टिलोपः सखा ।

सेर्डाधेः । सि ( ष. ए. ) ङिति ङस्य । स्रो० । डा ( प्र. ए. ) साङ्के० । नामिनोरः । जलतुं० । न धिः अधिस्तस्य अधेः ( ष. ए. ) ङिति ङस्य स्रो० । सवर्णे० । सखिशब्दसम्बन्धिनो धिवर्जितस्य सेर्डा भवति । अनेन सेः आ । डित्त्वाट्टिलोपः । डिति टेः । स्वर० । सेर्डाधेरिति सूत्रमध्ये अधेरिति पदग्रहणात् धिविषये 'डा' इत्यादेशो न भवति ऐकारादेशश्च न भवति किन्तु समानाद्धेर्लोपोधातोरिति धिलोपं विधाय पश्चाद्धौ इति सूत्रेण एकार एव भवति । हेसखे इति सिद्धम् । ( प्र. द्वि. ) सूत्रम् ।

## ऐ सख्युः ।

सखिशब्दस्यैकारादेशो भवति धिवर्जितेषु पञ्चसु परेषु ।

ऐ सख्युः । द्विपदम् । ऐ ( प्र. ए. ) साङ्के० । सखि ( ष. ए. ) ऋकृङे । इ यं स्वरे । ऋतोङुः । टिलोपः । स्वर० । स्रो० । सेर्डाधेरितिसूत्रादधेरितिपदं ऐ सख्युरित्यत्राप्याकर्षणीयं तेन सखिशब्दस्य धिवर्जितेषु पञ्चसु स्यादिषु परेषु वचनेषु ऐकारादेशो भवति ।

## षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः ।

## आयादेशः । सखायौ ।

'शत्रुवदादेशः' इति वचनात् सर्वस्यापि न कथमैकारः तत्रोच्यते षष्ठीति षष्ठ्या विभक्त्या निर्दिष्टः कथितः उच्चरितः सूत्रमध्ये यः शब्दस्तस्य प्राप्तः आदेश-स्तस्य शब्दस्यान्तस्य भवति न तु सर्वस्य यथा ऐसख्युरित्यत्र सखिशब्दस्य षष्ठ्या निर्दिष्टत्वात् सखिशब्दस्य प्राप्तः ऐकारादेशः सखिशब्दस्यांतो य इकारस्तस्य-भवति । ननु पञ्चस्विति ग्रहणादसौ परोऽप्येकारादेशः कथं न क्रियते तत्राह । सौ परे तु एकारादेशे कृतेऽप्यकृतेऽपि डादेशस्य नित्यत्वात् डा आदेश एव स्यात् नत्वैकारः। अथवा ऐ सख्युरिति सूत्रे विपरीतकरणात् सौ परे ऐकारो न क्वचित् । औकारादिचतुर्षु परेषु इत्येवास्ति अनेनेकारस्य ऐकारः ऐआय् । स्वर० । एवं ( प्र० ब०, द्वि० ए०, द्वि० द्वि० ) एतेष्वपि ज्ञेयम् ।

## द्विवचनस्य वावा छन्दसि ।

द्विवचनस्यौकारश्छन्दस्याकारमापद्यते । सखाया सखायः सखायम् सखायौ सखीन् ।

द्विवचनस्य वावा छन्दसि । द्विवचनस्य प्रथमाद्विवचनस्य औ इत्यस्य छन्दसि वेदे वा आ भवति । सखाया । सम्बोधने अधेरिति विशेषणादे कवचने आकारो न तत्र हरिशब्दवत् समानाद्धेर्लोपो धातोः । धौ । शेषं प्राग्वत् (.द्वि. ब. ) हरिवत् । तृतीयादौ विशेषमाह । सूत्रम् ।

## सखिपत्योरीक् ।

सखिपतिशब्दयोरीगागमो भवति टाङङिषु परतः । दीर्घ त्वान्ना न भवति । सख्या । ऋषिप्रयोगसिद्ध्यर्थमाह ।

सखिपत्योरीक् । सखिश्च पतिश्च सखिपती तयोः सखिपत्योः ( ष. द्वि. )

इ यं स्वरे । स्वर० । स्नो० । ईक् ( प्र. ए. ) हसेपः० । सखिपतिशब्दयोः टाङेङिषु परत ईगागमो भवति कित्त्वादन्ते दीर्घत्वाट्टा ना न भवति । ततो दीर्घेकारान्तत्वात् टा नास्त्रियामिति सूत्रेण टास्थाने ना न भवति । किंतु सवर्णे० । इ यं स्वरे । सख्या पत्या ।

## आगमजमनित्यम् ।

आगमजं कार्यमनित्यं स्यात् । सखिना सखिभ्याम् सखिभिः । सख्ये सखिभ्याम् सखिभ्यः ।

पुनरागमजमनित्यम् । आगमाज्जातमागमजं कार्यमनित्यं क्वचिन्न भवतीति न्यायात् क्वचिदीकारागमो न भवति, तेन सखिना पतिना इति रूपं भवति तत्र । टा नास्त्रियाम् । ( च. ए. ) ईकारागमः । सवर्णे० । इयं स्वरे । स्वर० । ( पं. ए., ष. ए. ) विशेषमाह । सूत्रम् ।

## ऋकूङे ।

सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे । सख्यृ अस् इति स्थिते ।

ऋकूङे । ऋक् ( प्र. ए. ) हसे पः० । ङकारेण उपलक्षितः अः ङः तस्मिन् ङे ( स. ए. ) अ इ ए । अथवा अमे अमा वा । ऋकूङे । सखिपतिशब्दयोः ऋगागमो भवति ङसिङसोर्ङकारे परे । इ यं स्वरे । स्वर० । सख्यृ+अस् इति स्थिते । सूत्रम् ।

## ऋतो ङ उर्डित् ।

ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति स च डित् । सख्युः सखिभ्याम् सखिभ्यः । सख्युः सख्योः सखीनाम् । सप्तम्येकवचने ङेरौ डिदित्यौकारे कृते सखिपत्योरिगागमः । सख्यौ सख्योः सखिषु । अधेरिति विशेषणादेकारोऽधिविषये । हेसखे हेसखायौ हेसखायः । पतिशब्दस्य भेदः । पतिशब्दस्य प्रथमा द्वितीययोर्हरिशब्दवत्प्रक्रिया । पतिः पती पतयः । पतिम् पती पतीन् । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पत्या पतिना पतिभ्या-

म् पतिभिः । पत्ये पतिभ्याम् पतिभ्यः । पत्युः पतिभ्याम् पतिभ्यः । पत्युः पत्योः पतीनाम् । पत्यौ पत्योः पतिषु । हेपते हेपती हेपतयः ।

ऋतो ङ उः । ऋत (पं. ए.) स्वर० । स्रो० । ऋकारेण उपलक्षितो अः ऋस्तस्य ङः (ष० ए०) सांके० । उ (प्र. ए.) स्रो० । सूत्रमिदं सिद्धम् । ऋकारान्तादिति वृत्तिः कण्ठ्या । अनेनोभयत्राप्यकारस्यौकारः स च उकार ङित्संज्ञकः कल्प्यः । ङित्वाट्टिलोपः । डिति टेः । स्वर० । स्रो० । (ष. ब.) नुडामः । नामि । स्वर० । मोऽनुस्वारः (स. ए.) ङेरौ ङित् । इत्यौकारे कृते ङित्त्वाट्टिलोपे कृते 'यदादेशस्तद्वद्भवति' इति न्यायात् 'एकदेशविकृतमनन्यवद्भवति' इतिन्यायाच्च सखिपत्योरीक् ईगागमः ई इ यं स्वरे । शेषं हरिवत् । एवं सखिशब्दसाधनम् । पतिशब्दसाधनमाह । पतिशब्दस्य प्रथमाद्वितीययोः प्रक्रियासाधना हरिशब्दवत् । तृतीयादौ तु सामान्येन सखिशब्दवत् । पत्या पत्ये पत्युः पत्युः पत्योः पत्योः । तत्रापि विशेषमाह ।

पतिरसमास एव सखिशब्दवद्वक्तव्यः ।

षष्ठीयुक्तश्छन्दसि वा । सीतायाः पतये नम इत्यादिप्रयोगदर्शनात् । ततः समस्तस्य नादयो भवन्ति । प्रजापतिना प्रजापतये इत्यादि । द्विशब्दो नित्यं द्विवचनान्तः । द्वि औ इति स्थिते ।

असमास एव । समासरहित एव पतिशब्दः सखिशब्दवत्साध्यः । टादौ स्वरे परे समासान्तस्य च पतिशब्दस्य नादयो भवन्ति । टानास्त्रियाम्, ङिति ह्रस्य, ङेरौ ङित् इत्यादि सूत्राणि भवन्ति । यथा प्रजानां पतिः प्रजापतिरिति तत्पुरुषे समासे कृते द्वितीयां यावद्विशेषः तृतीयादौ तु टानास्त्रियामित्यादिसूत्रसमुच्चयेन हरिशब्दवत्साधनीय इत्यर्थः । प्रजापतिना प्रजापतिभ्यां प्रजापतिभिः । प्रजापतये, प्रजापतेः, प्रजापतौ । धौ प्रजापते समानाद्धेर्लोपो । धातोः । हेप्रजापती ऽऔयू । हेप्रजापतयः । ए ओ जसि । द्विशब्दो द्विसंख्यावाचकत्वात् नित्यं द्विवचनान्त एव द्विवचनं अन्ते यस्य स द्विवचनान्तः । द्वि (प्र. द्वि । द्वि. द्वि । तृ. द्वि । च. द्वि. । पं. द्वि. । ष. द्वि. । स. द्वि० )

## त्यदादेष्टेरः स्यादौ ।

त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ द्वौ द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । त्रिशब्दो नित्यं बहुवचनान्तः। त्रि अस् इति स्थिते । एओ जसि त्रयः त्रीन् त्रिभिः त्रिभ्यः त्रिभ्यः ।

त्यदादेरिति । त्यत् आदिर्यस्य स त्यदादिस्तस्य त्यदादेः ( ष. ए. ) ङिति ङस्य । स्तो० । टि ( ष. ए. ) प्राग्वत् विसर्जनीयस्य सः । छुभिः छुः । स्वर० । अ ( प्र. ए. ) स्तो०। नामिनो रः। स्वर०। स्यादि ( स ए. ) ङेरौ डित्। डित्त्वाट्टिलोपः । स्वर०। त्यद्, तद्, यद्, एतद्, अदस्, इदम्, द्वि, किं, युष्मद्, अस्मद्, एते त्यदादयः त्यदादेः शब्दस्य टेः 'अन्त्यस्वरादिष्टिः' इति संज्ञाप्रक्रियालक्षणायाष्टेः. स्यादौ विभक्तौ परतोऽकारो भवति अनेन 'द्वि' इत्यस्य 'द्व' सर्वत्र । रूपद्वये औओऔ । ततो रूपत्रये अद्वि ( ष. द्वि. । स. द्वि. ) ओसि एअय् । स्वर० । स्तो० । त्यदादीनां संबोधनाभावः । त्रिशब्द इति । इकारान्तः त्रिशब्दः त्रिसंख्यावाचकत्वात् नित्यं बहुवचनान्तः। बहुवचनमेव अन्ते यस्य सः ( प्र. ब. ) त्रि+अस् इति स्थिते । एओ जसि एअय् । स्वर० । त्रय इति जातम्। ( द्वि. ब. ) अम्शसो० । सो नः पुंसः । शसि । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । आमि विशेषः पूर्वं नुडागमः, ततः । सूत्रम् ।

## त्रेरयङ् ।

त्रिशब्दस्यायङादेशो भवति नामि परे ।

त्रेरयङ् । त्रि ( ष. ए. ) ङिति ङस्य । स्तो०। अयङ् ( प्र. ए. ) हसेपः० । नामिनो रः। सिद्धम्। त्रिशब्दस्य 'अयङ्' इत्यादेशो भवति नुट्सहित आमि परे ।

## ङकारोऽन्त्यादेशार्थः । ङिदन्त्यस्य वक्तव्यः ।

त्रयाणाम् । त्रिषु । कतिशब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । कति जस् इति स्थिते ।

ङित् । ङकारेत् आदेशः अन्त्यस्य भवति इकारस्येत्यर्थः । नन्वत्र षष्ठीनिर्दिष्टस्येत्यनेनानन्तरस्यादेशप्राप्तौ पुनर्ङिदन्तस्येति किमर्थमुक्तं तत्राह । गुरुः शिच्च सर्वस्येत्यनेन षष्ठीनिर्दिष्टस्येत्यस्य बाधः। अयङिति बह्वक्षरत्वेन गुरुरादेश-

स्तेन सर्वस्यैव भवति तन्निवारणार्थं ङिदन्तस्येति । ङित् ङकारेत् यः आदेशः स गुरुरपि अन्यस्यैव भवति । इकारस्य ' अय् ' इत्यादेशः । नामीति दीर्घः । ष्ऋनों-णो० । मोनु० । त्रिशब्दस्य बहुवचनान्तत्वेऽपि त्रिरित्येकवचनं शब्दनिर्देशात् । अथवा त्रेरित्येकवचनशब्दनिर्देशात्समासान्तत्वे एव अयङ् आदेशः असमासान्तत्वे तु न । यथा प्रियास्त्रयो येषां ते प्रियत्रयस्तेषां प्रियत्रयाणाम् । एवम् अतिक्रान्तास्त्रीन् इत्यतित्रयस्तेषामतित्रीणां इत्यादौ न अयङ् ( स. ब. ) क्लिा० । त्रिषु । हेत्रयः । का संख्या येषान्ते कति किंशब्दात् डतिप्रत्ययः । शेषा निपात्याः कत्यादय इति सिद्धस्य कतिशब्दस्य बहुवचनान्तस्यापि जस्शसोर्विशेषमाह । सूत्रम् ।

## डतेश्च ।

डत्यन्तात्परयोर्जश्शसोर्लुक् भवति ।

डतेरिति । कतिशब्दात्परयोर्जस्शसोर्लुग्वक्तव्यः । डतिप्रत्ययान्तादिति वा अनेन जश्शसोर्लोपः कर्तव्यः ।

## लुकि न तन्निमित्तम् ।

लुकि जाते सति तन्निमित्तं कार्यं न स्यात् । कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनाम् कतिषु हेकति । ईकारान्तः पुल्लिङ्गः सुश्रीशब्दः । सुश्रीः ।

लुकि न तन्निमित्तमिति । लुकि कृते सति यस्य लुक् क्रियते स एव निमित्तं कारणं यस्य ईदृशं यत्कार्यं तन्न भवति तेन एओजसि शसीति दीर्घत्वं च न भवति । शेषं सुगमम् । कतिशब्दस्य सम्बोधनाभावः । एवं कतिसाहचर्यात् यति ततिशब्दाभ्यां परयोः जश्शसोर्लुग्वक्तव्यः । यति ते नाग शीर्षाणि तति ते नाग वेदना इत्युदाहरणम् । कतिशब्दस्य त्रिष्वपि लिंगेषु सदृशरूपाणि । इकारा-न्तानुक्त्वा ईकारान्तानाह । ईकारान्तः सुश्रीशब्दः । श्रिञ्सेवायां सुपूर्वः क्विप्प्रत्ययः प्रच्छादेर्दीर्घः क्विप् सर्वापहारी लोपः । सुष्ठु श्रयन्त्येनमिति सुश्रीः । क्विबन्तत्वाद्धातुत्वं न जहाति । शब्दत्वं च प्रतिपद्यते इति स्यादयः ( प्र. ए. ) स्रो० । सुश्रीः । द्विवचने सूत्रम् ।

## य्वोर्धातोरियुवौ स्वरे ।

धातोरिकारोकारयोरियुवौ भवतः स्वरे परे । सुश्रियौ सु-श्रियः । सुश्रियम् सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्याम्

सुश्रीभिः । सुश्रिये सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रियोः सुश्रियाम् । सुश्रियि सुश्रियोः सुश्रीषु । हेसुश्रीः हेसुश्रियौ हेसुश्रियः । तथैव सुधीशब्दः । सुष्ठु ध्यायतीति सुधीः सुधियौ सुधियः सुधियम् इत्यादि । एवमुकारान्तः स्वयम्भूशब्दः । स्वयं भवतीति स्वयम्भूः स्वयम्भुवौ स्वयम्भुवः । स्वयम्भुवम् स्वयम्भुवौ स्वयम्भुवः । स्वयम्भुवा स्वयम्भूभ्याम् स्वयम्भूभिः । स्वयम्भुवे स्वयम्भूभ्याम् स्वयम्भूभ्यः । स्वयम्भुवः स्वयं भूभ्याम् स्वयंभूभ्यः । स्वयंभुवः स्वयम्भुवोः स्वयम्भुवाम् । स्वयम्भुवि स्वयम्भुवोः स्वयम्भूषु । हेस्वयम्भूः हेस्वयम्भुवौ हेस्वयम्भुवः इत्यादि । सेनानीशब्दस्याविशेषो हसादौ तु विशेषः । सेनां नयतीति सेनानीः ।

य्वोरिति । ईच ऊच य्वौ तयोः य्वोः । इयं । उवं । स्वर० । य्वो (ष.द्वि.) धातु ( ष. ए. ) ङिति । ङस्य । स्रो० । इयुव् ( प्र. द्वि. ) स्वर० । नामिनो रः । स्वर० ( स. ए. ) अइए । धातोः ईकारस्य स्वरे परे इय् उकारस्य च उव् । इयंस्वरे इति सूत्रात् स्वरे इत्यनुवृत्तौ सत्यां पुनः स्वरग्रहणं अमृशसोरस्य नुड्ामः इति निषेधार्थं निभक्तिवार्जितस्वरनिषेधार्थं च ततोऽत्र विभक्तिस्वर एव ग्राह्यः । तेन श्यर्धमित्यादौ न इय्, किन्तु इयंस्वरे इति यत्वम् । अनेन स्वरादौ इय् । स्वर० । हसादावविशेषः । सुपि क्लि० । संबोधने धातुत्वान्न धिलोपः किन्तु स्रो० । हेसुश्रीः हेसुश्रियौ हेसुश्रियः । एवं सुधीशब्दः । ऊकारान्तः स्वयंभूशब्दोऽप्येवमेव

## य्वौ वा ।

धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकारान्नास्ति तदन्तस्यानेकस्वरस्य कारकाव्ययपूर्वस्यैकस्वरस्य च धातोरीकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे । वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा वाग्रहणादियं विवक्षा । सेनान्यौ सेनान्यः । सेनान्यम् सेनान्यौ

सेनान्यः । सेनान्या सेनानीभ्याम् सेनानीभिः । सेनान्ये सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनान्योः ।

णीञ् प्रापणे । धादेष्णः स्नः । नी । सेनापूर्वः । सेनां नयति सेनानीः क्विप्प्रत्ययान्तः । सेनानीशब्दस्येकारान्तधातोरपि हसादौ न विशेषः स्वरादौ तु विशेषस्तमेव सूत्रद्वारा व्याख्याति । य्वोर्धातोरियुवौ स्वरे । अनेन द्वयंस्वरे 'उवं' इत्येतयोर्बाधो जातः य्वोर्धातोरित्यस्य बाधनार्थं य्वौ वेति सूत्रम् । यूच वूच य्वौ ( प्र. द्वि. ) वा ( प्र. ए. ) अव्य० । यस्मादिकारादुकाराच्च पूर्वौ आदौ वर्तमानौ। धातोः अवयवसंयोगः सुश्रीर्यवक्रीवत् व्यक्षरादिसंयोगो नास्ति तदन्तस्य स एव धात्ववयवसंयोगपूर्वकत्वरहित । ईकार ऊकारो वा अन्ते यस्य स तदन्तस्य पुनः अनेकस्वरस्य द्वित्रिस्वरसहितस्य शब्दस्य सम्बन्धिन ईकारस्य यकार ऊकारस्य च वकारः । ननु णीञ्प्रापणे अयं धातुः एकस्वरः कथमनेकस्वरत्वमुच्यते । कारकपूर्वस्यापि क्विबन्तग्रहणेन ग्रहणादनेकस्वरत्वम् । अत्र वा शब्दो व्यवस्थावाचको न तु विकल्पार्थस्तेन वर्षाभूः, पुनर्भूः, दृग्भूः, काराभूः, एभ्यो ऽतिरिक्तो ऽन्यो भूशब्दः स्वयंभू, कमलभू, नाभिभू, अङ्गभू, आत्मभू, मनोभू, प्रतिभू, मश्वविकस्तस्य सम्भवे सत्यपि य्वौ वा इति न भवति किन्तु य्वोर्धातोरियुवौ स्वरे इति भवति । तथा सुधीशब्दस्यापि संभवे सत्यपि य्वौवेति न भवति किन्तु य्वोर्धातोरियुवौ स्वरे इत्येव भवति अत अतो वर्जयित्वा अपर इकारोकारयोः पूर्वोक्तलक्षणयोः यकारवकारौ भवतः । वाग्रहणादियं विवक्षा ज्ञेया, कुतः निपाता नामनेकार्थत्वात् धातोः संयोगपूर्वकत्वे सुश्रियौ, यवक्रियौ, कटप्रुवौ, इत्यादौ न यकारवकारौ किन्तु इयुवावेव । एकस्वरे तु नीः नियौ, धीः धियौ, लूः लुवौ, भूः भुवौ भुवः इत्यादौ न यकारवकारौ । बहुव्रीहिसमासे अनेकस्वरस्यापि इयुवौ भवतः।यथा सुधीः सुधियौ,कुधीः कुधियौ परमधियौ इत्यादि धात्ववयवसंयोगपूर्वकत्वे एव यकारवकारौ भवतः । तेन उन्न्यौ उन्न्यः इत्यादौ स्वाभाविकधात्ववयवसंयोगपूर्वकत्वाभावात् यत्वं न भवति वर्षाभू, पुनर्भू, दृग्भू, काराभू, इत्यत्र भूशब्दस्य वत्वं । अन्यत्र उवेव वाशब्दस्य व्यवस्थावाचित्वात् इयं विवक्षा लभ्यते । अनेन स्वरादौ सर्वत्र यकारः । स्वर० । आमि विशेषः ।

## सेनान्यादीनां वामो नुड्वक्तव्यः ।

सेनानीनाम्–सेनान्याम् । सेनानी ङि इति स्थिते ।

सेनान्यादीनामिति । सेनान्यादीनां शब्दानां आमः षष्ठीबहुवचनस्य

वा नुडागमो वक्तव्यः। अनेन एकत्र नुडागमः स्वर० मोनु० अन्यत्र य्वौ वेति यकारः। स्वर० । ( स. ए. ) सूत्रम् ।

आमृ्ङेर्नियश्च[1] ।

आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्याम् सेनान्योः सेनानीषु । हेसेनानीः हेसेनान्यौ हेसेनान्यः। एवं ग्रामणीप्रभृतयः । एवमूकारान्तो यवलूशब्दः। यवलूः यवल्वौ यवल्वः । यवल्वम् यवल्वौ यवल्वः । यवल्वा यवलूभ्याम् यवलूभिः। यवल्वे यवलूभ्याम् यवलूभ्यः। यवल्वः यवलूभ्याम् यवलूभ्यः । यवल्वः यवल्वोः यवल्वाम् । यवल्वि यवल्वोः यवलूषु । हेयवलूः हेयवल्वौ हेयवल्वः । एवं वर्षाभूपुनर्भूप्रभृतयः । संयोगपूर्वस्य तु सुश्रियौ कटप्रुवौ । एकस्वरे तु नियौ लुवौ । कारकाव्ययपूर्वत्वाभावे तु परमनियौ धात्ववयवसंयोगपूर्वेकारोकारयोरेव न य्वौ । तेन उन्न्यौ । न य्वौ । तेन कुधीः कुधियौ इति। बहुव्रीहौ तु इयुवौ स्तः। ईकारान्तो वातप्रमीशब्दः। वातप्रमीः वातप्रम्यौ वातप्रम्यः । वातप्रमीम् वातप्रम्यौ वातप्रमीन्। वातप्रम्या वातप्रमीभ्याम् वातप्रमीभिः। वातप्रम्ये वातप्रमीभ्याम् वातप्रमीभ्यः। वातप्रम्यः वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रम्योः वातप्रम्याम् । वातप्रमी वातप्रम्योः वातप्रमीषु । हेवातप्रमीः हेवातप्रम्यौ हेवातप्रम्यः ।

अमि वातप्रमीमाहुः शसि वातप्रमीनिति ॥
ङौ तु वातप्रमी ज्ञेयः शेषं ग्रामणीवद्विदुः ॥

तथैवोकारान्तो हूहूशब्दः । हूहूः हूह्वौ हूह्वः । हूहूम् हूह्वौ

[1] आमृङेः । नियः । इति पृथक् सूत्रद्वयं चान्द्रिकापाठे ।

हूहून् । हूह्वा हूहूभ्याम् हूहूभिः इत्यादि । ऋकारान्तः पितृशब्दः । पितृ सि इति स्थिते ।

आम्ङेरिति । आम् ( प्र. ए. ) हसे पः० । ङि ( ष. ए. ) ङिति । ङस्य । स्रो० । केचित्तु आम्ङेर्नियश्चेत्थं सूत्रं पठन्ति तत् साधु । यतो नीशब्दादित्य नुवृत्तिर्न दृश्यते । आबन्तात् स्त्रीलिङ्गे आप्प्रत्ययान्तान्नीशब्दाच्चोत्तरस्य ङेःसप्तम्येकवचनस्य आम् भवति । अनेनामि कृते य्वौ वेति यकारः । स्वर० । मोनु० । धातुत्वान्न धेर्लोपः । शेषं सुकरम् । एवं ग्रामण्यग्रणीप्रभृतयोऽपीकारान्ता धातुशब्दा ज्ञेयाः । ऊकारान्ताश्च यवलूखलपूहम्भूकाराभूवर्षाभूपुनर्भूप्रभृतयोऽप्येवम् । परं सप्तम्येकवचने नीशब्दाभावात् ङेराम् न भवति तेन यवल्वि पुनर्भ्वि वर्षाभ्वि इति रूपम् । वर्षासु भवति इति वर्षाभूः मण्डूकः । यवान् लुनातीति यवलूः । पुनर्भवतीति पुनर्भूः । हन् हिंसन् भवतीति हम्भूः सर्पः कीटः । कारे कारेण वा भवतीति कारभूराजदेव्या भागः । एते क्विप्प्रत्ययान्ताः । ईकारान्तो वातप्रमीशब्दः । वातप्रमीः ( प्र. ए. ) स्रो० । वातप्रम्ये । वातप्रम्यः । वातप्रम्योः । वातप्रम्यां । ( स. ए. ) सवर्णे० । वातप्रमी । वातप्रम्योः । वातप्रमीषु । हेवातप्रमीः । अमि वातप्रमीं । शसि वातप्रमीनिति । ङौ तु वातप्रमीति रूपम् । एवं देवयजीरपि अतिलक्ष्मीः ययीः पपीः । एव मूकारान्तो हूहूशब्दः । हूहूः हूह्वौ ( उवं ) हूह्वः । स्वरे परे सर्वत्र उवम् । शसि हूहून् । आमि हूह्वाम् । ङौ हूह्वि । अमि हूहूम् ऋकारान्तानाह । ऋकारान्तः पितृशब्दः । पा रक्षणे पाति रक्षतीति पिता । पितृशब्दो निपातसिद्धः न तृप्रत्ययान्तः । पितृ ( प्र. ए. ) । सूत्रम् ।

सेरा ।

ऋकारान्तात्परस्य सेरा भवति स च डित् । डित्त्वाट्टिलोपः । पिता ।

सेरा । सि ( ष. ए. ) ङिति । ङस्य । स्रो० । आ ( प्र. ए. ) साङ्के० । नामिनो रः । ऋका० । इति सेः ' आ ' इत्यादेशः । स च आ डित्संज्ञकः डित्त्वाट्टिलोपः । स्वर० । पिता । सूत्रम् ।

अर् पञ्चसु ।

ऋकारस्यार् भवति पञ्चसु परेषु । पितरौ पितरः । पितरम् पितरौ पितॄन् । ऋरम् । पित्रा पितृभ्याम् पितृभिः । पित्रे

---

१ खलं पुनातीति खलपूः २ वातपूर्वो माङ्धातुः वातं प्रमिमीते वातप्रमी. औणादिकः । ३ हाहाहूहूश्चैव देवगन्धर्वौ ।

पितृभ्याम् पितृभ्यः। ऋतोऽङ्उः। पितुः पितृभ्याम् पितृभ्यः। पितुः पित्रोः पितृणाम् ॥

अर्पञ्चसु। अर् (प्र. ए.) पञ्चन् (स. ब.) नाम्नो नो०। एकपदम्। स्यादिषु पञ्चसु वचनेषु परेषु ऋकारोऽर् भवति स्थानशून्यार्थं सेरपि ग्रहणं सिविषये तु सेरा इत्याकारप्राप्तौ पञ्चसु इत्यर्प्राप्तौ च विशेषत्वात् नित्यत्वाच्च सेरा एव भवति। केचित्तु प्रथमं अर्पञ्चसु इत्यरं विधाय ततो यदादेशस्तद्वद्भवति इति न्यायात् सेरा इति सेः आ ततष्टिलोपः। स्वर०। पिता। पितृ (प्र. द्वि.) (प्र. ब.) अनेन अर् स्वर०। शेषं सुकरं (द्वि. ब.) अम्शसोरस्य। सोनः पुंसः। शसि। तृतीयायां चतुर्थ्यां चैकत्वे ऋरं हसेर्हसः। स्वर०। हसादावविशेषः। (पं.ए. ष. ए.) ऋतोऽङ्उः। ङिति टेरिति टिलोपः। स्वर०। स्रो०। (ष. द्वि.) (स. द्वि.) ऋरम्। स्वर०। (ष. ब.) नुडाम्। नामि। ष्कर्नोणो० (स. ए.) सूत्रम्।

डौ।

ऋकारस्यार् भवति डौ परे। पितरि पित्रोः पितृषु। पितृ धि इति स्थिते।

डौ। ङि (स. ए.) ङेरौ०। टिलोपः। स्वर०। एकपदम्। अनेन अर्। स्वर० (स. ब) किलात्षः सः। संबोधनैकवचने सूत्रम्।

धेरर्।

ऋकारान्तात्परस्य धेरर् भवति। स च डित्। डित्वाट्टिलोपः। हेपितः हेपितरौ हेपितरः। एवं जामात्रादयः। एवं नृशब्दः। सेरा। ना नरौ नरः। नरम् नरौ नॄन्। न्रा नृभ्याम् नृभिः। न्रे नृभ्याम् नृभ्यः। ऋतोऽङ्उः। नुः नृभ्याम् नृभ्यः। नुः न्रोः।

धौ कृत्यमाह। सूत्रम्। धेरर्। धि (ष. ए.) ङिति। ङस्य। स्रो०। अर् (प्र. ए.) हसेपः०। नामिनोरः। ऋकारान्तात् इति धेः अर् आदेशो भवति। स च डित्। डित्वाट्टिलोपः। स्वर०। हेपितः। एवं यामातृभ्रात्रादयः शब्दाः साध्याः। यामाता यामातरौ यामातरः। भ्राता भ्रातरौ भ्रातरः इत्यादि। देवा देवरौ देवरः इत्यादि। सव्येष्ठा सूतः सूतः सव्येष्टसारथी। नृशब्दोऽपि पितृशब्दवत्। ना नरौ

नरः । नरं नरौ नॄन् । त्रा नृभ्यां नृभिः । त्रे नृभ्यां नृभ्यः । तुः नृभ्यां नृभ्यः । तुः । त्रोः आमि विशेषः ।

## नुर्वा नामि दीर्घः ।

नृशब्दस्य नामि परे दीर्घो वा भवति । नॄणां नृणाम् । ङौ । नरि त्रोः नृषु । हेनः हेनरौ हेनरः । कर्तृशब्दस्य पञ्चसु विशेषः ।

नुर्वेति । नृशब्दस्य नामि परे दीर्घो वा वक्तव्यः । नॄणां नृणाम् । नरि त्रोः नृषु । हेनः हेनरौ हेनरः इति सिद्धम् । पिता, माता, ननान्दा, ना, सव्येष्ठृ, भ्रातृ, यातरः ॥ यामाता, दुहिता, देवा, न तृजन्ता इमे दश ॥ १ ॥ डुकृञ् करणे कृतृवुणौ० तृप्रत्ययः गुणः राद्यपोद्विः । स्वर० । कर्तृ, करोतीति कर्ता कर्तृशब्दस्य पञ्चसु विशेषस्तमेवाह । सूत्रम् ।

## स्तुरार् ।

सकारतृप्रत्ययसंबन्धिन ऋकारस्यार् भवति पञ्चसु परेषु । कर्तार् सि इति स्थिते । यदादेशस्तद्वद्भवति । सेरा डित्वाट्टिलोपः । कर्ता कर्तारौ कर्तारः । कर्तारम् कर्त्तारौ कर्तॄन् । कर्त्रा कर्तृभ्याम् कर्तृभिः । कर्त्रे कर्तृभ्याम् कर्तृभ्यः । ऋतोऽडुः । कर्तुः कर्तृभ्याम् कर्तृभ्यः । कर्तुः कर्त्रोः कर्तॄणाम् । कर्तरि कर्त्रोः कर्तृषु । धेरर् । हेकर्तः हेकर्तारौ हेकर्तारः इत्यादि । एवं नप्तृहोतृप्रशास्तृपोत्रुद्गातृप्रभृतयः ।

स्वसा नप्ता च नेष्टा च त्वष्टा कर्ता तथैव च ॥
होता पोता प्रशास्ता च ह्यष्टौ स्वस्रादयः स्मृताः ॥

स्तुरार् । सूच तृश्च स्तृ तस्य स्तुः ( ष. ए. ) ऋतोऽडुः । टिलोपः । स्तो० । आर् ( प्र. ए. ) हसेपः० । नामिनोरः । सिद्धम् । सकारसम्बन्धिनः ससहितस्य ऋकारस्य सकारोपलक्षितस्येत्यर्थः । तृप्रत्ययस्य सम्बन्धिन इति तृन्तुणावित्यादि कृत्सूत्पन्नतृप्रत्ययस्य च ऋकारस्य स्यादिषु पञ्चसु परेषु आर् भवति । सकारसंबन्धी ऋकारः स्वसृशब्द एव नान्यत्र तेन प्रियातसृशब्दादौ आर् न स्यात् । प्रियतिसा प्रियतिसौ प्रियतिस्रः इत्यादि अनेन द्वितीयाद्विवचनान्तं यावत् आर् आदेशः ।

स ऋकारवत् ज्ञेयः । ततः सेरा ठिलोपः सर्वत्र स्वर० । सम्बोधने- स्तुराइ, ततो धेरइ ठिलोपः स्वर० । सो० । हेकर्तः शेषं सुगमम् । शसि अमृशसोरस्य । सोनः पुंसः शसि । तृतीयादौ पितृशब्दवत् । यथा ( तृ. ए. ) ऋरम् । स्वर० । कर्त्रा कर्तृभ्यां कर्तृभिः । ( च.ए. ) ऋरम् । स्वर० । कर्त्रे कर्तृभ्यां कर्तृभ्यः । ( पं. ए. ) ( ष. ए. ) ऋतो ङ उः । स च डित् । डित्त्वाट्टिलोपः । स्वर० । कर्तुः कर्तृभ्यां कर्तृभ्यः । कर्तुः कर्त्रोः । ऋरम् । स्वर० । कर्तॄणां नुडामः । ( स. ए. ) ङौ । स्वर० । कर्तरि कर्त्रोः । ऋरं । कर्तृषु । किला० । नप्तृ, नेष्टृ, त्वष्टृ, क्षत्तृ, होतृ, पोतृ, प्रशास्तृ, प्रभृतयोऽपि, तथान्येऽपि तृप्रत्ययान्ता अवसेयाः ।

उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्व-
धिषु तृप्रत्ययान्तता वा वक्तव्या ।

क्रोष्टु सि इति स्थिते । स्तुरार् । सेरा । क्रोष्टा क्रोष्टारौ क्रोष्टारः । क्रोष्टारम् क्रोष्टारौ । अधेरिति विशेषणात् हेक्रोष्टो हेक्रोष्टारौ हेक्रोष्टारः । शसि तृप्रत्ययवद्भावाभावात् क्रोष्टून् अमि शसितृप्रत्ययवद्भावो वेति केचित् । क्रोष्टुम् क्रोष्टून् ।

क्रुश् आह्वाने । तुन् प्रत्ययः गुणः । छशषराजादेः षः । ष्टुभिः ष्टुः । क्रोष्टु इति जातम् । उकारान्तः । यद्यपि क्रोष्टुशब्द उकारान्तस्तथापि तस्य अधिषु धिवर्जितेषु पञ्चसु वचनेषु तृप्रत्ययान्तस्येव रूपं । तृप्रत्ययान्तत्वं वक्तव्यं । तृप्रत्ययान्तवत् आरादिकमित्यर्थः । ततः पञ्चसु कर्तृवत् सौ स्तुरार् सेरा । धौ तु भानुवत् । द्वित्वबहुत्वयोः कर्तृवत् स्तुरार् । स्वर० । शसि विषये तृप्रत्ययो विद्यते यस्येति तृप्रत्ययवत् । यद्वा तृप्रत्ययेन तुल्यं तृप्रत्ययवत् तस्य भावः तृप्रत्ययवद्भावस्तस्याभावस्तृप्रत्ययवद्भावाभावः तस्मात् । क्रोष्टून् इत्यादि भानुवत् साध्यः ।

तृतीयादौ स्वरादौ तृप्रत्ययान्तता वा वक्तव्या ।

क्रोष्ट्रा-क्रोष्टुना क्रोष्टुभ्याम् क्रोष्टुभिः । क्रोष्ट्रे-क्रोष्टवे क्रोष्टुभ्याम् क्रोष्टुभ्यः । क्रोष्टुः-क्रोष्टोः क्रोष्टुभ्याम् क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः क्रोष्ट्रोः-क्रोष्ट्वोः । कृताकृतप्रसंगी यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । इति प्रथमं

१ नप्ता पौत्रः, नेष्टा क्रियावान्, त्वष्टा देववार्द्धकि, क्षत्ता रथकुटुम्बिकः ।

नुडागमे कृते स्वरादित्वाभावात् तृप्रत्ययवद्भावो न भवति । क्रोष्टूनाम् । क्रोष्टरि-क्रोष्टौ क्रोष्ट्रोः-क्रोष्ट्वोः क्रोष्टुषु । ऋकारान्ता लृकारान्ता एकारान्ताश्चाप्रसिद्धाः । कौमारास्तृप्रत्ययान्तस्य क्रुशेर्धातोः पृथग्रूपमाहुः । अप्रसिद्धा इति वृद्धव्यवहारे न त्वभिधानादौ । तेन ' एर्विष्णुरविमारुते ' इत्येकाक्षरमालायां । तथा अनेकार्थमञ्जर्याम् ।

ॠर्दैत्यमातरि स्याॠदैं व्यामास्ति लतान्तरे ॥
वाय्वादित्ये महीध्रे च विष्णावेऐ प्रकीर्तितौ ॥

अत्र ॠकारस्य स्वरादौ । ॠरम् । ॠः रौ रः । रंम् रौ ॠन् । रा ॠभ्याम् ॠभिः । हेॠः हेरौ हेरः इत्यादि । लृवर्णस्य सावर्ण्यात्पितृशब्दवत्प्रक्रिया । आ अलौ अलः । अलम् अलौ लृन् । ला लृभ्याम् लृभिः । ले लृभ्याम् लृभ्यः उः लृभ्याम् लृभ्यः । उः लोः लृणाम् । लि लोः लृषु । हेअः हेअलौ हेअलः । इति लृशब्दरूपाणि । एकारान्तस्य तु उद्यंश्चासौ एः रविश्चेति विग्रहे कृते विभक्तिलोपे कृते उद्यदेः इति समस्तं नाम । उद्यदेः उद्यदयौ उद्यदयः । हे-उद्यदेः हेउद्यदयौ हेउद्यदयः । समानत्वाभावान्न धिलोपः। उद्यदयम् उद्यदयौ उद्यदयः । उद्यदया उद्यदेभ्याम् उद्यदेभिः । उद्यदये उद्यदेभ्याम् उद्यदेभ्यः । उद्यदेः । ङस्येत्यकारलोपः । उद्यदयोः उद्यदयाम् । उद्यदयि उद्यदयोः उद्यदेषु । ऐकारान्तः पुल्लिङ्गः सुरैशब्दः ।

तृतीयादौ हसादौ त्वविशेषः । स्वरादौ वा तृप्रत्ययान्तता उकारस्य वा ऋकार इत्यर्थः । ऋत्वे कर्तृवत् उत्वे भानुवत् । आमि तु विशेषः क्रोष्टु+आम् इत्यत्र नुडागमप्राप्तौ तृतीयादौ स्वरादौ वेति तृप्रत्ययान्तवद्भावस्य च प्राप्तौ नुडागमः स्यादित्याह आमि नुडागमे कृते हसादित्वात्तृवद्भावः तृप्रत्ययान्तत्वं

नास्ति तत्राह परः । ननु पूर्वं तृप्रत्ययवद्भावं विधाय पश्चान्नुडागमः क्रियतां, तत्रोच्यते कृता० । कार्यान्तरे कृतेऽपि प्रसङ्गः प्रयोगः प्राप्तिरस्यास्तीति कृताकृतप्रसङ्गी एवंभूतो यो विधिः स नित्यः ' नित्यानित्ययोर्नित्यो विधिर्बलवान् ' इति । एवमभिप्रायः तृप्रत्ययवद्भावे कृतेऽपि नुडागमो नित्यः । तदागमे च हसादित्वं सिद्धमेव । अतः स्वरान्तत्वाभावात् वा तृप्रत्ययान्तत्वं न किन्तु क्रोष्टूनामित्येकमेव रूपं नुडागमः नामि सप्तम्येकवचने तृतीयास्वरादौ वेत्येकत्र तृप्रत्यये कृते ङौ इत्यर् । स्वर० । क्रोष्टरि । द्वितीये उकारान्तत्वात् ङेरौ ङित् टिलोपः । स्वर० क्रोष्टौ । शेषं सुकरम् । सम्बोधने अधिष्विति विशेषणात् हेक्रोष्टो समानाद्धेर्लोपो० । हेक्रोष्टारौ हेक्रोष्टारः । ॠकारान्ता उक्ताः । ऋकारान्ता लृवर्णान्ता एकारान्ताश्च शब्दा अप्रसिद्धा अप्रतीताः क्वचित्प्रयोगो दृश्यते ' हेरक् ' इत्यादौ । ऐकारान्तः सुरैशब्दः । सूत्रम् ।

## रैस्भि ।

रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः। सुराः सुरायौ । स्वरादौ सर्वत्रायादेशः । सुरायः । सुरायम् सुरायौ सुरायः । सुराया सुराभ्याम् सुराभिः । सुराये सुराभ्याम् सुराभ्यः । सुरायः सुराभ्याम् सुराभ्यः । सुरायः सुरायोः सुरायाम् । सुरायि सुरायोः सुरासु । हेसुराः हेसुरायौ हेसुरायः । एवं रैशब्दः । ओकारान्तः पुल्लिङ्गो गोशब्दः । गो सि इति स्थिते ।

रैस्भि । रै ( ष. ए. ) साङ्के० । स् च भ् च स्भ् तस्मिन् स्भि (स. ए.) स्वर० । रैशब्दस्य विभक्तिसम्बन्धिनः सकारे भकारे च परे अकारो भवति षष्ठीनिर्दिष्टस्येत्यन्त्यस्य ( प्र. ए. ) सो० । सुष्ठु शोभनो राः सुराः सुष्ठु राः द्रव्यं यस्येति वा सुराः । स्वरादौ तु ऐआय् । स्वर० । समानाभावात् अम्शसोरस्य । सोनः पुंसः । नुडामश्च न भवन्ति । ओकारान्तः पुल्लिङ्गो गोशब्दो वृषभार्थः । दशार्थवाचकः । यतः । ' दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशधा मतः ॥ १ ॥ ' दशस्वर्थेषु गोशब्दः पुंस्त्रीलिङ्गे ज्ञेयः गम्लृ । गतौ गम् । गच्छतीति गौः । गमो डोप्रत्ययः डित्त्वाट्टिलोपः । स्वर० । गो इति जातं गोशब्दस्य पञ्चसु विशेषः । सूत्रम् ।

## ओरौ।

ओकारस्यौकारादेशो भवति पञ्चसु परेषु। गौः। औ आव्। गावौ गावः।

## आम्शसि।

ओकारस्यात्वं भवति अमि शसि च परे। गाम्। औ आव्। गावौ गाः। गवा गोभ्याम् गोभिः। गवे गोभ्याम् गोभ्यः। ङस्येत्यल्लोपः। गोः गोभ्याम् गोभ्यः। गोः गवोः गवाम्।

## अन्ते गोराम् छन्दसि।

ऋगन्ते वर्तमानस्य गोशब्दस्यामो नुडागमो भवति छन्दसि। गोनाम्। गवि गवोः गोषु। हेगौः हेगावौ हेगावः। ओकारान्तः पुल्लिङ्गो ग्लौशब्दः। तस्य हसादावविशेषः। स्वरादावावादेशः। ग्लौः ग्लावौ ग्लावः। हेग्लौः हेग्लावौ हेग्लावः। ग्लावम् ग्लावौ ग्लावः। ग्लावा ग्लौभ्याम् ग्लौभिः। ग्लावे ग्लौभ्याम् ग्लौभ्यः। ग्लावः ग्लौभ्याम् ग्लौभ्यः। ग्लावः ग्लावोः ग्लावाम्। ग्लावि ग्लावोः ग्लौषु। इत्यादि। इति स्वरान्तपुल्लिङ्गप्रक्रिया।

ओरौ ओ. (प. ए.) ङस्येत्यकारलोपः। स्रो०। औ (प्र. ए.) सांके०। नामिनो रः। ओकारान्तशब्दसम्बन्धिन ओकारस्य औकारादेशो भवति पञ्चसु परेषु। अम्विषयेति अम्शसीति विशेषकथनात् अम्वर्जितेषु पञ्चसु द्वितीयाद्वित्वं यावदौकारो भवति। सवर्णे०। मोऽनुस्वारः। द्वित्वे औआव्। बहुत्वे आकारे कृते सवर्णे०। स्रो०। 'यदादेशस्तद्वद्भवति' इति ओकारस्यासमानत्वात् स्रोनः पुंस इति शस्य नकारो न टादौ स्वरादौ औ आव्। हसादावविशेषः। पञ्चमी षष्ठ्येकवचने। 'ङस्य' इति सूत्रेण अकारलोपः स्रो० केचित् आम् अन्ते 'गोराम्' इति सूत्रान्तरेण नुडागममप्याहुः। गोनां गवां। शेषं सुकरम्। एवं द्योशब्दात् स्त्रीलिङ्गे पुल्लिङ्गे तु गौणत्वे सुद्योशब्दः सुष्ठु शोभना द्यौः स्वर्गो यस्य स सुद्यौः। सुद्यौः सुद्यावौ सुद्यावः। सुद्यां सुद्यावौ सुद्याः। सुद्यवा सुद्योभ्यां सुद्योभिः। सुद्यवे। सुद्योः

सुद्योः सुद्यवां । सुद्यवि सुद्यवोः सुद्योषु । हे सुद्यौः । इत्यादि । औकारान्तः पुल्लिङ्गो ग्लौशब्दश्चन्द्रार्थः । ग्लैहर्षक्षये । ग्लायति कृष्णपक्षे इति ग्लौः । डौप्रत्ययः डितिटेः स्वर० ग्लौ इति जातम् । तस्य हसादौ अविशेषः । स्वरादौ तु सर्वत्र औआव् । ग्लौः ग्लावौ ग्लावः । इति स्वरान्तपुल्लिङ्गसाधनम् ।

**अथ स्वरान्ताः स्त्रीलिङ्गाः प्रदर्श्यन्ते । तत्र आबन्तो गङ्गाशब्दः । गङ्गा सि इति स्थिते ।**

अथ स्वरान्तस्त्रीलिङ्गसाधनमुच्यते । अकारान्तः शब्दः स्त्रीलिङ्गे नास्ति । तत्रावन्तो गङ्गाशब्दः । सूत्रम् ।

## आपः ।

**आबन्तात्परस्य सेर्लोपो भवति गङ्गा ।**

**आपः** । आप् ( पं. ए. ) स्वर० । सो० । आबतस्त्रियामिति सूत्रेण य आप्प्रत्ययः कृतस्तदन्ताच्छब्दात्परस्य सेर्लोपो भवति । अनेन सेर्लोपः । द्वित्वे । सूत्रम् ।

## औरी ।

**आबन्तात्पर औरीकारमापद्यते । अइए । गङ्गे गङ्गाः ।**

**औरी** । औ ( प्र. ए. ) साङ्के० । आबन्ता० कण्व्या । न वरमौकार ईत्वमापद्यते आप्नोति । अनेन औई । अइए । बहुत्वे सवर्णे० । स्तो० । धौ तु । सूत्रम् ।

## धिरि ।

**आबन्तात्परो धिरिर्भवति हेगङ्ग हेगङ्गे हेगङ्गाः । गङ्गाम् गङ्गे गङ्गाः ।**

**धिरि** । धि ( प्र. ए. ) स्तो० । इ ( प्र. ए. ) स्तो० । नामिनो रः । केचित्तु धिरी इति दीर्घमिकारं पठन्ति तत्र औ इत्यस्मिन् सूत्रे दीर्घकारानुवृत्तिं गृह्णन्ति ततो जरसीति रूपं साधयन्ति । आबन्ता० । अनेन धिस्थाने इः । अइए ।

## टौसोरे ।

**आबन्तस्य टौसोः परयोरेत्वं भवति । एअय् । गङ्गया गङ्गाभ्याम् गङ्गाभिः ।**

टौसोरे । टा च ओस् च टौसौ तयोः टौसोः ( स. द्वि. ) स्वर० । सो० ( प्र. ए. ) साङ्केति० । नामिनो रः । सिद्धमिदं सूत्रम् । आप्प्रत्ययान्तस्य टाइति तृतीयैकवचने ओस्इति षष्ठीसप्तमीद्विवचने परे ए भवति षष्ठीनिर्दिष्टस्येत्यन्त्यस्य । अनेन ए । एअय् । स्वर० । हसादौ त्वविशेषः । ( च. ए. ) सूत्रम् ।

## ङितां यट् ।

आबन्तात्परेषां ङेङसिङस्ङि इत्येतेषां ङितां वचनानां यडागमो भवति । टकारः स्थाननियमार्थः । गङ्गायै गङ्गाभ्याम् गङ्गाभ्यः । गङ्गायाः गङ्गाभ्याम् गङ्गाभ्यः । गङ्गायाः गङ्गयोः गङ्गानाम् । आम्ङेर्नियश्च गङ्गायाम् गङ्गयोः गङ्गासु । एवं अम्बाअक्काअल्लाप्रभृतयः । अम्बा अम्बे अम्बाः । शेषं गङ्गवात् ।

ङितांयट् । ङ इत् येषान्ते ङितस्तेषां ङितां ( ष. ब. ) स्वर० । मोनु० । यट् । हसेपः० । आबं० । आप्प्रत्ययान्ताच्छब्दात् परेषामग्रे वर्तमानानां ङितां ङे, ङसि, ङस्, ङि, इत्येतेषां वचनानां ' यट् ' आगमो भवति । टित्वादादौ । अनेन यडागमः सस्वर एव टित्वात् ङेः आदौ । एऐऐ । पञ्चमीषष्ठ्येकवचने यडागमे कृते सवर्णे० । सो० । ( ष. द्वि.) टौसोरे । एअय् । स्वर० । सो० । बहुत्वे नुडामः । स्वर० । मोनु० । ( स. ए. ) आम्ङे० । ततो यदादेशस्तद्वद्भवतीति न्यायात् यडागमः । स्वर० । मोनु० । शेषं सुकरम् । एवं श्रद्धादयो ज्ञेयाः ।

## अम्बादीनां धौ ह्रस्वः ।

अम्बादीनां धौ परे ह्रस्वो भवति । हेअम्ब हेअम्बे हेअम्बाः । यथाम्बाशब्दो द्विस्वरो मात्रर्थः । एवं ये द्विस्वरा मात्रर्थास्तेषां धौ परे ह्रस्वता स्यात् । हेअक्क हेअक्के हेअक्काः । हेअल्ल हेअल्ले हेअल्लाः। अम्बादीनामिति कोऽर्थः। अर्थवाचकानां जननीवाचकानां द्विस्वराणां शब्दानां धौ परे ह्रस्वो भवति ।

## डलकवतीनां न ।

डलकवतीनामम्बादीनां धौ परे ह्रस्वो न भवति । असंयोगा डलका ग्राह्याः । असंयोगा इति किम् । हे अम्बाडे हेअम्बाले हेअम्बिके । एवं श्रद्धामेधाशालामाला-हेलादोलाप्रभृतयः ।

अम्बादीनां धिविषये विशेषमाह । अम्बादीनामिति । अम्बादीनां धौ परे ह्रस्वो भवति । ततः समानाद्धेर्लोपे हेअम्ब हेअम्बे हेअम्बाः । एवं हेअक्क हेअक्के हेअक्काः । हेअल्ल हेअल्ले हेअल्लाः । हेअत्त हेअत्ते हेअत्ताः । एते त्रय एकार्थाः । गृहमध्यस्थवृद्धस्त्रीवाचकाः । अम्बादीनां शब्दानां द्विस्वराणामेव धौ ह्रस्वता । तेन हे अम्बाले हे अम्बिके इत्यादौ न ह्रस्वः । द्वितीयैकवचने अम्शसोरस्य । मोऽनुस्वारः । द्वित्वे प्रथमावत् । शसि अम्शसो० । सो० । पुल्लिङ्गाभावात् सोनः पुंस इति न भवति । ( तृ. ए. ) सूत्रम् ।

सर्वादीनां तु ङित्सु विशेषः । आबतः स्त्रियाम् । इत्याप् । सर्वा सर्वे सर्वाः । सर्वाम् सर्वे सर्वाः । सर्वया सर्वाभ्याम् सर्वाभिः । सर्वा ङे इति स्थिते ।

तस्य तृतीयां यावत् गङ्गाशब्दवत् । सर्वा सर्वे सर्वाः । सर्वा सर्वे सर्वाः । सर्वया सर्वाभ्यां सर्वाभिः । ङित्सु ङिद्वचनेषु विशेषः । 'ङितां यट्' इति यडागमे कृते । सूत्रम् ।

## यटोच्च ।

आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति । सर्वस्यै सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वयोः सर्वासाम् । आम्ङेर्नियश्च । सर्वस्याम् सर्वयोःसर्वासु । हेसर्वे हेसर्वे हेसर्वाः । एवं विश्वादीनां सर्वाशब्दवद्रूपं ज्ञेयम् । उभयशब्दस्य द्विवचनटाबविषयत्वादन्यत्र प्रयोगः कर्तव्यः । नदीशब्दवद्रूपं ज्ञेयम् । द्वितीयातृतीयाशब्दयोस्तु ङित्सु वा सर्वाशब्दवद्रूपं

ज्ञेयम् । प्रथमादयो गङ्गाशब्दवत् । द्वयीत्रयीद्वितयीत्रितयीकतिपयीशब्दास्तु नदीवत् । सोमपा पूर्ववत् । जराशब्दस्य भेदः ।

यटोच्च । यट् ( ष. ए. ) स्वर० । स्रो० । अत् ( प्र. ए. ) हसेपः० । अतोत्युः । उथो । एदोतोतः । च ( प्र. ए. ) अव्य० । स्तोश्चुभिश्चुः । आबन्तां० । अनेन यटः सुडागमः ठित्त्वादादौ पूर्वस्य चापः आप् प्रत्ययस्य आकारस्य अकारो भवति । ( च. ए. ) स्वर० एऐऐ सर्वस्यै ( पं. ए. ष. ए. ) ङितां यट् । यटोच आकारस्य अकारः । स्वर० । सवर्णे० । स्रो० । आमे० । आमि कृते ङितां यट् । यटोच्च । स्वर० । सवर्णे० । मोऽनुस्वारः ( ष. द्वि. स. द्वि. ) ओसि अय् । स्वर०, स्रो० ( ष. ब. ) सुडामः । स्वर० । मोऽनु० । सम्बोधने तु गङ्गावत् । एवमावन्ताः सर्वादयोऽन्येऽपि । विश्वा, अन्या, अन्यतरा, इतरा, कतरा, कतमा, समा-सिमा, नेमा, एका, पूर्वा, परा, दक्षिणा, उत्तरा, अपरा, अधरा, स्वा, अन्तरा, उभयशब्दस्य तु ईप्रत्ययः । उभयी उभय्यौ उभय्यः । नदीवद् द्वितीयातृतीयाशब्दयोर्ङित्सु वा सर्वादित्वं द्वितीयस्यै द्वितीयायै द्वितीयस्याः २ द्वितीयायाः २ द्वितीयस्यां द्वितीयायाम् । द्विशब्दस्य त्यदादेष्टेरित्यकारे कृते आबतस्त्रियां ततो गङ्गाशब्दद्विवचनवत्साध्यः । द्वे, द्वे, द्वाभ्यां, द्वाभ्यां, द्वाभ्यां, द्वयोः, द्वयोः ।

## जरायाः स्वरादौ जरस्वा वक्तव्यः ।

जर आप् इति स्थिते । दीर्घः । आपः । इति सेर्लोपः । जरा जरसौ-जरे जरसः-जराः । जरसं-जराम् । जरसौ-जरे जरसः-जराः । जरसा-जरया जराभ्याम् जराभिः । जरसे-जरायै जराभ्याम् जराभ्यः । जरसः-जरायाः जराभ्याम् जराभ्यः । जरसः-जरायाः जरसोः-जरयोः जरसां-जराणाम् । जरसि-जरायाम् जरसोः-जरयोः जरासु । हेजरे हेजरसौ-हेजरे हेजरसः-हेजराः । तदन्तविधिरत्रेष्यते । एकदेशविकृतमनन्यवद्भवतीति न्यायात् । केचिट्टादाविनमत आश्चेतीच्छन्ति । जरसः । स्वरादौ निर्जरस्यापि भवति । नि

र्जरः निर्जरसौ-निर्जरौ निर्जरसः-निर्जराः । निर्जरसम्-निर्जरम् निर्जरसौ-निर्जरौ निर्जरसः-निर्जरान् । निर्जरसिन-निर्जरसा-निर्जरेण निर्जराभ्याम् ।

भिस ऐस् वक्तव्यः ।

निर्जरसैः-निर्जरैः । निर्जरसे-निर्जराय निर्जराभ्याम् निर्जरेभ्यः । निर्जरसः-निर्जरसात्-निर्जरात् निर्जराभ्याम् निर्जरेभ्यः । निर्जरसः-निर्जरस्य निर्जरसोः निर्जरयोः निर्जरसाम् निर्जराणाम् । निर्जरसि-निर्जरे निर्जरसोः-निर्जरयोः निर्जरेषु । हेनिर्जर हेनिर्जरसौ-हेनिर्जरौ हेनिर्जरसः-हेनिर्जराः । इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दः । तस्य पञ्चसु हरिशब्दवत्प्रक्रिया । बुद्धिः । औप्रू । बुद्धी बुद्धयः । हेबुद्धे हेबुद्धी हेबुद्धयः । बुद्धिम् बुद्धी बुद्धीः । पुंस इति विशेषणात्स्त्रियां शसः सकारस्य नकारादेशो न भवति । बुद्धया बुद्धिभ्याम् बुद्धिभिः ।

आबन्तस्यापि जराशब्दस्य विशेषः । जराया इति जराशब्दस्य स्वरादौ विभक्तौ जरस् वक्तव्यः । गुरुःशिच्च सर्वस्य वक्तव्यः । साधनं स्वरादौ एकस्मिन् पक्षे गङ्गावत् । द्वितीयपक्षे जरसादेशे कृते स्वर० । शेषं सुकरम् । जरा जरसौ जरे जरसः जराः । इत्यादि । सोमपाक्षीरपादयस्तु आप्प्रत्ययान्ता न, किन्तु आकारान्ताः क्विबन्ता अतस्तेषां साधना रूपाणि च पुल्लिङ्गवत् । इकारान्तो बुद्धिशब्दस्तस्य द्वितीयाद्वित्वं यावत् हरिशब्दवत् प्रक्रिया । ओ पू । ए औ जसि । इत्यादि । शसि अम्शसो० । शसीति दीर्घः । सो० । स्त्रीलिङ्गत्वान्नत्वाभावः सोनःपुंस इति सूत्रेण नकारो न । तृतीयैकवचने अस्त्रियामिति वचनात् टानाप्रतिषेधः । किन्तु इयंस्वरे । स्वर० । ङित्सु रूपद्वये एकत्र हरिवत् । ङितरूस्य । ङेरौङित् इत्यादि सूत्राणि अन्यत्र । सूत्रम् ।

इदुद्भ्याम् ।

स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनाना

वा अडागमो भवति । इयं स्वरे । एऐऐ बुद्ध्यै । ङिति ए अय् । बुद्धये बुद्धिभ्याम् बुद्धिभ्यः । बुद्ध्याः । ङस्य । बुद्धेः बुद्धिभ्याम् बुद्धिभ्यः । बुद्ध्याः–बुद्धेः बुद्ध्योः बुद्धीनाम् ।

इदुद्भ्याम् इच उच्च इदुतौ ताभ्यामिदुद्भ्यां (पं. द्वि.) सिद्धम् । स्त्रियामित्यत्र नित्यं स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यामिति व्याख्येयम् । तेन शुचिशब्दोऽनियतलिङ्गत्वाद्धरिवज्ज्ञेयः न तु विकल्पः । अनेन ( च. ए.-पं. ए. ष. ए. ) वा अडागमः टित्त्वादादौ इयं स्वरे० ( च. ए. ) एऐऐ ( पं. ए. । ष. ए. ) इयं स्वरे । स्वर० । सवर्णे० । स्रो० । पक्षे हरिवत् । ( स. ए. ) सूत्रम् ।

## स्त्रियां योः ।

इश्च उश्च युस्तस्मात् । इवर्णान्तादुवर्णान्ताच्च स्त्रियां वर्तमानात्परस्य ङेरामादेशो भवति । बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः । ङेरौ ङित् । बुद्धौ बुद्ध्योः बुद्धिषु । एवं मतिभूतिधृतिकांतिरुचिप्रभृतयः । एवं धेनुरज्जुतनु प्रभृतयोऽप्युकारान्ताः स्त्रीलिङ्गा एतैरेव सूत्रैः सिद्ध्यन्ति । धेनुः धेनू धेनवः । धेनुम् धेनू धेनूः । स्त्रीलिङ्गत्वान्नत्वाभावः । धेन्वा धेनुभ्याम् धेनुभिः । धेन्वै-धेनवे धेनुभ्याम् धेनुभ्यः । धेन्वाः-धेनोः धेनुभ्याम् धेनुभ्यः । धेन्वाः-धेनोः धेन्वोः धेनूनाम् । धेन्वाम्-धेनौ धेन्वोः धेनुषु । हेधेनो-हेधेनू हेधेनवः । ईबन्तः स्त्रीलिङ्गो नदीशब्दः । हसे पः । सेर्लोपः । नदी नद्यौ नद्यः । नदीम् नद्यौ नदीः । नद्या नदीभ्याम् नदीभिः ।

स्त्रियायोः । स्त्री ( स. ए. ) स्त्रियां योः स्त्रीभ्रुवोः स्वर० मोनु० । इश्च युश्च युस्तस्मात् योः ( पं. ए. ) ङिति ह्रस्व । स्रो० । इश्च उश्च सुकरम् । स्त्रीलिङ्गे वर्तमानात् इवर्णान्तात् उवर्णान्ताच्च शब्दात् परस्य ङेराम् आदेशो भवति । वर्णग्रहणान्नदीवधूजम्ब्वादीनामपि ङेराम् अट्साहचर्याद् यस्मिन् पक्षे अडागमस्तत्रैव ङेआम् भवति अतएवाग्रे वक्ष्यति ' अडागमाभावे आमोऽप्यभावः ' इति अनेन ङेः

आम् इदुद्भ्यामिति वा अडागमः । इयंस्वरे० । स्वर० । सवर्णे० । मोऽनु० । (स. ब.) किलात्सः सः शेषं सुकरम् । सम्बोधने हरिवत् । समाना० । धौ । एवं मति, भूति, धृति, रुचि, ऋद्धि, सिद्धि, वृद्धि, शान्ति, क्षान्ति, प्रभृतयोऽपि इकारान्ता एतैरेव सूत्रैः सिध्यन्ति । एवमुकारान्ता धेनुरज्जुप्रभृतयोऽपि ज्ञेयाः । ईकारान्तो नदीशब्दः । ह्रसेप इति । सिलोपः । नदी (प्र. ए.) स् । अनेन सिलोपः द्वित्वबहुत्वयोः इयंस्वरे० । स्वर० । सूत्रम् ।

## ङितामट् ।

स्त्रियां वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वच नानामडागमो भवति । नद्यै नदीभ्याम् नदीभ्यः । नद्याः नदीभ्याम् नदीभ्यः। नद्याः नद्योः नदीनाम् ।नद्यां नद्योः नदीषु।

## धौ ह्रस्वः ।

इयुवस्थानवर्जितयोरधात्वोरीदूतोः स्त्रीशब्दस्य च स्त्रियां धौ परे ह्रस्वो भवति । हेनदि हेनद्यौ हेनद्यः । ह्रस्वविधिसामर्थ्यान्न गुणः । एवं गौरीगौतमीमहीसरस्वतीब्रह्माणीकौमारीप्रभृतयः । गौरी गौर्यौ गौर्यः । हेगौरि हेगौर्यौ हेगौर्यः । गौरीम् गौर्यौ गौरीः इत्यादि । गौतमी गौतम्यौ गौतम्यः । हेगौतमि । सरस्वती सरस्वत्यौ सरस्वत्यः । हेसरस्वति । ब्रह्माणी ब्रह्माण्यौ ब्रह्माण्यः । हेब्रह्माणि । कुमारी कुमार्यौ कुमार्यः । हेकुमारि । मधुमती मधुमत्यौ मधुमत्यः । हेमधुमति । इत्यादि ।

## क्रोष्टुः स्त्रियां तृवद्भावः स्यात् ।

तेन क्रोष्ट्री क्रोष्ट्र्यौ क्रोष्ट्र्यः । क्रोष्ट्रीम् शेषं नदीवत् । हेक्रोष्ट्रि हेक्रोष्ट्र्यौ हेक्रोष्ट्र्यः इत्यादि । ईकारान्तो लक्ष्मीशब्दः । लक्ष्मीशब्दस्येबन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः ल-

क्ष्म्यौ लक्ष्म्यः । लक्ष्मीम् लक्ष्म्यौ लक्ष्मीः । शेषं नदीवत् ।
हेलक्ष्मीः हेलक्ष्म्यौ हेलक्ष्म्यः ।

अवीलक्ष्मीतरीतंत्रीधीह्रीश्रीणामुदाहृतः ॥
सप्तानामेव शब्दानां सिलोपोनकदाचन ।
स्त्रीशब्दस्येबन्तत्वात्सेर्लोपोऽस्ति । स्त्री ।

ङितामट् । ङ इत् येषां ते ङितस्तेषां ङितां ( ष० ब० ) स्वर० । अट् ( प्र० ए० ) हसेपः । स्त्रियामिति नित्यं स्त्रीलिङ्गे वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां ङे, ङसि, ङस्, ङि इत्येतेषाम् अडागमो भवति अनेन अडागमः । इयं स्वरे । स्वरे० । एऐऐ ( पं. ए. ) ( ष. ए. ) अडागमः । इयं० । स्वर० । सवर्णे० । स्रो० । ( ष. द्वि. ) ( स. द्वि. ) इयं स्वरे । स्वर० । स्रो० (ष.ब.) नुडामः । स्वर० । मोनु० ( स. ए. ) स्त्रियांयोः । ङितामट् । इयं० ( स. ब. ) किलात्षसः । धौ ह्रस्वः । धि ( स. ए. ) ङेरौङित् । टेर्लोपः । स्वर० । ह्रस्वः (प्र. ए.) स्रो० । इव० अधातोरिति धातुवर्जशब्दस्य अक्विबन्तस्येत्यर्थः । अत्र अनियुबन्ता इकारोकारान्ता नित्यं स्त्रीलिङ्गाः शब्दाः स्त्रीशब्दश्च एतत् सम्बन्धिनोरेव इवर्णोवर्णयोरिति व्याख्येयम् । अनियुबन्त इति किम् । हेभ्रूः हेश्रीः हेभूः शेषं कण्ठ्यम् । अत्र वर्णग्रहणं ह्रस्वे कृते धौ इति सूत्रस्य प्राप्तिनिषेधार्थम् । अनेन ह्रस्वः । समानाद्धेर्लोपो० । हेनदि हेनद्यौ हेनद्यः । अमि अमृशसोरस्य । मोऽनुस्वारः । ( द्वि. द्वि. ) इयंस्वरे । स्वर० । शसि अमृशसोरस्य । स्रो० । नदीः ( तृ० ए० ) टा इयं स्वरे । एवं नदीशब्दवत् गौरी, सरस्वती, ब्राह्मणी, कुमारी, नारी, सारङ्गी, प्रभृतय एतैरेव सूत्रैः साध्याः । ईकारान्तो लक्ष्मीशब्दः । तस्य ईबन्तत्वाभावात् ईप् प्रत्ययान्तत्वाभावात् ‘ हसेपः सेर्लोपः ’ इति सेर्लोपो नास्ति । यतः लक्षेरीमुंट्चेति सूत्रेण ईकारान्तत्वात् । ततः ( प्र. ए. ) स्रो० । लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः । इयं० । स्वर० । स्रो० । सम्बोधने हेलक्ष्मि । धौ ह्रस्वः । समानाद्धेर्लोपः । शेषं नदीवत् । अवी, लक्ष्मी, तरी, तन्त्री, तन्द्री, धी, ह्री, श्रियां पुरः । भी शब्दाच्च न सेर्लोपः स्त्रीलिङ्गे स्यात्कदाचन ॥ १ ॥ अवीर्ऋतुमती स्त्री । लक्ष्मीः प्रसिद्धा । तरीर्नौः । तन्त्रीर्वीणा । तन्द्रीर्निद्रा । धीर्बुद्धिः । ह्रीर्लज्जा । श्रीर्लक्ष्मीः । भीर्भीतिः । स्त्रीशब्दस्येबन्तत्वात् ईप्प्रत्ययान्तत्वात् सेर्लोपोऽस्ति । स्त्यै धातुः शब्दसंघातयोः । स्त्यायतेः स्त्रीत्वे द्रहः इति रप्रत्ययः । ङित्वाट्टिलोपः । संयोगान्तस्येति यकारलो-

पः । स्वर० । ततः टित्वात् ङ्कितः इति ईप् (प्र. ए.) हसेपः० । द्वित्वे । स्त्री शब्दस्य भ्रूशब्दस्य च अक्विबन्तेन अधातुत्वात् य्वोर्धातोरिति न स्यात्तेन सूत्रान्तरमाह ।

## स्त्रीभ्रुवोः ।

**स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे । स्त्रियौ स्त्रियः । हेस्त्रि हेस्त्रियौ हेस्त्रियः ।**

स्त्री च भ्रूश्च स्त्रीभ्रुवौ तयोः स्त्रीभ्रुवोः (ष. द्वि.) स्वर० । स्रो० । स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रीशब्दस्य इय् भ्रूशब्दस्य उव् । अनेन इय् । स्वर० । बहुत्वेऽप्येवम् । (द्वि. ए.) सूत्रम् ।

## वाम् शसि ।

**स्त्रीशब्दस्य आमि शसि च परे वा इय् भवति । स्त्रियं-स्त्रीम् स्त्रियौ स्त्रियः स्त्रीः । स्त्रिया स्त्रीभ्याम् स्त्रीभिः । स्त्रियै स्त्रीभ्याम स्त्रीभ्यः । स्त्रियाः स्त्रीभ्याम् स्त्रीभ्यः । स्त्रियाः स्त्रियोः स्त्रीणाम् । स्त्रियाम् स्त्रियोः स्त्रीषु । इत्यादि । ईकारान्तः श्रीशब्दः । श्रयन्ते जना यां इति श्रीः । य्वोर्धातोरियुवौ स्वरे । श्रियौ श्रियः । श्रियम् श्रियौ श्रियः । श्रिया श्रीभ्याम् श्रीभिः ।**

वाम्शसि । वा (प्र. ए.) अव्य० । अम् च शस् च अम्शस् तस्मिन् अम्शसि (स. ए.) स्वर० । सवर्णे० । अमि शसि च परे वा विकल्पेन इयुवौ भवतः । अत्र स्त्रीशब्दस्य एवं सम्भाव्यते भ्रूशब्दस्य भ्रूइति रूपस्यादृश्यमानत्वात् ओवग्रहणं तु सम्बन्धैक्यात् । अनेन एकत्र इय् । स्वर० । मोऽनु० । अन्यत्र अम्शसोरस्य । मोनु० । द्वित्वे प्रथमाद्वित्ववत् । शसि स्त्रीभ्रुवोः । स्वर० । स्रो० । अन्यत्र अम्शसोरस्य । स्रो० (तृ. ए.) स्त्रीभ्रुवोः । स्वर० । स्त्रिया स्त्रीभ्यां स्त्रीभिः । शेषं चतुर्थ्यादौ नदीवत् । अस्यायमर्थः । ङे, ङसि, ङस्, ङिषु ङितामट् कृत्वा इय् कर्तव्यः । स्त्री (च. ए.) ङे । ङितामट् । स्त्रीभ्रुवोः । स्वर० । एऐऐ । स्त्रियै स्त्रीभ्यां स्त्रीभ्यः । स्त्री (पं. ए.) अस् । स्त्रीभ्रुवोः । ङितामट् । स्वर० । सवर्णे० । स्रो० ।

स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः। स्त्री ( ष. ए. ) अस् । ङितामट् । स्त्रीभ्रुवोः । स्वर० । सवर्णे० । स्रो० । स्त्रियाः । स्त्री ( ष. द्वि. ) ओस् । स्त्रीभ्रुवोः । स्वर० । स्रो० । स्त्रियोः । स्त्री ( ष. ब. ) आम् । नुडामः । श्रुर्नोणो० । स्वर० । मोनु० । स्त्रीणाम्। अत्र ' स्त्रीभ्रुवोः ' ' नुडामः ' इत्युभयोः प्राप्तौ विशेषत्वात् नुडाम एव भवति । स्त्री ( स. ए. ) ङितामट् । ' स्त्रियांयोः ' इत्याम् । स्त्रीभ्रुवोः । स्वर० । सवर्णे० । मोनुस्वा० । स्त्रियाम् । स्त्री ( स. द्वि. ) ओस् । स्त्रीभ्रुवोः । स्वर० । स्त्रियोः । स्त्री० ( स. ब. ) सु । किला० । स्त्रीषु । हेस्त्रि । धौन्ह्रस्वः । समानाद्धे० । हेस्त्रियौ । हेस्त्रियः। अथ श्रीशब्दः श्री ( प्र. ए. ) स् । स्रो० । श्रीः । श्री ( प्र. द्वि. ) य्वोर्द्धातोरियुवौ स्वरे । स्वर० । श्रियौ । जसि । य्वोर्धातो० । स्वर० । श्रियः । श्री ( द्वि. ए. ) अम् । य्वोर्द्धातो० । स्वर० । श्रियं श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः । चतुर्थ्यादौ श्रीशब्दस्य विशेषमाह । सूत्रम् ।

वेयुवः

इयुवन्तात्स्त्रियां वर्तमानात्परेषां ङितां वचनानां वा अडागमो भवति । न तु स्त्रीशब्दस्य विकल्पेन । श्रियै-श्रिये श्रीभ्याम् श्रीभ्यः । श्रियाः-श्रियः श्रीभ्याम् श्रीभ्यः । श्रियाः-श्रियः श्रियोः श्रियाम् । श्र्यादीनां वामो नुट् वक्तव्यः। श्रीणाम्। श्रियाम्। श्रियि श्रियोः श्रीषु । हेश्रीः हेश्रियौ हे श्रियः । एवं धीह्रीप्रभृतयोऽप्यनीबन्ताः । धीः धियौ धियः । हेधीः हेधियौ हेधियः । ह्रीः ह्रियौ ह्रियः । हेह्रीः । एवं भूशब्दो भ्रूशब्दश्च । भूः भुवौ भुवः । भुवम् भुवौ भुवः। भुवा भूभ्याम् भूभिः । भुवै-भुवे भूभ्याम् भूभ्यः । भुवाः-भुवः भूभ्याम् भूभ्यः। भुवाः-भुवः भुवोः भुवाम्-भूनाम् । भुवाम्-भुवि भुवोः भूषु । हेभूः हेभुवौ हेभुवः। एवं भ्रूशब्दः । भ्रूः भ्रुवौ भ्रुवः । भ्रुवम् भ्रुवौ भ्रुवः। भ्रुवा भ्रूभ्याम् भ्रूभिः । भ्रुवै-भ्रुवे भ्रूभ्याम् भ्रूभ्यः । भ्रुवाः-भ्रुवः । भ्रूभ्याम् भ्रूभ्यः । भ्रुवाः-भ्रुवः भ्रुवोः भ्रुवाम्-भ्रूणाम्। भ्रुवाम्-भ्रुवि भ्रुवोः भ्रूषु ।

हेभ्रूः हेभ्रुवौ हेभ्रुवः । एवं सुभ्रूशब्दः । सुभ्रूः सुभ्रुवौ सुभ्रुवः । सुभ्रूशब्दस्य धौ ह्रस्व इति केचित् । हेसुभ्रूः-हेसुभ्रु हेसुभ्रुवौ हेसुभ्रुवः । वधूजम्ब्वादीनां नदीवत् । वधूः वध्वौ वध्वः । हेवधु हेवध्वौ हेवध्वः । शेषं नदीवत् । एवं जम्बूः जम्ब्वौ जम्ब्वः । हेजम्बु इत्यादि । ऋकारान्तो मातृशब्दस्तस्य पितृवत्प्रक्रिया । माता मातरौ मातरः । मातरम् मातरौ । स्त्रीलिङ्गत्वाच्छसि मातॄ इत्यादि । हेमातः हेमातरौ हेमातरः । स्वसृशब्दस्य कर्तृशब्दवत्प्रक्रिया । स्वसा स्वसारौ स्वसारः । स्वसारम् स्वसारौ शसि स्वसॄः । हेस्वसः हेस्वसारौ हेस्वसारः । रैशब्दस्य सुरैशब्दवत्प्रक्रिया । राः रायौ रायः । हेराः । गोशब्दस्तु पूर्ववत् । नौशब्दस्य ग्लौशब्दवत्प्रक्रिया । नौः नावौ नावः । हेनौः हेनावौ हेनावः ॥

## इति स्वरान्तस्त्रीलिङ्गप्रक्रिया ।

वेयुवः । वा ( प्र. ए. ) अव्य० । इय् च उव् च इयुव् तस्मात् । इयुव् (पं ए.) स्वर० । स्रो० । मध्ये अइए । नित्यं स्त्रियां वर्तमानाद् इयन्तात् उवन्तात् च शब्दात्परेषां ङितां वचनानां विकल्पेन अडागमः स्यात् नतु स्त्रीशब्दस्य । यतः कालापके नदीवत् । तथाच हैमे वेयुवो अस्त्रियां इति । अनेन एकत्र अडागमः य्वोर्धातोः० । स्वर० । एएऐ । अन्यत्र य्वोर्धातोः । स्वर० । श्रियै श्रिये ( पं. ए. )(ष.-ए.) एकत्र वेयुवः इति अडागमः य्वोर्धातो० । स्वर० । सवर्णे० । स्रो० । पक्षे ( पं. ए. ) ( ष. ए. ) य्वोर्धातोः० । स्वर० । स्रो० । ( ष. द्वि. ) ( स. द्वि. ) य्वोर्धातो० । इत्यनेन इय् । स्वर० । स्रो० ( त. ब. ) श्र्यादीनां श्री, धी, भी, भ्रू, प्रभृतीनाम् । आमः षष्ठी-बहुवचनस्य वा नुड् वक्तव्यः । अनेन श्रुर्नो० । स्वर० अन्यत्र इय् । स्वर० । मोनु० । ( स. ए. ) रूपद्वयम् । एकत्र स्त्रियां योरिति ङेः आम् य्वोर्धातोरिति इय् यदादेशस्तद्वद्भवतीति वेयुव इत्यडागमः स्वस्वर० सवर्णे० । अन्यत्र य्वोर्धातोरियुवौ स्वरे । स्वर० । ननु अडागमाभावे ङेः आम् कथं न भवतीत्याह ।

ऽडागमाभावे आमोऽप्यभावः । ङेः आम् न भवतीत्यर्थः । शेषं कण्ठ्यम् । धातुत्वा-द्वेर्लोपो न । ह्रस्वता च न । किंतु स्रो० । हे श्रीः । द्वित्वबहुत्वे । य्वोर्धातो० इय् । एवं धी, ह्री, भी, प्रभृतयोऽपि स्त्रीलिङ्गा अनीबन्ता ईप्प्रत्ययरहिताः शब्दाः साध्याः । सुश्री, सुधी, सेनानी, ग्रामण्यादयः पुल्लिङ्गवत् । वेयुव इत्यत्र नित्यं स्त्रियामित्युक्त-त्वात् स्त्रीवाचकत्वेऽपि सुश्रियै सुधियै इत्यादौ न विकल्पः । एवमूकारान्तो भू-शब्दः । भूः (प्र. ए.) स्रो० । भुवौ भुवः । य्वोर्धातोरियुवौ स्वरे० भ्रूशब्दस्य तु-भ्रम् चलने । उणादिको डू प्रत्ययः डकारष्टिलोपार्थः । भ्रमति चलतीति भ्रूः इति अक्विबन्तत्वात् अधातुत्वाच्च य्वोर्धातोरियुवौ स्वरेति न भवति किंतु स्त्रीभ्रुवोरिति सूत्रेण उवादेशः । भ्रूः भ्रुवौ भ्रुवः । भ्रुवं भ्रुवौ भ्रुवः । भ्रुवा भ्रूभ्यां भ्रूभिः । वेयुवः । स्त्रीभ्रुवो० । भ्रुवै भ्रुवे भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रु-वोः भ्रुवां भ्रूणाम् । भ्रुवां भ्रुवि भ्रुवोः भ्रूषु । इयुवंवत्त्वाद्धौ न ह्रस्वता । हे भ्रूः । यद्वा धौ परे तु भ्रूशब्दः स्त्रीवदिति केचित् तेन ह्रस्वः । हे भ्रु: । सुभ्रूशब्दस्य धौ वा ह्रस्वताः तेन सुभ्रू, हे सुभ्रु । इत्यपि । वधू, जम्बू, श्वश्र्वादिशब्दानां नदीवत् प्रक्रि-या । परं सिविषये स्रो० । वधूः वध्वौ वध्वः । उवम् । वधूं वध्वौ वधूः । वध्वा । एवं चमू, तनू, जम्बू, कन्दू, कम्बू, यवागू, दिधिषू, कद्रू, चंचू, कर्कन्धू करभोरू प्रभृतयो ज्ञेयाः । स्वयम्भूप्रमुखास्तु पुंवत् । ऋकारान्तो मातृशब्दस्तस्य पितृशब्दवत् प्रक्रि-या । पञ्चसु इत्यर् न परं शसि दीर्घ एव भवति, परं स्त्रीलिङ्गत्वात् सोनः पुंस इति नत्वं न भवति । धौ धेरर् । एवं दुहितृ, यातृ, ननृशब्दाः । स्वसृशब्दस्तु कर्तृशब्दवत् । स्तुरार् । सेरा । शसि स्त्रीलिङ्गत्वान्नत्वाभावो विशेषः । स्वसॄः । तृतीयादौ स्वरादौ ऋरम् । स्वर० । हे स्वसः । धेरर् । एवं पितृष्वसृ, मातृष्वसृ, ननान्दृशब्दाः । रैशब्दः सुरैशब्दवत् । राः । रैस्मि । रायौ रायः । इत्यादि रैशब्दः पुंस्त्रीलिङ्गे वर्तते । तथा च अमरकोशे । अर्थरैविभावा नरि इति पुल्लिङ्गे एवमुक्तः । अत्र तु स्त्रीलिङ्गे एव मुक्तस्तच्चिन्त्यम् । गोशब्दः पुंवत् । ओरौ । गौः गावौ गावः । गां गावौ गाः । गवा गोभ्यां गोभिः । इत्यादि । अत्र गोशब्दो दशार्थवाची । एवं द्योशब्दोऽपि । नौशब्दो ग्लौशब्दवत् । नौः नावौ नावः । इति स्वरान्तस्त्रीलिङ्गसाधनम् ।

अथ स्वरान्ता नपुंसकलिङ्गाः प्रदर्श्यन्ते । तत्राकारान्तः कु-लशब्दः । तस्य प्रथमाद्वितीयैकवचने ।

अथ स्वरान्त नपुंसकलिङ्गसाधनम् । तत्र अकारान्तः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने । सूत्रम् ।

## अतोऽम् ।

अतः अम् । अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवत्यधौ । अमो ग्रहणं लुग्व्यावृत्त्यर्थम् । अम्शसोरस्य । कुलम् ।

अतोऽम् । अत् ( पं. ए ) स्वर० । स्रो० । तसुप्रत्ययान्तं वा । अम् ( प्र.-ए. ) हसेपः० । मध्ये अतोत्युः । ओऔ । एदोतोतः । अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोः सिअम् इत्येतयोरम् भवति अधौ । धेरर् भवतीत्यर्थः । ननु स्यमोम् क्रियतां किं अम् इत्यकारग्रहणेन सत्यं अजरसमित्यादिसाधनार्थम् । अमोअमृकरणे हेतुमाह । अमो ग्रहणं लुग्व्यावृत्यर्थं अम् स्थाने पुनर्यत् अम्करणं तत् नपुंसकात् स्यमोर्लुगिति सूत्रनिषेधार्थम् । अयमर्थः । अकारात्परयोः स्यमोर्लुग्न भवतीति भावः । अनेन स्यमोरम् । अम्शसोरस्य । मोऽनु० ( प्र. द्वि. ) (द्वि द्वि. ) सूत्रम् ।

## ईमौ ।

नपुंसकलिङ्गात्पर औ ईकारमापद्यते । अइए । कुले ।

ईमौ । ई ( द्वि. ए. ) अम्शसो० । मोऽनु० । औ ( प्र. ए. ) साङ्के० । स्वर० । नपुंसकलिङ्गात्पर औ ईकारमापद्यते प्राप्नोति । दीर्घ ईकारस्तु वारिणी दधिनी इत्यादिरूपसिध्यर्थम् । अनेन औस्थाने ईकारः । अइए ( प्र. ब. ) ( द्वि. ब. ) सूत्रम् ।

## जश्शसोः शिः ।

नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः ।

जस् शसोः शिः । जस् च शस् च जस्शसौ तयोर्जस्शसोः ( ष. द्वि. ) स्वर० । स्रो० । शि ( प्र. ए. ) स्रो० । नपुंसकलिङ्गात्परयोर्जस्शसो शिर्भवति । शिरित्यत्र शकारः सर्वादेशार्थः तेन सर्वस्य जसः शसश्च इर्भवति न त्वन्तस्य । तमेवाह ।

## गुरुः शिञ्च सर्वस्य वक्तव्यः

### षष्ठीनिर्दिष्टस्येत्यस्यापवादः ।

गुरुः शिच्चेति । शकार इत् यस्य स शिदादेशः गुरुः शिच्च सर्वस्य वक्त-

व्यः । गुरुः आदेशस्तु पुनः शित् शकारेत् आदेशः सर्वस्यैव भवति । गुरुरनेकाक्षरः 'श्रेरयङ्' इत्यादिकः । तथा शित् शकारेच्च य आदेशः स सर्वस्य आदेशिनः स्थाने भवति नत्वन्तस्य । अनेन जस्शसोः शिः । सूत्रम् ।

## नुमयमः ।

नुम् अयमः । नपुंसकस्य नुमागमो भवति शौ परे । यम प्रत्यहारान्तस्य न भवति ।

नुमयमः । नुम् ( प्र० ए० ) हसेपः । न यम् अयम् तस्य अयमः (ष. ए.) स्वर० । स्रो० । नपुंसकस्य नुमागमो भवति शौ परे । यम् प्रत्याहारो यस्य तस्य शब्दस्य नुमागमो न भवति । यथा अहानि चत्वारि इत्यादौ ।

## मिदन्त्यात्स्वरात्परो वक्तव्यः ।

उकार उच्चारणार्थः । मकारः स्थाननियमार्थः ।

मिदन्त्यादिति । मित् मकारेत् आगमः अन्त्यात्स्वरात्परो वक्तव्यः । उकार उच्चारणार्थः । अनेन नुमागमः । सूत्रम् ।

## नोपधायाः ।

नान्तस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पञ्चसु परेषु नामि च । नोपधाया इत्यत्र छन्दसि तु भवतीति नियमात्संधिः ॥ छन्दोवत्सूत्राणि भवन्तीति वचनात् । कुलानि । पुनरपि कुलम् कुले कुलानि । शेषं देववत् । कुलेन कुलाभ्याम् कुलैः । कुलाय कुलाभ्याम् कुलेभ्यः । कुलात् कुलाभ्याम् कुलेभ्यः । कुलस्य कुलयोः कुलानाम् । कुले कुलयोः कुलेषु । हेकुल हेकुले हेकुलानि । एवं मूल-फलपत्रपुष्पकुण्डकुटुम्बादयः । सर्वादीनामकारान्तानाम-न्यादिपञ्चशब्दव्यतिरिक्तानां प्रथमाद्वितीययोः कुलशब्द-वत्प्रक्रिया । सर्वं सर्वे सर्वाणि । पुनरप्येवम् । शेषं पूर्व-वत् । सर्वेण सर्वाभ्याम् सर्वैः । सर्वस्मै सर्वाभ्याम् सर्वेभ्यः ।

सर्वस्मात् सर्वाभ्याम् सर्वेभ्यः । सर्वस्य सर्वयोः सर्वेषाम् । सर्वस्मिन् सर्वयोः सर्वेषु । हेसर्व हेसर्वे सर्वाणि । अन्यादीनां पञ्चानां विशेषोऽस्ति । अन्य सि इति स्थिते ।

नोपधायाः । नस्योपधा नोपधा तस्याः नोपधायाः ( ष० ए० ) ङितां यट् । स्वर० नान्तस्य शब्दस्य उपधायाः ( 'अन्त्यात्पूर्व उपधा' इति संज्ञा ) सन्धिकथितलक्षणाया दीर्घो भवति नपुंसके शौ परे पुंलिङ्गे धिवर्जितेषु पञ्चसु वचनेषु नामि च नुट्सहिते आमि परे च । यथा पञ्चानाम् । अनेन उपधाया दीर्घः । कुलं कुले कुलानि । पुनरपि द्वितीयायाम् । कुलं कुले कुलानि । साधना प्रथमावत् । तृतीयादौ देवशब्दवत् । सम्बोधने समानाद्धेर्लोपोऽधातोः । हे कुल । द्विवचने ईमौ अइए हे कुले बहुवचने जस्शसोः शिः । नुमयमः । नोपधायाः । हेकुलानि । एवं कुलशब्दवत् । मूलफलपुष्पपत्रकुण्डकुटुम्बज्ञानधनवनादयः शब्दाः साध्याः । सर्वादयोऽपि नपुंसकलिङ्गे प्रथमायां द्वितीयायां च कुलशब्दवत् । सर्वं सर्वे सर्वाणि । तृतीयादौ पुंलिङ्गवत् । अन्यादीनां प्रथमा द्वितीयैकत्वे विशेषः । सूत्रम् ।

## शृत्वन्यादेः ।

श्तु अन्यादेः । अन्यादेर्गणात्परयोः स्यमोः श्तु र्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । वावसाने । इति पक्षे दत्वमपि भवति । अन्यत्-अन्यद् अन्ये अन्यानि । पुनरप्येवम् । शेषं सर्ववत् । अन्यतरत्-अन्यतरद् अन्यतरे अन्यतराणि । इतरत्-इतरद् इतरे इतराणि । कतरत्-कतरद् कतरे कतराणि । कतमत्-कतमद् कतमे कतमानि । शेषं सर्ववद्रूपम् । प्रथमादयः कुलवत् । प्रथमं प्रथमे प्रथमानि ।

शृत्वन्यादेः । श्तु ( प्र० ए० ] साङ्के० । अन्य आदिर्यस्यासौ अन्यादिस्तस्मात् ( पं. ए. ) ङितिङस्येत्यकारलोपः । स्रो० । नुवम् । स्वर० । अन्यादेः । अन्य, अन्यतर, इतर, कतर, कतम, इत्याद्यन्यादेर्गणान्नपुंसकलिङ्गे वर्तमानात्परयोः स्यमोः 'श्तु' इत्यादेशो भवति । शकारः सर्वादेशार्थः । 'गुरुः शिच्च सर्वस्य

वक्तव्यः ' इति न्यायात् उकार उच्चारणार्थः अनेन सेः स्थाने अम्स्थाने च ' तु ' इत्यादेशः । द्वित्वबहुत्वयोः कुलशब्दवत् । हेअन्यत् । तृतीयादौ सर्वादिवत् । एवम् अन्यतरत्, इतरत्, कतरत्, कतमत्, एतेऽपि शब्दाः साध्याः । जराया जरस् वेति । नास्ति जरा यस्य तत् अजरम् अजरसम् अजरे अजरसी अजराणि अजरांसि शेषं पुंवत् । अत्र यद्यपि क्रमेण पूर्वम् आकारान्तः सोमपाशब्दस्तदग्रे इकारान्ता अस्थि, दधि, सक्थि, अक्षि, वारिशब्दास्तद्वदेव उकारान्ता मध्वादयस्तदग्रे ईकारान्ता ग्रामण्यादयः तद्वदेव ऊकारान्ता यवल्वादयस्तदग्रे ऋकारान्ताः कर्तृप्रमुखास्तदग्रे ऐकारान्तः अतिरैशब्दस्तदग्रे ओकारान्त उपगोशब्दस्तदग्रे औकारान्त अतिनौशब्द इति क्रमो युज्यते । परमत्र केषुचित् पुस्तकेषु क्रमवैपरीत्येन लिखितानि सन्ति । इकारान्तो नपुंसकलिङ्गोऽस्थिशब्दः । स्यमोर्विषये । सूत्रम् ।

नपुंसकात्स्यमोर्लुक् ।

नपुंसकलिङ्गात्परयोः स्यमोर्लुग्भवति । अस्थि ।

नपुंसकात्स्यमोर्लुक् । नपुंसक ( पं ए. ) ङसिरत् । सवर्णे० । सिश्च अम् च स्यमौ तयोः स्यमोः ( ष. द्वि. ) स्पर०। स्रो० । लुक्० ( प्र० ए० ) हसेपः। नामिनोरः । अवर्णान्तवर्जोनपुंसकलिङ्गात्परयोः स्यमोर्लुक् भवति । अनेन स्यमोर्लुक् । धौ विशेषमाह ।

इवृणां नपुंसके धौ वा गुणो वक्तव्यः इश्च उश्च ऋश्च तेषां इवृणाम् । उक्तं हि ।

संबोधने तूशनसस्त्रिरूपं, सान्तं तथा
नान्तमथाप्यदन्तम् ॥ माध्यन्दिनिर्वष्टि
गुणं त्विगन्ते, नपुंसके व्याघ्रपदां वरिष्ठः ॥ ३१ ॥

इउण् ऋलक् । इति पाणिनीयानामिक्प्रत्याहारः । हेअस्थे-हेअस्थि ।

इवृणां० । इश्च उश्च ऋश्च स्वरः तेषां इवृणां इकारोकारऋकाराणां नपुंसकलिङ्गविषये धौ स्थाने वा गुणो वक्तव्यः । नपुंसकात् स्यमोर्लुगिति धिलोपे विहिते इकारस्य एकारो गुणः, हेशब्दस्य प्राक् प्रयोगः । अत्र शिष्टसंमतिमाह । उक्तं च वृद्धैः । सम्बोधने इति । तुइत्यवधारणे माध्यंदिनिराचार्य उशनसः उशनस्शब्दस्य

संबोधने आमन्त्रणे सिविषये त्रिरूपं रूपत्रयं वष्टि अभिलषति, वाञ्छति, कथयति ) किं तत् त्रिरूपम् । सान्तं सकारान्तं धिविषये विकल्पेन हे उशनः, तथा नान्तं हे उशनन्, तथा अदन्तमकारान्तं हे उशन इति । तु पुनः इगन्ते इकारोकारऋकारान्ते नपुंसके गुणं वष्टि कथयति । प्रक्रियाकौमुद्याम् इउऋऌ एते इक्संज्ञाः । यथा हे अस्थे हे अस्थि, हे वारे हे वारि, हे मधो हे मधु, हे कर्तृ हे कर्तः । कथंभूतो माध्यंदिनिः। व्याघ्रपदां व्याघ्रपदगोत्रीयविप्राणां मध्ये वरिष्ठो गरिष्ठः, श्रेष्ठः। ( प्र० द्वि० ) ( द्वि० द्वि० ) ईमौ इति औस्थाने ई । सूत्रम् ।

**नामिनः स्वरे ॥** नाम्यन्तस्य नपुंसकस्य नुमागमो भवति विभक्तिस्वरे परे । अस्थिनी अस्थीनि । पुनरप्येवम् ।

**नामिनः स्वरे ।** नामिन् ( ष० ए० ) स्वर० । लो० । स्वर० (स. ए.)अइए। नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्वरे परे । अत्र विभक्तिसंबन्ध्येव स्वरो ग्राह्यः । तेन दधि आनयेत्यत्र न नुम् । अनेन नुमागमः । स्वर० । बहुत्वे कुलवत् जश्शसोः शिः । नुमयमः । नोपधायाः इति दीर्घत्वे इकारस्य ईकारः । तृतीयादौ हसादावविशेषः । स्वरादौ सूत्रम् ।

**अच्चास्थ्नां टादौ ॥** अत् चेत्यव्ययम् । अस्थ्यादीनां टादौ नुमागमो भवति । इकारस्य चाकारादेशो भवति टादौ स्वरे परे । 'शसादौ' इति पाठे तु शस् आदिर्यस्य स शसादिः टादिः। शसादावित्यतद्गुणसंविज्ञानो बहुव्रीहिः । यथा चित्रगुर्बहुधनः ।

**अच्चास्थ्नां टादौ ।** अत् ( प्र. ए. ) हसेपः० । च ( प्र. ए. ) अव्य० । स्तोश्चुभिः श्चुः । स्वर० । अस्थि ( ष. ब. ) अच्चास्थ्नामिति नुमागमः इकारस्य अकारः अल्लोपः स्वरे० । स्वर० । टा आदिर्यस्यासौ टादिस्तस्मिन् ( स. ए. ) ङेरौ डित् । टिलोपः । स्वर० । कचित्तु ' शसादौ ' इति पाठः । तत्र शस् आदिर्यस्य स शसादिः शसोऽग्रतः अर्थात् टादिः । यद्वा गौणत्वे प्रियास्थ्नः श्वनकान्, प्रिया वधूंश्च पुरुषान् इत्यादि प्रयोगसिद्ध्यर्थं शसो ग्रहणं युक्तम् । अस्थ्यादीनामस्थिदधिसक्थ्यक्षिशब्दानां टादौ स्वरे परे नुमागमो भवति इकारस्य च अकारः । अनेन स्वरादौ सर्वत्र नुम्, इकारस्य च अकारः । नामिनः स्वरे इत्यनेनैव चेन्नुम् क्रियते तदा इकाराभावे जाते ' निमित्तापाये नैमित्तिकस्याप्यपायः ' इति नुम् लोपः स्यादतोऽच्चास्थ्नामिति नुम्करणं पुनरुक्तये न । सूत्रम् ।

**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ॥** नान्तस्योपधाया अकार-

स्य लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । मकारवकारान्तसंयोगादुत्तरस्य न भवति । अम्वयुक्ताच्छसादावित्यत्रातद्गुणसंविज्ञानो बहुव्रीहिः । लम्बकर्ण इतिवत् । अतः शसोऽपि हरणम् । अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् ।

अल्लोपः स्वरे० । अल्लोपः ( प्र. ए. ) स्रो० । स्वर ( स० ए० ) अइए अम्वयुक्तात्, म् च व च म्वौ ताभ्यां युक्तः संयोगः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात् ( पं० ए० ) ङसिरत् । सवर्णे० । पश्चादेदोतोतः । शस् आदिर्यस्य स शसादिः तस्मिन् ( स. ए. ) ङेरौ ङित् । चपाच्छःशः । सिद्धम् । अत्र तु टादौ स्वरे परे एव अकारस्य लोपो भवति शस्ग्रहणं तु प्रियास्थ्नः श्चुनकान् पश्य इत्यादिप्रयोगसिद्ध्यर्थं तस्य नकारान्तस्योपधाया उपधाभूतस्य अकारस्य लोपो भवति शसादौ स्वरे परे । मकारवकारसंयोगादुत्तरस्याकारस्य लोपो न भवति । यथा आत्मनः । आत्मना । यज्वनः । यज्वना । अनेन स्वरादौ अकारलोपः । स्वर० । अस्थ्ना अस्थिभ्यां अस्थिभिः । अस्थ्ने । ङौ नान्तस्य अल्लोपः । विशेषमाह । सूत्रम् ।

वेङ्योः ॥ वेत्यव्ययम् । ईङ्योः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि-अस्थनि अस्थ्नोः अस्थिषु ।

वेङ्योः । वा ( प्र. ए. ) अव्य० । ईश्च ङिश्च ईङी तयोः ( स. द्वि. ) इयं० स्वर० । स्रो० । पश्चादइए । नान्तस्य नकारान्तस्य शब्दस्य ई इति औस्थाने जाते ईकारे परे ङौ च सप्तम्येकवचने परे वा अकारस्य लोपो भवति । ईकारे परे तु अह्नी अहनी इत्यादौ ज्ञेयम् । ङौ परे अनेन वा अल्लोपः । अस्थ्नि अस्थनि । एवं दधिसक्थ्यक्षिशब्दाः । दधि दधिनी दधीनि २ । दध्ना दधिभ्यां दधिभिः । दध्नि, दधनि । एवं सक्थिशब्द ऊरुवाची । सक्थि सक्थिनी सक्थीनि । अक्षिशब्दो नेत्रवाची । अक्षि अक्षिणी अक्षीणि २ । अक्ष्णा अक्षिभ्यां अक्षिभिः । इत्यादि । ईकारान्तो ग्रामणीशब्दः । सूत्रम् ।

नपुंसकस्य ॥ नपुंसकस्य ह्रस्वो भवति स्वरादौ । नामिनः स्वरे इति नुमागमः । ग्रामणि ग्रामणिनी ग्रामणीनि । पुनरप्येवम् ।

नपुंसकस्य । नपुंसक ( ष. ए. ) ङस् स्य । नपुंसकलिङ्गे वर्तमानस्य दीर्घस्व-

रान्तस्य शब्दस्य सर्वविभक्तिषु ह्रस्वो भवति। ग्रामणि ( प्र० ए० ) अनेन सर्वत्र ह्रस्वः। ई इत्यस्य इ। नपुंसकात्स्यमोर्लुक् ( प्र० द्वि. ) ( द्वि० द्वि० ) ह्रस्व०। ईमौ। नामिनः स्वरे। स्वर० (प्र० ब० ) ( द्वि. ब. ) ह्रस्वः। नुमयमः। नोपधायाः। तृतीयादौ ह्रस्वत्वे कृते हसादावविशेषः स्वरादौ तु विशेषः। श्लोकः।

एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्तते ॥
एकमेवार्थमाख्याति ह्युक्तपुंस्कं तदुच्यते ॥

एक एवेति। यः कश्चिद् एक एव शब्दः आप्प्रत्ययादिरहितः सन् त्रिषु लिङ्गेषु पुंस्त्रीनपुंसकेषु वर्तते, एकमेव अर्थम् आख्याति वक्ति एकार्थवाचक एव भवति तद्भाषितपुंस्कमुच्यते। ततः किं कर्तव्यमित्याह।

टादावुक्तपुंस्कं पुंवद्वा ॥ उक्तपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति।

पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे ॥
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥

ग्रामण्या-ग्रामणिना ग्रामणिभ्याम् ग्रामणिभिः। ग्रामण्ये-ग्रामणिने ग्रामणिभ्याम् ग्रामणिभ्यः। ग्रामण्यः-ग्रामणिनः ग्रामणिभ्याम् ग्रामणिभ्यः। ग्रामण्यः-ग्रामणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्याम्। नुमन्तस्यामि दीर्घः। ग्रामणीनाम्। ग्रामण्याम्-ग्रामणिनि ग्रामण्योः-ग्रामणिनोः ग्रामणिषु। हेग्रामणे-हेग्रामणि हेग्रामणिनी हेग्रामणीनि। आकारान्तो नपुंसकलिङ्गः सोमपाशब्दः। नपुंसकस्येति ह्रस्वः। अतोऽम्। सोमपं। सोमपे। सोमपानि। हे सोमप। शेषं कुलशब्दवत्। इकारान्तो वारिशब्दः। वारि। वारिणी। वारीणि। पुनरप्येवम्। वारिणा। वारिभ्याम्। वारिभिः। वारिणे। वारिभ्याम्। वारिभ्यः। वारिणः। वारिभ्याम्। वारिभ्यः। वारिणः। वारिणोः। वारीणाम्। वारिणि। वारिणोः। वारिषु। हेवारे। हेवारि। हेवारिणी। हेवारीणि।

**टादावुक्तपुंस्कं पुंवद्वा ।** टादि ( स० ए० ) ङेरौ ङित् ङित्वाट्टिलोपः उक्तपुंस्क ( प्र० ए० ) पुंवत् ( प्र० ए० ) वा ( प्र० ए० ) उक्तः पुमान् पुंल्लिङ्गो येन तदुक्तपुंस्कम् । अर्थरूपाभ्यां तुल्याकारो यः शब्दः पुंसि नपुंसके च वर्तमानः स उक्तपुंस्कः । तथावस्थितं निर्दिष्टपुंल्लिङ्गम् एवंभूतं नाम्यन्तं नपुंसकं टादौ स्वरादौ विभक्तौ परतः पुंवद्वा भवति नपुंसकलिङ्गेऽपि वा पुल्लिङ्गवत् स्यात् । अनेन तृतीयादौ वा ह्रस्वः । ह्रस्वाभावे सेनानीशब्दवत् । य्वौ वा इति यकारे ह्रस्वत्वे नामिनः स्वरे इति नुमागमः । ग्रामण्या ग्रामणिना ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने । आमि पुंवद्भावे एकस्मिन् पक्षे वा य्वौ । ग्रामण्यां । द्वितीयपक्षे ' सेनान्यादीनां वाऽमो नुट् ' इति नुटि कृते नामीति दीर्घत्वं नपुंसकपक्षे 'नामिनः स्वरे' इति नुमि कृते नुडाम इति सूत्रेण नुटोऽभावे नामीति दीर्घत्वं न । तेन ' नुमन्तस्यामि ' इति दीर्घः । पक्षद्वयेऽपि ' ग्रामणीनाम् ' इत्येव रूपसिद्धिः । परं नुडाम इति नुटो नित्यत्वान्नामिनः स्वरे इति न भवति । ततो ' नुमन्तस्यामि दीर्घः ' इत्यपि व्यर्थमेव, पुनश्चिन्त्यम् । उक्तं च हैमव्याकरणे अनाम्स्वरे नोन्तः । ग्रामण्यां ग्रामणिनि, ग्रामण्योः ग्रामणिनोः, ग्रामणिषु । एवं सुश्रि कुलं तेन सुश्रिणा सुश्रिया, सुश्रिणे सुश्रिये, एवं पटुने पट्वे इत्यादि । एवं सेनानिसुधियवल्लुप्रमुखाः । आकारान्तः सोमपाशब्दस्तस्य नपुंसकस्येति सूत्रेण ह्रस्वे कृते प्रथमाद्वितीययोः कुलशब्दवत् । (प्र० ए०) अतोऽम् । सोमपं ( प्र० द्वि० ) सोमपे । ईमौ । ( प्र.ब.) जश्शसोः शिः । नुमयमः । नोपधायाः । सोमपानि । पुनरपि द्वितीयायां सोमपं सोमपे सोमपानि । टादौ नपुंसकस्येति ह्रस्वे कृते टेन । अइए । सोमपेन सोमपाभ्यां । अद्भि । सोमपैः । ङ्यः । सोमपाय सोमपाभ्यां सोमपेभ्यः । सोमपात् सोमपाभ्यां सोमपेभ्यः । सोमपस्य सोमपयोः सोमपानाम् । सोमपे सोमपयोः सोमपेषु । सम्बोधने नपुंसकस्येति ह्रस्वे कृते कुलशब्दवत् । समानाद्धेर्लोपोऽधातोः । सोमपाशब्दस्य उक्तपुंस्कत्वेऽपि नाम्यन्तत्वाभावात् तृतीयादौ स्वरादौ वा पुंवत् रूपाणि न भवन्ति । इकारान्तो वारिशब्दः । प्रथमाद्वितीययोरस्थिशब्दवत् वारि वारिणी वारीणि २ । तृतीयादौ ' नामिनः स्वरे ' इति नुमागमः । ऋवर्णो० । स्वर० । वारिणा वारिभ्यां वारिभिः । वारिणे वारिभ्यां वारिभ्यः । वारिणः वारिभ्यां वारिभ्यः । वारिणः वारिणोः । आमि नुडामः । नामीति दीर्घः । वारीणाम् । वारिणि वारिणोः वारिषु । सम्बोधने ' य्वृणां नपुंसके धौ वा । ' हेवारि हेवारे इत्यादि । शेषं सुगमम् । ऐकारान्तः सुरैशब्दः, अतिरैशब्दश्च । नपुंसकस्येति ह्रस्वे कृते वारिशब्दवत् ।

**ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ ॥** सुष्ठु

रायो यस्य तत् सुरि सुरिणी सुरीणि । पुनरप्येवम् । सुरिणा-सुराया । हेसुरे-हेसुरि हेसुरिणी हेसुरीणि । उकारान्तो मधुशब्दः । मधु मधुनी मधूनि । पुनरप्येवम् । स्वरादौ 'नामिनः स्वरे' इत्यादि । ऋकारान्तः कर्तृशब्दः । कर्तृ कर्तृणी कर्तॄणि । पुनरप्येवम् । हेकर्तः-हेकर्तृ हेकर्तृणी हेकर्तॄणी । कर्त्रा-कर्तृणा इत्यादि । शोभना द्यौर्यस्य तत् सुद्यु सुद्युनी सुद्यूनि । हेसुद्यो-हेसुद्यु हेसुद्युनी हेसुद्यूनि । सुद्युना-सुद्यवा इत्यादि सर्वमुन्नेयम् ॥

इति स्वरान्तनपुंसकलिङ्गप्रक्रिया ॥ ३ ॥

अथ हसान्ताः पुल्लिङ्गाः प्रदर्श्यन्ते । तत्र हकारान्तो अनडुह्शब्दः । अनडुह् सि इति स्थिते ।

ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ वक्तव्यौ । सुष्ठु राः धनं यस्य तत् सुरि । सुरि सुरिणी सुरीणि प्रथमा, द्वितीया च । सुरिणा सुराया, सुरिभ्यां सुरिभिरित्यादि । एवं सुष्ठु नौर्यस्य तत् सुनु । सुनु सुनुनी सुनूनि प्र० द्वि० । सुनुना सुनावा । सुनुने सुनावे । इत्यादि । उकारान्तो मधुशब्दः । स च चैत्रमासवाची, वसन्तवाची, मधुदैत्यवाची च पुल्लिङ्गो भवति । क्षौद्रमद्यमकरन्दवाची तु नपुंसकलिङ्गो भवति अतएवार्थभेदत्वादुक्तपुंस्कत्वं न । किंतु तस्य वारिशब्दवत् साधना । एवम् उकारान्तो वस्तुशब्दः । वस्तु वस्तुनी वस्तूनि प्र० द्वि० । वास्तु । वास्तुनी वास्तूनि प्र० द्वि० । अम्बु अम्बुनी अम्बूनि प्र० द्वि० । सानु सानुनी सानूनि प्र० द्वि० । जानु जानुनी जानूनि प्र० द्वि० । ऊकारान्तः खलपू शब्दः । ह्रस्व इत्यादि । कर्तृशब्दस्य प्रथमाद्वितीययोः अस्थिशब्दवत् । कर्तृ कर्तृणी कर्तॄणि प्र० द्वि० । तृतीयादौ स्वरादौ उक्तपुंस्कत्वाद् रूपद्वयम् । तत्र एकत्र पुंवत् तत्र ऋदरम् । अन्यत्र 'नामिनः स्वरे' इति नुमागमः । कर्त्रा कर्तृणा । कर्तृणे कर्त्रे । कर्तृणः कर्तुः । कर्तृणोः कर्त्रोः । कर्तृणि कर्तरि । घौ वा गुणोऽर् । हे कर्तः हे कर्तृ । शेषं कण्ठ्यम् । ओकारान्त उपगोशब्दः । औकारांतोऽतिनौशब्दः पूर्ववत् । इति स्वरान्तनपुंसकलिङ्गसाधन प्रक्रिया ॥ ३ ॥ अथ हसान्तपुल्लिङ्गसाधनं किंचिदुच्यते । तत्र प्रथमं हान्तान् दर्शयति । हकारान्तोऽनडुह्शब्दः । तस्य नामसंज्ञायां सत्यां स्यादयो विभक्तयो दीयन्ते । ततः । सूत्रम् ।

**पञ्चस्वनडुह आमागमो वक्तव्यः ॥पञ्चस्वनडुह आमागमो भवति।**

पञ्चस्वनडुह आमागमो वक्तव्यः । चतुराम्शौ च इति सूत्रेण वा इति । केचित्तु अनडुहश्चेति सूत्रेण अनडुहशब्दस्य स्यादिषु पञ्चसु वचनेषु शौ च आम् आगमो भवति अनेनागममिच्छन्ति स्त्रीलिङ्गे च विकल्पेन आगममिच्छन्ति । अनड्वाही । अनडुही इति । अनेन पञ्चसु आम् 'मिदन्त्यात्स्वरात्परो वक्तव्यः ।' इति । ड्+आ उवम् । स्वर० । सूत्रम् ।

**सावनडुहः । अनडुहशब्दस्य सौ परे नुमागमो भवति ।**

सावनडुहः । सि ( स. ए. ) ङेरौ ङित् । टिलोपः । स्वर० । अनडुह् (ष. ए. ) स्वर० । स्रो० । औआव् । सिद्धम् । वृत्तिः कण्ठ्या ।अनेन सौ परे नुमागमः । हस्य पूर्वं न् हसेपः । सूत्रम् ।

**संयोगान्तस्य लोपः ॥ संयोगान्तस्य लोपो भवति रसे पदान्ते च । हसेपः सेर्लोपः । नुम्विधिसामर्थ्याद्दत्वाभावः । अनड्वान् अनड्वाहौ अनड्वाहः । अनड्वाहम् अनड्वाहौ अनडुहः । अनडुहा ।**

संयोगान्तस्य लोपः । संयोगस्य अन्तः संयोगान्तः तस्य (ष० ए० ) ङस्य । लोप( प्र० ए० ) स्रो० । संयुक्ताक्षरस्य योऽन्तः संयुक्तानामक्षराणां योन्त्यो वर्णस्तस्य लोपो भवति रसे पदान्ते च । चकारात्, रकारात् अग्रे संयोगान्तस्य लोपो न भवति 'रात्सस्य लोपः' इति सलोपस्यैव नियमात् । कटचिकीर्ष इत्यादौ यत्इति अलोपे रेफादग्रे सकारस्य लोपो भवति कटचिकीः । परं 'ऊर्ज्ज्' अत्र जकारलोपस्यैव नियमात् यथा ऊर्क् ऊर्ग् ऊर्जौ ऊर्जः । अनेन सौ परे हकारस्य लोपः अनड्वान् इति सिद्धम् । अत्र नुम्विधानसामर्थ्यादेव 'वसां रसे' इति दत्वं न भवति । यद्वा कृतेऽपि दकारे संयोगान्तस्य लोपान्न रूपभेदः । अनः शकटं वहतीति अनड्वान् वृषभः । वहेः क्विबनसो डश्च इति स्वरादौ स्वर० । धौ तु । सूत्रम् ।

**धावम् ॥ अनडुहशब्दस्य धौ परे अमागमो भवति । हे अनड्वन् हेअनड्वाहौ हे अनड्वाहः ।**

धावम् । धि (स. ए. ) ङेरौ ङित् । टिलोपः । स्वर० । अम् ( प्र० ए० ) हसेपः । पश्चात् औआव् । स्वर० । अनडुहशब्दस्य धौ परे अमागमो भवति । आमोऽपवादः । अनेन अम् । मिदन्त्या० । सावनडुह इति नुम् । हसेपः० । संयोगान्त-

स्य लोपः । द्वित्वबहुत्वयोरामागमः । उवम् । स्वर० । द्वितीयादौ स्वर० । हसादौ सूत्रम् ।

**वसां रसे ॥** वस् स्रंस् ध्वंस् भ्रंस् अनडुह् इत्येतेषां रसे पदान्ते च दत्वं भवति । अनडुद्भ्याम् अनडुद्भिः । अनडुहे अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुहोः अनडुहाम् । अनडुहि अनडुहोः । खसे चपा झसानाम् । अनडुत्सु । गोदुह्शब्दस्य भेदः ।

वसां रसे । वस् (ष० ब०) स्वर० । मोनु० । रसे (स० ए०) अइए । सिद्धम् । वसामिति बहुवचननिर्देशाद् वसादयः । वस् इति क्वसुप्रत्ययस्य वस् । विदेर्वा वस् इत्यपि वस् । स्रंस्ध्वंस् अधःपतने । अनडुह्शब्दो वृषभवाची । एतेषां रसे पदान्ते च 'परे' दत्वं भवति षष्ठीनिर्दिष्टस्यादेशोन्त्यस्य अनेन हस्य दः भकारादौ स्वर० । सुपि 'खसे चपा झसानां' दस्य तः । स्वर० । सिद्धोऽनडुह्शब्दः । स्रं सुध्वंसोस्तु सकारान्तावसरे उखास्रत् उखास्रसौ । उखास्रद्भ्याम् । एवं पर्णध्वत् । हकारान्तत्वेऽपि अनडुह्शब्दापेक्षया गोदुह्शब्दस्य भेदः कश्चिद्विशेषोऽस्ति । गां दोग्धीति गोधुक् । दुहप्रपूरणे गोपूर्वः क्विप्प्रत्ययान्तः । सूत्रम् ।

**दादेर्घः ॥** दादेर्धातोर्हकारस्य घत्वं भवति । धातोर्झसे परे नाम्नश्च रसे पदान्ते च । गोदुघ् सि इति स्थिते ।

दादेर्घः । दः दकार आदिर्यस्य स दादिस्तस्य दादि (ष० ए०) ङिति ङस्य । स्रो० । घ (प्र० ए०) स्रो० । नामिनो रः । जलतुम्बि० । सिद्धम् । दादेरिति दकारादेर्धातोर्हकारस्य घत्वं भवति झसे परे नाम्नस्तद्धिकारस्य रसे परे अथवा पदान्ते विषये । अनेन सकारादौ सुपि च हस्य घः । सूत्रम् ।

**आदिजबानां झभान्तस्य झभाः स्ध्वोः ॥** धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ।

आदिजबानामिति । आदौ वर्तमाना जबा आदिजबास्तेषां (ष० ब०) नुडामः । नामि । स्वर० । मोनु० । झभोन्ते यस्य स झभान्तस्तस्य (ष० ए०) ङस्य । झभ (प्र० ब०) सवर्णे० । स्रो० । स् च ध्व् च स्ध्वौ तयोः (स० द्वि०) स्वर० स्रो० । सिद्धम् । झभान्तस्य धातोः आदौ वर्तमानानां जबानां झभा भवन्ति । जब-

दगबानां क्रमेण झढधघभा भवन्ति सकारे ध्वे च परे । आख्याते आत्मने पदे से, ध्वे ध्वंसंबन्धिनः परे नाम्नश्च रसे पदान्ते च । केचित्तु जसतीति जप् जभौ जभः इत्यादौ प्रयोगे जकारस्य झकारासंभवात् आदिजबानां झभान्तस्य झभासध्वोः इत्येवं सूत्रं पठन्ति अनेन यत्र रसप्रत्याहारस्तत्र दस्य घः । सूत्रम् ।

वावसाने ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा ।

वावसाने । वा ( प्र० ए० ) अव्य० । अवसान ( स० ए० ) अइए । सव-र्णे० । सिद्धम् । अग्रे वर्णानामभावोऽवसानं तस्मिन्नवसानेऽन्ते वर्तमानानां झसानां जबा भवन्ति पक्षे विकल्पेन चपा भवन्ति । अवसानलक्षणमाह सूत्रम् ।

विरामोऽवसानम् ॥ वर्णानामभावोऽवसानसंज्ञः स्यात् । गोधुक्-गोधुग् गोदुहौ गोदुहः । गोदुहम् गोदुहौ गोदुहः । गोदुहा । भकारादौ 'दादेर्घः' इति घत्वे कृते आदिजबानामित्यनेन दकारस्य धकारे कृते झबे जबाः । गोधुग्भ्याम् गोधुग्भिः । गोदुहे गोधुग्भ्याम् गोधुग्भ्यः । गोदुहः गोधुग्भ्याम् गोधुग्भ्यः । गोदुहः गोदुहोः गोदुहाम् । गोदुहि गोदुहोः । गोधुघ् सुप् इति स्थिते ' खसे चपा झसानाम् ' इति ककारः । पश्चात् ' किलात्षः सः कृतस्य ' इति षत्वम् ।

विरामोऽवसानम् । सुगमम् एतत् । अनेन सौ धौ च रूपद्वयं विधाय हसेप इति सिलोपे कृते एकत्र घस्य कः अन्यत्र गः । स्वरादौ स्वर० । सकारादौ विभक्तौ तु दादेर्घ इति घत्वे कृते आदिजबानामिति दस्य धः । ' झबे जबाः ' इति घस्य गः । स्वर० । सुपि दादेर्घः । आदिजबानाम् । खसे चपा झसानाम् । किलात्षः सः कृतस्येति षत्वम् ।

कषसंयोगे क्षः ॥ ककारषकारसंयोगे क्ष इत्यक्षरं भवति । गोधुक्षु । हे गोधुक् हे गोधुग् हे गोदुहौ हे गोदुहः । मधुलिह्शब्दस्य भेदः ।

कषसंयोगे क्षः । ककारषकारसंयोगे क्षो भवति । गोधुक्ष्विति सिद्धम् । लिह्

आस्वादने मधुपूर्वः । क्विप्प्रत्ययः । मधु मकरन्दं पुष्परसं लेढीति मधुलिड् भ्रमरः । मधुलिह्शब्दस्य रसे पदान्ते च विशेषः । सूत्रम् ।

होढः ॥ धातोर्हकारस्य ढत्वं भवति झसे परे नाम्नश्च रसे पदान्ते च । वावसाने। मधुलिट्-मधुलिड् मधुलिहौ मधुलिहः। मधुलिहम् मधुलिहौ मधुलिहः । मधुलिहा मधुलिड्भ्याम् मधुलिड्भिः । होढः । खसे चपा झसानाम् । हे मधुलिट् हे मधुलिड् हे मधुलिहौ हे मधुलिहः । इत्यादि । मित्रद्रुह्शब्दस्य भेदः ।

होढः । ह ( ष० ए०) स्वर० । स्रो० । हवे । उओ। सिद्धम् । धातुसंबन्धिनो हकारस्य झसे परे ढत्वं भवति नाम्नश्च नामत्वं प्राप्तस्य रसे परे पदान्ते च उभयोः ( प्र० ए० ) रूपद्वयम् ।उभयत्रापि हस्य ढः ।हसेपः ० ।वावसाने। एकत्र ढः । अन्यत्र डः । स्वरादौ स्वर० । भकारादौ होढ इति ढत्वे झभे जबाः । ढस्य डः । स्वर० । सुपि होढः । खसे चपाः । ढस्य टः । स्वर० । मधुलिट्सु इत्यत्र क्वचित्पदान्तेऽपि पदान्तताश्रयणीयेति न्यायात् टोरन्त्यादिति सूत्रेण सस्य षत्वाभावः । हकारान्तानामपि द्रुहादीनां वाक्यान्तरेण विशेषमाह ।

द्रुहादीनां घत्वढत्वे वा ॥ द्रुह मुह् स्नुह् स्निह् इत्येतेषां हकारस्य घत्वढत्वे वा भवतः धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने। मित्रध्रुग् मित्रध्रुक्-मित्रध्रुड्-मित्रध्रुट् मित्रद्रुहौ मित्रद्रुहः ।मित्रद्रुहम् मित्रद्रुहौ मित्रद्रुहः । हेमित्रध्रुग्-हेमित्रध्रुक्-हेमित्रध्रुड्-हेमित्रध्रुट् । मित्रद्रुहा मित्रध्रुग्भ्याम्-मित्रध्रुड्भ्याम् मित्रध्रुग्भिः-मित्रध्रुड्भिः इत्यादि । तथा तत्त्वमुह्शब्दः । तत्त्वे मुह्यतीति तत्त्वमुक्-तत्त्वमुग्-तत्त्वमुड्-तत्त्वमुट् तत्त्वमुहौ तत्त्वमुहः। तत्त्वमुहम् तत्त्वमुहौ तत्त्वमुहः । हेतत्त्वमुक्-हेतत्त्वमुग्-हेतत्त्वमुड्-हेतत्त्वमुट् इत्यादि । भारवाह्शब्दस्य भेदः । होढः । वावसाने। भारवाट् भारवाड् भारवाहौ भारवाहः । भारवाहम् भारवाहौ। द्रुहादीनां घत्वढत्वे वा। द्रुहादीनामिति। द्रुह,मुह् स्निह, स्नुहां रसे पदा-

न्ते च घत्वं ढत्वं वा भवति । विकल्पेन घत्वे कृते द्वितीयपक्षे ढत्वं भवति । द्रुह् जिघांसायां, मुह् वैचित्त्ये, स्नुह् उद्गिरणे, स्निह् प्रीतौ उद्गिरणे च णश् अदर्शने, एते द्रुहादयः । अत्र द्रुहो दकारादित्वात् दादेर्घ इति प्राप्तस्य घत्वस्य विकल्पः । अन्येषां तु अप्राप्तस्य विकल्प इत्यर्थः । मित्रं द्रुह्यतीति मित्रध्रुक् मित्रद्रुह् ( चत्वारि रूपाणि सर्वत्रापि प्र० ए० ) रूपद्वये दादेर्घः इति घः । रूपद्वये च होढ इति ढः । आदिजबानामिति सर्वत्र द्रुस्थाने ध्रु हसेपः । वावसाने । घस्य यथासंख्यं कगौ । ढस्य च टडौ । मित्रध्रुक् १ मित्रध्रुग् २ मित्रध्रुट् ३ मित्रध्रुड् ४ एवं सिविषये रूपचतुष्टयम् । मित्रद्रुहौ मित्रद्रुहः । भकारादौ सुपि च रूपद्वयं तत्र एकत्र ढत्वे कृते आदिजबानामिति द्रुहइत्यस्य ध्रु भकारादौ झबेजबाः । घस्य गः ढस्य च डः । मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां मित्रध्रुग्भिः मित्रध्रुड्भिः । सुपि खसे चपा इति घस्य कः । ढस्य च टः । कत्वे किलात्षः सः । कषसंयोगे क्षः । मित्रध्रुक्षु । टत्वे स्वर० । मित्रध्रुट्सु । घौ सिवत् । एवं तत्त्वमुह्, पुत्रस्निह्, क्षीरस्नुहोऽपि साध्याः । तत्त्वं प्रति मुह्यतीति तत्त्वमुट् तत्त्वमुड् । तत्त्वमुक् । तत्त्वमुग् भारवाहशब्दस्य द्वितीयाबहुवचने सूत्रम् ।

वाहो वौ शसादौ स्वरे ॥ वाहः वः औ शसादौ स्वरे । वाहो वाकारस्यौकारादेशो भवति शसादौ स्वरे परे । भारौहः । भारौहा भारवाड्भ्याम् भारवाड्भिः ।

वाह इत्यादि सुगमम् । श्वेतवाहादिषु विशेषमाह ।

श्वेतवाहुक्थशास् पुरोडाश् अवयाजां डस् रसे पदान्ते चेति वक्तव्यम् ॥ डित्त्वाट्टिलोपः ।अत्वसोः सौ। श्वेतवाः श्वेतवाहौ श्वेतवाहः । श्वेतवाहम् श्वेतवाहौ श्वेतवाहः । अत्र वाहो वौ शसादौ स्वरे वेति केचित् । श्वेतौहः । श्वेतौहा-श्वेतवाहा श्वेतवोभ्याम् श्वेतवोभिः । श्वेतौहे-श्वेतवाहे श्वेतवोभ्याम् श्वेतवोभ्यः । श्वेतौहः-श्वेतवाहः श्वेतवोभ्याम् श्वेतवोभ्यः । श्वेतौहः-श्वेतवाहः श्वेतौहोः श्वेतवाहोः श्वेतौहां-श्वेतवाहाम् । श्वेतौहि-श्वेतवाहि श्वेतौहोः-श्वेतवाहोः श्वेतवःसु-श्वेतवस्सु । अवयाः श्वेतवाः पुरोडाश्चैते कृतदीर्घाः संबुद्धौ निपात्यन्ते । चकारादुक्थशा इति केचित् । हे श्वे-

तवाः वेति कश्चित् हे श्वेतवः हे श्वेतवाहौ हे श्वेतवाहः । श्वेतमासनं वहतीति श्वेतवाः इति व्युत्पत्तिः । उक्थशाः उक्थशासौ उक्थशासः । उक्थशासम् उक्थशासौ उक्थशासः । उक्थशासा उक्थशोभ्याम् उक्थशोभिः । उक्थशासे उक्थशोभ्याम् उक्थशोभ्यः । उक्थशःसु-उक्थशस्सु । हे उक्थशाः-हे उक्थशः हे उक्थशासौ हे उक्थशासः इत्यादि । पुरोडाः पुरोडाशौ पुरोडाशः । पुरोडाशम् पुरोडाशौ पुरोडाशः । पुरोडाशा पुरोडोभ्याम् पुरोडोभिः । पुरोडाशे पुरोडोभ्याम् पुरोडोभ्यः । पुरोडःसु-पुरोडस्सु । हेपुरोडाः-हेपुरोडः हे पुरोडाशौ हे पुरोडाशः । अवयाः अवयाजौ अवयाजः । अवयाजम् अवयाजौ अवयाजः । अवयाजा अवयोभ्याम् अवयोभिः । अवयाजे अवयोभ्याम् अवयोभ्यः । अवयःसु-अवयस्सु । हे अवयाः हे अवयः हे अवयाजौ हे अवयाजः। तुरासाह्शब्दस्य भेदः। हो ढः।श्वेतवाहुक्थशासित्यादि । सुगमम् । तुरासाहशब्दस्य विशेषः सूत्रम् । सहेः षः साढि ॥ सहेः सकारस्य षकारादेशो भवति साढि सति । वावसाने । तुराषाट्-तुराषाड् तुरासाहौ तुरासाहः । तुरासाहम् तुरासाहौ तुरासाहः । तुरासाहा तुराषाड्भ्याम् तुराषाड्भिः । तुरासाहे तुराषाड्भ्याम् तुराषाड्भ्यः । इत्यादि । हे तुराषाट्-हे तुराषाड् हे तुरासाहौ हे तुरासाहः । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ।

सहेरित्यादि । हान्तानां साधनमेतत् । यकारवकारान्ता अप्रसिद्धाः । रान्तमाह । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः । सूत्रम् ।

चतुरामु शौ च ॥ चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च परे । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः चतुर्भ्यः ।

चतुराम् शौ च ॥ चतुर् (ष० ए०) साङ्के० । आम् (प्र० ए०) हसे- पः० । शि (स० ए०) ङेरौ डित् टिलोपः । च (प्र० ए०) अव्य० । पञ्चसु ग्रहणं समासान्तत्वसूचकम् । यथा प्रियाश्चत्वारो यस्यासौ प्रियचत्वा इत्यादि ज्ञेयम् । अन्यथा बहुत्वे पञ्चस्विति पदं न संभवति । 'शौ च' इति पदकथनेन नपुंसके जश्शसोः शिरिति शौ परे शस्यपि आम् आगमो भवति इत्यर्थः । मिदन्त्यात्स्व- रात्परो वक्तव्यः । जसि पूर्वमा । उवम् । स्वर० । स्रो० । (तृ. ब. च. ब पं. ब. । जलतुंबिका० । (ष० ब०) सूत्रम् ।

रः संख्यायाः ॥ रेफान्तसंख्यायाः परस्यामो नुडागमो भवति । णत्वद्वित्वे । चतुर्णाम् । रः सुपीति वक्तव्यम् । सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य । चतुर्षु । अत्र ज्ञापकं यकृचतुर्ष्विदं सूत्रम् । तदन्तविधिरत्रेष्यते । प्रियाश्चत्वारो यस्य स प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियचत्वारम् प्रियचत्वारौ प्रियचतुरः । प्रियचतुरा प्रियचतुर्भ्याम् प्रियचतुर्भिः । गौणत्वे नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् । धावम् । हेप्रियचत्वः हेप्रियचत्वारौ हेप्रियचत्वारः । नकारान्तो राजन्शब्दः । राजन् सि इति स्थिते । 'नोपधायाः' इति दीर्घः ।

रः संख्यायाः । रः (पं० ए०) स्वर० । स्रो० । संख्या (पं० ए०) ङिन्तां यट् । सवर्णे० । रेफान्तसंख्यायाः वाची शब्दस्तस्मात्परस्यामो नुडागमः स्यात् । अनेन नुट् । ऋर्नोणो० । राचपोद्विः । जलतुं० । चतुर्णामिति सिद्धम् । (स० ब०) क्विला० । जलतुं० । चतुर्षु । दोषां रः इति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यम् । अतश्चतुर्ष्वित्यत्र न विसर्गः । लञणान्ता अप्रसिद्धाः । नान्तानाह नकारान्तो राजन्शब्दः । तस्य पञ्चसु वचनेषु 'नोपधाया' इति दीर्घः । राजृ दीप्तौ । राजते इति राजा । राज.देरन् । सूत्रम् ।

नाम्नो नो लोपशधौ ॥ नाम्नः नः लोपश् अधौ । नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ । च-

कारात्कचिन्नाम्नो नकारस्य लोपश् न भवति । सुष्ठु हिनस्ति पापमिति सुहिन् । राजा राजानौ राजनः । राजानम् राजानौ । अल्लोपः स्वरे । 'स्तोः श्चुभिः श्चुः' इति नकारस्य ञकारः ।

नाम्नो नो लोपशधौ । नामन् (ष० ए० ) अल्लोपः । स्वर० । स्तो० । म् ( ष० ए० ) स्वर० । स्तो० । पश्चात् हबे । उभो । लोपश् ( प्र० ए० ) हसेपः० । पश्चात् हबे । उभो । न घिः अधिस्तस्मिन् अधौ ( स० ए० ) ङेरौ-डित् । टिलोपः । पश्चात् स्वर० । नाम्न इति शब्दस्य सम्बन्धिनो नकारस्य लोपश् वर्णविरोधरूपो भवति अनागमजस्य शब्दान्तभूतस्यैव परं केनापि सूत्रेणागतस्य नस्य लोपश् न भवति रसे परे पदान्ते च चकारात् सुहिन् सुहिंसौ सुहिंसः, प्रशान् इत्यादौ नकारस्य लोपो न । धौ च परे लोपश् न भवति । अनेन सौ नस्य लोपः । राजा राजानौ राजानः । अधौ इति नकारलोपश् न । हे राजन् । राजानं राजानौ । शसि ' अल्लोपः स्वरे ' इत्यकारलोपः । स्तोः श्चुभिः श्चुरिति श्चुत्वेन चवर्गे क्रियमाणे नकारस्य ञकारः । ततः ।

जञोर्ज्ञः ॥ जकारञकारसंयोगे ज्ञ इत्यक्षरं भवति । राज्ञः । राज्ञा राजभ्याम् । योगानामुभयतः संबन्धः । ' लोपशि पुनर्न संधिः ' इति नियमात् अङ्गीत्यात्वं न । राजभिः । राज्ञे राजभ्याम् राजभ्यः । राज्ञः राजभ्याम् राजभ्यः । राज्ञः राज्ञोः राज्ञाम् । राज्ञि । वेङ्योः । राजनि राज्ञोः राजसु । एवं यज्वन्नात्मन्सुधर्मन्प्रभृतयः । यज्वा यज्वानौ यज्वानः । यज्वानम् यज्वानौ । अम्वयुक्तादिति विशेषणादल्लोपो नास्ति । यज्वनः । यज्वना यज्वभ्याम् यज्वभिः । यज्वने यज्वभ्याम् यज्वभ्यः । यज्वनः इत्यादि । हे यज्वन् हे यज्वानौ हे यज्वानः । आत्मा आत्मानौ आत्मानः । आत्मानम् आत्मानौ आत्मनः । आत्मना आत्मभ्याम् आत्मभिः । इत्यादि । हेआत्मन् हे आत्मानौ हेआत्मानः । सुधर्मा सुधर्माणौ सुधर्माणः ।

सुधर्माणम् सुधर्माणौ सुधर्मणः। सुधर्मणा सुधर्मभ्याम् सुधर्मभिः इत्यादि। हे सुधर्मन् हे सुधर्माणौ हे सुधर्माणः। श्वन्युवन्मघवन्शब्दानां पञ्चसु राजन्शब्दवत्प्रक्रिया। श्वा श्वानौ श्वानः। श्वानम् श्वानौ।

जञोर्ज्ञः। जश्च ञश्च जञौ तयोर्जकारञकारयोर्योगे ज्ञो भवतीत्यर्थः। अनेन जञयोगे ज्ञः। स्वर०। स्नो०। टाविषयेऽप्येवम्। भकारादौ नाम्नो०। ततो लोपशि पुनर्न सन्धिरिति कारणात् 'अद्व' इति सूत्रेण आकारो न भवति। अधाविति विशेषणात् धौ न नकारलोपश्। ङौ वेङ्योः। सुपि नाम्नो०। एवं यज्वन्, आत्मन्, सुधर्मन्, सुपर्वन्, प्रभृतयोऽपि साध्याः। परं शसादौ अम्वयुक्तादिति विशेषणात् मकारवकारयुक्तत्वात् अल्लोपो नास्ति तेन यज्वनः, यज्वना इत्यादि। उक्षन्मूर्धन्शब्दौ तु राजन्वत् श्वन्युवाचति। श्वा कुर्कुरवाची युवा तरुणवाची मघवा इन्द्रवाची इत्येतेषां शब्दानां पञ्चसु स्यादिवचनेषु राजन्शब्दवत् साधना। शसादौ तु विशेषस्तमेवाह। सूत्रम्।

श्वादेः॥ श्वादेर्वकार उत्व प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च। तद्धिते स्वरे तु न भवति। अत्र नियामकं पाणिनीयसूत्रम्। श्वयुवमघोनामतद्धिते। तेन माघवनमिति भवति। शुनः। शुना श्वभ्याम् श्वभिः। शुने श्वभ्याम् श्वभ्यः। शुनः श्वभ्याम् इत्यादि। हेश्वन् हेश्वानौ हेश्वानः। युवा युवानौ युवानः। युवानम् युवानौ। युवन्शब्दस्य वकारस्योत्वे कृते। सवर्णे दीर्घः सह। यूनः। यूना युवभ्याम् युवभिः। यूने युवभ्याम् युवभ्यः इत्यादि। हेयुवन् हेयुवानौ हेयुवानः। मघवा मघवानौ मघवानः। मघवानम् मघवानौ। मघवन्शब्दस्योत्वे कृते। उओ। मघोनः। मघोना मघवभ्याम् मघवभिः। मघोने मघवभ्याम् मघवभ्यः। इत्यादि। हे मघवन् हे मघवानौ हे मघवानः॥ मघवच्छब्दस्य तु। मघवान् मघवन्तौ मघवन्तः। मघवन्तम् मघवन्तौ

मघवतः । मघवता मघवद्भ्याम् मघवद्भिः । मघवते मघवद्भ्याम् मघवद्भ्यः इत्यादि । हे मघवन् हे मघवन्तौ हे मघवन्तः ॥ " स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ॥ " इति प्रयोगदर्शनात् ।

श्वादेः । श्वा आदिर्यस्यासौ श्वादिस्तस्य ( ष० ए० ) ङिति ह्रस्वस्य । स्रो० । श्वादेरिति श्वन्, युवन्, मघवन् शब्दसम्बन्धी वकार उत्वमुकारभावं प्राप्नोतीति भावः । शसादौ स्वरे परे ईपि च । ईपि प्रत्यगे परे तु शुनी मघोनी इति भवति । वकारेण सहितः अकारः वकारः इति सस्वरस्यापि वकारस्यानेन उकारः । स्वर० । शसादौ स्वरादौ सर्वत्र उकारः । भकारादौ सुपि च नाम्नो नो लोपशधौ । संबोधने राजन्शब्दवत् । श्वा श्वानौ श्वानः । श्वानं श्वानौ शुनः । शुना श्वभ्यां श्वभिः । शुने श्वभ्यां श्वभ्यः । शुनः श्वभ्यां श्वभ्यः । शुनः शुनोः शुनाम् । शुनि शुनोः श्वसु । हेश्वन् हेश्वानौ हेश्वानः । युवा युवानौ युवानः । युवानं युवानौ । युवन् शब्दस्य शसादौ ' श्वादेर्वः ' इति उत्वे कृते सवर्णे० । मघवन्शब्दे तु उकारे कृते उओ । यूनः । यूना । मघोनः । मघोना मघवभ्यां मघवभिः । इत्यादि ज्ञेयम् । तकारान्तमघवच्छब्दस्य तु मघवान् मघवन्तौ मघवन्तः । मघवन्तं मघवन्तौ मघवतः । मघवता मघवद्भ्याम् मघवद्भिरित्यादि रूपाणि । सूत्रम् ।

अर्वणस्त्रसावनञः ॥ नञ्वर्जस्यार्वणस्तृ इत्यन्तादेशः स्यादसौ विभक्तौ परतः । अर्वा अर्वन्तौ अर्वन्तः । अर्वन्तम् अर्वन्तौ अर्वतः । अर्वता अर्वद्भ्याम् अर्वद्भिः । अर्वते अर्वद्भ्याम् अर्वद्भ्यः इत्यादि । हेअर्वन् हेअर्वन्तौ हेअर्वन्तः । नञ्वर्जस्येति किम् । नोपधायाः । अनर्वा अनर्वाणौ अनर्वाणः । अनर्वाणम् अनर्वाणौ अनर्वणः । अनर्वणा अनर्वभ्याम् अनर्वभिः । अनर्वसु इत्यादि । पथिन्शब्दस्य भेदः ।

अर्वणस्त्रसावनञः । वृत्त्या सुगमम् । पथिन्शब्दस्य भेदः । सूत्रम् ।

इतोऽत्पञ्चसु ॥ इतः अत् पञ्चसु । पञ्चसु स्यादिषु पथ्यादीनामिकारस्याकारो भवति ।

इतोऽत्यपञ्चसु । इत् ( ष० ए० ) स्वर० । स्रो० । अत् ( प्र० ए० ) हसेपः० । अतोत्युः । उओ । एदोतोतः । पञ्चन् ( स० ब० )नाम्नोनो० । सिद्धम् । स्यादिषु पञ्चसु वचनेषु परतः पथ्यादीनां पथिन्, मथिन्, ऋभुक्षिन्, शब्दानामिकारस्य अकारो भवति अनेन सि, औ, जस्, अम्, औवचनेषु इत्यस्यार्थः । सूत्रम् ।

**थो नुट् ॥ पथ्यादीनां थकारस्य नुडागमो भवति पञ्चसु परेषु । पन्थन् सि इति स्थिते ।**

थो नुट् । थ् ( ष० ए० ) स्वर० । स्रो० । नुट् ( प्र० ए० ) हसेपः० । हत्रे । उओ । पथ्यादीनां थकारस्य पञ्चसु वचनेषु नुडागमो भवति टित्त्वादादौ थस्य पूर्वं न् । 'पन् थन् सि' इति स्थिते सति सूत्रम् ।

**आ सौ ॥ पथ्यादीनां टेरात्वं भवति सौ परे । पन्थाः पन्थानौ पन्थानः । पन्थानम् पन्थानौ ।**

आ सौ । आ ( प्र० ए० ) साक्ष्ं० । सि ( स० ए० ) ङ्रौङित् । टिलोपः । स्वर० । सिद्धम् । पथ्यादीनां सौ परे आत्वं भवति । अनेन न्सहितस्य थइत्यस्य था । टेरात्वकरणादेव सेर्लोपो न किंतु स्रो० । नश्चा० । पंथाः मार्गः । सम्बोधनेप्येवमेव । अग्रे द्वितीया द्वित्वं यावत् 'नोपधायाः' इति दीर्घः स्वर० । शसादौ विशेषः । सूत्रम् ।

**पथां टेः ॥ पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । पथः । पथा पथिभ्याम् पथिभिः । पथे पथिभ्याम् पथिभ्यः । पथः पथिभ्याम् पथिभ्यः । पथः पथोः पथाम् । पथि पथोः पथिषु । हेपन्थाः हेपन्थानौ हेपन्थानः । एवं मथिन् ऋभुक्षिन् प्रभृतयः । मन्थाः मन्थानौ मन्थानः । ऋभुक्षाः ऋभुक्षाणौ ऋभुक्षाणः इत्यादि । दण्डिन्शब्दस्य भेदः ।**

पथां टेः । पथिन् ( ष० ब० )पथां टेः । स्वर० । मोनु० । टि ( ष० ए० ) ङिति ङस्य । स्रो० । पथिन्, मथिन्, ऋभुक्षिन्, शब्दानां टेर्लोपो भवति शसादौ स्वरे परे । टेः इत्यस्य लोपः । स्वर० । भूकारादौ नाम्नो० । सुपि नाम्नो नकारलोपश्च कृते । कलातपः सः । एवं मथिन्, ऋभुक्षिन् शब्दौ ज्ञेयौ । मन्थाः मन्थानौ मन्थानः । मन्था मन्थनदण्डः । ऋभुक्षा इन्द्रः । ऋभुक्षा ऋभुक्षाणौ ऋभुक्षाणः । ऋभुक्षाणं

ऋभुक्षाणौ ऋभुक्षः । ऋभुक्षा । पथां टेः । ऋभुक्षिभ्यां ऋभुक्षिभिः । ऋभुक्षे इत्यादि । दण्डिन्शब्दस्य भेदः । सूत्रम् ।

इनां शौ सौ ॥ इन् हन् पूषन् अर्यमन् इत्येषां शौ सौ चाधौ परे उपधाया दीर्घो भवति । दण्डी दण्डिनौ दण्डिनः । दण्डिनम् दण्डिनौ दण्डिनः । दण्डिना दण्डिभ्याम् दण्डिभिः । दण्डिने दण्डिभ्याम् दण्डिभ्यः । दण्डिषु इत्यादि । हेदण्डिन् हेदण्डिनौ हेदण्डिनः । ब्रह्महा ब्रह्महणौ ब्रह्महणः । ब्रह्महणम् ब्रह्महणौ । अल्लोपः स्वरे ।

इनां शौ सौ । इन् ( ष० ब० ) स्वर० । मोनु० । शि ( स० ए० ) ङेरौ ङित् । सि ( स० ए० ) ङेरौ० । सिद्धम् । इन् इन्प्रत्ययान्तइनित्युपलक्षणत्वाद्विन्प्रत्ययान्तोऽपि हन्धातुः ब्रह्म, भ्रूण, वृत्राद्युपपदपूर्वः । क्विप्प्रत्ययान्तः । पूषन् सूर्यवाची । अर्यमन् सूर्यवाची । इत्येतेषां शौ नपुंसके जश्शसोः स्थाने जाते शौ च प्रथमैकवचने धिवर्जिते परे दीर्घो भवति । नोपधाया इत्यनेन सिद्धौ सत्यामिनामिति सौ परे एव दीर्घः स्यान्न तु पंचस्विति नियमार्थमुक्तम् अनेन सौ दीर्घः । हसेपः० । नाम्नो० । स्वरादौ सर्वत्र स्वर० । रसे च नाम्नो नो० । सुपि किला० । धौ अधाविति विशेषणान्न नलोपश्दीर्घौ । हेदण्डिन् । शेषं सुकरम् । ब्रह्महन्शब्दस्य दण्डिन्शब्दवत् । ब्रह्महा ब्रह्महणौ अट्कुप्वन्तरेऽपीति णत्वम् । ब्रह्महणः । ब्रह्महणं ब्रह्महणौ । शसादौ त्वल्लोपः स्वरे इत्यलोपे कृते सूत्रम् ।

हनो घ्ने ॥ हनः घ् ने । हन्तेर्धातोर्हकारस्य घत्वं भवति अव्यवधाने नकारे परेऽव्यवधाने ञिति णिति च परे । घसंयोगो णत्वनिषेधार्थः ।

हनो घ्ने । हन् (ष० ए०) स्वर० । स्रो० । घ् (प्र० ए०) हसेपः० । हबे । उओ । न ( स० ए० ) अइए । सिद्धम् । हन्तेरिति 'हन्' इत्यस्य धातोः सम्बन्धिनो हकारस्य धत्वं भवति नकारे परे तथा ञिति णिति च परे । अनेन हस्य घः । स्वर० । हस्य घत्वे कृते घसंयोगः 'ष्रनोर्णोनन्ते' इति णत्वनिषेधार्थः । सूत्रम् ।

हन्तेरत्पूर्वस्य ॥ हन्तेरकारपूर्वस्यैव नस्य णत्वं स्यान्नान्य-

स्य । ब्रह्मघ्नः । ब्रह्मघ्ना ब्रह्महभ्याम् ब्रह्महभिः । ब्रह्मघ्ने ब्रह्महभ्याम् ब्रह्महभ्यः । ब्रह्मघ्नः ब्रह्महभ्याम् ब्रह्महभ्यः । ब्रह्मघ्नः ब्रह्मघ्नोः ब्रह्मघ्नाम् । ब्रह्मघ्नि-ब्रह्महणि ब्रह्मघ्नोः ब्रह्महसु । हेब्रह्महन् हेब्रह्महणौ हेब्रह्महणः । पूषा पूषणौ पूषणः । पूषणम् पूषणौ पूष्णः । पूष्णा पूषभ्याम् पूषभिः । पूष्णे पूषभ्याम् पूषभ्यः । पूष्णः पूषभ्याम् पूषभ्यः । पूष्णः पूष्णोः पूष्णाम् । पूष्णि-पूषणि । ङौ टिल्लोपो वेति केचित् । पूष्णोः पूषसु । हेपूषन् हेपूषणौ हेपूषणः । अर्यमा अर्यमणौ अर्यमणः । अर्यमणम् अर्यमणौ अर्यम्णः । अर्यम्णा अर्यमभ्याम् अर्यमभिः । इत्यादि । हेअर्यमन् हेअर्यमणौ हेअर्यमणः । संख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः । पञ्चन् जस् इति स्थिते ।

हन्तेरत्पूर्वस्य । हन्तेरकारपूर्वस्यैव सति णत्वनिमित्ते णत्वं न तु व्यञ्जनपूर्वस्य अनेन पर्युदासेन घकारनकारयोः संयोगे जाते सति ष्रनृवर्णेभ्यो इति नस्य णत्वाभावः । स्वर० । रसे परे नाम्नो० । ङौ तु वेङ्योः । ब्रह्मघ्नि ब्रह्महणि । धौ दंडिवत् । एवं पूषन्, अर्यमन् शब्दौ । तत्र शसादावल्लोपः स्वरे । इत्यल्लोपे कृते ष्रनृवर्णेभ्योऽनन्ते । स्वर० । हसादौ नाम्नो लोपश्० । शेषं कण्ठ्यम् । पूषा पूषणौ पूषणः । पूषणं पूषणौ पूष्णः । पूष्णा पूषभ्यां पूषभिरित्यादि । ङौ तु वेङ्योः । पूष्णि पूषणि । एवम्, अर्यमा अर्यमणौ अर्यमणः । अर्यमणं अर्यमणौ अर्यम्णः । अर्यम्णा अर्यमभ्यां अर्यमभिः । अर्यम्णि अर्यमणि अर्यमसु इत्यादि । संख्यावाचकाः शब्दाः पञ्चन्प्रभृतयो बहुवचनान्ताः त्रिषु लिङ्गेषु सदृशरूपाः । जसि शसि च सूत्रम् ।

जश्शसोर्लुक् ॥ षकारनकारान्तसंख्यायाः परयोर्जश्शसोर्लुग्भवति ।

जश्शसोर्लुक् । जस् च शस् च जश्शसौ तयोर्जश्शसोः (प० द्वि०) स्वर० । स्रो० । लुक् ( प्र० ए० ) हसेपः० । नामिनो रः । वृत्तिः कण्ठ्या । अनेन जस्, शस् इत्येतयोर्लुक् । प्रत्ययलोपे प्रत्ययलक्षणं भवतीति न्यायात् नोपधाया इति दीर्घत्वप्राप्तौ निषेधहेतुमाह ।

लुकि न तन्निमित्तम् ॥ लुकि सति तन्निमित्तं कार्यं न स्यात् । तेन नोपधाया इत्यनेन दीर्घत्वं न । पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः ।

लुकि न तन्निमित्तमिति । लुकि कृते सति तन्निमित्तं कार्यं न भवति । स एव निमित्तं कारणं यस्य तत्तन्निमित्तं । यथा जसि नोपधाया इति सूत्रेण दीर्घत्वप्राप्तावपि न दीर्घता । तर्हि दीर्घं विधाय लुक् कार्यः इत्यत्रोच्यते । 'कृताकृतप्रसङ्गी यो विधिः स नित्यः' इति भावरूपं कार्यं न भवति अभावरूपं भवत्येव । तेन 'नाम्नो नोलोपशधौ' इति भवत्येव (तृ. ब. । च. ब. । पं. ब.) नाम्नो नो० । आमि । सूत्रम् ।

ष्णः ॥ षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति । नोपधायाः । नाम्नो नो लोपशधौ । पञ्चानाम् पञ्चसु । एवं सप्तन्नवन्दशन्प्रभृतयः । अष्टन्शब्दस्य भेदः ।

ष्णः । ष् च न् च ष्ण् तस्मात् ष्णः (पं० ए०) स्वर० । षकारनकारान्तसंख्यायाः संख्यावाचकशब्दात् परो य आम् तस्य नुडागमो भवति । अनेन नोपधाया इति दीर्घः । नाम्नो० सुपिनाम्नो० । एवं सप्तन्, नवन्, दशन्, एकादशन्, प्रभृतयोऽपि साध्याः । अष्टन्शब्दस्य भेदः । सूत्रम् ।

अष्टनो डौ वा ॥ अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति । डित्वाट्टिलोपः । अष्टौ अष्टौ अष्ट अष्ट ।

अष्टनो डौ वा । अष्टन् (पं० ए०) स्वर० । स्रो० । डौ औ डित्वाट्टिलोपः । स्वर० । अन्यत्र जश्शसोर्लुक् नाम्नो० । तृतीयादिबहुत्वेऽपि रूपद्वयम् । सूत्रम् ।

वासु ॥ वा आ आसु । अष्टन्शब्दस्य आसु परासु विभक्तिषु वा टेरात्वं भवति । अष्टभिः-अष्टाभिः । अष्टभ्यः-अष्टाभ्यः । अष्टभ्यः-अष्टाभ्यः । अष्टानाम । अष्टसु-अष्टासु । गौणत्वेऽपि आत्वं जश्शसोर्डौत्वं नेत्येके । प्रियाष्टा-प्रियाष्टाः प्रियाष्टानौ-प्रियाष्टौ प्रियाष्टानः-प्रियाष्टाः । प्रिया-

ष्टानं-प्रियाष्टाम् । प्रियाष्टानौ-प्रियाष्टौ प्रियाष्ट्नः-प्रियाष्टान् प्रियाष्टाः । प्रियाष्ट्ना-प्रियाष्टा प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभिः-प्रियाष्टभिः । प्रियाष्ट्ने प्रियाष्टे प्रियाष्टाभ्या-प्रियाष्टभ्याम् प्रियाष्टाभ्यः-प्रियाष्टभ्यः । प्रियाष्ट्नः प्रिया-ष्टाः प्रियाष्टाभ्यां-प्रियाष्टभ्याम् प्रियाष्टाभ्यःप्रियाष्टभ्यः । प्रियाष्ट्नः-प्रियाष्टाः प्रियाष्ट्नोः प्रियाष्टोः प्रियाष्टां-प्रियाष्ट्नाम् । प्रियाष्ट्नि-प्रियाष्टनि-प्रियाष्टे प्रियाष्ट्नोः-प्रियाष्टोः प्रियाष्टा-सु-प्रियाष्टसु । हेप्रियाष्टन्-हेप्रियाष्टाः हेप्रियाष्टानौ-हेप्रिया-ष्टौ हेप्रियाष्टानः--हेप्रियाष्टाः ।

जसि द्वावेव रूपाणि शसि त्रीण्येव वै पुनः ॥
ङावपि त्रीणि रूपाणि शेषे द्वे द्वे प्रियाष्टनः ॥

मकारान्त इदंशब्दः ।

वासु । वा ( प्र० ए० ) अव्य० । आ [ प्र० ए० ] साङ्के० इदम् (स० ब०) त्य-दादेष्टेरः स्यादौ । स्भ्यः । आवतः स्त्रियाम् । सवर्णे० । आसु । सिद्धम् । अष्टनूइति अष्टनूशब्दस्य आसु तृतीयादिषु विभक्तिषु परासु सतीषु वा आत्वम् आकारो भव-ति । अनेन ( तृ. ब. । च. ब. । पं. ब. ) वा आकारः । अन्यत्र नाम्नो० । आमि एकत्र आकारः । उभयत्रापि ष्णः इति नुट् । द्वितीयरूपे नोपधाया इति दीर्घः । नाम्नो० । पक्षद्वयेऽपि सदृशं रूपं सुपि एकत्र आकारे कृते अन्यत्र नाम्नो० । मकारान्तानाह मकारान्त इदम् शब्दः । सौ ( प्र० ए० ) सूत्रम् ।

इदमोऽयं पुंसि ॥ इदमः अयम् पुंसि । इदंशब्दस्य पुं-सि विषये अयमादेशो भवति सिसहितस्य । अयम् । द्विवचनादौ त्यादेष्टेरिति सर्वनाकारः । इद औ इति स्थिते ।

इदमोयं पुंसि । इदम् ( प० ए० ) स्वर० । सौ० । अयम् ( प्र० ए० ) हसेपः० । मोनु० । अतोत्पुः । उओ । एदोतोतः । पुंस् ( स० ए० ) स्वर० । सिद्धम् । इदम्शब्दस्य पुंसि पुल्लिङ्ग एव सौ प्रथमैकवचने परे 'अयम्' इत्या-

देशो भवति । गुरुत्वात्सर्वस्य । अनेन सौ परे अयम् । मान्तकरणसामर्थ्यादेव त्यदादेष्टेरः स्यादाविति न भवति अन्यथा अय इत्येव अवक्ष्यत् । हसेपः० । मोनु० । केचित्तु सिसंहितस्यैव अयम् इत्यादेशमिच्छन्ति द्विवचनादौ तु त्यदादेष्टेरित्यकारे कृते सूत्रम् ।

दस्य मः ॥ दस्य मः । त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । ओऔऔ । इमौ । सर्वादित्वाज्जसी । इमे । इमम् इमौ इमान् ।

दस्य मः । द ( ष० ए० ) कस्य । म ( प्र० ए० ) स्रो० । त्यदादीनां दकारस्य असंयुक्तस्य स्यादौ सर्वविभक्तौ परे मत्वं भवति । अनेन सर्वविभक्तिषु मकारः । ( प्र० द्वि० ) ओऔऔ । ( प्र० बि० ) जसी । अ इ ए । ( द्वि० ए० ) अम्शसोरस्य । मोनु० । ( द्वि० द्वि० ) ओऔऔ । ( द्वि० ब० ) अम्शसोः । सो नः पुं० । शसीति दीर्घः । ( तृ० ए० ) सूत्रम् ।

अन टौसोः ॥ इदमोऽनादेशो भवति टौसोः परयोः कृत्स्नस्य । टेन । अनेन ।

अन टौसोः । अन ( प्र० ए० ) साङ्के० । टा च ओस् च टौसो तयोः ( स० द्वि० ) स्वर० । स्रो० । इदंशब्दस्य टातृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने परे ' अन ' इत्यादेशो भवति । अनेन टावचने परे 'अन' आदेशः । टेन । अइए । अग्रे द्विवचने सूत्रम् ।

स्भ्यः ॥ इदमः सकारे भकारे च परे अकारादेशो भवति कृत्स्नस्य । त्यदादित्वादत्वसिद्धौ पुनरत्वविधानं सर्वादेशार्थम् । तदाह कृत्स्नस्येति । अङ्गीत्यात्वम् । आभ्याम् ।

स्भ्यः । स् च भ् च स्भ् तस्मिन् स्भि ( स० ए० ) स्वर० । अः ( प्र० ए० ) स्रो० । पश्चात् इयं स्वरे० । स्वर० । इदंशब्दस्य सकारे भकारे च परेऽकारो भवति कृत्स्नस्य समग्रस्येत्यर्थः । अनेन तृतीयाचतुर्थीपंचमीद्वित्वे इदमोऽकारः । अङ्गीत्यात्वम् । ( तृ० ब० । च० ब० । पं० ब० ) स्भ्यः इति अकारः । ततो भिसि सूत्रम् ।

---

१ अकारान्तस्य.

भिसूभिस् ॥ इदमदसोर्भिस् भिसेव भवति। तेन भकारस्य अत्वं न। एस्मि बहुत्वे। एभिः। इदम् ङे इति स्थिते। त्यदादेष्टेरः स्यादौ। सर्वादेः स्मट्। स्म्यः अस्मै आभ्याम् एभ्यः। ङसिरत्। अतः। अस्मात् आभ्याम् एभ्यः। ङस्स्य। अस्य। अन टौसोः। ओसि एअय्। अनयोः। सुडामः। स्म्यः। एस्मि बहुत्वे। क्लिात०। एषाम्। ङिस्मिन्। अस्मिन् अनयोः एषु। त्यदादीनां संबोधनाभावः।

भिस्भिस्। भिस् (प्र० ए०) इसेपः०। भिस् (प्र० ए०) इदमदस्शब्दसम्बन्धी यो भिस् स भिस् एव भवति। अत्र भिसो भिस् करणं स्म्य इति सूत्रेण अकारनिषेधार्थम्। एतदेवाह न भकारस्याकार इति। एस्मि बहुत्वे। परं कप्रत्ययसहितयोर्नेति न इमकैः अमुकैः। एवं चतुर्थीपंचमीबहुत्वेऽपि (च० ए०) सर्वादेः स्मट्। स्म्यः। एएऐ। (पं० ए०) ङसिरत्। अतः। स्म्यः। सवर्णे०। (ष० ए०) ङस्य। स्म्यः (ष० द्वि०) (स० द्वि०) अनटौसोः। ओसि। एअय्। स्वर०। आमि। सुडामः। स्म्यः। एस्मि बहुत्वे। क्लिा०। स्वर०। (स० ए०) ङिस्मिन्। स्म्यः। एस्मि०। क्लिा०।

इदमोऽप्यन्वादेशे द्वितीयाटौःस्स्वेनादेशो वक्तव्यः॥ उक्तस्य पुनर्भाषणमन्वादेशः। एनं एनौ एनान्। एनेन। एनयोः एनयोः। किंशब्दस्य भेदः। किंशब्दस्य त्यादेष्टेरः स्यादाविति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम्। कः कौ के। कम् कौ कान्। केन काभ्याम् कैः। कस्मै काभ्याम् केभ्यः। इत्यादि। प्रशाम्शब्दस्य भेदः।

इदमोऽप्यन्वादेश इत्यादि सुगमम्। त्यदादित्वात्संबोधनाभावः। इदमस्तु संनिकृष्टं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥१॥ किंशब्दस्य त्यदादेष्टेरित्यादिना अकारे कृते सर्वशब्दवत्प्रक्रिया। त्यदादित्वाद्धेरभावात्सम्बोधनाभावः। मान्तस्य प्रशाम्शब्दस्य विशेषमाह सूत्रम्।

मो नो धातोः॥ धातोर्मकारस्य नकारादेशो भवति रसे प-

दान्ते च । प्रशान् प्रशामौ प्रशामः । हेप्रशान् हेप्रशामौ हेप्रशामः । प्रशामम् प्रशामौ प्रशामः । प्रशामा प्रशान्भ्याम् प्रशान्भिः । इत्यादि । धकारान्तस्तत्त्वबुध्शब्दः । तस्य रसे पदान्ते च । आदिजबानां झभान्तस्य झभास्ध्वोः । वावसाने । तत्त्वभुत्-तत्त्वभुद् हेतत्त्वबुधौ तत्त्वबुधः । तत्त्वबुधम् तत्त्वबुधौ तत्त्वबुधः । तत्त्वबुधा तत्त्वभुद्भ्याम् तत्त्वभुद्भिः । इत्यादि । हेतत्त्वभुत्-हेतत्त्वभुद् हेतत्त्वबुधौ हेतत्त्वबुधः । जकारान्तः सम्राज्शब्दः ।

मो नो धातोः॥ सुगमम् । इत्यादयो मान्ताः शब्दा ज्ञेयाः । झढघभान्ता अप्रसिद्धाः । धकारान्तमाह । धकारान्तस्तत्त्वबुध्शब्दस्तस्य रसे पदान्ते च 'आदिजबानां झभान्तस्य झभास्ध्वोः' इति बकारस्य भकारः । सौ धौ च सिलोपे कृते वावसाने इति धकारस्य दकारतकारौ । स्वरादौ स्वर० । भकारादौ झभेजबाः स्वर० । सुपि खसे चपा झसानां धस्य तः॥ स्वर० । तत्त्वभुत् तत्त्वभुद् तत्त्वभुद्भ्यां तत्त्वभुत्सु । एवं मर्मविध् । अथ जान्ताः । तत्र जकारान्तः सम्राज्शब्दः । तस्य स्वरादौ स्वर० । रसे पदान्ते च विशेषः सूत्रम् ।

छशषराजादेः षः॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य राज्यज्सृज्मृज्भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । षस्य षत्वं डत्वनिषेधार्थम् । तेन आख्याते द्वेष्टीत्यादौ न भवति ।

छशषराजादेः षः । छश्च शश्च षश्च राजादिश्च छशषराजादिस्तस्य (ष०ए०) ङित ङस्य । सो० । षः (प्र० ए०) सो० । सिद्धम् । छकारान्तस्य तत्त्वप्राच्छादेः शकारान्तस्य विशादेः षकारान्तस्य द्विष् षष्इत्यादेः तथा राज्,यज्,मृज्, भ्राजादेश्च षकारो भवति । षष्ठीनिर्दिष्टस्येत्यन्त्यस्य धातोर्झसे परे नाम्नश्च रसे.पदान्ते च उभयोः आदिशब्दात् व्रश्च्, भ्रस्ज् , परिव्राजानां ग्रहणम् । षकारस्य षत्वकरणं डत्वनिषेधार्थं षस्य षत्वे कृते षोढ इति ढकारो न भवति । यत्तु षस्य षत्वं डत्व निषेधार्थं तदपि द्वेष्टीत्यादावेव न तु सर्वत्र यथा द्विष्धातो स्त्यादौ द्वेष्टीत्यादि कृ-

पम् । यद्वा छशषेति षग्रहणं व्यर्थमिति केचित् प्रयोगदर्शनाभावात् । यत्तु षस्य षत्वं डत्वनिषेधार्थं तदपि व्यर्थम् । द्विट् द्विड् द्विषौ द्विषः ।' अद्वेट् ' इत्यादौ षस्य षत्वेऽपि डत्वस्य दर्शनात् । तथा द्वेष्टीत्यादावपि षस्य षत्वं न किं तु केवलं ष्टुभिः ष्टुः । अनेन रसे पदान्ते च जस्य षः । ततः सूत्रम् ।

षोडः ॥ षः डः । षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च। वावसाने ।

षोडः । ष् ( ष० ए० ) स्वर० । ड ( प्र० ए०) सो० । सिद्धम् । षकारस्य डकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । केचित्तु वावसाने इत्यनेनैव षकारस्य 'ऋटुरषा मूर्धन्या' इति स्थानसवर्णौ मूर्द्धन्यौ टकारडकारौ स्याता-मिति तथा भ्यां, भिस् इत्यादौ च झबे जबा अनेन डत्वं स्यादतः षोड इति सूत्रं व्यर्थमिति पठन्ति तच्चिन्त्यम् । अनेन सौ धौ च हसे पः० इति सिलोपे कृते ष-स्य डः । वावसाने डस्य वा टः ।

मोराजि समः क्वौ ॥ क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । तेनानुस्वाराभावः । सम्राट्–सम्राड् सम्राजौ स-म्राजः । सम्राजम् सम्राजौ सम्राजः । सम्राजा सम्राड्भ्याम् सम्राड्भिः । इत्यादि । सम्राट्सु । हेसम्राड्–हेसम्राट् हेस-म्राजौ हेसम्राजः । एवं विराजादयः ।

म इत्यादि । समो मस्य क्विबन्ते राजतौ परे अनुस्वाराभावः । सम्राट् सम्राड् भकारादौ षस्य डत्वे कृते स्वर० । सम्राड्भ्याम् । सुपि डत्वे कृते । खसे चपा झसानाम् । स्वर० । सम्राट्सु । क्वचित् हसादौ विभक्तौ पदान्तेऽपि पदान्तता-श्रयणीयेति टोरन्त्यादिति ष्टुत्वाभावः । शेषं कण्ठ्यम् । एवं विराजादयः । विराट् विराड् विराजौ विराजः । राट् राड् राजौ राजः । देवान् यजतीति देवेट् देवेड् दे-वेजौ देवेजः । विश्वसृट् विश्वसृड् विश्वसृजौ विश्वसृजः । परिमृट् परिमृजौ परिमृजः विभ्राट् विभ्राड् विभ्राजौ विभ्राजः । एवं परिव्राट् परिव्राड् परिव्राजौ परिव्राजः । तरुवृट् तरुवृड् तरुवृश्चौ तरुवृश्चः यवभृट् यवभृड् यवभृज्जौ यवभृज्जः । अन्येऽपि भूभुक्, वलिभुक् हुतभुक्, वणिक्, भिषक्, अश्वयुज्, प्रभृतयो जान्तास्तत्र चोः कुः । एवं ऋत्विज् दिशामिति कुत्वम् । ऋतुषु ऋतुं वा यजतीति ऋत्विक् । ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः । युज् शब्दस्य विशेषमाह सूत्रम् ।

युजेरसमासे ॥ युजेः सुटि नुम् स्यादसमासे।

युजेरसमासे। स्पष्टम्। अनेन नुमागमः।

क्विन्प्रत्ययस्य कुः ॥ क्विन्नन्तस्य धातोः कवर्गान्तादेशः स्यादसमासे झलि पदान्ते च। प्रत्ययशब्देन प्रत्ययान्तस्य ग्रहणम्। युङ्। अनुस्वारपरसवर्णौ। युञ्जौ युञ्जः। युञ्जम् युञ्जौ युजः। युजा युग्भ्याम् युग्भिः। युजे युग्भ्याम् युग्भ्यः। चोः कुः। खसे चपा०। किलात्०। कषसंयोगे क्षः। युक्षु। हेयुङ् हेयुञ्जौ हेयुञ्जः इत्यादि। असमासे किम्। अश्वयुक्-अश्वयुग् अश्वयुजौ अश्वयुजः। अश्वयुजम् अश्वयुजौ अश्वयुजः। अश्वयुजा अश्वयुग्भ्याम् अश्वयुग्भिः इत्यादि। समाध्यर्थस्य युजेर्न नुम्। युक् समाधिमानित्यर्थः। दकारान्तो द्विपाद्शब्दः। द्विपाद् द्विपात् द्विपादौ द्विपादः। द्विपादम् द्विपादौ।

क्विन्प्रत्ययस्य कुः ॥ अनेन कुत्वं युङ् युञ्जौ युञ्जः। इत्यादि। डान्ता अमतीताः। दकारान्तानाह। सुपाच्छब्दस्य शसादौ विशेषमाह सूत्रम्।

पादः पत् ॥ पाच्छब्दस्य पदादेशः स्याच्छसादौ स्वरे परे तद्धिते ईपि ईकारे च। द्विपदः। द्विपदा द्विपाद्भ्याम् द्विपाद्भिः। द्विपदे द्विपाद्भ्याम् द्विपाद्भ्यः। हेद्विपात्-हेद्विपाद् हेद्विपादौ हेद्विपादः। दकारान्तास्त्यद्तद्यद्एतद् शब्दाः। त्यद् सि इति स्थिते।

पादः पत्। सुगमम्। दकारान्तास्त्यदादयस्तेषां त्यदादेष्टेरः स्यादावित्यकारे कृते सर्वत्र सर्वशब्दवत्। सौ तु विशेषः सूत्रम्।

स्तः ॥ स् तः। त्यदादेस्तकारस्य सत्वं भवति सौ परे। स्यः त्यौ त्ये। त्यम् त्यौ त्यान्। त्येन त्याभ्याम् त्यैः।

त्यस्मै त्याभ्याम् त्येभ्यः । त्यस्मात् त्याभ्याम् त्येभ्यः । त्यस्य त्ययोः त्येषाम् । त्यस्मिन् त्ययोः त्येषु । सः तौ ते । तम् तौ तान् । तेन ताभ्याम् तैः । तस्मै । इत्यादि । यः यौ ये । यम् यौ यान् । येन याभ्याम् यैः । यस्मै । इत्यादि । एषः एतौ एते ।

स्तः । स् ( प्र० ए० ) हसेपः । द् ( ष० ए० ) स्वर० । स्रो० । त्यदादेस्तकारस्येति वृत्तिः सुगमा । अनेन सौ तस्य सः शेषं सर्ववत् नवरम् घेरभावः । एवं त्यद्, तद् यद् शब्दाः । एतद् शब्दस्य सर्वत्र टेरत्वे कृते सौ च स्त इति तस्य सत्वे च कृते किला० । स्रो० । एषः एतौ एते । द्वितीयायां टौसोश्च विशेषः ।

एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः ॥ उक्तस्य पुनर्भाषणमन्वादेशः। एतम्-एनम् एतौ-एनौ एतान्-एनान् । एतेन-एनेन एताभ्याम् एतैः । एतस्मै एताभ्याम् एतेभ्यः। एतस्मात् एताभ्याम् एतेभ्यः । एतस्य एतयोः-एनयोः एतेषाम् । एतस्मिन् एतयोः-एनयोः एतेषु । एतेन व्याकरणमधीतमेनं छन्दोऽध्यापय । छकारान्तस्तत्त्वप्राछ्शब्दः। छशषराजादेः षः।वावसाने । तत्त्वप्राट्-तत्त्वप्राड् तत्त्वप्राच्छौ तत्त्वप्राच्छः । तत्त्वप्राच्छम् तत्त्वप्राच्छौ । तत्त्वप्राच्छः । तत्त्वप्राच्छा । छशषराजादेः षः । षोडः । तत्त्वप्राड्भ्याम् तत्त्वप्राड्भिः । तत्त्वप्राच्छे तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राच्छः तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राच्छः तत्त्वप्राच्छोः तत्त्वप्राच्छाम्। तत्त्वप्राच्छि तत्त्वप्राच्छोः तत्त्वप्राट्सु थकारान्तोऽग्निमथ्शब्दः । वावसाने । अग्निमत्-अग्निमद् अग्निमथौ अग्निमथः । अग्निमथम् अग्निमथौ अग्निमथः। अग्निमथा

अग्निमद्भ्याम् अग्निमद्भिः इत्यादि । हेअग्निमत्-हेअग्निमद्
हेअग्निमथौ हेअग्निमथः । चकारान्तः प्रत्यच्शब्दः ।

एतदोऽन्वादेश इति । एकस्य शब्दस्य उक्तस्य पुनः कथनमन्वादेश उच्यते ॥

यद्वा एषः राजा याति एनं पश्य । एतं व्याकरणं पाठय अथ एनं वेदमध्यापय इत्यन्वादेशः । तस्मिंश्च वक्ष्यमाणे द्वितीयाटौस्सु द्वितीयायां वचनत्रयेऽपि टा- इति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने वा विकल्पेन एनादेशस्तकारस्य वा नकार इत्यर्थः । अनेनोक्तवचनेषु वा एनादेशः । एतं एनं एतौ एनौ एतान् एनान् । एतेन एनेन । एतयोः एनयोः । शेषं सुकरम् । इति दान्ताः । अन्येऽपि बलभिद्, दिविषद्, सर्वविद्, वेदविद्, सुहृद्, मभृतयः गबलफान्ता अमतीताः । छकारान्तस्तत्त्वप्राच्छ्शब्दः। व्याकरणान्तरे तु छ्वोःशूडनुनासिकेति छस्य शत्वं विधाय शकारान्तस्तत्त्वप्राश्शब्दः । इत्युक्तमस्ति। तस्य रसे पदान्ते च संयोगान्तस्य लोपः इत्येकस्य छकारस्य लोपं विधाय ततः छशषराजादेः षः इति षत्वे षोडः वावसाने सम्राज्वत् । शेषं सुकरम् । छान्तोयं । ठान्ता अप्रसिद्धाः । थकारान्तोऽग्निमथ् शब्दस्तस्य सौ धौ च सिलोपे कृते वावसाने इति वर्ग्यो वर्ग्येण सवर्ण इति वचनात् थकारस्य वा तकारदकारौ । भकारादौ तु झबे जबाः । थस्य दः । स्वर० । सुपि खसे चपा झसानाम् । थस्य तः । स्वर० । एवं थान्ताः। चकारान्तः प्रत्यच्शब्दः। अञ्चू गतिपूजनयोः। अञ्चू प्रतिपूर्वः क्विप्प्रत्ययः प्रतिपूर्वस्य अपूजार्थस्याञ्चतेर्नलोपो वक्तव्यः । यद्वा नोलोपः। इयं स्वरे । स्वर० । क्विपः सर्वापहारी० । 'प्रत्यच्' इति सिद्धम् । तस्य पञ्चसु विशेषः ।

अञ्चेः पञ्चसु नुमागमो वक्तव्यः ॥

अञ्चेः पञ्चसु इति। अञ्चू गतिपूजनयोरित्यस्य धातोः पुल्लिङ्गे स्यादिषु पञ्चसु वचनेषु नुम् नुमागमो वक्तव्यः। मिदन्त्यात्स्वरात्परो वक्तव्यः । उकार उच्चारणार्थः । पञ्चसु वचनेषु अग्रे न् सौ धौ च । 'प्रत्यन्+च्+स्' इति स्थिते । स्तोः श्चुभिः श्चुरिति नस्य ञः । हसेपः० इति सेर्लोपः। संयोगान्तस्येति च्लोपः । सूत्रम् ।

चोः कुः ॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । स्तोः श्चुभिः श्चुः । संयोगान्तस्य लोपः । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ ।

चोः कुः । चु ( ष० ए० ) ङितिङस्येत्यकारलोपः । स्रो० । कु ( प्र० ए० ) स्रो० । सिद्धम् । चवर्गस्येति वृत्तिर्गम्या न रम् यथासंख्येनेति यथाक्रमेण चस्य कः छस्य खः जस्य गः झस्य घः ञस्य ङ इत्यर्थः । अनेन ञस्य ङः प्रत्यङ् । केचित्त्वत्र ' स्तोः श्चुभि श्चुः इति नाद्रियन्ते । यतः संयोगान्तस्येति च-लोपे कृते ' निमित्ताभावे नैमित्तिकस्याप्यभावः ' इति पुनर्यकारस्य नकार एव ततश्चोः कुरित्यपि न भवति किं तु प्रत्यन् इति सिद्ध्यति । द्विवचनादौ नुमागमे कृते नश्चा० । स्वर० प्रत्यंचौ प्रत्यंचः । यद्वा प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ । शसादिस्वरादौ तु विशेषः सूत्रम् ।

अञ्चेरल्लोपो दीर्घश्च ॥ अञ्चेरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते ईपि ईकारे च । प्रतीचः । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचा प्रत्यग्भ्याम् प्रत्यग्भिः । प्रतीचे प्रत्यग्भ्याम् प्रत्यग्भ्यः । प्रत्यक्षु । हेप्रत्यङ् हेप्रत्यञ्चौ हेप्रत्यञ्चः ।

अञ्चेरल्लोपो दीर्घश्च । अञ्चि ( ष० ए० ) ङिति ङस्येत्यलोपः । स्रो० । अस्य अकारस्य लोपः अलोपः ( प्र० ए० ) स्रो० । नामिनोरः । दीर्घः ( प्र० ए० ) स्रो० । च ( प्र० ए० ) अव्य० । विसर्ज० । स्रो० । श्चु० । अञ्चतेर्धातोः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि प्रत्यये च ' ईपौ ' इति सूत्रेण कृते ईकारे च परे अकारस्य लोपो भवति पूर्वस्य च दीर्घो भवति तद्धिते प्रतीचीनः प्रतीच्यः । ईपि प्रतीची ईकारे प्रत्यक् प्रतीची प्रत्यञ्चि अत्र तु शसादौ स्वरे अनेन प्रति+अच् इति विश्लेषे कृते अकारलोपः । तीइत्यस्य दीर्घता भकारादौ चोःकुरिति ककारे कृते झबेजबाः । कस्य गः । स्वर० । सुपि चोः कुः किला० । कषसंयोगे क्षः । शेषं कण्ठ्यम् । पूजार्थस्य तु अञ्चतेर्विशेषमाह सूत्रम् ।

नाञ्चेः पूजायाम् ॥ पूजार्थस्याञ्चतेरुपधाभूतस्य नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । क्विन्प्रत्ययस्य कुः । संयोगान्तस्य लोपः । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ नलोपाभावादकारस्यालोपः । प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः । इत्यादि ।

नाञ्चेः पूजायाम् । अलुप्तनकारत्वात् पञ्चसु न नुम्। तेन प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चा प्रत्यङ्भ्यां प्रत्यङ्भिः । प्रत्यञ्चे सप्तमीबहुवचने विशेषमाह सूत्रम् ।

ङ्णोः कुक्टुक्शरि वा ॥ ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि परे । प्रत्यक्षु-प्रत्यङ्षु । तिर्यच्शब्दस्य भेदः । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । तिर्यञ्चम् तिर्यञ्चौ ।

ङ्णोः कुक् टुक् शरि । अनेन वा कुगागमः । प्रत्यक्षु-प्रत्यङ्षु । इत्यादि ।

एवं प्राङ् प्राञ्चौ प्राञ्चः । प्राञ्चं प्राञ्चौ प्राञ्चः । प्राञ्चा प्राङ्भ्यां प्राङ्भिः । गत्यर्थस्य तु शसादौ प्राचः । प्राचा । तिर्यच् उदच् शब्दयोः पञ्चसु प्रत्यच्शब्दवत् । शसादौ तु विशेषः सूत्रम् ।

तिरश्चादयः । तिरश्चादयः शब्दा निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्चः । तिरश्चा तिर्यग्भ्याम् तिर्यग्भिः । तिर्यक्षु । हेतिर्यङ् हेतिर्यञ्चौ हेतिर्यञ्चः ।

तिरश्चादयः । तिरश्च् आदिर्येषां ते तिरश्चादि ( प्र० ब० ) एओजसि । ए अय् । स्वर० । स्रो० । तिरश्चादय इति । तिर्यच्, उदच्, सध्यच्, सम्यच्, शब्दानां यथाक्रमं तिरश्च्, उदीच्, सध्रीच्, समीच्, इत्यादेशा निपात्यन्ते शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । तद्धिते यथा तिरश्चीनः । ईपि तिरश्ची । ईकारे तिर्यक् तिरश्ची तिर्यञ्चि । अत्र अनेन शसादौ स्वरे परे तिर्यच् शब्दस्य तिरश्च् उदच्शब्दस्य उदीच् । स्वर० । भकारादौ । चोः कुः । झबेजबाः । सुपि च । चोः कुः । क्विलात्षःस० इति प्रत्यग्वत् । सर्वनाम्नो विष्वग्देवशब्देभ्यश्च परस्याञ्चतेर्विशेषमाह सूत्रम् ।

विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ॥ अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्तेऽञ्चतौ परे । अमुं अञ्चतीति विग्रहे । अदसष्टेरद्र्यादेशः ।

विष्वगित्यादि । अदस् अञ्च् इति स्थिते अनेन अद्र्यादेशे च । सूत्रम्

अदसोऽसेर्दादु दो मः ॥ अदसोऽसान्तस्य दात्परस्य उदूतौ

स्तो दस्य च मः स्यात् । अदमुयङ् अमुद्र्यङ् अमुमुयङ् अदद्र्यङ् ।

परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः ॥
उभयोः केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः ॥

विष्वद्र्यङ् देवद्र्यङ् । उदङ् उदञ्चौ उदञ्चः । उदञ्चम् उदञ्चौ ॥

अदसो सेरित्यादि । उदङ्शब्दस्य शसादौ विशेषमाह । सूत्रम् ।

उद ईत् । उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेकारादेशो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च। उदीचः। उदीचा उदग्भ्याम् उदग्भिः । उदक्षु । हेउदङ् हेउदञ्चौ हेउदञ्चः । एवं सम्यच्शब्दः । सम्यङ् सम्यञ्चौ सम्यञ्चः । सम्यञ्चम् सम्यञ्चौ समीचः । समीचा इत्यादि तकारान्तो मरुच्छब्दः । वावसाने मरुत्-मरुद् मरुतौ मरुतः । मरुतम् मरुतौ मरुतः । मरुता मरुद्भ्याम् मरुद्भिः । इत्यादि । हेमरुत्-हेमरुद् हेमरुतौ हेमरुतः । एवं अग्निचित्प्रभृतयः अग्निचित्-अग्निचिद् अग्निचितौ अग्निचितः । हे अग्निचित्-हेअग्निचिद् हे अग्निचितौ हे अग्निचितः । तकारान्त उकारानुबन्धो महच्छब्दः ।

उदईत् । उदः ( पं० ए० ) ईत् ( प्र० ए० ) वृत्तिः कण्ठ्या । इत्यादयश्चान्ताः । टकारान्ता अप्रसिद्धाः । तकारान्तो मरुच्छब्दस्तस्य सौ धौ च सिलोपे कृते वावसाने तकारस्य वा दकारः । भकारादौ झभे जबाः । तस्य दः । स्वर० । स्वरादौ सुपि च । स्वर० । एवम् अग्निचित्प्रभृतयोऽपि साध्याः । अग्निं चिनोति इन्धनैर्वर्द्धयतीति अग्निचित् । तकारान्त उकारानुबन्धो महच्छब्दस्तस्य पञ्चसु विशेषः । मह् पूजायाम् । द्रुहि, वृहि, महि, धृषिभ्यः कतृ । एभ्यः कित् अतृप्र-

१ अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ॥ केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते ॥१॥ इति

स्ययो भवति । ऋकार इत् । उकारानुबन्धत्वं तु चिन्त्यम् । मह्यते इति महत् 'कार्यार्थमुच्चरितस्य वर्णस्यानुबन्ध' इति संज्ञा । यद्वा उच्चरितप्रध्वंसिनो ह्यनुबन्धाः । सूत्रम् ।

**न्रितो नुम् ॥** उश्च ऋश्च वृ । वृ इत् यस्य स न्रित् तस्य न्रितः नुम् । उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु ।

**न्रितो नुम्** । न्रित्, उश्च ऋश्च वृ, वृ इत् यस्य स न्रित् ( ष० ए० ) स्वर० । स्रो० । नुम् ( प्र. ए. ) हसेपः० । हबे । उओ । सिद्धम् । उकारानुबन्धस्य वतुमत्पयादेः ऋकारानुबन्धस्य च शतृप्रत्ययादेः नुमागमो भवति पुंसि पुल्लिङ्गे पञ्चसु वचनेषु परेषु । शौ चेति नपुंसके जश्शसोः स्थाने जाते शौ परे । अनेन पञ्चसु स्यादिषु तकारात् पूर्वं न सूत्रम् ।

**न्सम्महतोऽधौ दीर्घः शौ च ॥** न् च स् च अप् च महच्च एतेषां समाहारः न्सम्महत् । तस्य न्सम्महतः अधौ दीर्घः शौ चेत्यव्ययम् । न्सन्तस्याप्शब्दस्य महच्छब्दस्य च दीर्घो भवति पञ्चसु परेषु धिवर्जितेषु शौ च परे । संयोगान्तस्य लोपः । महान् । नश्चापादान्ते झसे । महान्तौ महान्तः । महान्तम् महान्तौ महतः । महता महद्भ्याम् महद्भिः । महते महद्भ्याम् महद्भ्यः इत्यादि । हेमहन् हेमहान्तौ हेमहान्तः । न्सन्तस्येत्यागमजनकारयुक्तसान्तस्य ज्ञेयम् । तेन कंसशब्दस्य क्विबन्तस्य न दीर्घः । संयोगान्तस्य लोपः कन् कंसौ कंसः । कंसम् कंसौ कंसः । कंसा कन्भ्याम् कन्भिः । कन्सु । हेकन् । शोभना आपो यस्मिन्नसौ स्वाप्-स्वाब् स्वापौ स्वापः । स्वांपि तडागानि । उकारानुबन्धो भवच्छब्दः ।

**न्सम्महतो धौ दीर्घः शौ च** । न् च स् च अप् च महच्च न् सम् महत् तस्य

( ष० ए० ) स्वर० । स्रो० । न्सप् + महत् । असे असा वा । पस्य मः । स्वर० । न धिः अधिस्तस्मिन् अधौ ( स० ए० ) ङेरौ ङित् । टिलोपः । स्वर० । अतोत्युः । उओ । एदोतोतः । दीर्घः (प्र० ए०) स्रो० । शि ( स० ए० ) ङेरौ ङित् । टिलोपः । च ( प्र० ए० ) अव्य० । न्सन्तस्येति सुहिनस् शब्दं विहाय नुमागमसहितसकारान्तस्य तथा अप्शब्दस्य जलवाचिनो नित्यं बहुवचनान्तस्य तथा महत्शब्दस्य उकारानुबन्धस्य पुंसि पञ्चसु वचनेषु धिवर्जितेषु नपुंसके शौ च दीर्घो भवति ह्रस्वदीर्घप्लुता विधीयमानाः स्वरस्थाने भवन्तीति न्सादीनां व्यञ्जनसन्निकृष्टस्य स्वरस्य दीर्घो भवतीत्यर्थः। अप्शब्दो बहुत्वे एव तत्र असमासान्तस्य जसि दीर्घो नान्यत्र समासान्तस्य पञ्चस्वेव इयं विवक्षा यथा शोभना आपो यत्र स स्वाप् देशः । स्वाप् स्वापौ स्वापः । स्वापं स्वापौ । इति नपुंसके शौ स्वप् स्वपी स्वांपि, सरांसि इति । अनेन धिवर्जितेषु पञ्चसु दीर्घः । धौ तु नुमागम एव न दीर्घः । हसेपः० । संयोगान्तस्येति सौ धौ च तकारस्य लोपः । शेषेषु नश्चापदान्ते झसे स्वर० । शसादौ स्वरे स्वर० । भकारादौ झबे जबाः । स्वर० । शेषं सुगमम् । तकारान्त उकारानुबधो भवच्छब्दः । भा दीप्तौ भातेर्डवतुः यतः भातेस्तु डवतुः परः । भवान् पूज्ये युष्मदर्थे इति तस्य पञ्चसु न्रितो नुमिति नुमागमः। वतः । सूत्रम् ।

अत्वसोः सौ ॥ अत्वसोः सौ इति धातोर्नेष्यते । अत्वन्तस्यासन्तस्य च दीर्घो भवति धिवर्जिते सौ परे । भवान् भवन्तौ भवन्तः । भवन्तम् भवन्तौ भवतः । भवता भवद्भ्याम् भवद्भिः । भवते भवद्भ्याम् भवद्भ्यः । भवतः भवद्भ्याम् भवद्भ्यः । भवतः भवतोः भवताम् । भवति भवतोः भवत्सु । हेभवन् हेभवन्तौ हेभवन्तः । असन्तस्येत्यसुप्रत्ययान्तस्येति विवक्षितम् । तेन पिण्डं ग्रसतीति पिण्डग्रः पिण्डग्रसौ पिण्डग्रसः । पिण्डग्रसम् पिण्डग्रसौ पिण्डग्रसः इत्यादि । ऋकारानुबन्धस्य नुमागम एव । अत्वन्तत्वाभावान्न दीर्घः । न्रितो नुम् । संयोगान्तस्य लोपः भवन् भवन्तौ भवन्तः । भवन्तम् भवन्तौ भवतः । भवता

भवद्भ्याम् भवद्भिः । भवत्सु इत्यादि । हेभवन् हेभवन्तौ हेभवन्तः । एवं पचच्छब्दः । पचन् पचन्तौ पचन्तः । पचन्तम् पचन्तौ पचतः । पचत्सु इत्यादि । हेपचन् हेपचन्तौ हेपचन्तः । एवं पठत्कुर्वद्ददादयः ।

अत्वसोः सौ । अतुश्च अस् च अत्वसौ तयोः अत्वसोः ( ष० द्वि० ) स्वर० । स्रो० । सि ( स० ए० ) ङेरौ डित् । सिद्धम् । अत्वन्तस्येत्युकारानुबन्धस्य असन्तस्येति नुमागमरहितासन्तस्य शब्दस्य धिवर्जिते सौ परे दीर्घो भवति । अनेन सौ दीर्घो भवति न धौ धिवर्जिते इति विशेषणात् । धौ हसेपः० । संयोगान्तस्य लोपः । हे भवन् पक्षे हे भोः । अन्यत्र नश्चा० । स्वरादौ सुपि च स्वर० । भकारादौ झबे जबाः । शेषं सुकरम् । एवं अष्ठीवत्, चक्रीवत्, कक्षीवत्, शब्दाः । ऋकारानुबन्धो भवतृशब्दः । ‘ भूशतृशानौ तिप्तेवत्क्रियायाम् ’ इति शतृप्रत्ययः । अत्प्रत्ययः । अपूकर्त्तरि गुणः । ओ अव् स्वर० भवत् इति तस्य ऋकारानुबन्धत्वात् ञितो नुमिति नुमागम एव स्यात् । परं, अत्वन्तत्वाभावात् अत्वसोः साविति दीर्घत्वं न । शेषं सुगमम् । एवं पचत्शब्दः । पचत् शब्दोऽपि ऋकारानुबन्ध इत्यर्थः । शतृप्रत्ययान्तेषु द्विरुक्तानां जक्षत्यादीनां च विशेषमाह ।

द्विरुक्तानां जक्षादीनां च शतुर्नुम्प्रतिषेधः पुल्लिङ्गे नित्यं वक्तव्यो नपुंसके वा शौ च । दधत्-दधद् दधतौ दधतः । दधतम् दधतौ दधतः । दधता दधद्भ्याम् दधद्भिः । इत्यादि । नपुंसके, दधत् दधद् दधती दधति-दधन्ति । जक्ष जागृ दरिद्रा शास् दीधी वेवी चकास् एते जक्षादयः । शकारान्तो विश्शब्दः । छशषराजादेरिति षत्वम् । षो डः इति डत्वम् । वावसाने । विट्-विड् विशौ विशः । विशम् विशौ विशः । विशा विड्भ्याम् विड्भिः । इत्यादि । हेविट्-हेविड् हेविशौ हेविशः । षकारान्तः षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । षष् जस् इति स्थिते । जश्शसोर्लुक् । षो डः । वावसाने । षट्-षड् षट्-षड् षड्भिः षड्भ्यः षड्भ्यः । ‘ ष्णः ’ इति नुट् । षो डः । षड् नाम् इति स्थिते ।

द्विरुक्तानामिति । सुगमम् । एवम् अन्येऽपि शतृप्रत्ययान्ता ऋकारानुबन्धा ज्ञेयाः । इति तान्ताः । कपान्ता अप्रसिद्धाः । शकारान्तो विश्शब्दस्तस्य छशषराजादेः ष इति षत्वे कृते षोडः । वावसाने । स्वरादौ स्वर० । सुपि खसे चपा० । सम्राज्शब्दवत् विट् विड् इत्यादीनि रूपाणि । विट् मनुष्यो वैश्यश्च । इत्यादयश्शान्ताः । षकारान्तः षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु लिङ्गेषु सदृशरूपः जश्शसोर्लुक् छशष० । षोडः । वावसाने । षट्-षड् पुनरपि षट्-षड् भकारादौ षो ड इति डत्वे कृते स्वर० । आमि ष्णः इति नुयागमः । षोड इति डत्वं षड्+नाम् इति स्थिते सति सूत्रम् ।

ड्णः ॥ ड् णः । संख्यासंबन्धिनो डकारस्य णत्वं भवति नामि परे । ष्टुभिः ष्टुः । षण्णाम् । क्वचिदपदान्तेऽपि पदान्तताश्रयणीया । षष् सु इति स्थिते । षो डः । खसे चपा इति टकारे कृते । अत्र ष्टुभिः ष्टुः इति सकारस्य षत्वे प्राप्ते पदान्तताश्रयणीया । टोरन्त्यादिति ष्टुत्वनिषेधः । षट्सु ।

ड्णः । ड् ( प्र० ए० ) साङ्के० । ण ( प्र० ए० ) स्लो० । संख्या० । वृत्तिः कण्ठ्या । अनेन नामि परे डकारस्य णकारः, ष्टुभिः ष्टुः । स्वर० । सुपि षोडः । खसे चपा झसानाम् । ततः टकारसकारयोगे ष्टुभिःष्टुरिति प्राप्तौ टोरन्त्यादिति ष्टुभिः ष्टुरिति सस्य षत्वनिषेधः । ननु अत्र पदान्तत्वाभावात् टोरन्त्यादिति सूत्रं कथं संभवति तत्राह क्वचिदिति । क्वचित्प्रयोगान्तरे अपदान्तेऽपि पदान्तता आश्रयणीया आश्रयेण गणनीया वक्तव्या इति भावः । दोष्शब्दो भुजार्थवाचकस्तस्य भेदः । सूत्रम् ।

दोषाम् ॥ दोष्सजुष्आशिष्हविष्प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च । दोः दोषौ दोषः । दोषम् दोषौ ।

दोषाम् । दोष् ( ष० ब० ) स्वर० । मोनु० । एकपदमिदं सूत्रम् । क्वचित् दोषां रः इति द्विपदम् । दोष्, सजुष्, आशिष् हविष्, धनुष्, सर्पिष्, प्रभृति शब्दानां षकारस्य रसे पदान्ते च रेफो भवति सकारस्थाने जातस्य षकारस्येति व्याख्येयम् । अनेन रसे पदान्ते च रेफः । एवं धौ च हसेपः० । स्लो० । द्विवचनादौ स्वर० । दोः दोषौ दोषः । दोषं दोषौ । शसादौ तु विशेषः ।

शसादौ स्वरे परे नान्तता वा वक्तव्या । दोषः दोष्णः । दोषा-

दोष्णा दोर्भ्यां-दोषभ्याम् दोर्भिः-दोषभिः । दोषे-दोष्णे दोर्भ्यां-दोषभ्याम् दोर्भ्यः-दोषभ्यः । दोषः-दोष्णः दोर्भ्यां-दोषभ्याम् दोर्भ्यः-दोषभ्यः । दोषः-दोष्णः दोषोः-दोष्णोः दोषां-दोष्णाम् । वेड्योः । दोष्णि-दोषणि-दोषि दोषोः-दोष्णोः । दोष सु इति स्थिते । 'दोषाम्' इति विसर्गः । शषसे वा इति सत्वे कृते किलात् इति षत्वम् । नुम् विसर्जनीयशव्यवधानेऽपि किलादिति सस्य षत्वं वाच्यम् । कृताकृतप्रसंगी यो विधिः स नित्यः । दोर्षु-दोःषु-दोषसु । हे दोः हे दोषौ हे दोषः । सप्तमीबहुवचने कृत्रिमत्वाद्विसर्गः । एवं सजुष्शब्दः ।

शसादौ स्वरे परे नान्तता वा वक्तव्या । अस्यार्थः । दोष् शब्दस्य शसादौ स्वरे परे नान्तत्वं भवति वा । विकल्पेन अन्ते नकारागमो भवतीत्यर्थः । दोषन् इति स्थिते ष्टुनोंणो० । स्वर० । पक्षे स्वर० । दोष्णः, दोषः । दोष्णा, दोषा । भकारादौ दोषां रः । जलतु० । दोर्भ्यां दोर्भिः । यद्वा । दोषां राचपो द्विः । झबे जबाः । स्वर० । दोर्भ्यां दोर्भिरित्यादि । केचित्तु 'शसादावनन्तता वा वक्तव्या' इत्येवं पठन्ति । स्वरे इति पदं न पठन्ति । तन्मते स्वरादौ हसादौ च सर्वत्र विकल्पेन 'अन्' आगमे कृते स्वरादौ अल्लोपः स्वरे० । ष्टुनोंणो० । स्वर० । द्वितीयपक्षे केवलं स्वर० । दोषः दोष्णः । दोषा दोष्णा । भकारादौ एकत्र अन् आगमे कृते स्वर० । नाम्नो० । दोषभ्याम् द्वितीये दोषां रः । जल० । दोर्भ्याम् । एवं दोषभिः दोर्भिः दोषे स्वर० दोष्णे । शसादावनन्तता स्वर० ततोऽल्लोपः । स्वरे० ष्टुनोंणो० । स्वर० । दोषभ्यां दोर्भ्यां दोषभ्यः दोर्भ्यः । दोषः दोष्णः दोषभ्यां दोर्भ्यां दोषभ्यः दोर्भ्यः । दोषः दोष्णः दोषोः दोष्णोः दोषां दोष्णाम् । दोष्णि दोषणि दोषि दोषोः दोष्णोः सुपि अनन्तत्वे कृते नाम्नो० । दोषसु । पक्षे दोषामिति रत्वे किल० दोर्षु । केचित्तु दोषां रः । स्रो० । विसर्जनी० । दोस्सु इत्यपि साधयन्ति । केचित्तु दोःषु इत्यपि पठन्ति । ततो यथासंभवं साध्यं । दोष्शब्दः पुंक्लीबलिङ्गः । दोः दोषी दोषि । जुषीप्रीतिसेवनयोः । जोषणं जुट् मिलनं प्रीतिः सह तेन वर्त्तते इति सजूर्मित्रम् ।

1 शसादौ सर्वत्र नान्तता वा वक्तव्या । इति कश्चित् ।

सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः । य्वोर्विहसे इति सिद्धे इदं न वक्तव्यम् । अथवा तस्यैवेदं प्रपञ्चकम् । दोषाम् । सजूः सजुषौ सजुषः । सजुषम् सजुषौ सजुषः । सजुषा सजूर्भ्याम् सजूर्भिः । सजूष्षु-सजूःषु इत्यादि । हेसजूः हेसजुषौ हेसजुषः । सकारान्तः पुंस्शब्दः । पुंस् सि इति स्थिते ।

सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः । इति केचिन्नेच्छन्ति दोषामिति रत्वं विधाय य्वोर्विहसे इत्यनेनैव सिद्धत्वात् । इति षान्ताः । सकारान्तः पुम्स्शब्दः । पुनातीति पुमान् पुनातेः म्रुक् मुम् चेति समत्ययः मुमागमश्च प्वादेर्ह्रस्वः अथवा पातेर्डुम्सुरितिडुम्सुप्रत्ययः डित्वाट्टिलोपः । पुम्स् शब्दस्य पञ्चसु विशेषः । सूत्रम् ।

पुंसोऽसुङ् ॥ पुंशब्दस्य असुङादेशो भवति पुंसि पञ्चसु पुरेषु शौ च । ङकारोऽन्त्यादेशार्थः । उकारो नुम्विधानार्थः ।

रेफः स्वरपरं वर्णं दृष्ट्वाऽऽरोहति तच्छिरः ॥<br>
पुरः स्थितं यदा पश्येदधः संक्रमते स्वरम् ॥<br>
अनुस्वारो नमस्यैव यावत्तद्देशयोगतः ॥<br>
मूर्द्ध्नि सङ्गं लभेत्तावन्नेक्षते पुरतः स्वरम् ॥

पुंसोऽसुङ् । पुंस् (ष० ए०) स्वर० । स्तो० । असुङ् (प्र० ए०) हसेपः० । अतोत्युः । उ ओ । एदोतोतः । पुम्स् शब्दस्य पञ्चसु स्यादिषु परेषु 'असुङ्' इत्ययमादेशो भवति । ङकारोन्त्यादेशार्थः । उकारो नुम्विधानार्थः । रेफः परमित्यादिश्लोकद्वयं सुगमम् अनेनान्त्यस्य सकारस्य 'अस्' इत्यादेशः सूत्रम् ।

मः स्वरे ॥ अनुस्वारस्य मकारो भवति स्वरे परे । पुमस् सि इति स्थिते । त्रितो नुम् । न्सम्महत इति दीर्घः । संयोगान्तस्य लोपः । हसेपः सेर्लोपः । पुमान् पुमांसौ पुमांसः । पुमांसम् पुमांसौ पुंसः । पुंसा । पुंसि पुंसोः । पुमस् सु इति स्थिते संयो० । नश्चा० । पुंसु ।

---

१ अत्र परस्मैपद चिन्त्यं, बाहुलकाद्वा कथंचित्समाधेयम् ।

**मः स्वरे ॥** मः ( ष० ए० ) स्वरे (स० ए०) वृत्तिः सुगमा । 'पुम्स् स्' इति स्थिते न्रितो नुर्मित नुमागमः पश्चस्थ । न्स्महत् इति धिवर्जमन्यत्रदीर्घः । सो धौ च हसेपः इति सिलोपः । संयोगान्तस्येति स् लोपः । अग्रे द्वितीयाद्वित्वं यावत् नश्चापदांते० स्वर० । पुमान् पुमांसौ पुमांसः । हेपुमन् हेपुमांसौ हेपुमांसः । पुमांसं पुमांसौ । शसादौ नश्चा० । स्वर० । पुंसः । पुंसा । भकारादौ संयोगान्तस्यलोपः । नश्चा० । एवं सुपि संयोगान्तस्य लोपः । नश्चा० । पुंसु । अथ रूपांतरं साधयति । सूत्रम् ।

**असंभवे पुंसः कक् सौ ॥** असंभव इति कोऽर्थः । वेदान्तैकवेद्यस्य परमात्मनो बहुत्वासंभवे वाच्ये सति पुंस्शब्दस्य कगागमो भवति सुपि परे । ककारः कित्कार्यार्थः । अकार उच्चारणार्थः ।

असंभव इति । असंभवे वैदिकप्रयोगे । असंभवो नाम वेदान्तैकवेद्यस्यात्मनो बहुत्वाऽसंभवः । न विद्यते आत्मनो ब्रह्मणो बहुत्वसंभवो यत्र सोऽसंभवः यतः 'एकमेवाद्वितीयं' ब्रह्म इति वेदान्तवेद्यस्य वेदान्तशास्त्रेण वेद्यस्य ज्ञेयस्य आत्मनो बहुत्वासंभवः । अथवा नास्ति संभवो बुद्धेः सूत्रादेश्च यत्र सोऽसंभवस्तस्मिन् वाच्ये सति पुंस्शब्दस्य साविति सुपि परे कगागमो भवति अनेन पुंस् अग्रे क् किस्वादन्ते । सूत्रम् ।

**स्कोराद्योश्च ॥** संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । किलात् इति सस्य षत्वम् । कषसंयोगे क्षः । पुंक्षु । ननु पुंक्ष्वित्यत्र मकार एव संयोगादिर्न सकारस्तर्हि कथं लोपः । अत्र स्कोराद्योश्चेत्यनेन संयोगाद्यस्य लोपे प्राप्ते मकारस्यैव लोपो भवेन्न तु सकारस्य । आदित्वाभावात् । संयोगाद्यस्तु पुंस् इत्यत्र शिरसि मकार एव । तस्मादादित्वं द्विविधम् । मुख्यमापेक्षिकं च । अत्र सस्यादित्वमापेक्षिकम् । पुंस् क इत्यत्र ककारापेक्षया सकार आदिः सकारापेक्षया मकार आदिरिति सकारस्यैव लोपः । हेपुमन् हेपुमांसौ हेपुमां-

सः । वस्वन्तो विद्वस्शब्दः । विद्वान् विद्वांसौ विद्वांसः । विद्वांसम् विद्वांसौ ।

स्कोराद्योश्च । स् च क् च स्कौ तयोः ( ष० द्वि० ) आद्योः ( ष० द्वि० ) ( सरूपाणामेकशेषः ) च (अव्ययम्) त्रिपदं सूत्रम् । वृत्तिः सुगमा । अनेन सलोपः । क्विला० कषसंयोगे क्षः । पुंक्षु इति सिद्धम् । परमपुरुषे पुंक्षु लौकिकेषु पुरुषेषु पुंसु । विद्वस्शब्दस्य पञ्चसु पुंस्वत् । त्रितोनुम् । न्सम्महतो धौ दीर्घः । संयोगान्तस्य लोपः । हसेपः० । विद्वान् विद्वांसौ विद्वांसः । हेविद्वन् । विद्वांसं विद्वांसौ । शसादौ तु विशेषः ।

वसोर्व उः ॥ वसोः संबन्धी वकार उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि इकारे च । विदुषः । विदुषा । वसां रसे इति दत्वम् । विद्वद्भ्याम् विद्वद्भिः । विदुषे विद्वद्भ्याम् विद्वद्भ्यः । विद्वत्सु । हेविद्वन् इत्यादि । तद्धिते । वैदुष्यम् । एवं तस्थिवस्प्रभृतयः । तस्थिवान् तस्थिवांसौ तस्थिवांसः । तस्थिवांसम् तस्थिवांसौ । निमित्ताभावे नैमित्तिकस्याप्यभावः । इटो वकारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे तन्निवृत्तिः । आतोऽनपि इत्यालोपः । तस्थुषः । तस्थुषा तस्थिवद्भ्याम् तस्थिवद्भिः । तस्थिवत्सु इत्यादि । हेतस्थिवन् हेतस्थिवांसौ हेतस्थिवांसः । सकारान्तः शुश्रुवस्शब्दः । शुश्रुवान् शुश्रुवांसौ शुश्रुवांसः । शुश्रुवांसम् शुश्रुवांसौ । शुश्रुवस् शस् इति स्थिते । वसोर्व उः । य्वोर्धातोरियुवौ स्वरे । स्वरहीनं परेण संयोज्यम् । क्विलात् इति षत्वम् । शुश्रुवुषः । शुश्रुवुषा । वसां रसे । खसे चपा० शुश्रुवत्सु । हेशुश्रुवन् हेशुश्रुवांसौ हेशुश्रुवांसः । एवं पेचिवान् पेचिवांसौ पेचिवांसः । पेचिवांसं पेचिवांसौ । शसि वस्योत्वे कृते यदागमत्वादिट्लोपः । पेचुषः । पेचुषा पेचिवद्भ्याम् इत्यादि । सकारान्तो जग्मिवस्शब्दः । ज-

ग्मिवान् जग्मिवांसौ जग्मिवांसः। जग्मिवांसम् जग्मिवांसौ। इटः ककारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे कृते इटोऽपि निवृत्तिः। गमां स्वरे इत्यनेन उपधालोपः। जग्मुषः। जग्मुषा जग्मिवद्भ्याम्। जग्मिवत्सु इत्यादि। जगन्वान् जगन्वांसौ जगन्वांसः। जगन्वांसम् जगन्वांसौ। शसि वस्योत्वे कृते वकारनिमित्तस्य 'मोनो धातोः' इति नकारस्यापि मकारः। गमां स्वरे इति उपधालोपः। जग्मुषः। जग्मुषा जगन्वद्भ्याम् इत्यादि। एवं जघन्वान् जघन्वांसौ जघन्वांसः। जघन्वांसम् जघन्वांसौ जघ्नुषः। जघ्नुषा जघन्वद्भ्याम् इत्यादि। सकारान्तः सुवचस्शब्दः। अत्वसोः सौ। सुवचाः सुवचसौ सुवचसः। सुवचसम् सुवचसौ इत्यादि। हेसुवचः हेसुवचसौ हेसुवचसः। एवं चन्द्रमस्प्रभृतयः। अत्वसोः सौ। हसेपः। सेर्लोपः। चन्द्रमाः चन्द्रमसौ चन्द्रमसः। चन्द्रमसम् चन्द्रमसौ चन्द्रमसः। चन्द्रमसा चन्द्रमोभ्याम् चन्द्रमोभिः। चन्द्रमस्सु चन्द्रमःसु। हेचन्द्रमः हेचन्द्रमसौ हेचन्द्रमसः इत्यादि। उशनस्शब्दस्य भेदः।

वसोर्व उः। वसु (ष० ए०) ङिति ङस्य। स्लो०। व (प्र० ए०) स्लो०। नामिनोरः। जल०। उ (प्र० ए०) साङ्के०। आदबे०। वसोरिति क्वसः क्वानौणंबेवत् विदेर्वा वसुरित्यादि सूत्रोत्पन्नो यो वस्प्रत्ययस्तत्संबन्धी वकारः सस्वर उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते यण्प्रत्यये ईपि च परे। तद्धिते वैदुष्यम्, ईपि विदुषी अत्र अनेन शसादौ स्वरे सर्वत्र 'द्व' इत्यस्य 'दु' किला०। स्वर०। हसादौ वसां रसे इति सस्य दत्वे कृते भकारादौ स्वर०। सुपि खसे चपा०। दस्य तः। स्वर०। एवं तस्थिवस् शब्दः। तस्थौ इति तस्थिवान्। ष्ठागतिनिवृत्तौ। आदेः ष्णः स्नः। स्था। क्वस्प्रत्ययः वस् स च णपवत् तेन द्वित्वं ह्रस्वः शसात् खपेति पूर्वसस्य लोपः झपानां जब चपेति थस्य तः स्थामीति अकारस्य इकारः। तस्थिवस् इति जातम्। स्यादि। तस्थिवान् तस्थिवांसौ तस्थिवांसः। तस्थिवांसं तस्थिवांसौ। शसादौ स्वरे वसोर्वउः इति वस्य उत्वे कृते 'निमित्ता-

भावे नैमित्तिकस्याप्यभावः ' इति इकारस्य आकार एव । ततः आतोनपीत्याकार-लोपः स्वर० । क्विा० । तस्थुषः । तस्थुषा तस्थिवद्भ्यामित्यादि । एवं गतः इति जग्मिवान् जग्मिवांसौ जग्मिवांसः । जग्मिवांसं जग्मिवांसौ । गमां स्वरे । जग्मुषः । जग्मुषा जग्मिवद्भ्यामित्यादि । अथवा जगन्वस्शब्दः । गम् वस्प्रत्ययः । द्वित्वं । मोनो धातोः । जगामेति जगन्वान् शसादौ स्वरे परे 'निमित्ताभावे नैमित्तकस्याप्यभावः' इति नकारस्य मकार एव । गमां स्वरे जग्मुषः । जग्मुषा जगन्वद्भ्यां जगन्वद्भिरित्यादि । एवं पेचिवान् पेचिवांसौ पेचिवांसः । पेचिवांसं पेचिवांसौ पेचुषः । पेचुषा पेचिवद्भ्यामित्यादि । उखास्रंस्पर्णध्वंसादीनां तु रसे पदान्ते च वसां रसे इति दत्वम् । स्वरादौ स्वर० । उखास्रत् उखास्रंसौ उखास्रंसः । उखास्रद्भ्यां उखास्रद्भिः । उखास्रत्सु । एवं पर्णध्वत् पर्णध्वंसौ पर्णध्वंसः इत्यादि । सकारान्तः सुवचस्शब्दः । वच् परिभाषणे सुपूर्वः । वचादेरस् । स्वर० । नामत्वा-त्स्यादयः । ततः सौ परे अत्वसोः साविति दीर्घः । हसे पः० । स्रो० । धौ हसे पः० । स्रो० स्वरादौ सर्वत्र सुपि च स्वर० । भकारादौ स्रो० । हबे उओ । शेषं सुकरम् । एवं चन्द्रमस्शब्दः । चन्द्रमाः चन्द्रमसौ चन्द्रमसः । हेचन्द्रमः । चन्द्रमोभ्यां चन्द्रमस्सु । एवं वेधाः वेधसौ वेधसः । दुर्मेधाः दुर्मेधसौ दुर्मेधसः इत्यादि । एवं प्रचेतस्, जातवेदस्, उच्चैःश्रवस्, सुमनस् सुतेजस् प्रभृतयः । उशनसादीनां सौ विशेषः । सूत्रम् ।

उशनसाम् ॥ उशनस् पुरुदंशस् अनेहस् इत्येतेषां सेरधेर्डा भवति । डित्वाट्टिलोपः । उशना उशनसौ उशनसः । उशनसम् उशनसौ उशनसः । उशनसा उशनोभ्याम् उशनोभिः । उशनस्सु उशनःसु इत्यादि । उशनसो धौ नान्तताऽदन्तता वा वक्तव्या । हेउशनन्-हेउशन-हेउशनः हेउशनसौ हेउशनसः । उभयविकल्पे रूपत्रयम् । संबोधने तूशनसस्त्रिरूपमिति वचनात् । पुरुदंशा पुरुदंशसौ पुरुदंशसः इत्यादि । अनेहा अनेहसौ अनेहसः । अनेहसम् । हे अनेहः इत्यादि । अदस्शब्दस्य भेदः । त्यादेष्टेः इति सर्वत्राकारः । अद् सि इति स्थिते ।

---

१ स्रंसु ध्वंसु अवस्रंसने इत्येताभ्या यथासंख्यमुखापर्णशब्दपूर्वाभ्यां क्विपि ' नो लोप ' इति नलोपे, उखास्रत् २ पर्णध्वत् इति प्रथमैकवचनरूपसिद्धिः । एवमग्रेऽप्यूह्यम् ।

**उशनसाम्** । उशनस् ( ष० द्वि० ) स्वर० उशनस्, पुरुदंशस्, अनेहस् इत्येतेषां शब्दानां धिवर्जितस्य सेर्डा भवति । अनेन सेर्डा भवति । डकारष्टिलोपार्थः । डिति टेः इति टिलोपः । स्वर० शेषं द्वित्वादौ सुवचस्वत् । उशनसो धौ विशेषमाह । **उशनस इति** उशनस्शब्दस्य धिविषये नान्तता अन्त्यसकारस्य नकारः । अदन्तता अकारान्तता च सकारस्य लोपो भवतीत्यर्थः । चकाराद् द्वितीये तु सान्त एव तिष्ठतीति धौ रूपत्रयम् । यतः संबोधने तूशनम इति । एकत्र हसेपः । स्रो० । द्वितीयरूपे सस्य नः । हसेपः । तृतीये तु अदन्तता वक्तव्येति सलोपः । समानाद्धेर्लोपो ऽधातोरिति घेर्लोपः । हेउशनः हेउशनन् हेउशन इति ज्ञेयम् । उशनस्भ्यामित्यत्र स्रो० । हबे । उओ उशनोभ्यां उशनोभिः । उशना शुक्रः । एवं पुरुदंशस्, अनेहस्, प्रभृतयः । पुरदंशाः पुरदंशसौ पुरदंशसः । अनेहा अनेहसौ अनेहसः इत्यादि । अनेहा कालः । अदस् शब्दस्य सकारान्तस्यापि विशेषः । तस्य त्यदादेष्टेरिति सर्वत्राकारः । सौ तु अद स् इति स्थिते सूत्रम् ।

**सौ सः ॥ अदसो दकारस्य सौ परे सत्वं भवति ।**

**सौसः** । सि ( स० ए० ) ङेरौ टिलोपः स्वर० स् ( प्र० ए० ) स्रो० अदसो दकारस्य सौ परे सो भवति अनेन दस्य सः अस् स् इति स्थिते सूत्रम् ।

**सेरौ ॥ अदसः सेरौकारादेशो भवति । असौ । द्विवचने अदस् औ इति स्थिते । दस्य मः । ओ औ औ अमो इति स्थिते ।**

**सेरौ** । सि ( ष० ए० ) ङिति ङस्य । स्रो० उओ । रा( प्र० ए० ) साङ्के० । नामिनो रः स्वर० । अदसः संबन्धिनः स औकारो भवति । अनेन सिस्थाने औ । ओ औ औ असौ इति सिद्धम् द्विवचनादौ त्यदादेष्टेरिति सर्वत्राकारे कृते दस्य मः ' अम् औ ' इति स्थिते । ओ औ औ । सूत्रम् ।

**मादू । उश्च ऊश्च ऊ अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारादेशो भवति दीर्घस्य च दीर्घ उकारादेशो भवति । अमू । सर्वादित्वाज्जसी दस्य मः इ ए अमे इति स्थिते ।**

**मादू** ॥ म (पं० ए०) ङसिरत् । सवर्णे० । उश्च ऊश्च ऊ (प्र० ए०) साङ्के० । चपा अबे जबाः । सिद्धम् । अदसो मकारात्परस्य ह्रस्वस्वरस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ उकारो भवति । अनेन ' अम् औ ' इत्यस्य औकारस्य दीर्घत्वात्

ऊकारः । अत्र पूर्वं विभक्तिकार्यं पश्चान्मादू । टास्थाने तु पूर्वं मादू पश्चाद्विभक्तिकार्यमिति विवेकः । अदस् बहुवचने सर्वादित्वाज्जसी अइए । अमे इति स्थिते । सूत्रम् ।

एरी बहुत्वे । एः ई बहुत्वे । बहुत्वे सति मकारात्परस्य अदस एकारस्य ईकारादेशो भवति । अमी । ईकारविधिसामर्थ्यान्न तूकारः । अमुम् अमू अमून् । मत्वोत्वे कृते टाना स्त्रियाम् । अमुना अमूभ्याम् अमीभिः । अदस् ङे इति स्थिते । ङकारो ङित्कार्यार्थः । त्यादेष्टेरः स्यादौ । दस्य मः । सर्वादेः स्मट् । मादू । अमुष्मै । अमूभ्याम् अमीभ्यः । त्यादेष्टेरः स्यादौ । दस्य मः । ङसिरत् । अकः सवर्णे दीर्घः । मादू । अमुष्मात् अमूभ्याम् अमीभ्यः । मादू । किलात्० । अमुष्य अमुयोः अमीषाम् । अमुष्मिन् अमुयोः अमीषु ।

एरी बहुत्वे । ए ( प्र० ए० ) सो० ई (प्र० ए०) साङ्के० नामिनो रः स्वर० । बहुत्वे ( स० ए० ) बहुवचने सति अदस् शब्दस्य मकारात्परस्य ईकारो भवति अनेन एकारस्य ईकारः अमे इत्यस्य अमी मकारात्परस्येति चेन्न व्याक्रियते तदा अमुकः अमुकौ इति न सिद्ध्यति । अमि अम्शसोरस्य मादू इति अकारस्य उकारः मोनु० अमुमिति सिद्धम् । द्विवचनं प्रथमाद्विवचनवत् । बहुत्वे अम् शसो० । सोनः पुंसः शसि । मादू । अमून् । टाविषये मादू । अस्य उः । अमु । ततः । टानास्त्रियां अमुना । द्विवचने अद्धीत्यात्वं पश्चान्मादू इत्याकारस्य दीर्घत्वादूकारः अमूभ्यामिति सिद्धम् । एवं चतुर्थी, पञ्चमीद्वित्वेऽपि तृतीयाबहुवचने ' भिस्भिस् ' इति वचनात् एस्भि । बहुत्वे अमीभिः । एवं [ च० ब० पं० ब० ] अमूभ्यः चतुर्थ्येक वचने सर्वादेः स्मट् । मादू । किला० । एऐऐ । अमुष्मै पञ्चम्येकवचने । ङसिरत् । अतः इति स्मडागमः । सवर्णे । मादू । किला० । अमुष्मात् । षष्ठ्येकवचने । ङस् स्य । मादू । किला० । अमुष्य ( प० द्वि० ) ( स० द्वि० ) ओसि अकारस्य एकारः । ए अय् । मादू । स्वर० । अमुयोः । आमि सुडागमः । एस्भि० । एरी बहुत्वे । किला० । अमीषाम् ( स ए० ) ङि स्मिन् । मादू । किला० । अमुष्मिन् । सुपि एस्भि० । एरी० । किला० । अमीषु । त्यदादित्वाद्धेरभावः संबोधनं न भवतीत्यर्थः । पुनर्विशेषमाह ।

सामान्ये अदसः कः स्यादिवच्च । सामान्येऽर्थे वाच्ये सति अदस्शब्दात्परः कप्रत्ययो भवति स स्यादिवज्ज्ञेयः ।

एकस्योच्चारणेन बह्वर्थों लभ्यते तत्सामान्यम् । त्यदादेष्टेरः स्यादौ । दस्य मः । मादू । अमुकः अमुकौ अमुके । अमुकम् अमुकौ अमुकान् । अमुकेन अमुकाभ्याम् अमुकैः । इत्यादि । शेषं सर्वशब्दवद्रूपं ज्ञेयम् । चकारात्सात्परस्योत्वम् । तेन । त्यादेष्टेः । सौ सः । मादू । अमुकः इत्यादि ।

॥ इति हसान्तपुल्लिङ्गप्रक्रिया ॥ ४ ॥

सामान्ये अदस इति । सामान्येऽर्थे विशेषाकथने अज्ञाताद्यर्थे अदस्शब्दस्य कः प्रत्ययो भवति स च स्यादिवत् ज्ञेयः स्यादौ परे सति यत्कार्यं भवति तत्कार्यं कप्रत्ययेऽपि परे भवति । तेन त्यदादेष्टेरः स्यादौ दस्य मः । मादू । इति भवति स्यादिवच्चेति चकारात् प्रथमैकवचने ' असकौ ' इत्यपि रूपं भवति पुंसि स्त्रियां च अदस्कः प्रत्ययः स्यादिवत्त्वात् त्यदादेष्टेरः स्यादौ । दस्यमः । मादू । ' अमुक' इति सिद्धम् । ततः स्यादयः । प्रक्रिया सर्वशब्दवत् । इति हसान्ताः पुल्लिङ्गाः ।

इति हसान्तपुल्लिङ्गसाधनं समाप्तम् ।

अथ हसान्ताः स्त्रीलिङ्गाः प्रदर्श्यन्ते ॥ तत्र हकारान्त उपानह् शब्दः ।

अथ हसान्तस्त्रीलिङ्गे किंचिच्छब्दसाधनं लिख्यते । हकारान्त उपानह् शब्दः पादपूरणवाचकस्तस्य स्वरादौ स्वर० । होढ इति ढत्वमाप्तौ तदपवादार्थं रसे पदान्ते च विशेषमाह । सूत्रम् ।

नहो धः । नहो हकारस्य धकारादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने । उपानत्-उपानद् उपानहौ उपानहः । खसे चपा झसानाम् । उपानत्सु । हेउपानत्-हेउपानद् हेउपानहौ हेउपानहः । वकारान्तो दिव्-शब्दः ।

नहो धः । नह् ( ष० ए० ) स्वर० । सो० । ध (प्र० ए० ) सो० । हवे० । उभौ । सिद्धं, वृत्तिः कण्ठ्या । अनेन रसे पदान्ते च हस्य धः । सौ धौ च धत्वे कृते हसेपः० । वावसाने । धकारस्य वा तकारदकारौ । झबे जबाः । धस्य दः । स्वर० । सुपि खसे चपा झसानाम् । धस्य तः । स्वर० । शेषं कण्ठ्यम् । गोधुक्-

प्रभृतयः पुल्लिङ्गवत् ज्ञेयाः । उष्णिक् उष्णिहौ उष्णिहः । उत् ऊर्ध्वं स्निह्यति रक्षति वा उष्णिक् यवागूः । इति हान्ताः । यकारान्ता अप्रसिद्धाः । वकारान्तो दिव्शब्दः स्वर्गाकाशार्थवाचकः तस्य नामसंज्ञायां स्यादयः । ' दिव् स् ' इति स्थिते । सूत्रम् ।

**दिव औ॥** दिवः औ । दिवो वकारस्य औकारादेशो भवति सौ परे । इयं स्वरे । द्यौः दिवौ दिवः । दिवम् ।

दिव औ । दिव् ( ष० ए० ) स्वर० । स्रो० । औ ( प्र० ए० ) साङ्केति० । आदवे । लोपश् सि ( स० ए० ) ङेरौ० । टिलोपः । स्वर० । दिव इति षष्ठ्या निर्दिष्टत्वात् दिव्शब्दसम्बन्धिनो वकारस्य औकारो भवति सौ परे अनेन सौ धौ च वस्य ओकारः । इयं० । स्वर० । स्रो० । द्यौः । एवं हेद्यौः । वर्णविधौ नेदमिति यदादेशस्तद्वद्भवतीति सिलोपो न । द्वित्वे बहुत्वे च स्वर० । अमि विशेषः । सूत्रम् ।

**वाम्या ॥** दिवो वकारस्य वा आत्वं भवति अमि परे । द्याम् दिवौ दिवः । दिवा ।

वाम्या । वा ( प्र० ए० ) अव्य० । अम् ( स० ए० ) स्वर० सवर्णे० । आ ( प्र० ए० ) साङ्के० । इयं० । त्रिपदम् । दिवो वकारस्य अमि परे वा आत्वं भवति । अनेन अम्विषये वा वकारस्य आकारः इयं स्वरे० । स्वर० । द्याम् । पक्षे दिवम् । अग्रे स्वरादौ सर्वत्र स्वर० । हसादौ तु विशेषः । सूत्रम् ।

**उ रसे ॥** उ रसे । दिवो वकारस्य उकारादेशो भवति रसे पदान्ते च । द्युभ्याम् द्युभिः । द्युभ्याम् द्युभ्यः । दिवः । द्युषु । हे द्यौः हे दिवौ हे दिवः । रेफान्तश्चतुःशब्दो बहुवचनान्तः ।

उरसे । उ ( प्र० ए० ) साङ्के० । रस ( स० ए० ) अ इ ए । दिवो वकारस्य रसे परे उकारो भवति । यथा ऊ रसे । उ ( प्र० ए० ) उ ( प्र० ए० ) रसे ( स० ए० ) त्रिपदं सूत्रं पठन्ति । तेन रसे परे उवर्णोऽपि परे उकारो भवति । यथा द्युषितः दिवि उषितः द्युषितः । अनेन भकारादौ सुपि च वस्य उकारः । इयं स्वरे० । स्वर० । सुपि उ रसे ततः किला० । इति वान्ताः । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तस्तस्य च स्त्रियां विशेषः । सूत्रम् ।

---

१ ' दिव औ सौ ' इति त्रिपदमिदं सूत्रमन्यथा टीकायामुपलभ्यते ।

त्रिचतुरोः स्त्रियां तिसृचतसृवत् ॥ त्रिचतुरोः स्त्रियां तिसृचतसृ । ऋवदित्यव्ययम् । स्त्रियां वर्तमानयोस्त्रिचतुरशब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतः । ऋकारश्च ऋवत् । ततः स्तुरार् इत्यार् भवति । ऋरम् । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः ।

त्रिचतुरोरिति । त्रि च चतुर् च त्रिचतुरौ तयोः ( ष० द्वि० ) स्वर० । स्रो० । स्त्री ( स० ए० ) स्त्रियां योः । स्त्रीभ्रुवोः । ङितामट् । स्वर० । सवर्णे० । तिसृ च चतसृ च तिसृचतसृ ( प्र० द्वि० ) साङ्के० । ऋवत् ( प्र०ए० ) अव्य० । सवर्णे० । सिद्धमिदं सूत्रम् । स्त्रियां वर्तमानौ यौ त्रिचतुरशब्दौ तयोः 'तिसृ' 'चतसृ' इत्येतावादेशौ क्रमात् भवतः । 'त्रि' शब्दस्य 'तिसृ।' 'चतुर्' शब्दस्य 'चतसृ' ऋकारश्च ऋकारवत् ऋकारेण तुल्यो ज्ञेयः । ततो दीर्घत्वाज्जसि स्तुरार् इति सूत्रेण आर् न भवति पञ्चसु इत्यार् न । शसि अम्शसोरस्येत्यकारलोपोऽपि न । सप्तस्वपि बहुवचनेषु 'त्रि' शब्दस्य 'तिसृ' आदेशः 'चतुर्' शब्दस्य 'चतसृ' जसि शसि च ऋरम् । स्वर० । स्रो० । आमि नुडागमे कृते विशेषः । सूत्रम् ।

नामि दीर्घस्तिसृचतस्रोश्छन्दसि वा ॥ दीर्घत्वम् । तिसृणां-तिसॄणाम् । तिसृषु । चतस्रः चतस्रः चतसृभिः चतसृभ्यः चतसृभ्यः चतसृणाम्—चतसॄणाम् चतसृषु । स्त्रियामिति त्रिचतुरोर्विशेषणात्स्त्रियां गौणयोर्नैतावादेशौ स्तः । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः । प्रियत्री प्रियत्रयः । बुद्धिवत् । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदादेशौ स्त एव । प्रियास्तिस्रो यस्य स प्रियतिसा । सेरा प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रम् प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रा प्रियतिसृभ्याम् प्रियतिसृभिः । प्रियतिसृषु । क्लीबे प्रियास्तिस्रो यस्य तत्प्रियतिसृ प्रियतिसृणी प्रियतिसृणि । एवं प्रियाश्चतस्रो यस्य स प्रियचतसा प्रियचतस्रौ

प्रियचतस्रः । क्लीबे । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि । रेफान्तो गिर्शब्दः ।

नामि दीर्घे इति । (प्र० ए०) अव्य० । आम् (स० ए० ) स्वर० दीर्घे (प्र० ए० ) स्रो० । तिसृचतसृ (ष० द्वि० ) साङ्के० । छन्दसि (स० ए० ) वा ( प्र०ए०) तिसृ, चतसृ इत्येतयोरिति स्त्रीलिङ्गे वर्त्तमानयोस्त्रिचतुर्शब्दयोर्नामि परे दीर्घो न भवति छन्दसि तु वा भवति वेदे तु तिसृणां तिसॄणां चतसृणां चतसॄणामिति रूपे भवतः । अन्यथा तिसृणां चतसृणामित्येव । सुपि, क्लिा० । रेफान्तो गिर्शब्दः गिरत्यनयेति गीः । गृ निगरणे क्विप् प्रत्ययः क्विब्लोपः ऋतइर् गिर् इति जातं तस्य स्वरादौ सर्वत्र स्वर० । हसादौ तु विशेषः । सूत्रम् ।

र्वोर्विहसे ॥ धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः । गीः गिरौ गिरः । गिरम् गिरौ गिरः । गिरा गीर्भ्याम् गीर्भिः । हेगीः हेगिरौ हेगिरः । एवं पुर्धुरादयः । धकारान्तः समिध्शब्दः । वावसाने समित्-समिद् समिधौ समिधः । समिधम् समिधौ समिधः । समिधा समिद्भ्याम् समिद्भिः । खसे चपा झसानाम् । समित्सु । भकारान्तः ककुभ्शब्दः । वावसाने । ककुप्-ककुब् ककुभौ ककुभः । ककुभम् ककुभौ ककुभः । ककुभा ककुब्भ्याम् ककुब्भिः । ककुप्सु । हेककुप्-हेककुब् हेककुभौ हेककुभः । दकारान्तास्त्यदादयः। त्यादेष्टेरः स्यादौ इति सर्वत्राकारः । आबतस्त्रियाम् इति आप् । पकारः सिलोपार्थः । सवर्णे दीर्घत्वे च कृते स्त्रीलिङ्गे सर्वाशब्दवद्रूपं ज्ञेयम् । स्तः । स्या। औरी । अ इ ए । त्ये त्याः । सा ते ताः । या ये याः । एषा एते एताः । एतां-एनाम् एते-एने एताः- एनाः । एतया-एनया एतयोः-एनयोः । का के काः । मकारान्त इदम्शब्दः ।

र्वोर्वि हसे । इश्च उश्च यू तयोः र्वोः ( ष० द्वि० ) इ यं स्वरे । उ वम् । स्वर० । स्रो० । र् च व् च र्व् तस्मिन् र्वि (स० ए०) स्वर० । पश्चान्नामिनो रः।

रिलोपो दीर्घः । हस ( स० ए० ) अ इ ए । धातुसबन्धिनोरिकारोकारयोर्दीर्घो भवति रेफवकारयोः परयोः सतोः । किंविशिष्टयोः रेफवकारयोः । हसपरयोः हसः परोऽग्रे वर्त्तमानो याभ्यां तौ हसपरौ तयोः । अनेन हसादौ दीर्घः । गि इत्यस्य गी । हसेपः । स्रो० । गीः । हे गीः । गीर्भ्यां गीर्भिः । गीर्भ्यः । गीर्षु । इत्यादिरूपमवसेयम् । शेषं कण्ठ्यम् । एवं पुरादयः । उकारस्य दीर्घत्वे ऊकारः । शेषं गिर्शब्दवत् । पूः पुरौ पुरः । पुरं पुरौ पुरः । पुरा पूर्भ्यां पूर्भिरित्यादि । एवं धूः धुरौ धुरः । इत्यादि । धकारान्तः समिध् शब्दः इन्धनार्थवाचकः तस्य सौ धौ च हसेपः० इति सिलोपे कृते । वावसाने । धस्य वा तकारदकारौ । समित्, समिद् । भकारादौ झबे जबाः । धस्य दः । स्वर० । सुपि खसे चपा झसानां । धस्य तः । स्वर० । समित्सु शेषं सुकरम् । एवं वीरुध्क्षुधृशब्दौ । भकारान्तः ककुभ्शब्दः दिग्वाचकस्तस्य वाव साने इति जबत्वे दः । चपत्वे च पः । ककुप्, ककुब् । ककुब्भ्यां झबेजबाः । ककुप्सु । खसे चपा इत्यादि । जकारान्तः स्रज् शब्दः । स्रक् स्रग् स्रजौ स्रजः । एवं रुज् । रुक्, रुग् रुजौ रुजः । दिशामिति कत्वम् । दकारान्तास्त्यद, तद् ,यद् , एतदस्तेषां त्यदादेष्टेरित्यकारे कृते आब्तस्त्रियामिति वक्ष्यमाणसूत्रेण आप्प्रत्ययः । आप्इति पकारः आप्इति सूत्रेण सिलोपार्थः ततः सवर्णे दीर्घः सहेति दीर्घे कृते सि विषये स्त इति तस्य सः । ततः साधना सर्वाशब्दवत् । स्या त्ये त्याः । एवं तद् । सा ते । औरी । ताः । सवर्णे० । स्रो० । तां अम्शसोः मोनु० । ते । औरी । ताः । अम्श० । तया । टौसोरे । ए अय् । ताभ्यां ताभिः । तस्यै । ङितांयट् यटोच्चेति सुट् पूर्वस्य आपो अकारः स्वर० ए ऐ ऐ । ताभ्यां ताभ्यः । तस्याः ताभ्यां ताभ्यः । ङितां यट् । यटोच । तस्याः । ङितां यट् यटोऽच्च तयोः टौसोरे एअय् स्वर० । तासां । सुडागमः । स्वर० । तस्यां आम्ङे ङितांयट् यटोच स्वर० । मोनु० । तयोः तासु त्यदादित्वात्सम्बोधनाभावः । एवं, या ये याः । एतद्शब्दस्य एनादेशादिकं पुंवत् । किला० । एषा एते एताः । एतदोऽन्वादेशे द्वितीयाटौस्वेनो वा वक्तव्यः । एतां-एनां एते-एने एताः-एनाः । एतया-एनया । एतयोः-एनयोः । इति विशेषः । शरद् संविद्, संपद्, आपद्, परिषद्, प्रतिपद्, दृषद्, संसद्, प्रभृतयो दकारान्ता यथाप्रयोगं साध्याः । इत्यादि ज्ञेयम् । एवं मकारान्तः किम्शब्दोऽपि सर्वाशब्दवत् त्यदादेष्टेरः आबतः स्त्रियां । का के काः । इदंशब्दस्य सौ विशेषः । इदम् । ( प्र० ए० ) सूत्रम् ।

इयं स्त्रियाम् । इदम्शब्दस्य स्त्रियामियं भवति सिसहितस्य । इयं इमे इमाः । इमां-एनाम् इमे-एने इमाः-ए-

नाः । अन टौसोः । टौसोरे । अनया आभ्याम् आभिः । इदम् ङे इति स्थिते । त्यादेष्टेरः स्यादौ । दस्य मः । आबन्तः स्त्रियाम् । ङितां यट् । यटोच्च । स्भ्यः । सवर्णे दीर्घः । अस्यै आभ्याम् आभ्यः । अस्याः आभ्याम् आभ्यः । अस्याः अनयोः-एनयोः आसाम् । आम्ङेर्नियश्च अस्याम् अनयोः-एनयोः आसु । चकारान्तस्त्वचूशब्दः । चोः कुः इति कुत्वम् । वावसाने । त्वक्-त्वग् त्वचौ त्वचः । त्वचम् त्वचौ त्वचः । त्वचा त्वग्भ्याम् त्वग्भिः । चोः कुः । किलात् । कषसंयोगे क्षः । त्वक्षु । हेत्वक्-हेत्वग् हेत्वचौ हेत्वचः । एवं ऋचूवाचूप्रभृतयः । पकारान्तोऽप्शब्दो नित्यं बहुवचनान्तः स्त्रीलिङ्गः । न्सम्महतो धौ दीर्घः शौ च । आपः अपः ।

इयं स्त्रियाम् इय ( प्र० ए० ) हसे पः । मोनु० स्त्री० ( स० ए० ) स्त्रियां त्वोः स्त्रीभ्रुवोः ङितामट् स्वर० सवर्णे० इदंशब्दस्य स्त्रीलिङ्गे सौ परे इयम् आदेशो भवति । गुरुत्वात्सर्वस्य । अनेन इयम् हसेपः मोनु० । अग्रे द्वितीयाबहुत्वं यावत् त्यदादेष्टेरत्वे कृते ' दस्य मः ' इति मत्वे कृते आबतः स्त्रियां सवर्णे० गङ्गाशब्दवत् तृतीयादौ त्यदादेष्टेरिति सर्वत्र अकारः टावचने ओसि च अन टौसोः अनादेशे कृते आबतः स्त्रियां टौसोरे ए अय् । स्वर० अनया । अनयोः । भकारादौ सुपि च स्भ्यः इति अकारे कृते आबतः स्त्रियां आभ्यां आभिः । आसु । इत्यादि ङे, ङसि, ङस्, ङिषु आबतः स्त्रियां ङि यट् यटोच्च अस्यै । अस्याः । अस्याः सप्तम्येकवचने आबतः स्त्रियां आम्ङे ङितां यट् यटोऽच्च स्भ्यः स्वर० अस्यां । आमि सुडागमः । स्भ्यः । आबतः स्वर० मोऽनु० आसां । शेषं सुगमम् । चकारान्तस्त्वच्शब्दस्तस्य रसे पदान्ते च चोःकुरिति चस्य कः । सौ धौ च हसे प इति सिलोपे कृते चस्य कुत्वे कृते वावसाने वा कस्य गकारः । त्वक्, त्वग् । हेत्वक्, त्वग् भकारादौ तु कत्वे झबे जबाः कस्य गः स्वर० त्वग्भ्यां त्वग्भिरित्यादि । सुपि चोः कुः किला० कपसंयोगे क्षः । त्वक्षु । स्वरादौ सर्वत्र स्वर० त्वचौ त्वच इत्यादि शुक्, शुग् । शुचौ शुचः । एवं ऋच्, वाच्प्रभृतयोऽपि चकारान्ता ज्ञेयाः । ऋक् ऋग् ऋचौ ऋचः । वाक् वाग् वाचौ वाचः । एवं तकारान्ता योषित्, सरित्, तडित्, विद्युत्, प्रभृतयः । पकारान्तोऽप्शब्दो नित्यं बहुवचनान्तः स्त्रीलिङ्गे ' अ-

अप्+जस् इति स्थिते न्सम्महत इति दीर्घः । स्वर० स्रो० । आपः । शसि पञ्चस्विति विशेषणान्न दीर्घः । किंतु स्वर० स्रो० अपः० । भकारादौ विशेषः । सूत्रम् ।

भि दपाम् । भि द् अपाम् । अबादीनां भकारे परे पकारस्य दत्वं भवति । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु । हे आपः । अबादीनामित्यादिग्रहणं गौणत्वेऽपि दत्वार्थम् । अप्शब्दस्य पञ्चसु यद्रूपं तत् स्वप्शब्दस्य रूपम् । अबादीनामित्यत्र अपः पाठे अप्शब्दस्यैव वक्तव्ये अपामित्यत्र बहुवचनात् अप् स्वप् बह्वप् एते ग्राह्याः । स्वाब्भि तडागानि । बह्वाब्भि तडागानि । शोभना आपो यस्मिन् प्रदेशे स स्वाप् स्वापौ स्वापः । हे स्वप् इत्यादि । शकारान्तो दिश्शब्दः ।

भि दपाम् ॥ भ् ( स० ए० ) स्वर० । द् ( प्र० ए० ) हसेपः । अप् ( ष० ब० ) स्वर० मोनु० । त्रिपदम् । अबादीनामित्यपुक्तः पाठः । किंतु अप्शब्दस्य अप्शब्दसंबन्धिनः पकारस्य स्यादौ भकारे परे दकारो भवति । सूत्रे अपामिति बहुवचनं अप्शब्दस्य बहुवचनत्वज्ञापकम् । अनेन पस्य दः । अद्भिः । अद्भ्यः । अद्भ्यः । आमि सुपि च स्वर० अपाम् । अप्सु । शकारान्तो दिश्शब्दस्तस्य रसे पदान्ते च विशेषः । सूत्रम् ।

दिशाम् । दिश् विश् स्पृश् इत्यादीनां रसे पदान्ते च कुत्वं भवति । दिश् विश् दृश् स्पृश् मृश् स्रज् ऋत्विज् दधृक्ष् दधृक्ष् उष्णिह् अञ्च् युञ्ज् क्रुञ्च् एते दिशामिति बहुवचनेन गृह्यन्ते । वावसाने । दिक्-दिग् दिशौ दिशः । दिशम् दिशौ दिशः । दिशा दिग्भ्याम् दिग्भिः । दिशि । कुत्वम् । किलात्० दिक्षु । हेदिक्-हेदिग् । दृक् दृग् दृशौ दृशः । स्पृक्-स्पृग् स्पृशौ स्पृशः । स्रक्-स्रग् स्रजौ स्रजः । ऋत्विक्-ऋत्विग् ऋत्विजौ ऋत्विजः । दधृक् दधृग् दधृक्षौ दधृक्षः । दधृक्-दधृग् दधृक्षौ दधृक्षः । उष्णिक्-उ-

ष्णिग् उष्णिहौ उष्णिहः । पकारान्तस्त्विष्शब्दः । षोडः । वावसाने । त्विट्-त्विड् त्विषौ त्विषः । त्विषम् त्विषौ त्विषः । त्विषा त्विड्भ्याम् त्विड्भिः । त्विषे । त्विट्त्सु । हेत्विट्-हेत्विड् हेत्विषौ हेत्विषः ।

दिशाम् । दिश् (प० व०) स्वर० योनु० । दिश्,दृश् स्पृश्,ऋत्विज्, दधृष् उष्णिह्, अञ्ज्, युज्, क्रुञ्च्, असृज् इत्यादीनां शकारस्य अन्तस्य च कत्वमित्यर्थः। रसे परे पदान्ते च शेषं कण्ठ्यम् । अनेन रसे पदान्ते च शस्य कः। ततः वावसाने । दिक् दिग् । हेदिग् हेदिक् । दिशौ दिशः । दिग्भ्याम् । दिशाम् । झबेजबाः । दिक्षु इत्यादि एवं दृश्प्रभृतयः । दिशामिति । कत्वम् किला० कषसंयोगे क्षः । दृक् दृग् दृशौ दृशः । पकारान्तस्त्विष्शब्दस्तस्य रसे पदान्ते च षोड इति डत्वं सौ भौ च हसेपः । वावसाने डकारटकारौ । त्विड् त्विट् । हेत्विट् हेत्विड् भकारादौ षोडः। स्वर० । त्विड्भ्यामि त्यादि । सुपि षोडः । खसे चपा० । डस्य टः। स्वर० । त्विट्सु । एवं प्रावृष्, विप्रुष् रुष् तृष्, शब्दाः । आशिष्शब्दः सजुष्शब्दवत् ज्ञेयः । दोषामिति षस्य रः ।

सजुषाशिषोरसे पदान्ते च दीर्घो वक्तव्यः । सजूः सजुषौ सजुषः । आशीः आशिषौ आशिषः । आशिषम् आशिषौ आशिषः । आशिषा आशीर्भ्याम् आशीर्भिः इत्यादि । आशीःषु-आशीष्षु । हेआशीः हेआशिषौ हेआशिषः । स्त्रीलिङ्गस्यादस्शब्दस्य सौ न विशेषः । असौ । द्विवचनादौ त्यादेष्टः अत्वे कृतेऽनन्तरम् । आवतः स्त्रियाम् इत्याप् । सवर्णे दीर्घः सह । विभक्तिकार्यं प्राक् पश्चान्मादू । अमू अमूः । अमूम् अमू अमूः । अमुया अमूभ्याम् । अमूभिः । अमुष्यै अमूभ्याम् अमूभ्यः । अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः अमुयोः अमूषाम् । अमुष्याम् अमुयोः अमूषु ॥ इति हसान्तस्त्रीलिङ्गप्रक्रिया ॥ ५ ॥

सजुषाशिषोरसे पदान्ते च दीर्घः । स्रो० आशिषः । दोषां रः । सजुषाशिषोरसे पदान्ते च । जल० आशीर्भ्यां । आशीःषु । इत्यादि ज्ञेयम् । मकारान्तस्य स्त्री-

लिङ्गे अदस्शब्दस्य सौ विशेषो न सिविषये। यथा पुल्लिङ्गे रूपं तथैवात्रापि त्यदादेष्टे-रित्यकारः। आबतः स्त्रियां सौसः सेरौ ओऔऔ। असाविति सिद्धम्। द्विवचनादौ सर्वत्र टेरत्वे कृते दस्य मः। ततः आबतः स्त्रियामित्यापि कृते स्त्रीलिङ्गे सर्वाशब्दवत् विभक्तिकार्ये कृते पश्चान्मादू इति ह्रस्वस्य स्वरस्य उकारः। दीर्घस्य दीर्घ उकारः असौ अमू अमूः। सवर्णे० मादू सो० अमूं अमू अमूः। अमुया टौसोरे। अमूभ्यां अमूभिः। मादू अमुष्यै। ङितां यट्। यटोऽच्च। पूर्वस्य चापोऽकारः। मादू किला० स्वर० एऐऐ। अमूभ्यां मादू। अमूभ्यः। अमुष्याः अमूभ्यां अमूभ्यः। अमुष्याः अमुयोः। टौसोरे। ए अय् स्वर० मादू। अमूषां। सुडामः। मादू किला० अमुष्यां आम्ङेः ङितां यट् यटोच्च पूर्वस्य चापोऽकारः मादू किला० स्वर० अमुयोः टौसोरे। अमूषु मादू किला० अमुका अमुके। इत्याद्या ज्ञेयाः। एवं सुमनस्, अप्सरस्, भास्, सुवचस्, प्रभृतयो ज्ञेयाः।

इति हसान्तस्त्रीलिङ्गसाधनम् ॥ ९ ॥

अथ हसान्ता नपुंसकलिङ्गाः प्रदर्श्यन्ते। तत्र रेफान्तो वार्शब्दः। नपुंकात्स्यमोर्लुक् रेफस्य विसर्गः। वाः। ईमौ वारी। अयम इति विशेषणान्नुम्न भवति। जश्शसोः शिः। वारि। पुनरपि वाः वारी वारि। वारा वार्भ्याम् वार्भिः। वार्षु। वार्षु इत्यत्र न विसर्गः। दोषामिति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यात्। हेवाः हेवारी हेवारि। चतुर्शब्दस्य चतुराम् शौ च इत्याम्। चत्वारि। चत्वारि। चतुर्भिः। चतुर्भ्यः। चतुर्भ्यः। रः संख्यायाः। चतुर्णाम्। चतुर्षु। नकारान्तोऽहन्शब्दः।

अथ हसान्तनपुंसके किंचित्साधनमुच्यते। अथ मुख्यवृत्त्या हकारान्तः शब्दो नास्ति गौणत्वे तु सुष्ठु अनड्वान् यस्य तत् स्वनडुह् (प्र० ए०) नपुंसकात्स्यमोर्लुक् वसांसे वावसाने स्वनडुत् स्वनडुद् स्वनडुही स्वनड्वांहि चतुरनडुहोरित्याम्। एवं गोधुक् गोदुही गोदुहि। अनुपानत् अनुपानही अनुपानहि इत्यादि। अथ रेफान्तो वार्शब्दस्तस्य नपुंसकात् स्यमोर्लुक् सो०। वाः हेवाः द्वित्वे तु ईमौ स्वर० वारी हेवारी। जसि शसि च जस् शसोरिति शौ कृते अयम इति विशेषणात् प्रमप्रत्याहारान्तस्य निषिद्धत्वान्नुमागमो न भवति। तेन स्वर० वारि हेवारि पुनरपि द्वितीयायां वाः वारी वारि। तृतीयादौ स्वरादौ स्वर० हसादौ तु जलतु०सुपि किला० जल०

वारा वार्भ्यां । वार्षु इत्यादयः । चतुर्शब्दस्य बहुवचनान्तस्य जश्शसोः शिरितीकारे कृते चतुराम् शौ चेत्याम् । उवं स्वर० चत्वारि । चत्वारि । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । चतुर्भ्यः । आमि रः संख्यायाः इति नुमागमः रुनॄणोणो० रात्पोद्विः स्वर० । सुपि किला० चतुर्णाम् । चतुर्षु । शेषं कण्ठ्यम् । गौणत्वे तु प्रियाश्चत्वारो मर्त्या यस्य तत् प्रियचतुः प्रियचत्वरी प्रियचत्वराणि प्रियाः चतस्रः स्त्रियो यस्य तत् प्रियचतस्र प्रियचतसृणी प्रियचतसृणि । नकारान्तोऽहन्शब्दः । सूत्रम् ।

अह्नः । अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च । नपुंसकात्स्यमोर्लुक् स्रोर्विसर्गः सह । ईमौ । वेङ्योः । अह्नी-अहनी । नोपधायाः । अहानि । पुनरपि । अहः अह्नी-अहनी अहानि । अल्लोपः स्वरे अकारलोपः । अह्ना । अन्हः सः स्रोर्विसर्गः । हवे । उओ । अहोभ्याम् अहोभिः । अह्ने अहोभ्याम् अहोभ्यः । वेङ्योः । अह्नि-अहनि । अह्नः सः । स्रोर्विसर्गः । अहस्सु-अहःसु । हेअहः हेअह्नी-हेअहनी हेअहानि । ब्रह्मन्शब्दस्य रसे पदान्ते च नलोपः । नपुंसकात्स्यमोर्लुक् । नाम्नो नो लोपशधौ । ब्रह्म । संबुद्धौ नपुंसकानां नलोपो वा वक्तव्यः । हेब्रह्म-हेब्रह्मन् हेब्रह्मणी हेब्रह्माणि । ईमौ ब्रह्मणी । जश्शसोः शिः । नोपधायाः । ब्रह्माणि । पुनरपि ब्रह्म ब्रह्मणी ब्रह्माणि । ब्रह्मणा । नाम्नो नो लोपशधौ । ब्रह्मभ्याम् ब्रह्मभिः । ब्रह्मणे ब्रह्मभ्याम् ब्रह्मभ्यः । ब्रह्मसु इत्यादि । एवं चर्मन्वर्मन्कर्मन्प्रभृतयः । चर्म चर्मणी चर्माणि । वर्म वर्मणी वर्माणि । एवं व्योमन्शब्दः । व्योम । ईमौ । वेङ्योः । व्योम्नी व्योमनी व्योमानि ।

अह्नः । अहन् ( प्र० ए० ) अल्लोपः स्वर० स्रो० अहन्शब्दस्य सकारो भवति षष्ठीनिर्दिष्टत्वादन्त्यस्य रसे पदान्ते च । अनेन सौ धौ च अमि च नपुंसकात् स्यमोर्लुगिति स्यमोर्लोपे कृते अह्नः इति नकारस्य सकारे कृते स्रो० अहः । हे अहः । द्विवचने तु ईमौ इतीकारे कृते वेङ्योरिति वा अकारलोपः स्वर० अह्नी अहनी जश्

शस्विषये तु जश्शसोः शिः। नोपधायाः। स्वर० अहानि। यमन्तत्वान्न नुम्। स्वरादौ सर्वत्र अल्लोपः स्वर० अह्ना। इत्यादि भकारादौ अह्नः इति नकारस्य सकारः स्लो० हबे उओ अहोभिरित्यादि ङ्विचने वेङ्योरिति वा अल्लोपः स्वर०अह्नि अहनि सुपि अह्न इति सः स्वर०। अहस्सु। ब्रह्मन्शब्दस्य नपुंसकात्स्यमोर्लुगिति सौ धौ च लुप्ते नाम्नो नोलोपशधौ इत्यधाविति विशेषणात् धौ नस्य लोपो न भवति। ब्रह्म हे ब्रह्मन्। क्षेमेन्द्राचार्यस्तु सम्बोधनेऽपि वा नकारलोपमिच्छति तेन हेब्रह्म इत्यपि स्यात्। प्रक्रियाकौमुद्यां च संबुद्धौ वा नपुंसकानां नलोपो वक्तव्यः इति। द्विवचने तु ईमौ इति ईकारे कृते अम्वयुक्तादिति विशेषणादल्लोपनिषेधः ष्ऋर्नोणो० । स्वर०। ब्रह्मणी बहुत्वद्वये जश्शसोःशिः नोपधायाः ष्वुर्नोणो० स्वर० ब्रह्माणि। ब्रह्म ब्रह्मणी ब्रह्माणि अग्रे स्वरादौ सर्वत्र ष्वुर्नो० स्वर० ब्रह्मणा। रसे परे च नाम्नो० ब्रह्मभ्याम्। ब्रह्मसु। एवं चर्म्मन्, शर्म्मन्, कर्म्मन्, नर्म्मन्, पर्वन्, प्रभृतयः। अल्लोपः स्वरे इत्यकारलोपानर्हाः। तथा नामन्, दामन्, व्योमन्, लोमन्, प्रेमन्, धामन्, हेमन् प्रभृतयोऽपि नान्ताः शब्दाः साध्याः। नाम नामनी नामानि। एवं दण्डि । दण्डि दण्डिनी दण्डीनि॥ पुनर्विशेषमाह

नान्तादन्ताच्छन्दसि ङिश्योर्वा लोपो वक्तव्यः।
छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ।

परमे व्योमान्। सर्वा भूतानि। सर्वा इत्यत्र शिलोपे कृते नलोपः। दीर्घत्वं नातिवर्तते। निमित्ताभावे नैमित्तिकस्याप्यभाव इत्येतस्यानवश्यंभावित्वात्। त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति। कस्मात्। स्यादाविति विशेषणात्। लुकि न तन्निमित्तं नपुंसकात्स्यमोर्लुक्। वाव साने। त्यत्-त्यद्। त्यादेष्टेरः स्यादौ इति सर्वत्राकारः। ईमौ। त्ये। जश्शसोः शिः। नोपधायाः। त्यानि। पुनरपि। शेषं सर्ववत्। तत्-तद् ते तानि। यत्-यद् ये यानि। एतत्-एतद् एते एतानि।

नान्तादन्ताच्छन्दसि ङिश्योर्वेति।नकारान्ताद् अदन्तात् अकारान्तात् शब्दात् परयोर्नपुंसकलिङ्गसबन्धिनोर्ङिश्योर्वा लोपः। ङि सप्तम्येकवचने शिः

जस्शसोः शिरिति एतयोर्वा बहुलं लोपश् भवति यथा परम ( स० ए० ) व्योमन् ( स० ए० ) उभयत्रापि ( स० ए० ) ङि एकत्र अइए अन्यत्र ङिलोपः छान्दसिकत्वात् ' नाम्नो नो लोपशधौ ' इत्यपि न भवति। भूत ( प्र० ब० ) सर्व ( प्र० ब० ) उभयत्र प्रथमाबहुवचनम्। जश्शसोःशिः नुमयमः नोपधायाः न्चुर्नो० स्वर० ततः शिलोपः छान्दसिकत्वात् नकारस्यापि लोपो भवति। यद्वा ' निमित्ताभावे नैमित्तिकस्याप्यभावः ' छान्दसत्वादेव दीर्घत्वं तु न निवर्तते। भूत ( प्र० ब० ) जस्शसोः शिः।नुमयमः। नोपधायाः। स्वर०। परमे प्रकृष्टे व्योमन्याकाशे। सर्व्वा भूतानि। सर्वाणि भूतानि वर्त्तन्ते इत्यर्थः। यथा परमे व्योमन् इत्यत्र ङिलोपः छान्दसिकत्वात् सर्वाणि भूतानि इत्यत्र नुम्सहितः शिलोपः। परमे व्योमन् सर्वा भूतानि इति छान्दसिकप्रयोगौ। असृक् असृजी असृञ्जि दिशामिति कत्वम्। अथ दकारान्तास्त्यदादयः। तेषां त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति स्यादौ विभक्तौ परे सत्येव भवति न तु लुकि कृते इति विशेषणात् लुकि न तन्निमित्तमिति अत एव स्तः इति सत्वमपि न भवति। तत्। द्विवचनादौ त्यदादेष्टे० ईमौ। अइए। ते। बहु त्यदादेष्टे० जश्शसोः शिः। नुमयमः नोपधायाः।स्वर० तानि। तत् ते तानि। तृतीयादौ सर्वत्र त्यदादेष्टे० टेन। अइए। तेन ताभ्याम्। अद्भि। तैः। ङ्यः। अइए। एऐ ऐ। तस्मै सर्वादेः स्मट्। एऐऐ। ताभ्यां अद्भि। तेभ्यः एस्भिबहुत्वे। तस्मात् ङसिरत् अत इति स्मडागमः सवर्णे०। ताभ्यांअद्भि। तेभ्यः।एस्भि बहुत्वे तस्य ङस्स्य। तयोः ओसि ए अय्। तेषां। सुडामः एस्भि० किला० स्वर० मोनु० स्वर०। तस्मिन् ङिस्मिन्। तयोः ओसि एअय्। तेषु किला०। त्यदादीनां धेरभावः। एवं एतत् एते एतानि। द्वितीयायां एतदोऽन्वादेशे इत्यस्य मात्रौ अमि विषये वक्तव्ये तु विशेषमाह।

इदमेतदोर्द्वितीयैकवचने नपुंसके एनद्वा वाच्यः। एतत्-एतद् एनत्-एनद् एते-एने एतानि-एनानि। एतेन-एनेन। किम् के कानि। पुनरपि। इदं इमे इमानि। इदं-एनत्-एनद् इमे-एने इमानि-एनानि। अनेन-एनेन इत्यादि। नपुंसकात्स्यमोर्लुक्। चोः कुः। वावसाने प्रत्यक्-प्रत्यग्। ईमौ। अञ्चेर्दीर्घश्च। प्रतीची। जश्शसोः शिः। नुमयमः। स्तोः श्चुभिश्चुः। प्रत्यञ्चि। शेषं पूर्ववत्। तकारान्तो जगच्छब्दः। वावसाने। जगत्-जगद्। ईमौ।

जगती। नुमयमः। नश्चापदान्ते झसे। जगन्ति। पुनरपि। महत्-महद् महती। न्सम्महतो० । नश्चापदान्ते झसे । महान्ति। पुनरपि। सकारान्ताः पयस्वचस्यशस्तेजस्प्रभृतयः। पयः पयसी। न्सम्महतो०। पयांसि। पुनरपि। वचः वचसी वचांसि। पुनरपि। यशः यशसी यशांसि। पुनरपि। तेजः तेजसी तेजांसि। पुनरपि इत्यादि। अदस्शब्दस्य स्यमोर्लुकि कृते स्रोर्विसर्गः। अदः। द्विवचनादौ टेरत्वे कृते मत्वोत्वे कृते। अमू। त्यादेष्टेरः स्यादौ। दस्य मः। जश्शसोः शिः। नुमयमः। नोपधायाः। मादू। अमूनि। पुनरपि। अमुना। औङि। मादू। अमूभ्याम्। एस्भि। एरी बहुत्वे। अमीभिः। सर्वादेः स्मट्। एऐऐ। मादू। अमुष्मै अमूभ्याम् अमीभ्यः। ङसिरत्। अतः सवर्णे दीर्घः सह। मादू। अमुष्मात् अमूभ्याम् अमीभ्यः। ङस्य मादू। अमुष्य। ओसि एअय् अमुयोः। सुडामः। एस्भि बहुत्वे। अमीषाम्। ङिस्मिन्। अमुष्मिन् अमुयोः। एस्भि बहुत्वे। किलात् अमीषु।

इति हसान्तनपुंसकलिङ्गप्रक्रिया ॥ ६ ॥

इदमेतदोर्द्वितीयैकवचने नपुंसके एनद्वा। नपुंसके एतदोऽन्वादेशे अमि एनदिति वक्तव्यम्। एतत् एनत्, एते एने, एतानि एनानि,। शेषं पुंवत्। केचित्तु इदम्शब्दस्याप्यन्वादेशे नपुंसके अमि एनदितीच्छन्ति। मकारान्तः किम्शब्दस्तस्य नपुंसकात्स्यमोर्लुकि कृते त्यदादेष्टेरत्वं न किंतु मोनु० अन्यत्र तु त्यदादेष्टेरत्वे कृते नपुंसके सर्वशब्दवत्। किं के कानि। किं के कानि। एवं इदं इमे इमानि। इदं इमे इमानि। तृतीयादौ सर्वत्र पुंवत् पुल्लिङ्गवत्। चकारन्तः प्रत्यच्शब्दः। नपुंसकात् स्यमोर्लुक्। चोः कुः। वावसाने। प्रत्यक्। द्विवचने ईमौ अञ्चेरलुग्दीर्घश्च स्वर० प्रतीची। बहुत्वे जश्शसोःशिः नुमयमः नश्चापदान्ते प्रत्यञ्चि प्रत्यक् प्रत्यची प्रत्यञ्चि। अग्रे तृतीयादौ पुंवत्। स्वरादौ अञ्चेरलुक् दीर्घश्च। भकारादौ चोः कुः। झबेजबाः। प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः। सुपि। चोः कुः। किला० कषयोगे क्षः। प्रत्यक्षु।

---

१ अञ्चोकारस्योपधाभावान्न दीर्घत्वम्।

एवं तिर्यक् तिरश्ची तिर्यञ्चि । अन्वक् अनूची अन्वञ्चि । गवाक्[1] गोची गवाञ्चि । इत्यादि । तकारान्तो जगच्छब्दः । स्यमोर्लुकि । जगत् । द्वित्वे । ईमौ स्वर० । बहुत्वे जश्शसोःशिः । नुमयमः नश्चा० । जगती जगन्ति शेषं कण्ठ्यम् । एवं यकृत् यकृती यकृन्ति । शकृत् शकृती शकृन्ति । महच्छब्दोऽप्येवं न वरं सौ विषये न्सम्महत इति दीर्घत्वम् । महत् महती महान्ति । महत् महती महान्ति । महता महद्भ्यामित्यादि पुंवत् । सकारान्तः पयस्शब्दः । पयः पानीयं दुग्धं वा स्यमोर्लुकि कृते स्रो० द्वित्वे ईमौ स्वर० । बहुत्वे जश्शसोः शिः । नुमयमः न्सम्महत इति दीर्घः । पयः पयसी पयांसि । तृतीयादौ स्वरादौ स्वर० । भकारादौ स्रो० हबे उओ पयसा पयोभिरित्यादि, एवं तेजस्, महस्, वचस्, यशस्, वयस्, शिरस्, तपस्, ओजस्, मनस्, तमस्, अम्भस्, एनस्, वासस्, रजस् छन्दस्, अनस्, अयस्, स्रोतस्, रेतस्, रक्षस्, श्रेयस्, उषस्, वर्चस्, मेदस्, शेफस्, श्रवस्, अर्शस्, तरस्, रंहस्, ऊधस्, यादस्, आगस्, एधस्, ओकस्, प्रभृतयः । हविष्शब्दे दोषांरः नपुंसका० स्रो० हविः हविषी ईमौ हवींषि । जश्शसोः शिः नुमयमः न्सम्महतोर्दीर्घे कृते नुमि सकार एवास्तीति न्सन्तत्वम् । अतो नुम् विसर्गव्यवधानेऽपि षत्वम् । हविषा । भ्यां भिस् भ्यस् सुप्, विषये दोषां रः जल० हविर्भ्यां हविर्भिः हविर्भ्यः हविःषु । एवं सर्पिः सर्पिषी सर्पींषि । धनुः धनुषी धनूंषि । अर्चिः अर्चिषी अर्चींषि । ज्योतिः ज्योतिषी ज्योतींषि । रोचिः रोचिषी रोचींषि । आयुः आयुषी आयूंषि । वपुः वपुषी वपूंषि । जनुः जनुषी जनूंषि । चक्षुः चक्षुषी चक्षूंषि । यजुः यजुषी यजूंषि । इत्यादि । अदस्शब्दस्य प्रथमाद्वितीययोर्विशेषस्तत्रैकवचने नपुंसकात् । स्यमोर्लुकि कृते त्यदादेष्टेरत्वं न भवति किंतु स्रो० अदः । द्वित्वे त्यदादेष्टेरकारः, दस्य मः, ईमौ, अइए, माद्, एकारस्य ऊकारः । अमू 'अमुनी' इति छान्दसं रूपम् । उक्तंच भागवते । अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते । उभे अपि न गृह्णंति मायासृष्टे विपश्चितः ॥ १ ॥ बहुत्वे त्यदादेष्टेरः, दस्य मः, जश्शसोः शिः, नुमयमः, नोपधायाः, माद्, आकारस्य ऊकारः अमूनि प्रथमावद्द्वितीया । तृतीयादौ सर्वत्र पुंवत् । ( तृ० ए० ) त्यदादेष्टे० माद् । टानास्त्रियां अमुना । ( तृ० द्वि ) त्यदा० अद्भिः माद् अमूभ्यां । ( तृ० ब ) भिस् भिस् एस्भि बहुत्वे एरीबहुत्वे

---

१ " गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः' ॥ असंख्यगामभाङ्क्षेपैर्नवाधिकशतं मतम् ॥ १ ॥ स्यम्सुप्सु नव षट् भावे षट्ठ स्युस्त्रीणि जश्शसोः ॥ चत्वारि शेषे दशके, रूपाणीति विभावय ॥ २ ॥ " गवाक्–गवाग्, गोअक्–गोअग्, गोक्–गोग्, गवाङ्, गोअङ्, गोङ् । गोची, गवाञ्ची, गोअची, गोञ्ची । गवाञ्चि, गोअञ्चि, गोञ्चि । गवाक्षु, गोअक्षु, गोक्षु, गवाङ्क्षु, गोअङ्क्षु, गोङ्क्षु, गवाङ्क्षु, गोअङ्क्षु, गोङ्क्षु । इत्यन्यत्र ।

अमीभिः। (च० ए०) त्यदादेष्टेर० दस्य मः। सर्वादेः स्मट्। माद्। किला० एऐऐ। अमुष्मै। (च०द्वि०) अद्भि। माद्। अमूभ्याम्। (च० ब०) एस्मि बहुत्वे। एरी बहुत्वे। अमीभ्यः। (पं० ए०) त्यदादेष्टे० दस्य मः ङसिरत् अतः माद् किला० अमुष्मात्। (ष० द्वि०) अद्भिः। माद्। अमूभ्यां (पं० ब०) एस्भि बहुत्वे एरीबहुत्वे। अमीभ्यः। (ष० ए०) त्यदादे० ङस्स्य दस्य मः माद् किला० अमुष्य। (ष० द्वि०) ओसि एअय् माद् अमुयोः। (ष० ब०) त्यदादे० दस्य मः। सुडामः एस्भि बहुत्वे एरी बहुत्वे किला० अमीषाम्। (स० ए०) त्यदादे० दस्य मः। ङिस्मिन् माद् किला०। (स० द्वि०) त्यदा० दस्य मः ओसि एअय् स्वर० माद्। अमुयोः। (स० ब०) एरी बहुत्वे, किला० अमीषु।

इति हसान्तनपुंसकलिङ्गसाधनप्रक्रिया ॥ ६ ॥

**अथ युष्मदस्मदोः स्वरूपं निरूप्यते। तयोश्च वाच्यलिङ्गत्वात्त्रिष्वपि लिङ्गेषु समानं रूपम्। अव्ययान्यलिङ्गानि। अलिङ्गे युष्मदस्मदी।**

**अथेति।** अथेति संज्ञासन्धिस्वरान्तहसान्तलिङ्गत्रयसाधनानन्तरम्। युष्मदस्मदोः युष्मच्च अस्मच्च युष्मदस्मदौ तयोः स्वरूपं स्वं रूपं मुख्यस्वरूपमेव निरूप्यते कथ्यते। ननु गौणत्वविशेषादिकमित्यर्थः। अत्राह परः। ननु सर्वादयो लिङ्गत्रयेऽपि साधिताः। एतौ तु कथं न साधितौ तत्रोत्तरमाह। तयोरिति तयोर्युष्मदस्मच्छब्दयोर्वाचि वचने वाग्व्यवहारकाले अलिङ्गत्वात् स्वविषये लिङ्गद्योतकाभावात् त्रिष्वपि पुंस्त्रीनपुंसकलिङ्गेषु समानं सदृशमेव रूपम्। यथा त्रिष्वपि लिङ्गेषु सर्वो जनः। सर्वा जगती। सर्वं जगत्। इत्यादिरूपभेदो दृश्यते न तथैतयोः। यथा त्वं देवः। त्वं देवी। त्वं ब्रह्म इत्यादौ न कोऽपि रूपभेदः। अतः प्राग्न साधितावित्यर्थः। अथ वाच्यमिति नाम शब्दरूपम् अभिधेयं विशेष्यपदमित्यर्थः तस्यैव लिङ्गं विद्यते ययोस्तौ वाच्यलिङ्गौ। यदि वा वाच्यस्य पुरुष, स्त्री, कुलादेर्लिङ्गमेव लिङ्गं योनिरिति बहुव्रीहिः। यदुक्तं। वाच्यमित्युच्यते भेद्यं तल्लिङ्गं भजते तु यः॥ विशेषणत्वमापन्नो वाच्यलिङ्गः स उच्यते ॥ १ ॥ अनयोः साधनमुच्यते। प्रथमैकवचने सूत्रम्।

**त्वमहं सिना। सिसहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन। त्वम्। अहम्।**

**त्वमहं सिना।** त्वं च अहं च त्वमहं (प्र.ए.) साङ्केति० सि(तृ.ए) टाना०

युष्मद्० वृत्तिः कण्ठ्या । युष्मदः सिना सह 'त्वम्' इत्यादेशः । अस्मदश्च सिना सह 'अहम्' इत्यादेशः । द्विवचने 'युष्मद्+औ । अस्मद्+औ' इति स्थिते । सूत्रम् ।

युवावौ द्विवचने । युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः ।

युवावौ द्विवचने । युवश्च आवश्च युवावौ ( प्र. द्वि. ) द्विवचने ( स. ए. ) अइए युष्मदः सर्वविभक्तिद्विवचने 'युव' आदेशः । अस्मदश्च 'आव' इत्यर्थः । 'युव+औ । आव+औ' इति स्थिते । सूत्रम् ।

आमौ । युष्मदस्मद्भ्यां पर औ आम् भवति । सवर्णे दीर्घः सह । युवाम् आवाम् ।

आमौ । आम् ( प्र.ए. ) हसेपः० । औ ( प्र.ए. ) साङ्के० स्वर० सिद्धम् । वृत्तिः सुगमा । यदादेशस्तद्वदिति । ननु आम् किमिति क्रियते अमेव कथं न क्रियते 'एकमात्रालाघवमपि पुत्रोत्सवं मन्यन्ते वैयाकरणा' इति । नहि अमि कृते अम्शसोरस्येत्यकारलोपः स्यादिति आमेव युक्तः । अनेन औ इत्यस्य आम् । सवर्णे० मोनु० युवाम् आवाम् इति सिद्धम् । बहुत्वे 'युष्मद्+अस् । अस्मद्+अस्' इति स्थिते । सूत्रम् ।

यूयं वयं जसा । जसा संहितयोर्युष्मदस्मदोर्यूयं वयमित्येतावादेशौ भवतः । यूयम्, वयम् ।

यूयं वयं जसा । यूयं च वयं च यूयंवयम् ( प्र. द्वि. ) साङ्के० । जस् ( तृ. ए. ) स्वर० सिद्धम् । अनेन जस्सहितस्य युष्मदो यूयम् इत्यादेशः । अस्मदश्च वयम् इत्यादेशः । यूयं वयमिति । अमि सूत्रम् ।

त्वन्मदेकत्वे । युष्मदस्मदोः । त्वन्मादित्येतावादेशौ भवत एकत्वे गम्यमाने ।

त्वन्मदिति । त्वच्च मच्च त्वन्मत् ( प्र. द्वि. ) साङ्के० एकस्य भाव एकत्वं तस्मिन्नेकत्वे ( स. ए. ) अइए चपा अबे जबाः स्वर० सिद्धम् । अग्रे वृत्तिः कण्ठ्या । एकवचने एकार्थवाचित्वे युष्मदस्त्वत् अस्मदश्च मत् आदेशः । 'त्वत्+अम् मत्+अम्' इति स्थिते । सूत्रम् ।

आम्स्भौ । आ अम्स्भौ । युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे । अम्शसोरस्य । त्वाम्, माम् । युवाम्, आवाम् । 'त्यदादेष्टेः' इत्यत्वे कृते शसि दीर्घत्वम् ।

आम्स्भौ । आ (प्र. ए.) साङ्के० अम् च स् च भिस् च आमस्भि । देशैकग्रहणे देशीयग्रहणं तस्मिन् आम्स्भौ (स. ए.) ङेरौङित् टिलोपः स्वर० आ अग्रे आम्स्भौ सवर्णे युष्मद् अनेन 'त्वत्' इत्यस्य त्वा 'मत्' इत्यस्य च मा अम् शसोरस्य मोनु० त्वाम् । माम् । द्विवचने तु माग्वत् । शसि युष्मद्+अस्, अस्मद्+अस् इति स्थिते त्यदा० अम् शसो० शसीति दीर्घः। वाच्यलिङ्गत्वात् केवलपुल्लिङ्गत्वाभावात् सोनः पुंस इति सूत्रेण सकारस्य नकारो न भवति। तेन विशेषमाह ।

**शसो नो वक्तव्यः । युष्मान् अस्मान् । त्वन्मदेकत्वे ।**

**शसो नो वक्तव्यः ।** शसः सकारस्य नकारो भवतीत्यर्थः। युष्मदस्मदोरेवेति शेषः । शसि युष्मान् अस्मान् इति सिद्धम् । तृतीयैकवचने त्वन्मदादेशे कृते त्यदादेष्टेरकारः । त्व+आ, म+आ इति स्थिते । सूत्रम् ।

**ए टाङ्योः । युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः । एअय् । त्वया मया । युवावौ द्विवचने । अद्रि । युवाभ्याम्, आवाभ्याम् । आम्स्भौ । युष्माभिः, अस्माभिः ।**

**ए टाङ्योः ।** ए (प्र. ए.) साङ्के० । टाङ्योः टा च ङिश्च टाङी तयोः (स. द्वि.) इयं स्वरे० स्वर० सिद्धमिदं सूत्रम् । युष्मदिति वृत्तिः कण्ठ्या । 'आदेशिवदादेशो भवति' इति न्यायात् अनेन यथाक्रमं त्वे मे । ए अय् स्वर० त्वया मया इति रूपद्वयम् । द्विवचने भ्यां युवावौ द्विवचने अद्रि । युवाभ्याम् । आवाभ्याम् । एवं चतुर्थीपंचमीद्वित्वेऽपि । भिसि आम् स्भौ इति टेराकारः युष्माभिः । अस्माभिः । चतुर्थ्येक वचने सूत्रम्

**तुभ्यं मह्यं ङया । ङया सहितयोर्युष्मदस्मदोस्तुभ्यं मह्यं इत्येतावादेशौ भवतः । तुभ्यम्, मह्यम् । युवाभ्याम्, आवाभ्याम् ।**

**तुभ्यं मह्यं ङया ।** तुभ्यं च मह्यं च तुभ्यंमह्यं (प्र. द्वि.) साङ्के० । ङे (तृ. ए.) एअय् स्वर० सिद्धम् । वृत्तिः सुबोधा । अनेन यथाक्रमं ङेसहितयोः युष्मदस्मदोः 'तुभ्यं' 'मह्यम्' आदेशौ । तुभ्यम् । मह्यम् । चतुर्थ्यां बहुत्वे । सूत्रम् ।

**भ्यस् श्भ्यम् । युष्मदस्मदोः परो भ्यस् श्भ्यं भवति । शकारो भकारादित्वव्यावृत्त्यर्थः । तेनात्वैत्वे न भवतः । त्यदादेष्टेः । युष्मभ्यम्, अस्मभ्यम् ।**

भ्यसशभ्यम् । भ्यस् ( प्र.ए. )साङ्के० शभ्यम् ( प्र.ए. ) हसेपः० युष्म-दस्मच्छब्दाभ्यां परं चतुर्थीबहुवचनं तस्य कृत्स्नस्यापि भ्यम् भवति भ्य-मादेशस्य गुरुत्वात् सर्वस्य प्राप्तौ शकारग्रहणं किमर्थमित्याह । शकारो भकारादित्वनिषेधकः । उच्चारणमात्रः । शकारो भकारादित्वव्यावृत्त्यर्थः । भकार एव आदिर्यस्य सः भकारादिस्तस्य भावो भकारादित्वं तस्य व्यावृत्त्यर्थः निषेधार्थः । भ्यम् इत्येवं चेत्क्रियते तदा अद्भि, एस्मि बहुत्वे एतयोः सूत्रयोः प्राप्तिर्भवति भकारपरत्वात् अतस्तन्निवारणार्थं 'शभ्यम्' इति क्रियते । तेनाद्वीत्यात्वम् । एस्मि बहुत्वे इति एत्वं च न भवति । अनेन चतुर्थीबहुवचनस्य भ्यस् । त्यदादेष्टे० मोनु० युष्मभ्यम् । अस्मभ्यम् । पञ्चम्येकवचने त्वन्मदादेशे कृते त्वत्+अस् मत्+अस् इति स्थिते । सूत्रम् ।

ङसिभ्यसोः श्तुः । पञ्चम्या ङसिभ्यसोः श्तुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । त्वत्, मत् । युवाभ्याम्, आवाभ्याम् । त्यदादेष्टेः । युष्मत्, अस्मत् ।

ङसि भ्यसो श्तुः । ङसिश्च भ्यस् च ङसिभ्यसौ तयोः ( ष. द्वि. ) स्त्रो० । श्तुः ( प्र. ए. ) स्त्रो० पञ्चम्या एकवचनस्य बहुवचनस्य च 'श्तु' इत्यादेशो भवति । अनेन ङसिस्थाने श्तुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । त् इति स्थितम् । त्यदादेष्टे० त्वत् मत् । युवाभ्याम् । आवाभ्याम् । बहुत्वे भ्यस्-स्थाने त् । त्यदादेष्टे० । युष्मत् । अस्मत् । षष्ठ्येकवचने सूत्रम् ।

तवमम ङसा । ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः । तव, मम । युवावौ द्विवचने । ओसि, एअय् । युवयोः, आवयोः । सर्वादित्वात्सुट् ।

तवमम ङसा । तव च मम च तवमम ( प्र. द्वि. ) साङ्के० । ङस् स्वर० ( तृ. ए. ) ङसा अनेन ङस्सहितस्य युष्मदस्तव अस्मदो मम इत्यादेशः । तव मम । ओस्विषये युव आव आदेशे कृते ओसि एअय् स्वर० युवयोः आवयोः । एवं सप्तमीद्विवचनेऽपि आमि त्यदादे० सुडामः स्वर० । युष्म + साम् । अस्म + साम् इति स्थिते सूत्रम् ।

सामाकम् । युष्मदस्मदोः परः सामाकं भवति । त्यदादेष्टेः । युष्माकम्, अस्माकम् । त्वन्मदेकत्वे । ए टाङ्योः । एअय् ।

त्वयि, मयि । युवयोः, आवयोः । आम्स्भौ । युष्मासु, अस्मासु । अथानयोर्गौणत्वे रूपविशेषो निरूप्यते । यदा एकत्वे द्वित्वे च युष्मदस्मदी समासार्थस्तु अन्यसंख्यस्तदा त्वन्मदादौ युवावौ च भवतः । वैपरीत्ये तु न स्तः । सिजसूङेङस्सु परेषु ये आदेशास्ते सदा भवेयुः । तथा चोक्तं पाणिनीये ।

सामाकम् । साम् (म. ए.) ङसेपः० आकम् ङसे पः० (म. ए.) स्वर० युष्मदस्मद्भ्यां परस्य सुट्सहितस्यामः 'आकम्' इत्यादेशो भवति । अनेन आकम् । सवर्णे० युष्माकम् । अस्माकम् । सुट्सहितस्याम आकमादेशविधानम् 'एस्मिबहुत्वे' इत्येकारनिवृत्त्यर्थं न त्वाम्सुम्यावित्याकारस्य निवृत्त्यर्थं, कृते तस्मिन् रूपविपर्ययः स्यादिति सप्तम्येकवचने त्वन्मदेकत्वे त्यदादे० एटाङ्योः एअय् स्वर० त्वयि । मयि । युवयोः । आवयोः । आम्स्भौ । युष्मासु । अस्मासु । त्यदादित्वात्सम्बोधनाभावः । तथा समासान्तत्वे प्राधान्ये च युष्मदस्मदोः सिजस्ङेङस्सु एव एते पूर्वोक्ताः त्वं, अहं, यूयं, वयं, तुभ्यं, मह्यं, तव, मम, आदेशाः स्युः । नान्यत्र अन्यत्र सि, जस्, ङे, ङस्वर्जितेषु वचनेषु ।

"समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ॥
समासार्थोऽन्यसंख्यश्चेद्युवावौ त्वन्मदावपि ॥
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ॥
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ॥
त्वन्मदावपि बाधन्ते पूर्वविप्रतिषेधतः ॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ॥
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमावपि ॥"

'समासश्चान्वये नाम्नाम्' इति समाससंज्ञायाम् । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । क्रान्ताद्यर्थे अत्यादयो द्वितीयया सह समस्यन्ते, स द्वितीयातत्पुरुषः समासो भवती-

ति, तत्पुरुषः समासः । त्वां मां वा अतिक्रान्त इति विग्रहे । अतित्वम् अत्यहम् । अतित्वाम् अतिमाम् । अतियूयम् अतिवयम् । अतित्वाम् अतिमाम् । अतित्वाम् अतिमाम् । अतित्वान् अतिमान् । अतित्वया अतिमया अतित्वाभ्याम् अतिमाभ्याम् । अतित्वाभिः अतिमाभिः। अतितुभ्यम् अतिमह्यम् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वभ्यम् अतिमभ्यम् । अतित्वत् अतिमत् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वत् अतिमत् । अतितव अतिमम । अतित्वयोः अतिमयोः । अतित्वाकम् अतिमाकम् । आमि टेरेत्वं केचिदिच्छन्ति । अतित्वयाम् अतिमयाम् । अतित्वयि अतिमयि । अतित्वयोः अतिमयोः। अतित्वासु अतिमासु । युवां आवां वा अतिक्रान्त इति विग्रहे । अत्र सिजसूङेङस्सु प्राग्वत् । औअमौषु तुल्यम् । अतित्वम् अत्यहम् । अतियुवाम् अत्यावाम् । अतियूयम् अतिवयम् । अतियुवाम् अत्यावाम् । अतियुवाम् अत्यावाम् । अतियुवान् अत्यावान् । अतियुवया अत्यावया । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवाभिः अत्यावाभिः । अतितुभ्यम् अतिमह्यम् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवभ्यम् अत्यावभ्यम् । अतियुवत् अत्यावत् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवत् अत्यावत् । अतितव अतिमम । अतियुवयोः अत्यावयोः । अतियुवाकम् अत्यावाकम् । अतियुवयाम् अत्यावयाम् इति केचित् । अतियुवयि अत्यावयि । अतियुवयोः अत्यावयोः । अतियुवासु अत्यावासु । युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे । अतित्वम् अत्यहम् । अतियुष्माम्

अत्यस्माम् । अतियूयम् अतिवयम् । अतियुष्माम् अत्यस्माम् । अतियुष्माम् अत्यस्माम् । अतियुष्मान् अत्यस्मान् । अतियुष्मया अत्यस्मया । अतियुष्माभ्याम् अत्यस्माभ्याम् । अतियुष्माभिः अत्यस्माभिः । अतितुभ्यम् अतिमह्यम् । अतियुष्माभ्याम् अत्यस्माभ्याम् । अतियुष्मभ्यम् अत्यस्मभ्यम् । अतियुष्मत् अत्यस्मत् । अतियुष्माभ्याम् अत्यस्माभ्याम् । अतियुष्मत् अत्यस्मत् । अतितव अतिमम । अतियुष्मयोः अत्यस्मयोः । अतियुष्माकम् अत्यस्माकम् । अतियुष्मयाम् अत्यस्मयाम् । इति केचित् । अतियुष्मयि अत्यस्मयि । अतियुष्मयोः अत्यस्मयोः । अतियुष्मासु अत्यस्मासु । अनेनैव प्रकारेण सर्वमुन्नेयम् ॥ ॥ इति युष्मदस्मत्स्वरूपप्रक्रिया॥१२॥

समस्यमाने । अत्रार्थे प्रक्रियाकौमुद्युक्ताः कारिकाः प्रमाणयति सेत्यादि । एकवचने त्वत् मत् । द्विवचने युवावौ । बहुवचने युष्मास्मौ । यथा त्वां मामतिक्रान्तः अतित्वम् । अत्यहम् । अतियूयम् । अतिवयम् । अतित्वाम् । अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । एवं युवाम् अतिक्रान्तः अतित्वम् । अतियुवाम् । अतियूयम् । अतियुवाम् । अतियुवाम् अतियुवान् । एवं युष्मानतिक्रान्तः । अतित्वम् । अतियुष्माम् । अतियूयम् । अतियुष्माम् २ । अतियुष्मान् । अत्रार्थे प्रक्रियाकौमुद्युक्ताः कारिका एवम् "समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी । समासार्थोऽन्यसंख्यश्चेद्युवावौ त्वन्मदावपि ॥ सुजसूङेङस्सु परत आदेशाः स्युः सदैव ते ॥ त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि॥इत्यादि। यथा प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य स प्रियत्वम् । एवं प्रियोऽहं प्रियावावां प्रिया वयं वा यस्य स प्रियाहम् । एवं जसि प्रिययूयम् । प्रियवयम् । ङेविषये प्रियतुभ्यम् । प्रियमह्यम् ङसि प्रियतव । प्रियमम तथा त्वामतिक्रान्तः इति अतित्वम् । माम् अतिक्रान्त इत्यत्यहम् । इत्यत्रापि सिजसूङेङस्सु प्राग्वदेवादेशाः स्युः। तथा द्विवचने युवावादेशौ न भवतः। यथा अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् । अतिमाम् । द्वित्वेऽपि अतित्वाम् । अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः ।

अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । अतित्वत् । अतिमत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । केचित्तु अतित्वयाम् अतिमयाम् इति । अतित्वयि । अतिमयि । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु । एवं युवाम् आवाम् अतिक्रान्त इत्यत्रापि सिजसूङेङस्सु प्राग्वत् । अतित्वम् । अत्यहम् । अतियुवाम् । अत्यावाम् । अतियूयम् । अतिवयम् । अतियुवाम् । अत्यावाम् । अतियुवाम् । अत्यावाम् । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् इत्यादि । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । इत्यादि । एवं परमत्वं, परमाहं, परमयूयं, परमवयं, परमतुभ्यं, परममह्यं, परमतव, परममम इत्यादि लोकाज्ज्ञेयम् । इति युष्मदस्मत्स्वरूपप्रक्रिया । पुनर्विशेषमाह ।

॥ अथानयोरादेशविशेषविधिर्निरूप्यते ॥

**अथानयोरिति ।** अथेति युष्मदस्मच्छब्दयोः साधनानन्तरं कश्चित् आदेशस्य विशेषः । आदेशविशेषस्तस्य विधिः, आदेशाः पूर्वं कथिताः, अथ आदेश विशेषविधिः कथ्यते इत्यध्याहारः । सूत्रम् ।

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ ।** युष्मदस्मदोर्यथासंख्येनामी आदेशाः स्युः । कीदृशयोः षष्ठीचतुर्थीद्वितीयासहितयोः । सहितग्रहणाद्युवयोः पुत्रः युष्मत्पुत्रः । आवयोः पुत्रः अस्मत्पुत्र इत्यादौ विभक्तिलोपे कृते आदेशा नेति ज्ञेयम् । तत्रैकवचनेन सह ते मे भवतः । द्विवचनेन वान्नौ । बहुवचनेन वस्नसौ ।

**युष्मदस्मदोः षष्ठीचतुर्थीति ।** युष्मदस्मदोः (प. द्वि. ) षष्ठीचतुर्थीद्वितीयाभिः (तृ. ब) ते मे (प्र. द्वि. ) साङ्कं० । वांनौ ( प्र. द्वि.) वस्नसौ स्वर० पञ्चपदमिदं सूत्रम् । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानामेकवचनद्विवचनबहुवचनेषु क्रमेण अमी अग्रे वक्ष्यमाणाः तेमेवांनौवस्नसादेशा भवन्ति । अयं भावः । षष्ठी चतुर्थ्येकवचनेन सह युष्मदस्ते अस्मदश्च मे आदेशः । द्वितीयैकवचनस्य त्वा मा इति विशेषविधानात् तेमे न भवतः(प. द्वि.) ( च. द्वि. ) (द्वि. द्वि. ) । युष्मदो वाम् अस्मदश्च नौ आदेशः । ( प. व. ) ( च. व. ) ( द्वि. व. ) युष्मदो वस् अस्मदश्च

नस् आदेशः । द्वितीयाचतुर्थीषष्ठीतिवक्तव्ये व्युत्क्रमेण षष्ठीचतुर्थीद्वितीयाभिरेत्युक्तत्वात्कचित्त्वया, मयेत्यस्मिन्नर्थे तेमे भवत इत्यादि सूचितम् । यथा श्रुतं ते निखिलं पार्थेत्यादिप्रयोगेषु । तथाच, कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम् । तथाच, गेये केन विनीतौ वाम् इत्यादिप्रथमाद्विवचनेऽपि वाम् इत्यादेशः । केचित्तु, विपर्ययविधानेन नियमो नेष्यते बुधैः । अतो विभक्तिष्वन्यासु भवन्ति वस्नसादयः । यद्वा, षष्ठीचतुर्थ्योरत्र षष्ठ्या अल्पस्वरत्वात्पूर्वनिपातः । द्वितीयापेक्षया चतुर्थ्या अल्पस्वरत्वात्पूर्वनिपात इति द्वन्द्वः । उदाहरणानि यथा ।

स्वामी ते स समायातः स्वामी मे सांप्रतं गतः ॥
नमस्ते भगवन् भूयो देहि मे मोक्षमव्ययम् ॥
स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयातनाम् ॥
राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः ॥
देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः ॥
स्वामी वो बलवान् राजा स्वामी नोऽसौ जनार्दनः ॥
नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम् ॥
सानन्दान्वः प्रपश्यामः पश्यामो नः सुदुःखिनः ॥

स्वामीति । स ते तव स्वामी समायातः । मे मम स्वामी सांप्रतं गतः । अत्र स्वामित्वे षष्ठी । तस्या एकत्वे तेमे इत्यादेशौ दर्शितौ । चतुर्थ्येकवचने दर्शयति । नम इति । भगं ज्ञानमस्यास्तीति भगवान् तस्यामंत्रणं हे भगवन् । भूयः पुनरपि वारं वारं ते तुभ्यं नमः । अत्र नमःशब्दयोगे चतुर्थी । तत्र युष्मदस्तेआदेशः । मे मह्यमक्षयं मोक्षं देहि प्रयच्छ । अत्र दानार्थे चतुर्थी । अस्मदो मेआदेश एकवचनत्वात् । द्विवचनादौ दर्शयति । स्वामी० स वां युवयोः स्वामी उच्चैरतिशयेन जहास अहसत् । किं कृत्वा । नौ आवयोर्दानयातनां पीडां दृष्ट्वा । अत्र षष्ठीद्विवचने युष्मदो वाम्, अस्मदो नौ । वां युवाभ्यां राजा भूपतिर्दानं दास्यते मधुसूदनः कृष्णः । नौ आवाभ्यां ज्ञानं तत्त्वावबोधं दास्यते । अत्र चतुर्थीद्विवचनं । वां युवाम् विष्णुर्देवोऽवतात् पातु, जनार्दनः कृष्णो नौ आवां नरकाद्रक्षतु । अत्र द्वितीयाद्विवचनं । बहुवचनं दर्शयति ।

---

द्वितीयादिव्यतिक्रमनिर्देशात् प्रथमायामपि भवति । यथा रघुकाव्ये 'एकं दृष्ट्वा धनुःपाणिं किं वो भीता व्यवस्थिताः' अत्र यूयमर्थे वः । मरुचिस्तु तृतीयायामपि व. । व. कृतं युष्माभिः कृतमित्यर्थः । २ ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रिय. ॥ ज्ञानवैराग्ययोश्चापि षण्णां भगमितीङ्गना ॥ १ ॥

स्वामीति। वो युष्माकं स्वामी राजा बलवान् बलयुक्तः । नोऽस्माकम् असौ जनार्दनः कृष्णः स्वामी षष्ठीबहुत्वे रूपमिदम्।युष्मदो वस् अस्मदो नस् (च.ब.) वो युष्मभ्यं नमः। किंविशिष्टेभ्यो वः। ब्रह्म विशेषेण जानन्तीति ब्रह्मविज्ञास्तेभ्यो ब्रह्मविज्ञेभ्यः, ज्ञानज्ञातृभ्य इत्यर्थः । नोऽस्मभ्यं ज्ञानं धनं दीयतां ।चतुर्थी बहुवचने रूपम्। वो युष्मान् वयं सानन्दान् सह आनन्देन वर्तमानान् प्रपश्यामः नोऽस्मान् सुदुःखिनोऽतीव दुःखयुक्तान् पश्यामः।पश्य त्वं नः सुखान्वितान् इति वा पाठः । द्वितीयाबहुवचने रूपमिदम् । अमि विशेषमाह सूत्रम् ।

त्वामामा । अमा सहितयोर्युष्मदस्मदोस्त्वामा इत्येतावादेशौ भवतः ।

त्वामामा । त्वामा ( प्र. द्वि. ) साङ्के० । अम् (तृ. ए.) स्वर० सवर्णे० अमा० युष्मदोऽमा सहितस्य त्वा अस्मदश्च मा आदेशः । अत्रोदाहरणम् ।

पश्यामि त्वां मदालीढं पश्य मां मदभेदकम् ॥
पश्यामि त्वा जगत्पूज्यं पश्य मा जगतांपतिम् ॥

पश्यामित्वा० । त्वामहं मदालीढं मदव्याप्तं गर्वयुतं पश्यामि । मां मदभेदकं मदोत्तारकं पश्य । पुनरादेशनिषेधमाह । सूत्रम् ।

नादौ । पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशाः स्युः ।
मम स्वामी भवेत्कृष्णस्तव स्वामी महेश्वरः ॥
तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥
तव ये शत्रवो राजन्मम तेऽप्यतिशत्रवः ॥
युष्माकं भगवान् स्वामी अस्माकं पापनाशनः ॥
संबोधनपदादग्रे न भवन्ति वसादयः ॥
अग्ने तव। देवास्मान्पाहि। पदात्परयोरनयोरेते आदेशा वक्तव्याः । त्वां पातु मां पातु। एते आदेशा नित्यमनन्वादेशे वा वक्तव्याः ।
यस्त्वं विश्वस्य जनकस्तस्मै ते विष्णवे नमः ॥
अनन्वादेशे तु त्वं मे मम वा देवोऽसि । विद्यमानपूर्वात्प्र-

थमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा वक्तव्याः ।
भक्तस्त्वमप्यहं तेन हरिस्त्वा त्रायते स मा ॥
अचाक्षुषज्ञानार्थधातूनां योगे नैते आदेशा वक्तव्याः। चेतसा त्वामीक्षते, ध्यायति, स्मरतीति वा। चाक्षुषज्ञानार्थधातुयोगे तु भक्तस्त्वा पश्यति चक्षुषा। युक्तयुक्तेऽपि निषेधः। भक्तस्तव रूपं ध्यायति ध्यायते । रूपेण सह संबन्धाद्ध्यानेन युक्तं रूपं तद्रूपेण युक्तस्य तवेत्यस्य युक्तयुक्तत्वात् ।
विशेष्यपूर्वं संबोधनेतरपूर्वं संबोधनं हित्वा अन्यस्मात्संबोधनात्परयोर्नैते आदेशा भवन्ति । इति केचित् ।
देवास्मान्पाहि नृहरे विष्णोऽस्मान्पाहि सर्वतः ॥
विशेष्यपूर्वात्, हरे कृपालो नः पाहि। संबोधनेतरपूर्वात्, सर्वदा रक्ष देव नः ।

नादौ । न ( प्र. ए. ) अव्य० आदि ( स. ए. )ङेरौङित् । टिलोपः । पश्चात्स्वर० सिद्धम् । पादः श्लोकचतुर्थांशः तेमे वांनौ वस्नस् इत्यादय आदेशा न भवन्ति । अत्रोदाहरणम् तवेति । हेराजन् ये तव शत्रवस्ते ममापि अतिशत्रवः । तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि । युष्माकं भगवान् स्वामी अस्माकं पापनाशनः । अत्र पदादित्वात्ते, मे, वः, नः, आदेशा न जाताः । सम्बोधनमामन्त्रणं तदन्तं यत्पदं तदग्रेपि वस्नसादय आदेशा बाहुल्येन न भवन्ति । यथा राजन् मम इत्येवोदाहरणम् । यथा, हे देव तव दासोऽस्मि देव तुभ्यं नमः सदा ॥ पादादाविति किम् । पादादावेव एतेषामादेशानां निषेधो नतु पादमध्ये । तत्रोदाहरणम्—श्लोकः । " पान्तु वो नरसिंहस्य नखलाङ्गूलकोटयः । हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः ॥१॥ " नरसिंहस्य नरसिंहावतारस्य नखलाङ्गूलकोटयः नखा एव लाङ्गलानि तेषां कोटयः अग्रभागा वो युष्मान् पान्तु रक्षन्तु । कथंभूताः हिरण्यकशिपोर्नाम्नो दैत्यस्य यद्वक्षो हृदयं तत्र योऽसावसृजो रुधिरस्य कर्दमः पङ्कः तेन अरुणा रक्ताः । एवंविधा नरसिंहरूपधारिणो विष्णोर्नखरूपहलाग्रभागा इत्यर्थः । पांतु व इत्यत्र पादाद्यभावान्न प्रतिषेधः । शेषं सुगमम् । पुनर्निषेधान्तरमाह । सूत्रम् ।

चादिभिश्च । चादिभिरपि योगे नैते आदेशा भवन्ति ।

युवयोरावयोश्चेशो हरिर्मामेव रक्षतु ॥
तुभ्यं मह्यं च देवेशो दद्याच्छं तुभ्यमेव च ॥

वा ह अह एव । आदिशब्देनैते चत्वार एव गृह्यन्ते नान्ये । 'न चवाहाहैवयोगे' इति पाणिनीयवचनात् । साक्षाद्योगेऽयं निषेधः । न पुनर्युक्तयुक्ते शिवो हरिश्च मे स्वामीत्यादौ ।

चादिभिश्च । चः आदिर्येषां ते चादयस्तैश्चादिभिः ( तृ. ब. )स्रो० च (प्र. ए. ) अव्य० विसर्जनीयः, स्तोः श्चुभिः श्चुः, सिद्धमिदम् । चादिभिरपि सह योगे च, वा, ह, अह, एव, एतेषां पञ्चानामव्ययानां योगेऽपि समीपवर्तित्वे सति एते वे मेवांनौवसूनसरूपा आदेशाः प्रायो न भवन्ति । यथा तव मम च समागमस्तदासीत् । तव मम वा किमप्यसाध्यं नास्ति । तव मम च महच्चकास्ति सख्यं । तव ममाह क्वचिद्भवेद्वियोगः । सखा तवैव भक्तोऽस्मि । इत्यादि । अथ चादीन्निपातानाह । सूत्रम् ।

## अथाव्ययसंग्रहः ।

चादिर्निपातः । च वा ह अह एव एवं नूनम् पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् स्वर् अन्तर् प्रातर् पुनर् भूयस् अहो स्वित् सह नम ऋते अन्तरेण अन्तरा नमस् अलम् कृतम् अमानोनाः प्रतिषेधे । ईषत् किल खलु वै आरात् दूरात् भृशं यत् तत् । स्वराश्च । इत्येवमादिर्गणो निपातसंज्ञो भवति । द्रव्यंवचनो नेति ज्ञेयम्[1] ।

चादिर्निपातः । चादि ( प्र. ए. ) स्रो० निपतत्यनेकेष्वर्थेष्विति निपातः । ( प्र. ए. ) स्रो० सिद्धम् । चवाह इत्यादि प्राग्वत् । स्वराश्च इत्येवमादिर्गणो निपातसंज्ञो भवति । एते निपाता उच्यन्ते स्वराश्चेति चकारात्प्रागुपसर्गा अपि निपातसंज्ञा भवन्ति । अथैतेषां किंचिद्विवरणं लिख्यते । च पुनरर्थे, समुच्चयार्थे च । वा विकल्पार्थे, उपमानार्थे च, । ह अह इति द्वौ खेदार्थौ पादपूरणार्थौ च ।

---

१ असत्त्वार्थाश्चादयो निपातसंज्ञा इत्यन्यत्र । यदा चैते द्रव्यवचनास्तदा निपातसंज्ञाविरह इत्यर्थिरम् ।

अहह इत्यपि खेदे आश्चर्ये च । एव निश्चयार्थे अवधारणे औपम्ये च । एवम् अमुना प्रकारेण अङ्गीकारे पूर्वोक्तस्मरणे उपमायां च । नूनं निश्चये । पृथक् भिन्नार्थे । विना अभावार्थे वर्जनार्थे च । नाना बहुप्रकारवाची । स्वस्ति कल्याणार्थे । अस्ति सत्तार्थे । दोषा रात्र्यर्थे । मृषा मिथ्या एतौ द्वौ असत्यार्थे । मिथस् परस्परार्थे । अथ, अथो एतौ आनन्तर्यार्थे मङ्गलारम्भयोश्च अर्थान्तरकथने च । ह्यस् शब्दो गतदिनार्थे । श्वस् आगामिदिनार्थे । उच्चैस् उच्चत्ववाचकः अतिशयार्थवाचकश्च । एवम् उच्चकैरपि । एवं नीचैः, नीचकैः नीचत्वार्थे हीनत्वार्थे च । स्वर् स्वर्गार्थः । अन्तर् मध्ये । प्रातः प्रभाते । पुनर्, भूयस् एतौ द्वौ पौनःपुन्ये । आहोस्वित् इत्यपि वितर्के । उत अथवार्थे । ऋते विनार्थे । सह सहार्थे । अन्तरेण विनार्थे । अन्तरा मध्यार्थः । नमस् नमस्कारे । अलं भूषायाम् निवारणे पर्याप्ते सामर्थ्येऽपि । कृतं निवारणे पूर्णार्थे च । अ, मा, नो, नाः एते चत्वारः प्रतिषेधार्थे । ईषत् न्यूनार्थे स्तोकार्थे इत्यर्थः । किल, खलु, वै, एते त्रयो निश्चयार्थे स्मरणार्थे च । आरात् निकटार्थे दूरार्थे च । दूरात् दूरार्थे । भृशम् अत्यर्थे । यत् यस्मात् कारणात् । तत् तस्मात् कारणात् । स्वराश्च अ इ उ ऋ ऌ ए ऐ ओ औ एतेऽपि निपाताः एते । स्वरा अपि अर्थान्तरावाचकत्वे निपातसंज्ञका भवन्ति । तत्र अ संबोधने निर्भर्त्सने च । आ वाक्ये स्मरणे च । इ संबोधने । ई दुःखे चिंतने च । उ रोषोक्तौ निवारणे च । ऊ प्रश्ने निश्चये रोषे च । ऋकारऌकारौ क्षोभवाचकौ स्तोभवाचकौ वा । ए संबोधने । ऐ आश्चर्ये । ओ अनुनये । औ भवत्यर्थे । ॐ अङ्गीकारे । आः भये आश्चर्ये च । इत्यादिर्गणो निपातसंज्ञो भवति । आदिशब्दादन्येऽपि ज्ञेयाः । सह, साकं, सार्द्धं, सत्रा, अमा, एते सहार्थे । कच्चित् इष्टपरिप्रश्ने । अपि कोमलामंत्रणे । नूनं निश्चये । ननु वितर्के । नक्तं रात्रिवाचकं स्यात् । अनेकांतपर्याये अनेकान्तार्थवाचक इत्यर्थः । इति समाप्त्यर्थे च । नाम इति कोमलामन्त्रणे । मन्ये इति वितर्के विचारणे च । एतेषु च केचिद्वाचकाः केचित्सूचकाः । तत्र वाचकाः पृथगादयः ते ह्यर्थं वदन्ति । सूचकाश्चादयः ते किल सूचयन्त्यतः सूचका

उच्यन्ते । केऽप्येतेषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः । आगमा इव केऽपि सुसंभूयार्थस्य साधकाः । प्रथमं विभक्त्यर्थसूचकान्निपातानाह ।

**तत्रादिर्विभक्त्यर्थे निपात्यते । तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र कुह क्व । अस्मिन्निति अत्र । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा । अन्यस्मिन्काले अन्यदा । सर्वस्मिन्काले सर्वदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । सर्वथा उभयथा अन्यथा अन्यतरथा इतरथा । तस्मादिति ततः । यस्मादिति यतः । अस्मादिति अतः । कुतः अमुतः युष्मत्तः अस्मत्तः भवत्तः । सार्वविभक्तिकस्तस् इत्येके । पूर्वतः सर्वतः पूर्वस्मिन्निति पुरस्तात् । अधरस्मिन्नित्यधरस्तात् । परस्मिन्निति परेण—परस्तात् ।**

**तत्रादिर्गणो विभक्त्यर्थे निपात्यते ।** तत्र सप्तम्यर्थे ( स. ए. ) तस्मिन् इत्यस्यार्थे ‘ तत्र ’ इति निपातः । एवं तयोः तेषु तस्यां तयोः तासु एतेष्वपि ‘ तत्र ’ इति निपातः । एवं सप्तम्यर्थे वर्त्तमानात्तच्छब्दात् त्रप्रत्ययः दलोपश्च । एवं सप्तम्यर्थे वर्त्तमानाद्यच्छब्दात् त्र प्रत्ययो दलोपो यत्र । किम् शब्दात् त्र प्रत्ययः कु आदेशः कुत्र सप्तम्यर्थे । किम् शब्दात् अ प्रत्ययः कु आदेशः उवं स्वर० क्व । यस्मिन् इत्यस्य यत्र । कस्मिन् इत्यस्य कुत्र, कुह, क्व । एवं द्वि, भवत्, युष्मदस्मदौ च वर्जयित्वा सर्वादिगणात् सप्तम्यर्थे त्र इति भवति । सर्वत्र उभयत्र अन्यत्र एकत्र पूर्वत्र परत्र इत्यादि । तस्मिन् काले तदा । यस्मिन् काले यदा । कस्मिन् काले कदा । एकस्मिन् काले एकदा । एवं सर्वदा, पक्षे सर्वस्य सः । सदा । अन्यदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । सर्वेण प्रकारेण सर्वथा । एवमन्यथा इतरथा अपरथा । तस्प्रत्ययान्तानाह पञ्चम्यर्थे तस् । तस्मादिति ततः । यस्मात् इति यतः । कस्मात् इत्यर्थे कुतः । अस्मात् इत्यर्थे अतः । एवं ग्रामतः लोकतः सर्वतः । सार्व० एके आचार्या इत्याहुः । तस् प्रत्ययः सर्वविभक्तिषु भवति सर्वासां विभक्तीनाम् अर्थे भवतीत्यर्थः । स्वमते तु पञ्चम्यर्थे एव अयम् इत्यर्थः । क्व इति कुतः । पार्श्वे

इति पार्श्वतः । पूर्वस्याम् इति पूर्वतः । एवं सर्वतः इतः इत्यादयोऽवसेयाः । पूर्वस्मिन्नित्यस्य पुरस्तात् पूर्वस्मिन् काले देशे च पूर्वस्यां दिशि चेत्यर्थः । तथाच कालापके पूर्वस्मात् दिग्देशकालार्थात् सप्तमीपं चमप्रथमान्ताद् अस्तातिः पूर्वस्य पुरनिपातः अनद्यतने । एवं अधः इति अधस्तात्,उपरिष्टात् उपरि इति,परस्मिन्निति परस्तात् परस्मिन् देशे काले परस्यां दिशि वेति । परस्मिन् इति परेण । दूरेऽर्थे वाच्ये विशेषमाह । सूत्रम् ।

**आहिच्च दूरे । दूरेऽर्थे वाच्ये सति आहिच् प्रत्ययो भवति । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि वसन्ति चाण्डालाः । चकरादाच् । दक्षिणा ।**

**आहिच्च दूरे ।** आहिच् ( प्र० ए० ) च ( अव्ययं ) दूरे ( स० ए० ) वृत्तिः सुगमा । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि चाण्डाला वसन्ति दक्षिणस्यां दिशि दूरे वसन्तीत्यर्थः । इत्यसामीप्येऽर्थे आहिप्रत्यय इति सूचितम् । एवम् उत्तराहि वसन्ति कौरवा उत्तरस्यां दिशि दूरे वसन्तीत्यर्थः । किंशब्दे विशेषमाह । सूत्रम् ।

**किमः सामान्ये चिदादिः । सर्वविभक्त्यन्तात्किंशब्दात्सामान्येऽर्थे चित् चन इत्येतौ प्रत्ययौ भवतः । कश्चित् कश्चन क्वचित् क्वचन ।**

**किमः सामान्ये० ।** किमः ( ष० ए० ) सामान्ये ( स० ए० ) चिदादिः ( प्र० ए० ) त्रिपदं सूत्रम् । किमः त्रिषु लिङ्गेषु सिद्धादेव किम्शब्दात् सामान्ये अज्ञाताद्यर्थे अनिर्द्धारितेऽर्थे सप्तसु विभक्तिषु चिदादिरिति चित्चनप्रत्ययौ भवत इत्यर्थः।अज्ञातः कः कश्चित् कौचित् केचित् काचित् किंचित् कुत्रचित् क्वचित् कश्चन काचन किंचन क्वचन एवं सप्तस्वपि विभक्तिषु । पुनर्निपातान्तरमाह । सूत्रम् ।

**तदधीनकार्त्स्न्ययोर्वा सात् । तदधीनार्थे कार्त्स्न्यार्थे वा सात्प्रत्ययो भवति । राज्ञोऽधीनं राजसात् । सर्वं भस्म इति भस्मसात् । अग्नेः अधीनमित्यग्निसात् । सात्प्रत्ययस्य षत्वं नेच्छन्ति ।**

**तदधीनेति० ।** तदधीनकार्त्स्न्ययोः ( स० द्वि० ) वा ( अव्ययं ) सात् ( प्र० ए० ) यद्यस्याधीनमायत्तं तत्तदधीनं । कृत्स्नस्य समग्रस्य भावः कार्त्स्न्यं

समग्रत्वं तदधीनं च कात्स्न्यं च तदधीनकात्स्न्यें तयोः। ततः एतयोरर्थे नाम्नः पुरतः सात्प्रत्ययो निपात्यते । राज्ञोऽधीनं राजसात् । सर्वं भस्म भवति इति भस्मसात् तदधीनकात्स्न्र्ययोरिति सात् प्रत्ययः । राजसात् भस्मसात् सात्प्रत्ययस्य षत्वं नेच्छन्ति, यथा अग्निसात् । पुनर्विशेष माह । सूत्रम् ।

**उर्युरर्यङ्गीकरणे । उरीकृत्य उररीकृत्य ।**

**उर्युरर्यङ्गीकरणे ।** उरी ( प्र० ए० ) उररी ( प्र० ए० ) अङ्गीकरणे ( स० ए० ) त्रिपदं० अङ्गीकरणेऽर्थे उरीउररीशब्दौ निपात्येते । उरीकृत्य उररीकृत्य अङ्गीकृत्येत्यर्थः । उरीकृतम् । उररीकरोति । सूत्रम् ।

**सद्यादिः काले निपात्यते । सद्यस् अद्य सपदि अधुना इदानीम् सम्प्रति साम्प्रतम् पूर्वेद्युः परेद्युः आशु शीघ्रम् झटिति तूर्णम् अपरेद्युः यर्हि तर्हि जोषम् मौनम् अन्येद्युः ।**

**सद्यादिः काले निपात्यते ।** सद्यादिः ( प्र. ए. ) काले ( स. ए. ) निपात्यते ( आत्म० प्र. ए. ) त्रिपदम् । काले अर्थे कालविशेषे सद्यादिर्निपात्यते सद्यस्तत्कालम् । अद्य सांप्रतदिने सपदि शीघ्रं अधुना इदानीं एतौ वर्तमानक्षणार्थे । अक्षिपक्ष्मावच्छिन्नः कालः क्षणः । एवं संप्रति सांप्रतमपि । झटिति, शीघ्रं, तूर्णम्, एते त्रयः औत्सुक्यार्थाः । पूर्वेद्युरिति गतदिवसार्थवाचकम् । परेद्युः दिवसान्तरवाचकम् । यर्हि, यदि, तर्हि, तदा, आदिशब्दात् कर्हि, कदा, परुत्, परारि, ऐषमः, परेद्यवि, अपरेद्युः, अन्यद्युः, उत्तरेद्युः, उभयेद्युः, इत्यादयो ज्ञेयाः । सूत्रम् ।

**प्रादिरुपसर्गः । प्र परा अप सम् अनु अव निर् निस् दुर् दुस् वि आङ् नि अधि अपि अति सु उत अभि प्रति परि उप अत् अन्तर् आविर् । अयं गण उपसर्गसंज्ञकः ।**

**प्रादिरुपसर्गः ।** प्र आदिर्यस्य स प्रादिः ( प्र. ए. ) स्त्रो० उपसृज्यते धातोः समीपे क्रियते इत्युपसर्गः ( प्र. ए. ) स्त्रो० प्रादिः अग्रे उपसर्गः ( प्र. ए. ) नामिनो रः । सिद्धं सूत्रम् । प्रादि० प्र आरम्भ यावत् आङ् । प्र १ परा २ अप ३ सम् ४ अनु ५ अव ६ निर् ७ दुर् ८ अभि ९ वि १० अधि ११ सु १२ उत् १३ अति १४ नि १५ प्रति १६ परि १७ अपि १८ उप १९ आङ् २० इति विंशति रेते उपसर्गगणः कथितः कविना। अयं प्रादिः आविःपर्यवसानो गण उपसर्गसंज्ञकः। प्रशब्दः प्रकर्षार्थे । यथा प्रणम्य प्रवादः । ' आदिकर्मणि दीर्घे च सामर्थ्ये

भृशसंभवे । वियोगे प्रीणने शुद्धीच्छाशान्तिपूजाप्रदर्शने । आदिकर्मणि प्रारब्धं प्रकृतं । आयामे प्रलंबः । सामर्थ्ये प्रभुः । भृशार्थे प्रतपति । संभवे प्रभवति । प्रीणने प्रतुष्यति । गमने प्रयातः । इच्छायां प्रार्थयते । शान्ते प्रशान्तः । मुख्ये प्रवरः । अवलोकने प्रपश्यति । शुद्धौ प्रसन्ना आपः । पूजायां प्राञ्जलिः, प्रह्वः । तत्परे पितामहात्परः प्रपितामहः । एवं प्रपौत्रः प्रशिष्यः इत्याद्यर्थेषु प्र इत्युपसर्गो ज्ञेयः ॥ १ ॥ परा इति विपरीतार्थे पराजयार्थे विमुखार्थे दूरीकरणे च । यथा पराजितः, पराभूतः, पराकृतः, पराङ्मुखः, परावृत्तः, पराक्रमः, परामर्शः॥२॥अप,सत्यार्थे विकारवर्जिते स्तैन्यकर्षणादौ । यथा अपकर्षति, अपचरति, अपशब्दः, अपनयति, पूजायामपचितिः, निह्नवे, अपजानीते, अपलाभः, अपकृतः, अपहरति ॥३॥ सम, संभवसम्यक्प्रकारादौ । यथा संभवति, मिलने सं गच्छति, समवाये, संकरः । एवं संधिः, संकेतः, संभृतः,संशयः, संरम्भः, संवृत्तम् ॥४॥अनु, अनुज्ञापश्चाद्भावसादृश्याभिमुख्ये,हीनसामीप्यवीप्सादौ च। अनुजानाति,अनुगच्छति,अनुकरोति, वत्सो मातरमनुध्यायति, अन्वर्जुनं योद्धारः, अनुमेघं, अनुग्रहं, अनुगृहम् अनुशयः, अनुबन्धः, अनुकूलः॥५॥अव, अवज्ञावलम्बनज्ञानशुद्धिव्याप्त्यादौ । अवगणयति, अवजानाति, यष्टिमवष्टम्य तिष्ठति, अवगतोर्थः, अवदातं, अवकीर्णः ॥ ६ ॥निर् निश्चयगमनातिशयनिषेधनिर्णयादौ । निर्णयति, निर्गतः, निरुपमः, निष्पन्नः, निश्चयः, निर्मक्षिकम् ॥७॥ दुरिति दुष्टदुःखकष्टाद्यर्थे । दुर्जनः, दुष्करं, दुर्लभं, दुर्भगं, दुर्गन्धम्॥८॥वि इति नानार्थेवियोगविदीर्णवैषम्यवैमनस्यविशेषणाद्यर्थे विविधं, विदारितः, विकटः, विमनाः, विशेषणादौ यथा विशिनष्टि, विरूपः, विलोमः, विस्मितं, विपन्नः, विप्रकृष्टः, विमुखः, विनयः ॥९॥आङ् इति मर्यादाभिविध्योः, ईषत्समंतादाशंसनोपदेशागमादौ । यथा ' आङ् सीमायामभिविधौ क्रियायोगेषदर्थयोः ' । आसमुद्रक्षितीशानाम्, आजन्मशुद्धानाम्, आरोहति, आशास्ते, आलते, आदत्ते, आलिङ्गति आरभते, आदत्ते, आताम्रः, आसन्नः, आसादितः, आशयः, आगच्छति ॥१०॥ नि, नितरां क्षेपणादौ, निपीय, निहितं, निक्षिपति निधीयते, दर्शने निशामयति, निवर्तते, निष्णातः, निपुणः, निद्रव्यः, निहितं, निकरः, नियुक्तः, निमंत्रणं, निकटः, नियोगः ॥११॥अधि इति अध्ययनाधीनाधिपाधिकाधिष्ठानादौ । यथा अधितिष्ठति, अधीते, अधिगुणः, अधिपतिः, अधिरोहति, स्मरणे मातुरध्येति, अधिकृतौ ग्रामे अध्याहारः ॥१२॥ अपि आच्छादने, अपिदधाति यतः अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये ' । अपिहितं द्वारम्, अपिनद्धम्, अपि वेत्ति, अपि ते कुशलं, किमपि, अपि तत्र भवान् सावद्यं सेवते । इन्द्रादयोऽपि ॥ १२ ॥ अति अतिशयादौ । ' अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽप्यति ' । यथा अतिशस्तः, अतिततं, अतिक्रामति, अ-

तिगौः, भृशार्थे अतिसारः, अतिरि, अतीतं, अतिशेते ॥ १४ ॥ सु इति प्रसन्नातिशय. सुखशोभनशुभादौ सुसाधुः, सुरूपः, सुवर्ं, सुदुष्करं, सुगन्धः, सुपूजितो राजा सुराजा, सुगौः, सुकृतं, सूक्तं, सुकरः, ॥ १५ ॥ उत् प्राबल्ये ऊर्ध्वक्रियायाम्, उत्कर्षादौ च । ' उत् प्राबल्ये वियोगे च प्रकाशे चोर्ध्वकर्मणि, उन्मदना, उत्तिष्ठति शपनात्, उन्मीलति, उद्गच्छति, उदञ्चति, उत्पन्नः, उच्चरति, उत्कर्षति, उत्सुकः, उन्मत्तः, उन्मृष्टः, उत्सवः, उत्साहः ॥ १६ ॥ अभि अभिवादने इच्छारूपसंमुखपराभवादौ । यथा अभिवदति गुरुं, नमस्करोतीत्यर्थः । अभिवादयते द्विजो द्विजम्, अभीष्टं, अभीप्सितं, अभिरूपं, अभिभवति, अभिजातः, अभिधेहि, अभ्यासः, अभितः, अभिप्रायः, अभिगच्छन्ति ॥ १७ ॥ प्रति प्रतिष्ठाप्रतिज्ञासादृश्यग्रहणाभिमुख्यसमीपहिंसाप्रतिषेधादौ । यथा प्रतिष्ठति प्रतिषेधादौ । यथा ' प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ' । प्रतिष्ठा प्रतिजानीते, प्रतिमा, प्रतिपन्नं, प्रतिसूर्यः, प्रतिशुक्रं, प्रतिग्रामं, प्रतिषिद्धं, प्रत्यादिष्टः प्रतिदानं, प्रतिक्रिया, प्रतीकारः, प्रत्युत्तरं, प्रतिलोमं, प्रतिकूलं प्रत्ययः, प्रतिपत्तिः, प्रत्यक्षं, वृक्षं वृक्षंप्रति ॥ १८ ॥ परि सामस्त्यदोषकथालिङ्गनपरिभवादौ । परिभवति, परिपालय, परीवादः, परिरिप्सते, परिष्वंगः, परिभूतः, परिचरति गुरुं, परित्रिगर्त्तेभ्यः, परिच्छेत्तुं, परिधत्ते, परिधानं, परिषत्, परिधिः, पर्यङ्कः, परिसरः, परिणामः, परिवारः॥ १९ ॥ उप इति समीपव्याप्त्युपरमप्रतिक्रियाध्ययनपुष्ट्यादौ । उपतिष्ठते, उपकुम्भम्, उपरतः, उपवासः, उपपन्नः, एधोदकस्योपस्कुरुते, उपस्कृतिः, उपेक्षा, उपपन्नं, रहसि उपकरः, उपांशु, उपमा, उपालम्भः, उपाध्यायः, उपकारः, उपचारः, उपज्ञा, उपक्रमः, उपदेशः॥ २० ॥ श्रत् श्रद्धायाम् आस्तिक्यबुद्धौ च ॥ २१ ॥ अंतर्मध्ये तिरोधाने च ॥ २२ ॥ आविः प्राकट्ये । आविःकरोति ॥ २३ ॥ अन्ये अर्था बृहद्वृत्तितो ज्ञेयाः । अयं प्रादिर्गण उपसर्गसंज्ञकः । एतेऽपि

---

१ बालानां पठनसौकर्यार्थं प्राद्युपसर्गार्थसंग्राहिकाः कारिका अत्र पठ्यन्ते । तद्यथाः—

प्रादिकर्मणि दीर्घेऽत्र भृशार्थे भवतृप्तिषु ॥ वियोगशुद्धिप्रकाशेच्छाशान्तिपूजाप्रदर्शने ॥ १ ॥
वधे गतौ दर्शने च विक्रमेऽभिमुखे भृशे ॥ अधीनमोक्षणप्रातिलोम्यकेषु परा मता ॥ २ ॥
अपो वियोगे विकृतौ विपरीते निदर्शने ॥ आनन्दे वर्जने चौरे वारणे समुदाहृतः ॥ ३ ॥
संयोगैक्ये च प्रभवे सत्यप्रत्यक्षसिद्धिषु ॥ मृषाक्षेपस्वीकरणक्रोधाभिमुखवाचि सम् ॥ ४ ॥
वेदाधिष्ठानसामीप्यपश्चाद्भावानुबन्धने ॥ साम्याभिमुखहीनेषु विसर्गे लक्षणे त्वनुः ॥ ५ ॥
ज्ञानावलम्बशुद्धीषदर्थे व्याप्ति पराभवे ॥ अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ६ ॥
निर्वियोगाश्रयादेशातिक्रमे लाभनिश्चितौ ॥ दुरीषदर्थे कृच्छ्रेऽर्थे कुत्सासंपत्तिसंकटे ॥ ७ ॥
नानावियोगातिशये भृशमोहेश्वरवाङ्मृधे ॥ पैशून्यास्मरणे भूषेषदर्थानाभिमुख्यके ॥ ८ ॥
अनवस्थामुख्यशौर्यदर्शने विरुदाहृतः ॥ आङिच्छाभयवाक्येषदर्थाश्लेषाधिकर्मणि ॥ ९ ॥
बंधनेऽभिविधौ श्लाघ्यकृच्छ्रसामीप्यसंश्रये ॥ अभिमंत्रनिवृत्त्याशादानानुभवविस्मये ॥ १० ॥

वाधकानुवर्त्तकविशेषणनिरर्थकभेदाच्चतुर्धा । यतः । 'धात्वर्थं बाधते कश्चित् कश्चित्त-मनुवर्त्तते । तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते' । बाधते यथा । पराजयते 'उपसर्गेण धात्वर्थः' इति वचनात् । तं धात्वर्थमनुवर्त्तते । यथा विजयते । वि-शिनष्टि यथा । प्रभवति । निरर्थकस्तु अशोभमानार्थः यथा । प्रलोकते । अथैतेषां प्रयोजनमाह । सूत्रम् ।

प्राग्धातोः । उपसर्गाः प्राग्धातोः प्रयोक्तव्याः ।

प्राग्धातोः । प्राक् ( प्र० ए० ) धातोः ( पं० ए० ) ङसिङसो० । सिद्धम् । उपसर्गा धातोर्भ्वादेः क्रियायोगे प्राक् पूर्वम् आदौ प्रयोक्तव्याः । यथा प्रभवतीत्या-दि । अथ प्रादीनां चादीनां च संज्ञामाह । सूत्रम् ।

तदव्ययम् । तदिदं प्रादिचादिशब्दरूपमव्ययसंज्ञं भवति ।

तदव्ययम् । तद् ( प्र० ए० ) नपुंसकात्० । अव्ययं न व्येति न क्षयं या-तीति अव्ययम् ( प्र. ए. ) अतोऽम् अमृशसो० । मोऽनु० । पश्चात् स्वर० । तदिदं पू-र्वोक्तं चादि चवाहेत्यारभ्य आविःपर्यन्तं यत् शब्दरूपं तत् अव्ययसंज्ञं भवति पुनः ।

क्त्वाद्यन्तं च । क्त्वाद्यन्तं शब्दरूपमव्ययसंज्ञं भवति । क्त्वा च्वि क्यप् तुम् णम् डाच् वतु आम् धा कृत्वस् शस् तु इत्यादि । कृत्वा गत्वा भूत्वा इत्यादि । प्रणम्य, कर्त्तुं, गा-तुं, दुःखाकरोति, घटवत्, कुतस्तराम् ।

क्त्वाद्यन्तं च । क्त्वादीति, पूर्वकाले क्त्वा इति सूत्रोत्पन्नः आदौ यस्य स. क्त्वादिः । भुवो भावे क्यप् इति यावत् सोऽन्तो यस्य तत् क्त्वाद्यन्तं, क्त्वा, तुम्, क्यप्

---

[illegible] ॥ ११ ॥
[illegible] ॥ १२ ॥
[illegible] ॥ १३ ॥
[illegible] ॥ १४ ॥
[illegible] ॥ १५ ॥
[illegible] ॥ १६ ॥
[illegible] ॥ १७ ॥
[illegible] ॥ १८ ॥
[illegible] ॥ १९ ॥ ८ ॥

धा,कृत्वस्,शस्,णम्, वत्, आम् प्रत्ययान्तः शब्दः । तदपि अव्ययसंज्ञमित्यर्थः । यथा कृत्वा, दत्वा, कर्त्तुं, भोक्तुं, प्रणिपत्य, प्रणम्य, द्विधा, त्रिधा, चतुर्धा, पञ्चकृत्वः, सप्तकृत्वः, बहुशः, पदशः, कारंकारम्, पायंपायम्, घटवत् पटवत्, द्विः, त्रिः, इत्यादि । ततः किं कार्यमित्याह । सूत्रम् ।

**अव्ययाद्विभक्तेर्लुक् । अव्ययात्परस्या विभक्तेर्लुग् भवति । आपश्चेति वक्तव्यम् ।**

**अव्ययाद्विभक्तेर्लुक्** । अव्यय ( पं. ए. ) ङसिरत् सवर्णे० विभक्ति ( प ए. ) ङिति ङस्य चपा अवे० लुक् ( प्र. ए. ) हसेपः० नामिनोरः । सिद्धम् । अव्ययात्परा या विभक्तिस्तस्य लुग्भवति तत्रापि विशेषमाह ।

**न शब्दनिर्देशे । अव्ययानां शब्दत्वेन रूपनिर्देशे सति विभक्तेरलुग्भवत्यव्ययानां न च लिङ्गादिनियमः । तदुक्तम् ।**

**न शब्दनिर्देशे** । नतु शब्दनिर्देशे विभक्तेर्लुग् भवति । शब्दस्य रूपत्वेन प्रतिपादनं शब्दनिर्देशः । अव्ययस्य नामग्रहणं न तु तदर्थवाचकत्वमित्यर्थः । यथा अवाप्योरुपसर्गयोरिति । तथा द्वितीयवृत्तौ क्रीडोऽनुसंपरिभ्यः । समवप्रोपविभ्यस्थः । उद्विभ्यां तपः । इत्यादौ शब्दनिर्देशत्वादव्ययात्परस्याया अपि विभक्तेर्न लुक् च । पुनः अव्ययानां लिङ्गादिनियमो नास्ति लिङ्गविभक्तिवचनभेदो न । अस्मिन्नर्थे पाणिनीयानां संमतिमाह । श्लोकः ।

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥**

**सदृशमिति** । यत्रिषु लिङ्गेषु पुंस्त्रीनपुंसकेषु सदृशं, च पुनः सर्वासु प्रथमादिप सप्तम्यन्तासु विभक्तिषु सदृशं, सर्वेषु च एकद्विबहुवचनेषु सदृशं समानरूपं यन्न व्येति व्ययं न याति रूपान्तरं न भजते तदव्ययमित्युच्यते । अव्ययोपसंहारम् अग्रेतनसूत्रसम्बन्धं च व्याचिकीर्षुः फक्किकामाह ।

**उक्तान्यलिङ्गान्यव्ययानि ॥ इति आदेशविशेषप्रक्रिया ॥**

**उक्तानीति** । अव्ययानि उक्तानि कथितानि । किंभूतानि अलिङ्गानि पुंस्त्वादिलिङ्गभेदरहितानि । ॥ इत्यव्ययसंग्रहः ॥

**अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ।**

अधुना वक्ष्यमाणसूत्रे लिङ्गविशेषविजिज्ञापयिषया लिङ्गं रूपविशेषस्तस्य विशेषेण ज्ञापयितुमिच्छया स्त्रीलिङ्गभेदज्ञापनाय स्त्रीप्रत्ययाः स्त्रीत्वसूचकाः स्त्रीलिङ्गज्ञापका ये प्रत्ययास्ते प्रस्तूयन्ते प्रारम्यन्ते इत्यर्थः । सूत्रम् ।

आबतः स्त्रियाम् । अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति । जाया माया श्रद्धा मेधा धारा धरा इत्यादि ।

आबतः स्त्रियाम् । आप् ( प्र. ए. ) हसेपः० अत् ( पं. ए. ) स्वर० सो० वपा० स्त्री ( स. ए. ) स्त्रियां योः स्त्रीभुवोः स्वर० सिद्धम् । अकारान्तं स्त्रियां वर्तमानं स्त्रीलिङ्गत्वेन निर्दिष्टं यन्नाम तस्मात्परत आप्प्रत्ययो भवति । पकारः सिलोपार्थः । उदाहरणानि । जाय, माय, मेध, श्रद्ध, धार, अनेन आप्प्रत्ययः सर्वत्र । सवर्णे० आप् इति सेर्लोपः । अग्रे गङ्गावत् । पुनर्विशेषमाह ।

अजादिभ्यश्चाप् वक्तव्यः ।

अजाश्वाकोकिलाबालावत्सादौ त्रिफलादिके ॥
ईबादेरपवादार्थमजादेर्ग्रहणं पृथक् ॥

अजादेश्चेति चकारग्रहणाच्छूद्राकन्यकेत्यादौ प्रथमवयोवाचकत्वेन जातिवाचकत्वेन च ईप् प्राप्तः, सोऽजादित्वान्न भवतीति सूचितम् । अजा एडका कोकिला बाला शूद्रा गणिका इत्यादि ।

अजादेरिति । आबतः स्त्रियामित्याप्प्रसिद्धौ पुनरजादेरिति जातेरयोपधादिति ईपो निषेधार्थं पठ्यते । अजादेरिति । अजादेः शब्दगणात् जातिवाचित्वेपि आप्प्रत्ययो भवति । अत्र कारिकामाह । अजाश्वेति । अजा, एडका, कोकिला, बाला, शूद्रा, गणिका, अत्र शूद्रा आभीरजातिः । एवं अश्वा, चटका, मूषिका, बलाका, मत्स्या, इत्यजादयः । अत्र अजादेरित्याप् । सवर्णे० ( प्र. ए. ) आपः । सूत्रम् ।

काप्यतः । कापि इ अतः । स्त्रियां कापि परे पूर्वस्याकारस्य इकारो भवति । कन्यकादौ न भवति । करोतीति कारिका । पचतीति पाचिका । पठतीति पाठिका ।

काप्यतः । ककारेण सहित आप् काप् तस्मिन् कापि ( स. ए. ) अग्रे इ ( प्र. ए. ) साङ्केतिकम् । अग्रे अत् ( ष. ए. ) स्वर० सो० । कापि अग्रे इ सवर्णे०

अग्रे अतः इयं स्वरे० स्वर० सूत्रं सिद्धम् । स्त्रियामिति स्त्रीलिङ्गे कसहिते आपि प्रत्यये परे अकारस्य इकारो भवति उदाहरणं च डुकृञ् करणे कृ, डुपचष् पाके पच्, पठ् व्यक्तायां वाचि पठ्, करोतीति कारकः, पचतीति पाचकः, पठतीति पाठकः, तृवुणामिति वुण् प्रत्ययः । वुधातोर्नामिनः इति वृद्धिः कृ । इत्यस्य कार पच् इत्यत्र अत उपधाया इति प इत्यस्य पा । युवोरनाकाविति वु इत्यस्य अकादेशः । स्वर० कारकः, पाचकः, पाठकः । सिद्धं ततः आवतःस्त्रियां सवर्णे० ततः काप्यतः इत्यनेन अकारस्य इकारो भवति । (प्र. ए. ) सु आप इति सेर्लोपः कारिका पाचिका पाठिका इति रूपत्रयं । कारिका तु स्वल्पवृत्तौ बहोरर्थस्य सूचिका । एवमन्येऽप्यवसेयाः । वाटिका, शाटिका । कन्यायाः कापि परे ह्रस्वतैव न त्विकारः । कन्यका इत्यादि । तथा बहुपरिव्राजका बहुपाठका । अथ आप्प्रत्ययाधिकारे व्यञ्जनेभ्योऽपि तत्कारणसूचकं श्लोकमाह ।

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥
आपं चैव हसान्तानां यथा वाचा निशा दिशा ॥

अवगाह्य, वगाह्य । अपिहितम् पिहितम्, अपिधानम्, पिधानम् ।

वष्टिरिति । भागुरिराचार्यः अतोऽकारस्य लोपं वष्टि अभिलषति । कयो 'अव, अपि' इत्येतयोर्द्वयोरुपसर्गयोः । यथा—पिदधाति मुखम्, अपिधानं पिधानं, अवगाहः वगाहः, विमलगिरिवतंसः विमलगिर्यवतंसः । तोयनिधौ वगाह्येत्यादयः । च पुनः एव अवधारणे हसान्तानां शब्दानाम् आपं आप्प्रत्ययं वष्टि यथेत्युदाहरणोपन्यासे । वाच्, निश्, दिश्, सर्वत्र आप् । स्वर० आपः इति । श्लोकव्याख्या । अथ कावधिकारात्कापि परे अन्यत्कृत्यमाह । सूत्रम् ।

ह्रस्वो वा स्त्रियाम् । कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भवति । तरतमरूपकल्पास्तरादयः । वेण्येव वेणिका, वेणीका । नद्येव नदिका, नदीका । अतिशयेन प्रशस्या इति श्रेयसी । अतिशयेन श्रेयसी इति श्रेयसितरा, श्रेयसीतरा ।

ह्रस्वो वा स्त्रियाम् । ह्रस्व ( प्र. ए. ) सो० वा ( प्र. ए. ) अव्यया० हवे । उभौ । स्त्रियामित्यादि वृत्तिः सुगमा । नवरं तरादाविति तरतमौ तद्धितप्रत्य-

यौ तरतमेयस्विष्ठाप्रकर्षे इति सूत्रोत्पन्नौ उदा० वेणी, नदी । वेण्येव वेणीका वेणिका वा । नद्येव नदीका नदिका वा । स्वार्थेऽपीतिक प्रत्ययः । यद्वा ह्रस्वा वेणी वेणीका वेणिका वा । ह्रस्वा नदी नदिका वा नदीका । ह्रस्वात् कप्रत्ययः सर्वत्र आबतः स्त्रियामित्याप् अनेन सूत्रेण एकत्र 'णी' इत्येतस्य 'णि' नदी इत्यस्य नदि सर्वत्र ( प्र. ए. ) सु आपः अग्रे श्रेयसी । अतिशयेन श्रेयसी श्रेयसितरा श्रेयसीतरा वा । तरतमेयस्विष्ठ इति तरप्रत्ययः । ह्रस्वोवेति 'सी' इत्यस्य 'सि' एवं श्रेयसीतमा श्रेयसितमा तरप्रत्यये परे कार्यं विशेषमाह ।

**तरतः पूर्वस्य पुंवत् । श्रेयस्तरा । विदुषितरा-विदुषीतरा-विद्वत्तरा । भवतितरा-भवतीतरा-भवत्तरा । सतितरा-सतीतरा-सत्तरा । नौकादौ न भवति ।**

**तरतः पूर्वस्य पुंवत् ।** अनेन पुंवद्भावे श्रेयस्तरेति । प्रयोगान्तरे ह्रस्वनिषेधमाह ।

**नौकादाविति ।** ह्रस्वा नौः नौका इत्यादौ शब्दे नुका इति पदं न भवति । एवं सुरैका सुग्लौका द्यौः । एवमन्येऽपि यथासंभवमवसेयाः । पुनर्विशेषमाह ।

**आबन्तस्यानाबन्तस्यापि कंप्रत्यये परे बहुव्रीहौ वा । बहुमालकः—बहुमालाकः । सुसोमपाकः-सुसोमपकः । वाग्रहणादेवेयं विवक्षा । निश्चीय पतन्त्यनेकेष्वर्थेष्विति निपाताः । निपातानामनेकार्थत्वात् । उक्तं हि ।**

**आबन्तस्येति ।** अर्थः सुगमः । कुतो ह्रस्वनिषेध इत्यत आह ।

**वाग्रहणादेवेति** सुगमम् । अत्राह परः । ननु विकल्पसूचको वाशब्दः कथं निषेधार्थं सूचयति तत्राह । निपातानामनेकार्थत्वात् । कथं, निपतन्ति निश्चयेन नितरां वा पतन्ति प्रवर्त्तन्ते अन्येषु बह्वर्थेषु इति निपाताः । यथा चशब्दः पुनरर्थः समुच्चयार्थश्च । एवं वाशब्दो विकल्पार्थो निषेधार्थश्चेति । कुत्र चिद्विकल्पं कुत्रचिन्निषेधं सूचयतीति न दोषः । अत्रार्थे प्रक्रियाकौमुद्युक्तेः प्रमाणमाह ।

---

१ सीमन् शब्दस्य वा आप् टिलोपश्च । सीमा सीमानौ सीमा सीमे । अज्ञाते कुत्सिते चैव संज्ञायामनुकम्पने ॥ तद्युक्तनीतावप्यल्पे ह्रस्वे वाच्ये च क. स्मृतः ॥१॥ अज्ञाते अमुकः, कुत्सिते अकः, संज्ञाया देवदत्तकः। तद्युक्तनीतौ गुडेन मिश्रा. धानाः गुडधानकाः, अल्पे अल्पं तैलं तैलकं, ह्रस्वत्वे ह्रस्वा वृक्षा वृक्षकाः,चपुनः स्वार्थेपि चौर एव चौरकः ।

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ॥
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥

निपाताश्चेत्यादि । स्त्रीप्रत्ययाधिकारादाप्प्रत्ययमुक्त्वा ईप्प्रत्ययमाह । सूत्रम् ।

न्रण ईप् । नकारान्तादृकारान्तादणन्ताच्च स्त्रियामीप् प्रत्ययो भवति । दण्डिनी करिणी मालिनी । ईपि राज्ञोऽलोपो वक्तव्यः । राज्ञी । श्वादेः, शुनी, कर्त्री, हर्त्री, औपगवी ।

न्रण ईप् । न ऋ अण् न्‌च ऋश्च अण् । च नृण् तस्मात् न्रणः ( पं. ए. ) स्वर० ऋरं स्वर० स्रो० ईप् ( प्र. ए. ) हसेपः० । नकारान्ता इन्प्रत्ययादयः ऋकारान्ताः, तृप्रत्ययान्तादयः, अणन्ता औपगवादयः एतेभ्यः शब्देभ्यः स्त्रियां स्त्रीलिङ्गे ईप्प्रत्ययो भवति । उदा० दण्ड, दन्त, कर, माला, दण्डोऽस्त्यस्या दण्डिनी, दन्तोऽस्त्यस्या इति दन्तिनी, करोऽस्त्यस्या इति करिणी, माला अस्त्यस्या इति मालिनी, मान्तोपधादिति इन् प्रत्ययः । 'यस्य लोपः' इति अवर्णलोपः । स्वर० अग्रे न्रण ईप् इति सूत्रेण ईप् प्रत्ययः स्वर० ( प्र. ए. ) सु । हसेपः । करिणी इत्यत्र श्रुर्णो० इति सूत्रेण न स्य णः । एवं राजन् अग्रे ईपि प्रत्ययः ईपि परे राज्ञो राजन् शब्दसंबन्धिनोऽकारस्य लोपो वक्तव्यः अनेन उपधाया अकारस्य लोपः स्तोश्चुभिः श्चुरिति नस्य ञः । जञोर्ज्ञः स्वर० राज्ञी । अन्येऽपि श्वन् । न्रण ईप् श्वादेः० स्वर० शुनी मघोनी इत्यादयो नान्ताः । युवन्शब्दस्य युवतिरिति वक्ष्यति । अथ ऋकारान्ताः । हृञ्हरणे हृ, डुकृञ्करणे कृ । हरतीति हर्त्री, करोतीति कर्त्री । शीले तृन् प्रत्ययः । गुणः, करः, हरः । राचपोढ्डिः जलतुं० ऋकारान्तत्वात् न्रण ईप् इतीप् ऋरं स्वर० । अथ अणन्ताः । उपगुः उपगोरपत्यं औपगवी अपत्ये अण् । आदि स्वरस्य ञ्णिति वृद्धिः । उ इत्यस्य औ ओ अव् स्वरे इति ओकारस्य अव् स्वर० अणन्तत्वादीप् औपगव+ई इति स्थिते । सूत्रम् ।

यस्य लोपः । इश्च अश्च यः तस्य लोपो भवति स्वरे यकारे च परे । विभक्तिस्वरं युप्रत्ययं च वर्जयित्वान्यस्मिन्स्वरे यकारे च परे इति ज्ञेयम् । तेन देवे वातायुः ऊर्णायुः इत्यत्र न भवति । समासतद्धितस्त्रीप्रत्ययेष्वयं विधिर्वेदितव्यः ।

यस्य लोपः । इश्च अश्च यस्तस्य यस्य ( ष. ए. ) ङस् ङस्य इयं स्वरे । स्वर० । लोपः ( प्र. ए. ) सु सो० सिद्धम् । यद्वा इश्च ई च ई सवर्णे० अश्च आश्च आः ततः ईश्च आश्च या ( ष. ए. ) नपुंसकस्येति ह्रस्वः ङस्य । लोपः ( प्र. ए. ) सो० इति । इकारस्य ईकारस्य च अकारस्य आकारस्य च लोपो भवति । वृत्तिः कण्ठ्या।नवरं यस्येति इवर्णस्य अवर्णस्य च लोपो भवति ईपि प्रत्यये परे तद्धिते स्वरे परे यकारे च परे अनेन वकारस्य अलोपः। स्वर० औपगवीति सिद्धम् । 'ञण ईप्' इत्यस्यापवादमाह ।

स्वस्रादीनामन्नन्तानां संख्यावाचिनां च नेब् वक्तव्यः ।
स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥
स्वसा दुहिता सीमा पञ्चेत्यादि ।

स्वस्रादीनामिति । स्वस्रादीनामृदन्तत्वे पञ्चादीनां नकारान्तत्वेऽपि ईप् न स्यात् । स्वसा, दुहिता, ननान्दा, माता, याता, तिस्रः, चतस्रः, पञ्च, सप्त, इत्यादि । के ते स्वस्रादय इत्यपेक्षायामाह स्वसेति ।

पादन्तात्स्त्रियामीब् वा वक्तव्यः । द्विपदी-द्विपात् ॥ ऋचि पादन्तादाबेव वक्तव्यो न ईप् । पादः पद् । द्विपदा ऋक् । अन्नन्ताद्बहुव्रीहेर्डाब् वा वाच्यः । बहुसीमा बहुसीमे बहुसीमाः । पक्षे बहुसीमा बहुसीमानौ बहुसीमानः । बहुयज्वा बहुयज्वे बहुयज्वाः । पक्षे बहुयज्वा बहुयज्वानौ बहुयज्वानः ॥ उपधालोपिनोऽन्नन्ताद्बहुव्रीहेरीब् वा । बहुराज्ञी बहुराज्ञ्यौ । पक्षे डाप् । बहुराजा बहुराजे । डापोऽप्यभावे बहुराजा बहुराजानौ ।संख्यादेर्दाम्न ईप् ।द्विदाम्नी । पादन्तादित्यारभ्य संख्यादेर्दाम्न ईबित्यन्तं सुगमम् । सूत्रम् ।

षट्वितः । षकारटकारउकारऋकारानुबन्धाच्च स्त्रियामीप्प्रत्ययो भवति।ष् च ट् च उश्च ऋश्च एषां समाहारः ष्ट्वृ। ष्ट्वृ इत् यस्येति ष्ट्वित्।तस्मात् ष्ट्वितः। ष् वराकी । ट् कुरुचरी । उ गोमती । ऋ पचन्ती । पठन्ती । धातोरुदितो

न । पर्णध्वत् उखास्रत ॥ अप्ययोरान्नित्यम् । अनेन नुमागमः । ऋ पचन्ती पठन्ती दीव्यन्ती । वा दीपोः शतुः । अवर्णात्परस्य शतुर्वा नुमागमो भवति ईकारे ईपि च परे। नुदती, नुदन्ती ।

षूत्रितः। ष् च ट् च उश्च ऋश्च ष्ट्वृस्ते इतो यस्य स ष्ट्वित् तस्मात् ष्ट्वितः। (पं. ए.) अम् मध्ये उवं ऋरं स्वर० सो० इत् इति पदं षकारादिषु प्रत्येकं योज्यं। तेन षकारानुबन्धाः षाकप्रत्ययान्तादयः । टकारानुबन्धाः ट प्रत्ययान्तादयः। उकारानुबन्धा मत्वन्तादयः। ऋकारानुबन्धाः शतृप्रत्ययान्तादयस्तत एतेभ्यः स्त्रियामीप् प्रत्ययो भवति । षानुबन्धमाह वर्गनिवारणे वर् । षाकोकणः इति षाकप्रत्ययः षकारस्येत्संज्ञत्वाल्लोपः। आकः स्वर० पकारानुबन्धत्वात् ष्ट्वितः अनेन ईप् प्रत्ययः। यस्य लोपः । स्वर० ( प्र. ए. ) हसेपः० ।टानुबन्धो यथा चर गतिभक्षणयोः। चर् कुरुपूर्वः । कुरुषु देशेषु चरतीति कुरुचरी ।अटाविति टप्रत्ययः शेषं प्राग्वत् ।ऋकारानुबन्धा यथा डु पचष् पाके पच्, पठ व्यक्तायां वाचि पठ, शतृशानाविति शतृ प्रत्ययः । ऋकार इत् अत् अप् कर्त्तरीति अप् प्रत्ययः। अ स्वर० अदे इत्यप्रत्ययाकारस्य लोपः ।स्वर० ऋकारानुबन्धत्वात् ईप् प्रत्ययः।अप्ययोरान्नित्यमितिनुमागमः नश्चापदान्ते झसे स्वर० शेषं प्राग्वत् । ष्ट्वित इति केवलधातोर्न भवति तेन त्रपूष् लज्जायाम् त्रपा, क्षमूष् क्षमायाम् । धेट्पाने इत्यस्य तु भवति स्तनन्धयी। शेषं सुगमम्। सूत्रम् ।

नदादेः । नदादेर्गणास्त्रियामीप्प्रत्ययो भवति । नदी, गौरी, गौतमी । नदादिराकृतिगणः। तेन चतुर्थी, पञ्चमी, द्वादशी, पौर्णमासी इत्यादि। ईप्यनडुहो वाम् वक्तव्यः। अनड्वाही-अनडुही । हायनाद्वयसि च । द्विहायनी चतुर्हायनी । पुरुषाद्वा परिमाणे । द्विपुरुषी-द्विपुरुषा वा परिखा।

नदादेरिति। नद आदिर्यस्य स नदादिस्तस्मात् ( पं. ए. ) ङिति इति इकारस्य एकारः ङस्येत्यकारलोपः सो० नदादिर्योऽसौ गणस्तस्मात् स्त्रीलिङ्गे ईप्प्रत्ययो भवति नद, गौर, गौतम, देव, अनेन ईप्प्रत्यये यस्य लोपः स्वर० ( प्र. ए. ) हसेपः० नदादिराकृतिगणो द्रष्टव्यः। यथा न र्चकी, तैषी, पौषी,मत्सी, ईबित्यादि अनडुही अनड्वाही, मातामही, पितामही, सूरी, अगस्ती, त्रिदशी । शेषं सुगमम् सूत्रम् ।

इन्द्रादेरानीप् च । इन्द्रादेर्गणात्स्त्रियामानीप्प्रत्ययो भवति। इन्द्रादेरित्यादिशब्दादिन्द्र-ब्रह्म-रुद्र-भव-शर्व-मृड -वरुणादयः । इन्द्राणी । ब्रह्मशब्दस्य नलोपो वाच्यः । ब्रह्माणी । रुद्राणी, मृडानी, वरुणानी । चकारान्मातुलोपाध्यायक्षत्रियाचार्यसूर्याद्वा ।

इन्द्रादेरानीप् च । इन्द्रादि ( पं. ए. ) ङि ति ङस्य लो० आनीप् ( प्र.ए. ) हसे पः० पश्चान्नामिनोरः स्वर० । केचित्तु इंद्रादेः आन ईप् च इति चतुःपदं मन्यन्ते; तन्मते इन्द्रादेः ईप्प्रत्ययः आन आगमश्चेति । इन्द्रादेर्गणात् स्त्रियां आनीप्प्रत्ययो भवति। इन्द्र, भव, शर्व, मृड, वरुण, ब्रह्म, रुद्र, अनेन सूत्रेण आनीप्प्रत्ययो भवति यथासंभवं नकारस्य णकारः। यस्य लोपः। इन्द्रस्य स्त्री इन्द्राणी स्वर० ( प्र.ए. ) हसेपः० । सूत्रम् मातुलेत्यादि । मातुलश्च उपाध्यायश्च क्षत्रियश्च आचार्यश्च सूर्यश्च मातुलोपाध्यायक्षत्रियाचार्यसूर्यं तत्त एतस्माच्छब्दपञ्चकाद्वा आनीप् प्रत्ययो भवति ।

आचार्यक्षत्रियाभ्यां वा स्वार्थे । आचार्याणी-आचार्या ।

आचार्यक्षत्रियाभ्यां तु स्वार्थे एव आनीप् । मातुल-एकत्र आनीप् अन्यत्र ईप् यस्य लोपः शेषं सुकरम् । मातुली, मातुलानी । एवम् उपाध्याय एकत्र आनीप् अन्यत्र ईप् उपाध्यायानी उपाध्यायी । एवं क्षत्रियसूर्ययोः रुहनौं० आचार्यादणत्वमिति आचार्यानी आचार्या, क्षत्रियाणी क्षत्रिया, सूर्याणी सूर्या, अर्याणी अर्या । पुंयोगे तु ईप्प्रत्यय एव क्षत्रियी आचार्यी उपाध्यायी । स्वयं व्याख्यात्री तु उपाध्याया । अत्र आप् ।

हिमारण्ययोर्महत्त्वे । महद्धिमं हिमानी । महदरण्यमरण्यानी ।

हिमारण्ययोर्महत्त्वे । आनीप् । महत् हिमं हिमानी, महत् अरण्यम् अरण्यानी ।

यवनाल्लिप्याम् । यवनानां लिपिर्यवनानी ।

यवनशब्दाल्लिप्यामानीप् । यवनानां तुरुष्काणां लिपिर्यवनानी ।

यवाद्दोषे । दुष्टो यवो यवानी ।

यवाद्दोषे आनीप् । दुष्टो यवो यवानी ।

ईप्समाहारे गुणश्च । त्रयाणां समाहारः त्रयी ।

ईप् समाहारे गुणश्च । समाहार एकीभावः तत्रार्थे ईप् प्रत्ययो भवति नामिनो गुणश्च । त्रयाणां समाहारस्त्रयी समाहारत्वात् ईप् इकारस्य च गुणः । ए अय् स्वर० ( प्र. ए. ) हसेपः० । केचित्तु ईप्समाहारे गुणश्चेति न मन्यन्ते । तन्मते तयायटौ संख्यायामिति त्रिशब्दादयटि कृते यस्येतीकारलोपे टित्वात् ष्ट्वित इतीप् । पुनर्यस्य लोपः । स्वर० त्रयोऽवयवा अस्या इति त्रयी ।

पुंयोगे च । पुंयोगे च स्त्रियामीप्प्रत्ययो भवति । शूद्रस्य भार्या शूद्री । गणकी । गोपालिकादीनां न । गोपालिका पशुपालिका । सूर्याद्देवतायां चाप् । सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ।

पुंयोगे च । पुमान् पुरुषः तस्य योगेऽपि ईप् प्रत्ययो भवति । शूद्रस्य भार्या शूद्री । जात्या या काचिद्भवतु परं शूद्रस्य पुरुषस्य स्त्रीत्वात् शूद्री । गणकस्य भार्या गणकी ईप्प्रत्ययः । यस्य लोपः । शेषं सुकरम् । सूत्रम् ।

जातेरयोपधात् । जातिवाचिनोऽयकारोपधादकारान्तात्स्त्रियामीप्प्रत्ययो भवति । अस्त्रीविषयादिति वाच्यम् । तेन मक्षिका बलाका इत्यादौ न । गवयहयमुकयमत्स्यमनुष्याणां न निषेधः । गवयी इत्यादि । शूकरी, हंसी, कुक्कुटी, ब्राह्मणी । अयकारोपधग्रहणात्क्षत्रिया वैश्या ॥ शूद्राजातौ न । शूद्रस्य जातिः शूद्रा । महत्पूर्वात्तु ईप् । महाशूद्री आभीरजातिः । पुंयोगे च । महाशूद्रस्य भार्या महाशूद्री ।

जातेरयोपधात् । जाति ( पं. ए. ) ङितिङस्य सो० अयोपधः, यो यकार उपधा यस्य स योपधः ततो न योपधः अयोपधस्तस्मात् ( पं. ए. ) ङसिरत् सवर्णे० पश्चान्नामिनो रः । स्वर० सिद्धं जातिर्मेपादिका आकृतिः आकारः ग्रहणं व्यञ्जकं यस्याः सा जातिः तांवक्तीति जातिवाची तस्मात् । स जातिवाची शब्दो यकारोपधोऽपि स्यादत आह । अयकारोपधादिति । यकारोपधवर्जितादित्यर्थः । यकारोपधवर्जिता अपरेऽपि स्वराः स्युरत आह । अकारान्तादिति सुगमम् । जाति-

लक्षणमाह । 'आकृतिग्रहणा जातिः लिङ्गानां च न सर्वभाक् । सकृदाख्याति-निर्ग्राह्या गोत्रं च चरणैः सह' इति । चरणैः अपत्यैः सह गोत्रं जातिरुच्यते । यद्वा नित्या एकानेकसमवेतेति सामान्यरूपा जातिः । यदि नित्या तर्हि पिण्डे नष्टे सैव नश्यति । यद्येका न तर्हि अनेकेष्वप्येका जातिः स्यात् । यद्यनेकसमवेता न, तर्हि यस्मिन् पिण्डे उक्ता तस्मिन्नष्टे अन्यतरे पिण्डे न प्रतीयते इति । तस्माज्जातिवाचक शब्दादीप्प्रत्ययो भवति । उदा० मेष, सूकर, हंस, कुक्कुर, ब्राह्मण, अनेन जातित्वादीप्प्रत्ययो भवति यस्य लोपः ( प्र. ए. ) हसेपः० शेषं सुकरम् । मेषस्य जातिः मेषी, क्षत्रिया, वैश्या, अत्र जातिवाचित्वेऽपि यकारोपधत्वादीप्प्रतिषेधः । तत आप्प्रत्ययः । मुकय, हय, गवयानां यकारोपधत्वेऽपि ईप्निषेधो न । मत्स्य ईप्प्र० यलोपश्च यस्य लोपः स्वर० मत्सी इत्यादि । जातेः किम्, मुण्डा । अकारान्तात्किम् गौः ।

प्रथमवयोवाचिनोऽत ईप् वक्तव्यः । कन्याशब्दान्न । कुमारी किशोरी कलभी । प्रथमवयोग्रहणाद्वृद्धा स्थविरा इत्यत्र न । वधूटी चिरण्टी इत्यत्र ईप् भवत्येव । अद्ग्रहणाच्छिशुः ।

कालकृता शरीरावस्था वयः । प्रथमवयो बाल्यम् तद्वक्तीत्येवंशीला दकारान्ताच्छब्दादीप्प्रत्ययो भवतीत्यर्थः । कुमारः, किशोरः, कलभः, अनेन ईप्प्रत्ययः । यस्य लोपः । स्वर०( प्र. ए. ) हसेपः० कुमारी किशोरी इत्यादि । वृद्ध, स्थविर, अत्र प्रथमवयोवर्जितत्वादाप्प्रत्यय एव नत्वीप् । वृद्धा, स्थविरा । शिशुः, अत्र प्रथमवयोवाचित्वे सत्यप्यकारान्तत्वाभावात् ईप्प्रत्ययनिषेधः ।( प्र. ए. ) स्रो० शिशुः । सूत्रम् ।

स्वाङ्गाद्वा । स्वाङ्गवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । सुमुखी । मृगाक्षी । तन्वङ्गी । वाग्रहणात्पद्मवदनेत्यादौ न भवति । सुष्ठु आसमन्तादङ्गं स्वाङ्गम् । स्वस्य प्राणिनोऽङ्गं स्वाङ्गमित्युक्तेऽङ्गाङ्गिभावेन ज्ञानादेरपि स्वाङ्गत्वं स्यात् । अतः स्वाङ्गलक्षणमाह ।

प्राणिस्थमद्रवं मूर्त्तं स्वाङ्गं स्यादविकारजम् ॥
तत्र दृष्टमतत्स्थं चेत्स्थितं तद्वच्च तादृशि ॥

पूर्वार्धस्य प्रत्युदाहरणानि । सुमुखा शाला अप्राणिस्थत्वात् । सुस्वेदा द्रवत्वात् । सुज्ञाना अमूर्तत्वात् । सुशोफा

विकारजत्वात् । उत्तरार्धस्योदाहरणानि । सुकेशी-सुकेशा वा रथ्या अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । सुस्तनी-सुस्तना वा प्रतिमा प्राणिवत्प्राणिसदृशे स्थितत्वात् । स्वाङ्गत्वेऽपि वाशब्दस्य व्यवस्थितवाचित्वात् । ओष्ठादिषु विकल्पः । वदनादिषु न वक्तव्यः । बिम्बोष्ठी-बिम्बोष्ठा । चारुकर्णी-चारुकर्णा । समदन्ती-समदन्ता । पद्मवदना, मृगनयना । नखमुखयोश्च संज्ञायां नेप् । शूर्पनखा गौरमुखा । नासिकाशब्दात्केवलान्नेप् । नासिका ।

स्वाङ्गाद्वा । स्वाङ्गं स्वं स्वकीयम् अङ्गं स्वाङ्गं तद्वाची शब्दोऽपि स्वाङ्गम् इत्युच्यते, यद्वा सुष्ठु शोभनमङ्गं स्वङ्गं तस्य भावः स्वाङ्गं, यद्वा सुष्ठु शोभनमासमंताद् अङ्गं स्वाङ्गं स्वस्य प्राणिनो वा अङ्गं स्वाङ्गं तस्मात् ( पं. ए. ) ङसिरत् सवर्णे० वा ( प्र. ए. ) अव्यया० चपा अबे जबा० स्वर० सिद्धम् । स्वाङ्गेति । 'प्राणिस्थमद्रवं मूर्त्तं स्वाङ्गं स्यादविकारजम् ॥ तत्र दृष्टमतत्स्थं चेत् स्थितं तद्वच्च तादृशि १ ' प्राणिस्थं चेतनशरीरे वर्तमानं पुनः अद्रवं प्रस्वेदादिरहितं पुनर्मूर्तम् आकारसहितं पुनः अविकारजं शोफादिविकाररहितं तत् स्वाङ्गम् उच्यते । पुनः पूर्वं तत्र प्राणिनि दृष्टं पश्चात् यदि अतत्स्थम् अप्राणिस्थं भवति तदपि स्वाङ्गं । च पुनः तद्वत् प्राणिवत् तादृशि प्राणिसदृशे अप्राणिन्यपि स्थितं भवति तदपि वा स्वाङ्गं, यत्तु अप्राणिस्थं द्रवं मूर्त्तरूपं अमूर्तमरूपं विकाराज्जातं तत्स्वाङ्गं न । यथा सुमुखा शाला अप्राणिस्थत्वात् बहुस्वेदा द्रवत्वात्, सुज्ञाना अमूर्त्तत्वात्, बहुशोफा विकारजत्वात्, नेप् । सुकेशी सुकेशा वा रथ्या अप्राणिस्थस्य प्राणिनि दृष्टत्वात् सुस्तनी सुस्तना वा प्रतिमा । प्राणिवत् प्राणिसदृशे स्थितत्वात् इत्यादौ विकल्पेनेप् । स्वाङ्गं मुखकर्णादि तद्वाचिनः शब्दात् स्त्रियाम् ईप्प्रत्ययो भवति । वा शब्दः प्रयोगान्तरे निषेधार्थो न विकल्पार्थः । सुमुख, मृगाक्षि, तन्वङ्ग, सुष्ठु मुखं यस्याः सा सुमुखी मृगवत् अक्षिणी यस्याः सा मृगाक्षी, तनु कृशम् अङ्गम् यस्याः सा तन्वङ्गी, स्वाङ्गादिति ईप् । यस्य लोपः । स्वर० ( प्र. ए. ) हसेपः० वाशब्दस्य निषेधार्थत्वात् पद्मवदना, कमलनयना, सुजघना, इत्यादौ ईप्प्रत्ययो न भवति ।

क्तिदिकारादक्तेरीब् वा वक्तव्यः । अङ्गुली-अंगुलिः । धूली-धूलिः । आजी-आजिः । अक्तेरिति विशेषणात् कृतिः भूतिः ।

कृदिकारा० । कृत इकारः कृदिकारः तस्मात् कृदिकारात् कृदिति तृतीयवृत्तिः । तत्र प्रत्ययोत्पन्नो योऽसौ इकारस्तस्माद् ईप्प्रत्ययो वा भवति किंविशिष्टात् अक्तेः क्तिप्रत्ययवर्जितादिकारादित्यर्थः । उदाहरणम् धूञ् कम्पने धूञ्वादेरुलिरिति उणादित्वादुलिप्रत्ययः सवर्णे० धूलिः; अगि, रगि, लगि, गत्यर्थाः । अग्+उलि प्रत्ययः इदिति इति नुमागमः नश्चा० अङ्गुलि । अज गतौ क्षेपणेच अज् उणादौ इण्प्रत्ययः णित्त्वादतउपधाया इति वृद्धिः स्वर० आजि । अनेन वा ईप् अङ्गुलिः, अङ्गुली । आजिः, आजी । प्रत्ययः यस्य लोपः स्वर० (प्र. ए.) हसेपः० अन्यत्र (प्र. ए.) स्रो० अक्तेरिति किम् । डुकृञ् करणे कृ, मनु ज्ञाने मन्, भू सत्तायां भू क्तिरिति क्तिप्रत्य० ति मन् इत्यत्र लोपस्त्वनुदात्तानामिति नलोपः । अक्तेरिति विशेषणात् ईप्प्रत्ययनिषेधः । सूत्रम् ।

ऐ च मन्वादेः । मन्वादेर्गणात्स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च । चकारान्मनोरौ वा । आदिशब्दान्मन्वग्निवृषाकपिपूतक्रतुकुसितकुसिदा ग्राह्याः । मनोर्भार्या मनायी-मनावी । अत्र विकल्पेन पक्षे मनुः । अग्नेर्भार्या अग्नायी । पूताः क्रतवो यस्येति पूतक्रतुः । पूतक्रतोर्भार्या पूतक्रतायी इत्यादि ।

ऐचमन्वादेः । ऐ (प्र. ए.) साङ्के० च (प्र. ए.) अव्य० मनुरादिर्यस्य स मन्वादिस्तस्मात् (पं. ए.) ङितिङस्य स्रो० मन्वादेरित्यादिवृत्तिः सुकरा । अन्त्यस्वरस्य च ऐकारादेशो भवति । उदा० मनु, वृषाकपि, मनोर्भार्या मनायी, वृषस्य धर्मस्य आसमंतात् कं फलं पिबतीति वृषाकपिस्तस्य वृषाकपेर्भार्या वृषाकपायी, उकारैकारयोश्च अन्त्यस्वरस्य वा ऐकारः ऐ आय् स्वर० (प्र. ए. हसेपः 'वृषाकपायी श्रीगौर्योः' इत्यमरः चकारात् मनुसंबन्धिन उकारस्य अकारो वा भवति तत आव् स्वर० मनावी । एवं अग्नायी पूतक्रतायी कुसीदायी, कुसितः ऋषिस्तस्य भार्या कुसितायी, कुसीदो वृद्धिजीवकस्तस्य भार्या कुसीदायी, पूताः क्रतवो येन स पूतक्रतुस्तस्य स्त्री पूतक्रतायी । सूत्रम् ।

पत्न्यादयः । पत्न्यादयः शब्दा निपात्यन्ते । पाणिग्रहणकर्ता पतिः तस्य स्त्री पत्नी । भर्तृयोगे एव । अन्यत्र गवां

पतिः स्त्री । समानः पतिर्यस्याः सा सपत्नी । भर्तृयोगे एव । अन्तर्वत्नी । अन्यत्र अन्तर्वती । पतिवत्नी सभर्तृका । अन्या पतिमती । सखी अशिश्वी अर्धजरती युवती । प्रथमं सूर्योऽञ्चति यस्यां सा प्राची । पश्चादञ्चति यस्यां सा प्रतीची । उदीची । नृशब्दस्य णीप्प्रत्ययो भवति । णीपि परे नुर्वृद्धिर्वाच्या । नारी । दारशब्दो नित्यं बहुवचनान्तः पुल्लिङ्गः । दाराः । दारान् । दारैः । दारेभ्यः । दारेभ्यः । दाराणाम् । दारेषु । हे दाराः

पत्न्यादयः । पत्न्यादि पत्नी आदिर्येषांते पत्न्यादयः ( प्र. ब. ) जस् ए ओजसि ए अय् स्वर० स्रो० पत्न्यादयः शब्दा ईप्प्रत्ययान्ता निपात्यन्ते, नवरं पत्नी भार्या, अन्तर्वत्नी गुर्विणी, नारी, स्त्री, सखी, प्रसिद्धा, पतिवत्नी, जीवद्भर्तृका, अशिश्वी अप्रसूता, अर्द्धजरती अर्द्धवृद्धा, युवती स्त्री, प्राची पूर्वा दिक्, प्रतीची पश्चिमा दिक्, एवमन्येऽप्यूह्याः ईप्प्रत्ययान्ता निपातसिद्धा इत्यर्थः । तथा उदीची, मत्सी, मानुषी, अगस्ती, पाणिगृहीती, असिक्नी, पलिक्नी, पितामही, स्थाली, कुण्डी, गोणी, स्थली, कबरी, नागी, कुलसी, कामुकी, इत्यादयः पत्न्यादयो ज्ञेयाः । अकारान्तो दारशब्दो नित्यं बहुवचनान्तः पुल्लिङ्गे कलत्रवाची तस्मात् आप्प्रत्ययः ईप्प्रत्ययो वा न भवति किंतु दाराः दारान् दारैः दारेभ्यः दारेभ्यः दाराणां दारेषु । देव शब्दस्य बहुवचनवत्साध्यः । सुगमम् ।

वोर्गुणात् । उकारान्ताद्गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । पट्वी- पटुः । मृद्वी-मृदुः । तन्वी-तनुः ॥' खरुसंयोगोपधान्न' । खरुः पाण्डुः ।

वोर्गुणात् । वा ( प्र. ए. ) अव्यया० उ ( पं. ए. ) ङिति ह्रस्वेत्यकारलोपः स्रो० ओ औ औ । अग्रे गुणः ( पं. ए. ) ङसिरत् सवर्णे० नामिनो रः जलतुं० । गुणो रूपादयश्चतुर्विंशतिस्तद्वाची उकारान्तो यः शब्दस्तस्मात् स्त्रियां लिङ्गे वा ईप्प्रत्ययो भवति । पटु अनेन वा ईप् प्रत्ययः उवं स्वर० हसेपः अन्यत्र ( प्र. ए. ) स्रो०

१ सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ॥ आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः ॥ १ ॥ व्या० बुधैः स गुण उच्यते । स कः, यः सत्वे द्रव्य एव निविशते वर्तते इत्यर्थः । पुनस्तस्माद्द्रव्यात् अपैति याति च पुनः पृथग्जातिषु दृश्यते च पुनः आधेयः उत्पाद्यः यथा कस्तूरिकायोगाद्वा सुगन्धः । पुनः अक्रियाजः अनुत्पाद्यः । यथाऽऽकाशादौ महत्वादि । पुनः असत्वप्रकृतिरद्रव्यस्वभावः स गुणः तद्वाचकः शब्दः ।

एवं मृद्वी मृदुः, तन्वी तनुः, बह्वी बहुः, ऋज्वी ऋजुः। वाग्रहणादेव खरुः, पाण्डुः इत्यादौ नेप्। केचित्तु खरुसंयोगोपधान्नेति पृथक्सूत्रं पठन्ति। गुणग्रहणात् धेनु, रज्जु, अणु, इत्यादौ नेप्।

उत ऊः। उकारान्ताद्वा ऊप्रत्ययो भवति। पङ्गुः-पङ्गूः। वामोरुः-वामोरूः। वाशब्दाद्रज्ज्वादौ न भवति। रज्जुः, धेनुः।

उत ऊः। उत् (पं. ए.) स्वर० स्त्रो० ऊ (प्र. ए.) स्रो०। मध्ये आदवे लोपश्। वृत्तिः कण्ठ्या। नवरं गुणवाचिनोऽपि मनुष्यजातिवाचिन उकारान्तात् स्त्रियाम् 'ऊ' प्रत्ययो वा भवति। उदा० पङ्गु अनेन ऊप्रत्ययः। सवर्णे० (प्र. ए.) स्रो० पङ्गूः। एवं वामोरु ऊप्रत्ययः। सवर्णे० वामोरूः, करभोरूः।

यूनस्तिः। युवन्शब्दात्स्त्रियां तिः प्रत्ययो भवति। युवतिः। एभ्यो नामत्वात्स्यादयः। 'आबन्तादापः' इति सिलोपः। ईबन्ताद्धसेपः सेर्लोपः॥

॥ इति स्त्रीप्रत्ययप्रक्रिया॥

युनस्तिः। युवन्शब्दात् तिप्रत्ययो भवति स्त्रियां ईप् निषेधः। युवन् अग्रे तिप्रत्ययः नाम्नोनोलोपः (प्र.ए.) स्रो०। एवं स्त्रीप्रत्यया ज्ञेयाः। अथैतेषां विभक्तिकार्यमाह एभ्य इति। एभ्यः पूर्वोक्तस्त्रीप्रत्ययान्तेभ्यः शब्देभ्यः अविभक्ति नामेति लक्षणसूत्रोक्तनामत्वात् स्यादयो विभक्तयो दीयन्ते। तत्र आबन्तादाप्प्रत्ययान्तादाप इति सूत्रेण सिलोपः। ईबन्तात् हसेपः सेर्लोपः। तत्र आबन्ता गङ्गावत् साध्याः। ईबन्ता नदीवत्। इकारोकारान्ता बुद्धिरज्जुवत्। ऊकारान्ता वधूवत्

॥ इति स्त्रीप्रत्ययाः॥

## ॥ अथ विभक्त्यर्थो निरूप्यते॥

एवं ये पुल्लिङ्गादयः स्त्रीप्रत्ययान्ता उक्तास्ते विभक्तिमन्तरा न शब्दत्वं प्राप्नुव-

---

१ तत्र क्रियासिद्ध्युपकारकं कारकम्। तत्र द्वितीयादयो विभक्तयो भवन्ति अनुक्ते। तच्च षड्विधम्। कर्ता कर्म च करणं सम्प्रदानं तथैव च॥ अपादानाधिकरणे चेत्याहुः कारकाणि षट्॥ उक्तानुक्ततया द्वेधा कारकाणि भवन्ति षट्॥ उक्ते तु प्रथमैव स्यादनुक्ते तु यथाक्रमम्॥ तानि शेषाश्चाथ विभक्त्यर्थास्तेऽत्र निरूप्यन्ते॥

रुध्वम् । अत्र गोविन्द, परमेश्वर, प्र. ए. । कुमारौ प्र. द्वि. । तपस्विनः प्र. ब. इत्यत्र यथाक्रमं प्रथमाया एकद्विबहुवचनानि ।

**भोस् भगोस् अघोस् । एते शब्दा निपात्यन्ते धिविषये ।** भवद्भगवदघवच्छब्दानां भोस् भगोस् अघोस् इत्येतच्छब्द-रूपत्रयं क्रमेण निपात्यते ।

**क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तुते ॥**
**अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम् ॥**

**॥ इति प्रथमा ॥**

भोस् भगोस् अघोस् । भोस् ( प्र. ब. ) स्व० स्रो० एकस्य ग्रहणे तज्जातीयान्यशब्दस्य ग्रहणमिति न्यायाद्भोस्[१] इत्यनेन भोस्, भगोस्, अघोस्, इत्यत्र त्रयाणामपि ग्रहणम् । सूत्रपाठे तु भोस् भगोस् अघोस् इत्येव सूत्रं दृश्यते । तेन 'भवन्' इत्यस्य 'भोस्' इति निपातः । 'भगवन्' इत्यस्य 'भगोस्' इति निपातः । 'अघवन्' इत्यस्य 'अघोस्' इति निपातः । यतः भवद्भगवदघवतां भोस्, भगोस्, अघोस्, एते शब्दा वा निपात्यन्ते धौ विषये । संबोधने इत्यर्थः । भोः इत्यामन्त्रणे । भगोः इति पूज्यामन्त्रणे । अघोः इति पापजनवाचिनः संबोधन-विषये । एते शब्दा निपात्यन्ते । उदा० भो दुराराध्य । दुःखेनाराध्यत इति दुरा-राध्यस्तस्यामन्त्रणं भो दुराराध्य त्वं क्षमस्व क्षमां कुरु । न विद्यते स्तुतिर्वचनगोचरा यस्य स अस्तुतिस्तस्यामन्त्रणं हे अस्तुते वचनगोचरस्तवनातीत इति संबोधनपदं, यद्वा न स्तौति अन्यं कंचित् जनमिति अस्तुत् तस्मै अस्तुते तुभ्यमिति चतुर्थ्य-न्तम् । एवंविध हे भगोः हे भगवन् तुभ्यं नमः । 'भगोस्तुभ्यं नमोनमः' इति पाठे तु सुगमम् । भो महाप्राज्ञ । महांश्चासौ प्राज्ञश्च महाप्राज्ञस्तस्यामन्त्रणं भो महाप्राज्ञ त्वम् अधीष्व पठ । हे अघो हे पापिष्ठ स्वघस्मरं स्वभक्षकम् अर्थात् स्वपापं कालं वा घा-तय विनाशयेति श्लोकार्थः ॥ १ ॥ इत्थं प्रथमार्थमुक्त्वेदानीं द्वितीयादिशेषविभ-क्त्यर्थसूचकं सूत्रमाह ।

**शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबन्धे आ-धारभावयोः ॥** कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबन्ध आधारभावयोः शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति ।

१ 'भोस्' इत्येव सूत्रमिति केचित् तन्मते इदं व्याख्यानम् ।

कार्यें कर्मकारके उत्पाद्ये आप्ये संस्कार्ये विकारार्थे च द्वितीया विभक्तिर्भवति। कर्तुरीप्सिततमं कर्म। कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्। हरिं भजति। तथा युक्तं चानीप्सितम्। ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। तच्चानीप्सितं द्विविधम्। द्वेष्यमितरच्च। विषं भुङ्क्ते। ग्रामं गच्छंस्तृणं स्पृशति। तच्च कर्मकारकं चतुर्विधम्। उत्पाद्यमाप्यं संस्कार्यं विकार्यं च। उत्पत्त्यर्हमुत्पाद्यं, यदभूत्वा भावि तदुत्पाद्यं वा। यत्सिद्धमेव प्राप्यते तदाप्यम्। संस्कारो नाम प्राक्तनकर्मजो गुणः, कश्चिद्गुणातिशयो वा गुणाधानं वा मलापकर्षो वा इति चतुर्विधः। संस्कारमर्हतीति संस्कार्यम्। विकारो नाम पूर्वावस्थापरित्यागेनावस्थांतरप्राप्तिः।

कटं करोति कारुको रूपं पश्यति चाक्षुषः॥
राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः॥

कटादिकमुत्पाद्यादि चतुर्विधं कर्म। गुणातिशयसंस्कार्ये यथा। व्रीहीन् यवान्वा प्रोक्षति। प्रोक्षणेन व्रीहिषु कश्चिद्गुणातिशयो जन्यते। गुणाधानमलापकर्षयोरुदाहरणम्। वस्त्रं रञ्जयति देवदत्तः। रजको वस्त्रं क्षालयति।

शेषाः कार्ये इति। शेषाः (प्र.ब.) सवर्णे० स्रो०। कार्यें, क्रियते इति कार्यं तस्मिन् (स. ए.) अइए। कर्तृसाधनयोः करोतीति कर्त्ता साध्यते छिदादिक्रिया अनेनेति साधनं, कर्त्ता च साधनं च कर्तृसाधने तयोः (स. द्वि.) ओसि ए अय् स्वर०। दानार्थं पात्रं दानपात्रं तस्मिन् (स.ए.) अ इ ए। पश्चाच्चाभिनो रः। जलतुं०। अग्रे विश्लेषावधौ विश्लेषे विश्लेषं प्रति वा अवधिराश्रयःविश्लेषावधि स्तस्मिन् (स.ए.) ङेरौ। डित् टिलोपः। स्वर०। अग्रे संबन्धः, संबध्यते भृत्यस्वाम्यादिरनेनेति संबन्धस्तस्मिन् (स. ए.) अइए। आधारभावयोः, आध्रियते स्थाप्यते वस्तु यत्र स आधारः।

भूयते क्रियालक्षणतया अनेनेति भावः । तत आधारश्च भावश्च आधारभावौ तयोः ( स. द्वि.) ओसि । ए अय् । स्वर०स्रो० पश्चात् ए अय् य्वोर्लोपश्वा । सिद्धं सूत्रम् । सप्तपदम् । शेषाः प्रथमा उक्ता, अतः शेषा द्वितीयाद्याः षड् विभक्तय इत्यादि- वृत्तिः । तत्र कार्ये द्वितीया, कर्तृसाधनयोस्तृतीया, दानपात्रे चतुर्थी, विश्लेषावधौ पञ्चमी, संबन्धे षष्ठी, आधारभावयोः सप्तमी, इति संक्षेपार्थः । अथ विस्तरार्थः । कार्य इत्यादि । कार्ये द्वितीयाविभक्तिर्भवतीति योगः । कार्ये इति कोर्थः । कर्म्मकारके क्रियते यत्तत्कर्म कर्म नाम कारकं कर्म्मकारकं तस्मिन् कर्तुः कर्म्मतापन्ने वस्तुनी- त्यर्थः । यद्वा कार्यं कर्म्म तत्कारकसंज्ञत्वात्कारकं कर्म्म कारकं षष्ठीं विना अन्या विभक्तयः कारकसंज्ञाः । क्रियाहेतुः कारकं षष्ठ्यास्तु क्रियाहेतुत्वाभावान्न कारकसं- ज्ञा । यतः " कर्त्ता १ कर्म २ च करणं ३ संप्रदानं ४ तथैव च । अपादाना ५ धिकरणे ६ इत्याहुः कारकाणि षट् " इति । तस्मिन् कर्म्मकारके कथंभूते इत्यत आह । उत्पाद्ये आप्ये संस्कार्ये विकार्ये च एवं चतुर्विधे तत्र उत्पाद्ये यन्नवीनं क्रियते तदुत्पाद्यं , यदाप्यते सिद्धमेव प्राप्यते तदाप्यम्, संस्क्रियते इति संस्कार्यं, संस्कारो नाम कश्चिदतिशयस्तदर्हं संस्कार्यं । संस्कारो द्विधा गुणाधानं मलापकर्षो वा । पूर्वजन्मकृतः शुभाशुभो वा संस्कारः तस्माद्रूपं संस्कार्यं रूपं पश्यतीत्यर्थः । अत्र गुणाधानं यद्वा रूपमिति चक्षुर्ग्राह्यत्वादाप्यमिति केचित् । राज्यमिति राज्ञः संस्का- रात् संस्कार्यम् । विकारेति । विक्रियते अवस्थान्तरं भजते इति विकार्यं, ततः एवं चतुर्विधेऽपि कर्मकारके द्वितीया विभक्तिर्भवति । उदाहरणम् । कटमित्य.दिश्लोकः । कारुकः पुमान् कटं करोतीत्यत्र कटस्य उत्पाद्यकार्यत्वात् द्वितीयान्तत्वम् । एवं चाक्षुषो नेत्रवान् जनो रूपं पश्यतीति रूपम् आप्यं कर्म्म तत्र द्वितीया । केचित् रू- पस्य नेत्रेन्द्रिये गुणस्यापनेन संस्कार्ये द्वितीया । धर्मिष्ठः पुमान् राज्यं प्राप्नोति । अत्र राज्यं संस्कार्यम् । आप्यं केचित् । राज्यं प्राप्यमिति तत्र द्वितीया । सोमम् अमृतव- ल्लीरसं पिबतीति सोमपाः ब्राह्मणः । सोमम् अमृतवल्लीं सुनोति खण्डयतीत्यर्थः । अत्र सोमस्य अमृतवल्ल्याः खण्डनरूपो विकारस्तत्र द्वितीया । अवस्थान्तरापादनं विकार इति । एवं द्वितीयार्थमाख्यायाधुना तदधिकारात्पुनर्वृत्तिकार उपपदद्वितीयार्थमाह ।

अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ॥
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

अभितो ग्रामं, सर्वतो ग्रामं नदी वहति । धिग्देवदत्तं, देव-

दत्तस्य धिक् । उपर्यध्यधसः सामीप्ये । एषां द्वे स्तो देशतः कालतश्च सामीप्ये । तस्य परमाम्रेडितम् । द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । उपर्युपरि पुरोहितं याचकाः पतन्ति । अधोऽधो नगरं निधानानि सन्ति । परितः समयानिकषाहाप्रतियोगेऽपि । परितः कृष्णं गोपाः । निकषा समया सामीप्ये । समया ग्राममुपवनानि वर्तन्ते । निकषा ग्रामं निहतः शत्रुः । हा कृष्णाभक्तम् । तस्य शोच्यत इत्यर्थः । बुभुक्षितं न प्रतिभाति किंचित् । लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । एष्वर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः स्युः । कर्मप्रवचनीययुक्ते द्वितीया । एतेन योगे द्वितीया स्यात् । लक्षणे । वृक्षं प्रतिपर्यनु वा विद्योतते विद्युत् । इत्थंभूताख्याने । भक्तो विष्णुं प्रति पर्यनु वा । भागे । लक्ष्मीर्हरिं प्रतिपर्यनु वा हरेर्भाग इत्यर्थः । वीप्सायाम् । वृक्षं वृक्षं प्रतिपर्यनु वा संचरति ।

अभिसर्वतसोरित्यादि । तस् च तस् च तसौ अभिश्च सर्वश्च अभिसर्वौ ताभ्यां सहितौ तसौ अभिसर्वतसौ अभितस्सर्वतसावित्यर्थः । वा अथवा द्वंद्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यते इति तयोरर्थयोगे षष्ठ्यर्थे द्वितीयाविभक्तिः कार्येति योगः । पुनर्धिगिति । धिगर्थेऽपि धिक्शब्दयोगेऽपि द्वितीया कार्या । प्रयोक्तव्या । धिङ् निर्भत्सर्नानन्दयोः पुनस्त्रिषु उपर्यादिषु इति उपरि, अधिः, अधः, इत्येवं त्रिष्वव्ययेषु प्रयुज्यमानेषु द्वितीया विधेयेति । कथंभूतेषु उपर्यादिषु आम्रेडितान्तेषु । आम्रेडितमिति द्विस्त्रिर्भाषणं तदन्ते येषां ते आम्रेडितान्ता द्विवारमुच्चारिता इत्यर्थः । यथा उपर्युपरि, अधोऽधः, अध्यधि, रूपास्त्रिषु तत इति अभितस्सर्वतसादिव्यतिरिक्ते अन्यत्र अन्यस्मिन्नप्यर्थे षष्ठ्यर्थे द्वितीया दृश्यते । रूढिवशादिति तत्रोदाहरणमाह । अभितो ग्रामं नदी वहति । अभितोग्रामम् ग्रामस्याभितो अभितोग्रामम् । अनेन द्वितीया अभितो ग्राममिति । ग्रामस्य समीपे चतुर्दिक्षु वा इत्यर्थः । तत्र नदी वहति । एवं सर्वतोग्रामं, वनं सर्वस्य ग्रामस्य सर्वतः चतुर्दिक्षु वनमित्यर्थः । एवं समया

ग्रामं तीर्थं वर्त्तते। निकषा ग्रामं हतः शत्रुः। ग्रामस्य समीपे इत्यर्थः। धिग् देवदत्तमि-त्यत्र धिग्योगे द्वितीया। "धिक् तां च तं च मदनं च इमां च मां च" उपर्युपरि ग्रामं पक्षिणो गच्छन्ति। उपर्युपरि ग्रामं मेघा वर्षन्ति ग्रामस्य उपरि इत्यर्थः। अधोऽधोग्रामं निधानं दृश्यते। ग्रामस्य अध इत्यर्थः। अध्यधिग्रामं। ग्रामेग्रामे तापसा-स्तिष्ठन्ति। एवमित्यत्र त्रिष्वप्याम्रेडितान्तेषु द्वितीया ततोऽन्यत्रापि दृश्यते इति व-चनात् उभयतः, परितः, समया, निकषा, हा, प्रति, अनु, एषां योगेऽपि द्विती-या। समया ग्रामं तीर्थं वर्त्तते, ग्रामस्य समीपे तीर्थम्। निकषाग्रामं शत्रुर्निहतः। ग्रा-मस्य समीपे इत्यर्थः। अनुग्रामं ग्रामस्य अनु पश्चात् सीमा वर्त्तते। एवं ग्रामं ग्रामं प्रति प्रतिग्रामं जिनालयानि सन्ति। हा स्वामिनम्। इत्यादि।

कालाध्वनोर्नैरन्तर्ये। अविच्छिन्नसंयोगत्वं नैरन्तर्यम्। कालाध्ववाचकशब्दानां नैरन्तर्येऽर्थे वाच्ये सति द्वितीया विभक्तिर्भवति। मासमधीते देवदत्तः। क्रोशं पर्वतः। नैरन्तर्ये किम्। मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः।

॥ इति द्वितीया ॥

कालाध्वनोरिति। अन्तरेण रहितत्वं नैरन्तर्यं तस्मिन् नैरन्तर्ये वाच्यमाने तथा। कालो दिवसमासादिः। अध्वा मार्गः क्रोशयोजनादिस्तत एतयोर्द्वयोर्विषये द्वितीया कार्ये नैरन्तर्येऽर्थे कालवाचकशब्दात् अध्ववाचकशब्दाच्च द्वितीया भवतीत्यर्थः। तत्रोदाहरणं काले, मासमधीते। मासं। यावत् निरन्तरम् अधीते पठति अत्र नैरन्तर्ये द्वितीया। अन्यथा मासस्य द्विरधीते मासे वा दश दिवसानधीते इति भवति। एवं मार्गे क्रोशं पर्वत इति क्रोशं यावन्निरन्तरं पर्वत इत्यर्थः, क्रोशप्रमाणं लम्ब इत्यर्थः। अन्यथा क्रोशस्य एकभागे पर्वत इति स्यात्। इति द्वितीयार्थः। अन्यत्रापीति ग्रहणात् अन्तर्ग्राममुपग्राममित्यादयः शब्दा ज्ञेयाः। इति द्वितीया। अथ तृतीयार्थ-सूचकं कर्तृसाधनयोरिति पदं व्याचिख्यासुराह।

कर्त्तरि प्रधाने क्रियाश्रये साधने च। प्रधाने कर्तरि क्रिया-सिद्ध्युपकारके करणेऽर्थे च तृतीया विभक्तिर्भवति।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्॥
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥
भिन्नः शरेण रामेण रावणो लोकरावणः॥

करांग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः ॥

प्रकृत्यादिभ्यः। प्रकृत्यादिभ्यः शब्देभ्यस्तृतीया स्यात्। प्रकृत्या चारुः। प्रायेण अलसः। सुखेन याति। गोत्रेण गार्ग्यः। गार्ग्योऽस्य गोत्रमित्यर्थः।

॥ इति तृतीया ॥

कर्तरीति। कर्त्तरि कर्तृविषये तृतीया विभक्तिर्भवति। कर्मोक्तौ इति विशेषः कथंभूते कर्त्तरि, प्रधाने मुख्ये क्रियाया आश्रये मुख्यवृत्त्या कार्यस्य कारके उत्पादके ईदृशे कर्तरि तृतीया। च पुनः साधनेऽपि तृतीया कथंभूते साधने। क्रियासिद्ध्युपकारके कार्यस्य साहाय्यकारके, पुनः करणनामकारके साधनेऽपि तृतीया भवति। यः प्रधानभूतः सन् क्रियाया आश्रयभूतः स्वातन्त्र्येण क्रियां कर्तुं प्रवृत्तः स कर्ता तस्यार्थे तृतीया भवति। च पुनः क्रियासिद्धेः उपकारके प्रकृष्टकारणभूते साधनेऽपि तृतीया भवति। करोतीति कर्त्ता स क उच्यते इत्याह। क्रियाश्रयःक्रियायाः कार्यस्य आश्रयः क्रियाश्रयः। क्रियाया आश्रयोऽप्रधानोऽपि भवति। पटोत्पत्तौ तुरीवेमादिवदित्यत आह। प्रधान इति। सकलकारकप्रयोक्तृत्वे सतीतरकारकाप्रयोज्यत्वमत्र प्रधानत्वं तस्मिन्। किंविशिष्टे साधने क्रियासिद्ध्युपकारके क्रियायाः सिद्धिम् उपकरोतीति क्रियासिद्ध्युपकारकं क्रियासिद्धेः साहाय्यदायकं क्रियासिद्ध्या उप सन्निहितत्वेन कारकं तस्मिन्। पुनः कीदृशे साधने, करणे साधकतमं करणं क्रियासिद्धेः प्रकृष्टकारणं। यद्वा करणं करणनामकारकं तस्मिन् एवं कर्तृसाधनयोर्द्वयोरर्थे तृतीया भवति। उदाहरणम्। भिन्नः शरेणेत्यादिः श्लोकः। रामेण रावणो भिन्नः। केन, शरेण। रामेण इति कर्त्तरि तृतीया, शरेणेति साधने तृतीया। कथंभूतो रावणः। लोकरावणः लोकान् रावयति क्रन्दयतीति लोकरावणः। उदाहरणान्तरमाह तथा रावणो वानरैः कराग्रेण नखेन विदीर्णोऽपि विदारितोऽपि पुनः पुनरपि युध्यतेऽत्र वानरैरिति कर्तृपदं कराग्रेणेति साधनपदं उभयत्रापि तृतीया। कराग्रेणेत्यत्र जातावेकवचनम्। शेषं सुगमम्। पुनस्तृतीयार्थं विनासहेत्यादिना अग्रे वक्ष्यति। इति तृतीयार्थाः। अथ चतुर्थ्यर्थमाह।

दानपात्रे संप्रदानकारके चतुर्थी। सम्यक् श्रेयोबुद्ध्या प्रदीयते यस्मै तत्संप्रदानकारकम्। वेदविदे गां ददाति। अन्यत्र राज्ञो दण्डं ददाति। रजकस्य वस्त्रं ददाति।

ददाति दण्डं पुरुषो महीपतेर्न चातिभक्त्या

न च दानकाम्यया ॥ यद्दीयते वासनया सुपात्रे तत्संप्रदानं कथितं कवीन्द्रैः ॥

अनभिहिते इत्येव । दानीयो विप्रः । क्वचित्सम्यक्श्रेयोबुद्ध्यभावेऽपि चतुर्थी । व्याजेन रघवे करमिति महाकविप्रयोगदर्शनात् । तच्च संप्रदानं त्रिविधम् । प्रेरकमनिराकर्त्रनुमन्तृ चेति ।

त्यागेन कर्मणा व्याप्तं प्रेरकं चानुमन्तृ च ॥
अनिराकर्तृ चेत्येतत्संप्रदानं त्रिधा स्मृतम् ॥

देहीति प्रेरयति तत्प्रेरकम् । यथा बटवे भिक्षां ददाति । यत्तु इदमहं ददामीत्युक्तेऽनुमन्यते ओमित्याह तदनुमन्तृ । यथा शिष्यो गुरवे गां ददाति । यत्तु नानुमन्यते न निराकरोति तदनिराकर्तृ । यथा सूर्यायार्घ्यं ददाति । क्रियया यमभिप्रैति सोऽपि संप्रदानम् । पत्ये शेते ।

दानपात्रे इत्यादि । दानपात्रे, दीयते इति दानं दानाय पात्रं दानपात्रं दत्तवस्तुनः स्वामी भवतीति यावत् तस्मिन् दानपात्रे । कीदृशे संप्रदाननामकारके सम्यक् श्रेयोबुद्ध्या यस्मै प्रदीयते तत्संप्रदानं यस्मै दत्ते आमुष्मिकफलप्राप्तिर्भवति तत्संप्रदानमुच्यते । संप्रदानं च तत्कारकं च संप्रदानकारकं तस्मिन् । यदुक्तम् । ददाति दण्डं पुरुषो महीपतेर्न चात्र भक्तिर्न च दानकामना ॥ यद्दीयते वासनया सुपात्रे तत्संप्रदानं कथितं मुनीन्द्रैः ॥ तत्रोदाहरणम् । वेदं वेत्तीति वेदवित् तस्मै वेदविदे ब्राह्मणाय कश्चित्पुरुषो गां ददाति इत्यत्र वेदवित्त्वे सति दानपात्रत्वं संमतमेव । एवं साधवेऽन्नं प्रतिलाभयति । अन्यथा दानपात्राभावे राज्ञो दण्डं ददाति, अत्र चतुर्थ्यभावः ।

॥ इति चतुर्थी ॥

विश्लेषावधौ पञ्चमी । विश्लेषो विभागस्तत्र योऽवधिः स चलतया अचलतया वा विवक्षितस्तत्रापादाने पञ्चमी । विश्लेषो नाम संयोगपूर्वको विभागः । आधाराधेययोर्मध्ये आधारत्वेन ज्ञायमानः सोऽवधिः । आधीयतेऽस्मिन्नसावा-

धारः । आधातुं योग्यः आधेय । धावतोऽश्वादपतत् । भू-
भृतोऽवतरति गङ्गा ॥ इति पञ्चमी ॥

अथ पञ्चम्यर्थं व्याचिख्यासुर्विश्लेशावधाविति पदं व्याकरोति विश्लेष इत्यादि । विश्लेष इत्यस्य कोऽर्थः,विभागो विरहः पृथग्भावः । बुद्ध्या स्वरूपेण वा एकाश्रयात् पृथग्भवनमित्यर्थः । तत्र विश्लेषे योऽवधिराश्रयो यस्माद्विभागो जायते स चल-तया अश्वकरभादिभावेन अचलतया वा पर्वतशिखरादिभावेन विवक्षितो वक्तुमिष्टः तत्र विश्लेषावधौ अपादाननामकारके अपादीयते पृथक् क्रियते यस्मात्तदपादानम् अपादानं च तत्कारकं तस्मिन् पञ्चमी विभक्तिर्भवति । उदाहरणम् । धावतोऽश्वा-दपतदित्यत्र अपतदिति विश्लेषः । अश्वादिति तस्य अवधिराश्रयः । धावत इत्यस्य चलनक्रियाकारित्वाच्चलतया विवक्षितावधित्वम् । एवं भूभृतः पर्वताद् गङ्गा अ-वतरतीत्यत्र अवतरणात्मको विश्लेषः । भूभृत इति स्थिरावधिः । एवमन्येऽप्यवसेयाः।
॥ इति पञ्चमी ।

संबन्धे षष्ठी ।
भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्यमुच्यते ॥
द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥
भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम् ॥
विशेष्यं तु प्रधानं स्यादप्रधानं विशेषणम् ॥
प्रधानाप्रधानयोर्मध्येऽप्रधाने षष्ठी । क्रियान्वयि प्रधानं क्रि-
यानन्वय्यप्रधानम् ।
राज्ञः स पुरुषो ज्ञेयो पित्रोरेतत्प्रपूजनम् ॥
गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥
सेव्यसेवकभावसंबन्धः पूज्यपूजकभावसंबन्धो बोध्यबोधक-
भावसंबन्धो, वाच्यवाचकभावसंबन्ध इति संबन्धश्चतुर्विधः ।

॥ इति षष्ठी ॥

अथ षष्ठ्यर्थमाह संबन्ध इति । संबध्यते स्वजनादिरनेनेति संबन्धो जन्यजन-कादिः । स्वस्वामित्वादिः । यथा लिङ्गार्थकारकव्यतिरिक्तस्वस्वामित्वादिलक्षणः संबन्धः । स चोभयनिष्ठः संभवति । तस्मिन्नर्थे षष्ठीविभक्तिर्भवतीति । यतः, "भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्यमिष्यते ॥ द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥" उदा-

हरणं श्लोकेनाह । राज्ञ इति । स पुरुषः पुमान् राज्ञो राजसंबन्धी ज्ञेय इत्येवं स्वामिसेवकसंबन्धः । एतत् समीपेतरवर्ति प्रपूजनं पूजनोपकरणं पूजासामग्री पित्रोरिति माता च पिता च पितरौ तयोः पित्रोः पितृमातृसंबन्धि । गुरूणां गुरुसंबन्धि वचनं जाड्यज्वरविमुक्तानां पथ्यवत्पथ्यतुल्यं हितकारकं । तथ्यम् इति वा पाठः । कवीनां वचो वचनं रसवदिति रसयुक्तं मिष्टम् । एवमन्येऽप्यूह्याः ॥ इति षष्ठी ॥

आधारे सप्तमी । आधारो नामाधिकरणम् । षड्विधमाधिकरणम् । औपश्लेषिकं सामीपिकमभिव्यापकं वैषयिकं नैमित्तिकमौपचारिकं चेति । औपश्लेषिकं त्रिविधम् । एकदेशवृत्त्यभिव्याप्यवृत्ति व्यस्तवृत्तीति केषांचिन्मतम् ।

कटे शेते कुमारोऽसौ वटे गावः सुशेरते ॥
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥
युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् ॥
भूभृत्सु पादपाः सन्ति गङ्गायां वरवालुकाः ॥

आधारभावयोरिति पदं व्याचिख्यासुः प्रथमम् आधारं प्रकटयन्नाह आधारे सप्तमीति । सुगमोऽर्थः । आध्रियते स्थाप्यते षट्प्रकारा क्रिया अस्मिन्नित्याधारः । क्रियाश्रयस्य कर्तुः क्रियाया आश्रयस्तत्र सप्तमी विभक्तिर्भवति । आधाराधिकरणे एकपर्याये आधारशब्देन अधिकरणमेवोच्यते अतोऽधिकरणस्याधारस्य भेदानाह । षड्विधमिति । अधिक्रियते आधारतया तदधिकरणं गुणानां गुणिवत् तत् षड्विधमिति षोढेति । षट्सङ्ख्याका विधाः प्रकारा यस्य तत् षड्विधं षोढेत्यर्थः । तानेव षड्भेदानाह औपश्लेषिकमित्यादि । उप सामीप्येन श्लेषणं संघट्टनमुपश्लेषः एकदेशमात्रसंयोगो वा उपश्लेषः । यथा कटे शेते कटस्यैकदेशे इत्यर्थः । तेन निर्वृत्तमौपश्लेषिकं, सामीपिकमिति समीपेन निर्वृत्तं सामीपिकं यदाधेयसमीपमात्रेण क्रियाहेतुः । यथा वटे वटसमीपे गावः सुशेरते । गङ्गायां घोषः । गङ्गासमीपे घोषो व्रजो गोकुलं वर्तत इति । अभि समताद्व्याप्नोतीत्यभिव्यापकं आधेयेन समस्तावयवसंयोगोऽभिव्यापकः । यथा पृथग्भूतयोराधेयाधारयोर्यः सकलावयवसंबंधः सोऽभिव्यापकः । यथा तिलेषु तैलम् । विषये भवं वैषयिकमतोऽन्यत्र भावो वा विषयः । यथा नभसि तारकाः । आकाशे वायुः । हृदि ब्रह्मेत्यादि । हृदि विषये ब्रह्मैव परं प्रकृष्टम् अमृतं अस्ति, नहि सर्वाधारस्य परब्रह्मणो हृदयमाधारो भवितुमर्हति किंतु विषयमात्रम् । निमित्तेन भवं नैमित्तिकं । यथा युद्धे युद्धनिमित्तमित्यादि । अविद्यमानस्यारोपणमुपचारः । उपचारे

ण भवम् औपचारिकम् एवं । षड्विधेऽप्यधिकरणे सप्तमी विभक्तिर्भवतीति शेषः । अथ सार्द्धश्लोकेन षडप्याधारभेदोदाहरणान्याह । कटे शेते इत्यादि । असौ कुमारः कटे इति कटमुपश्लिष्य शेते इत्यत्र औपश्लेषिकमधिकरणम् । अत्र शयनक्रियाश्रयभूतः कर्त्ता कुमारः, तदाधारः कटस्तत्रोपश्लेषः । गावो धेनवः वटे इति वटसमीपे शेरते शयनं कुर्वते इति सामीपिकाधिकरणम् । नहि वटस्योपरि गावः शेरते, किंतु समीपे एव । गङ्गायां घोषः । गङ्गासमीपे घोशो गोकुलम् । तिलेषु तैलं विद्यते तिलेषु सर्वानभिव्याप्य स्थितमित्यर्थः । अभिव्यापकमेतदिति । हृदीति । हृदि विषये ब्रह्म परममृतमित्येतद्वैषयिकाधिकरणम् । युद्धे युद्धनिमित्तं धीरः सन्नह्यते सन्नाहं परिदधाति इति नैमित्तिकम् । करिणां हस्तिनां शतमित्युपचारमात्रत्वादौपचारिकं नतु साक्षाद्वर्त्तमानमिति । इत्थम् आधार व्याख्यायेदानीं भावपदस्यार्थमाह । अङ्गुल्यग्रेण प्रदर्श्यमानमित्यर्थः ।

**भावे सप्तमी । क्रियालक्षणं भावस्तत्रापि सप्तमी । प्रसिद्धक्रियया अप्रसिद्धक्रियाया लक्षणबोधनं भावः । देवे वर्षति चौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः ।**

**भावः क्रियालक्षणमिति ।** क्रिया गमनस्थानोत्थानादिका तस्या यल्लक्षणं चिन्हं स भाव इति कथ्यते । प्रसिद्धक्रियया कृत्वा प्रसिद्धक्रियाया लक्षणं बोधनं भाव इति तत्रापीति तस्मिन्नर्थेऽपि सप्तमी विभक्तिर्भवति । उदा० देवे मेघे वर्षति सति चौरस्तस्कर आयात आगतः, अत्र मेघवर्षणरूपा क्रिया प्रसिद्धा तया चौरागमनरूपा अप्रसिद्धक्रिया लक्षिता । देवे मेघे वर्षतीति प्रसिद्धेन मेघवर्षणेन अप्रसिद्धं चौरागमनं लक्ष्यते इति तत्र सप्तमी । राज्ञि मेघे सुरे देवः । एवम् अंशुमालिनि सूर्ये पतति सति अस्तंगच्छति अरातिः शत्रुः पतित इति युद्धार्थमागत्य पतित इत्यर्थः । यद्वा, पतितो मृत इत्यर्थः । अत्र प्रसिद्धेन सूर्यास्तमनेनाप्रसिद्धं शत्रोः पतनं लक्ष्यते । एवं गुरौ धर्ममुपदिशति शिष्य आगत इत्येवमादयोऽवसेयाः । एवं द्वितीयादिविभक्तीनामर्थाः । पुनरथ तासाम् उपपदानामर्थान् प्रकारान्तरेणाह । सूत्रम् ।

**विनासहनमस्कृतेनिर्धारणस्वाम्यादिभिश्च । एतैरपि योगे द्वितीयाद्या विभक्तयो भवन्ति । विना पापं सर्वं फलति । अन्तरेणाक्षिणी जीवितेन किम् । अन्तरा त्वां मां मध्वित्यादिपदाद्ग्राह्यम् । अधिशीङ्स्थासां कर्म । अधिपूर्वाणामेषामाधारः कर्मसंज्ञः स्यात् । अधिशेते अधितिष्ठति अध्या-**

स्ते वा वैकुण्ठं हरिः । अभिनिविशश्च । अभिनीत्येतत्सं-घातपूर्वस्य विशतेर्धातोराधारः कर्मसंज्ञः स्यात् । ग्रामंमभिनिविशते ॥ उपान्वध्याङ्वसः । उपादिपूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात् । आवसथ्यमावसति उपवसति अनुवसति अधिवसति ।

विनासहेति । विना १ सह २ नमः ३ ऋते ४ निर्धारण ५ स्वाम्यादिभि ६ श्च । ततो विना सह चेत्यादि षट्कस्य द्वन्द्वः । ते आदौ येषां ते तथा तैः ( तृ. ब. ) स्तो० । च ( प्र. ए. ) अव्य० सिद्धम् । एतैर्विनादिभिरपिशब्दैर्योगे सति द्वितीयाद्याः षड्विभक्तयः षडप्यर्थेषु यथाक्रमं भवन्ति ' द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति आदिशब्दो विनादिषु प्रत्येकं योज्यः । विनादिवाचकशब्दे प्रयुज्यमाने द्वितीयाविभक्तिर्भवतीति । सहादियोगे तृतीया, नम आदियोगे चतुर्थी, ऋते आदियोगे पञ्चमी, निर्द्धारणाद्यर्थे षष्ठी, स्वाम्याद्यर्थे सप्तमी । तत्रोदाहरणेन द्वितीयां व्यञ्जयति विना पापमिति । पापं विना पापाभावेन सर्वमपि धर्मकृत्यादि फलमावहति । एवं विनार्थे वाच्यमाने विनाशब्दयोगे पापमिति द्वितीया । चकारात्पापेन विना, पापाद्विना इति तृतीयापञ्चम्यावपि । वृद्धत्वं जरसा विना।अक्षिणी नेत्रे अन्तरेण विना जीवितेन किं न किमपीति भावः । अक्षिणी इत्यत्र द्वितीया द्विवचनं नपुंसकान्तम् । अन्तरेत्यादि त्वां माम् अन्तरा मध्ये विचाले मधु क्षौद्रं मद्यं वा वर्त्तते, अथवा भीम इत्युक्ते भीमसेनः भामा इत्युक्ते सत्यभामा । मधु इत्युक्ते मधुसूदनः कृष्ण, त्वां माम् अन्तरा वर्त्तते । त्वां, मामिति युष्मदस्मदोर्द्वितीयैकवचनान्तत्वम्। आदिशब्दादन्तरेण अन्तरा इत्यर्थद्वयेऽपि द्वितीया विभक्तिर्भवति । एतदेवाह इत्यादिपदाद्ग्राह्यमिति । शेषं सुगमम्। इति इत्युदाहरणद्वयम् आदिपदाद्विनादियोगे द्वितीयेत्यादि शब्दाद्ग्राह्यमवसेयमिति भावः ॥ इति द्वितीयार्थः ॥

सहादियोगे तृतीयाऽप्रधाने । सह सदृशं साकं सार्धं सममिति सहादयः । सह शिष्येणागतो गुरुः । सदृशश्चैत्रो मैत्रेण । साकं नयनाभ्यां श्लक्ष्णा दन्ताः । सार्धं धनिना धृतः साधुः । समं शिष्याभ्यामधीते । समं शिष्येण गुरुणा भुज्यते । अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति । वारणार्थयोगे तृतीया । अलं विवादेन ।

अथ तृतीया । तत्र द्रव्यगुणक्रियास्तुल्ययोग्यतायां विद्यमानायां सहार्थे तृतीया विभक्तिर्भवति इति वृद्धाम्नायः । सह शिष्येणेति गुरुः । शिष्येण सह आगतः।अत्र आगमनक्रियया शिष्यशब्दस्य गुरुणा तुल्ययोग्यतायां सत्यां तृतीयान्तत्वं, सह पुत्रेण पिता धनी इत्यत्र धनद्रव्येण तुल्ययोगत्वे पुत्रस्य तृतीयान्तत्वं, सदृशश्चैत्रो मैत्रेण चैत्रनामाकश्चित् पुरुषो मैत्रेण मैत्रपुरुषेण सदृशस्तुल्यः, साकं नयनाभ्यामिति नयनाभ्यां साकं सहिता दन्ता श्लक्ष्णा मनोज्ञाः । अत्र गुणेन तुल्यत्वं तृतीया । एवमादिशब्दात् साधुः पुरुषः धनिभिर्धनवद्भिः पुरुषैः सार्द्धं धृतो गृहीतो बद्ध इत्यर्थः । वारणार्थालंयोगे तृतीया । समर्थार्थालंयोगे चतुर्थी इत्यर्थः । एतावताऽलं विवादेन, धर्मेण अर्थः, गुडेन मिश्रः, शस्त्रेण कलहः, कर्मणा विना, पुण्येन हीनः, इत्यादय आदिशब्दादवसेयाः। मत्क्रियामते तुल्यार्थे तृतीयाषष्ठ्यौ स्तः।कृष्णेन कृष्णस्य वा तुल्यः । यदुक्तं रघुकाव्ये । धृतेश्च धीरः सदृशीर्व्यधत्त ॥ इति तृतीया ॥

**नमः स्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी । नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषट् इन्द्राय ॥ रुच्यर्थानां प्रीयमाणः । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानसंज्ञः स्यात् । हरये रोचते भक्तिः ।**

अथ चतुर्थी व्याचष्टे । नम आदियोगे चतुर्थी 'नमः, स्वस्ति, स्वाहा, स्वधालं, वषट्' एतेषामव्ययानां योगे चतुर्थी वक्तव्या ' इति सुगमम् । अत्र नमःशब्दो नमस्कारार्थः, स्वस्ति कल्याणवाचकमव्ययम्, स्वाहेति होमावसरे मन्त्रावसाने अक्षरद्वयात्मकं हव्यवस्तुवाचकम्, स्वधेति पित्र्यकल्प्यं वस्तु, अलमिति सामर्थ्यार्थे, वषट् होतव्यं वस्तु । नमो नारायणायेति नमः शब्दो नमस्कारार्थः, स्वस्ति राज्ञे नृपाय स्वस्ति कल्याणं भवतु । अत्र स्वस्त्यर्थः, सोमाय चन्द्राय स्वाहा, पितृभ्यः स्वधा तत्संतानकल्पितं वस्तु । अलमिति । मल्लो मल्लाय अलं समर्थः । इन्द्राय वषट् । होतव्यं वस्तु इत्यादिष्वर्थेषु चतुर्थी ॥ इति चतुर्थी ॥

**ऋत आदियोगे पञ्चमी । ऋते अन्यः आरात् इतरः । अञ्चूत्तरपदं दिग्वाचकः शब्दः । आहि आच् एते ऋतआदयः । अन्यशब्देनान्यार्था गृह्यन्ते । ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरो ग्रामात् ॥ ऋते**

योगे द्वितीयापि । ज्ञानं ऋते । चकाराद्विनादियोगे तृतीयापञ्चम्यौ स्तः । विना ज्ञानात् । ज्ञानेन विना ।

अथ पञ्चमी ऋते इति । ज्ञानात् ऋते विना मुक्तिर्न भवतीति शेषः । अत्र ऋते शब्दयोगे ज्ञानात् अत्र पञ्चमी । आदि शब्दात् गृहादन्यो विहारो विचरणं भिना पृथग्योगेऽपि पञ्चमी । विना कान्तात्, पृथक् ग्रामात्, एवं भिन्नो ग्रामात्, इतरो ग्रामात्, प्राग् ग्रामात्, दक्षिणाहि ग्रामात्, गृहाद्बहिः, आराद्ग्रामादित्यादि

॥ इति पञ्चमी ॥

यतश्च निर्धारणम् । द्रव्यगुणक्रियाजातिभिः समुदायात्पृथक्करणं यतस्तत्र षष्ठी स्यात् । भवतां मध्ये यो दण्डी स आयातु । क्रियापराणां भगवदाराधकः श्रेष्ठः । गवां कृष्णा गौः संपन्नक्षीरा । एतेषां क्षत्रियः शूरतमः । इतरमतेऽत्र सप्तम्यपि । स्वाम्यादिभिश्च । स्वाम्यादिभिरपि योगे षष्ठीसप्तम्यौ स्तः । गोषु स्वामी । गवां स्वामी गवामधिपतिः । गोष्वधिपतिः ।

अथ षष्ठ्यर्थसूचकं निर्धारणमिति निर्धियते पृथक्क्रियते अनेनेति निर्धारणं । काभिः । क्रिया १ गुण २ जातिभिः । क्रिया करणात्मिका गमनस्थानादिका, गुणो रूपादिः, जातिः ब्राह्मणादिः । ततः क्रिया च गुणश्च जातिश्च इत्यादिना द्वन्द्वस्ताताभिः कृत्वा यत् समुदायात् बहूनां समूहात् पृथक्करणम् एकस्य तन्निर्धारणमुच्यते । तत्रार्थे षष्ठी विभक्तिर्भवतीति । तत्रोदाहरणं क्रियासु पराः क्रियासु निष्ठाः तत्परा इत्यर्थस्तेषां मध्ये यो भगवतश्चिदानन्दस्य आराधकः एव श्रेष्ठः प्रशस्यः । अत्र सामान्यक्रियापरेषु भगवदाधारकत्वरूपया क्रियया पृथक्करणे क्रियापरशब्दस्य षष्ठी । गवां धेनूनां मध्ये या कृष्णा गौः सा संपन्नक्षीरा बहुदुग्धा । अत्र गोशब्दस्य कृष्णगुणेन निर्धारणे षष्ठी । एतेषां क्षत्रियः शूरतम इति । एतेषां सर्वजातीनां पुरुषाणां मध्ये क्षत्रियोऽतिशयेन शूरः शूरतमः; अत्र जात्या निर्धारणे षष्ठी व्याकरणेतरमते तु निर्धारणे षष्ठीसप्तम्यौ द्वे अपि भवतः । स्वामित्वे षष्ठीसप्तम्यौ । स्वामिनो भावः स्वामित्वं तस्मिन् स्वामित्वे सप्तमी चकारात् षष्ठ्यपि भवति । गोषु स्वामी गवां स्वामी । एवं गोष्वधिपतिः गवामधिपतिरित्येतदपि ज्ञेयम् ‘ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतिशब्दयोगे षष्ठीसप्तम्यौ भवतः ’ । पुनः षष्ठ्या अर्थान्तरमाह । सूत्रम् ।

कर्तृकार्ययोरक्तादौ कृति षष्ठी । कर्तरि कार्ये च षष्ठी विभक्तिर्भवति क्तादिवर्जितकृदन्ते शब्दे प्रयुज्यमाने । व्यासस्य कृतिः । व्यासकर्तृका कृतिरित्यर्थः । भारतस्य श्रवणम् । द्विषः शतुर्वा । शतृप्रत्ययान्तस्य द्विषतेः कर्मणि वा षष्ठी । षष्ठ्यभावे द्वितीया । मुरस्य मुरं वा द्विषन् । उभयप्राप्तौ कर्मणि । उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । चित्रं गवां दोहोऽगोपेन ।

कर्तृकार्ययोरिति । कर्त्ता च कार्यं च कर्तृकार्ये तयोः ( स. द्वि. ) ओसि, ए अ-ए स्वर० लो० अग्रे अक्तादि । क्तप्रत्यय आदिर्यस्य स क्तादिः न क्तादिरक्तादिः त-स्मिन् ( स. ए. ) ङेरौङित् टिलोपः स्वर० पश्चान्नामिनोरः स्वर० कृत् ( स. ए. ) स्वर० अग्रे षष्ठी । षण्णां संख्या पूरणी षष्ठी ( प्र. ए. ) हसेपः० सिद्धम् । कर्त्तरीति । प्रागुक्तलक्षणे प्रधाने क्रियाश्रयेऽर्थे तथा कार्ये कर्मणि चार्थे षष्ठी विभक्तिर्भवति । क सति कृदन्त इति । कृत् तृतीयवृत्तिप्रोक्तः प्रत्ययसमूहः सोऽन्ते यस्य स कृदन्तस्त-स्मिन् कृदन्ते शब्दे प्रयुज्यमाने वाच्यमाने सतीति भावः । कथंभूते कृदन्ते शब्दे, क्तादिवर्जिते क्तप्रत्ययादिरहिते क्त इत्यादिशब्दात् क्त क्तवत् ईषद्दुःसु खलु शतृ-शानौ क्वसुकानौ पूर्वकाले क्त्वा समासे क्यप् तुम् इष्णु स्नुक्नु इत्यादिकृत्प्रत्ययान्तान् विहाय अन्येषु कृत्प्रत्ययान्तेषु परेषु सत्सु इत्यर्थः । तत्रोदाहरणं, व्यासस्य कृतिः, व्यासेन क्रियते स्म इति । अत्र व्यासः कृतेः कर्त्ता । ततः कृतिरिति कृत्प्र-त्ययान्ते शब्दे प्रयुज्यमाने व्यासशब्दस्य कर्त्तरि षष्ठी । एवं भारतस्य श्रवणं भारतं शृणोतीति श्रवणमिति युडन्ते कृदन्ते प्रयुक्ते भारतस्येति कर्मणि षष्ठी । अत्रोभय-त्रापि कृद्योगलक्षणा षष्ठी । अक्तादाविति किम् । त्वया कृतं, ग्रामं प्राप्तः । अत्र य-थाक्रमं कर्त्तरि कर्मणि च तृतीया द्वितीया क्तप्रत्ययान्तत्वात् । आदिशब्दात् शतृ-शानक्वसुकानइष्णुस्नुक्नुक्त्वातुमक्यप् इत्याद्यन्तेष्वपि शब्देषु परेषु षष्ठी न भवति। किं-तु द्वितीयैव । ग्रामं गच्छन्, अन्नं पचमानः, अन्नं पेचिवान्, श्रमं चक्राणः, देवं दि-दृक्षुः, आत्मानमलंकरिष्णुः, दैत्यान् घातुकः, दानवान् जिष्णुः, देवं नत्वा, गुरुं प्रणम्य, कार्यं कर्त्तुं, ग्रामं गंतुमुत्कंठित इत्यादीन्युदाहरणान्यवसेयानि । 'द्विषः शतुर्वा षष्ठी' मुरस्य मुरं वा द्विषन् ।

स्मरतौ च कार्ये । स्मृत्यर्थे धातौ प्रयुज्यमाने च कार्ये षष्ठी

भवति । मातुः स्मरति । मातरं स्मरतीत्यस्मिन्नर्थे । चकाराद्द्वितीयापि । मातरं स्मरति ।

स्मरतौ च कार्ये । स्मरतावर्थे 'स्मृञ् स्मरणे' इति धातुयोगे कार्ये कर्मणि विषये षष्ठी विभक्तिर्भवति । उदाहरणं, मातुः स्मरति । मातुः स्मर्त्तव्यत्वे षष्ठी । चकारात् द्वितीयापि कर्मापि भवति, मातरं स्मरति ।

तृप्त्यर्थानां करणे वा षष्ठी । स्फुटार्थम् । फलैः फलानां वा तृप्तः । अद्भिः अपां वा तृप्तः । न लोकाव्ययनिष्ठाखलर्थतृनाम् । एषां प्रयोगे षष्ठी न । लादेशाः । कुर्वन् कुर्वाणः सृष्टिं हरिः । उ । हरिं दिदृक्षुः, अलंकरिष्णुर्वा । उक् । दैत्यान्घातुको हरिः । अव्ययम् । जगत्सृष्ट्वा । सुखं कर्तुम् । निष्ठा । विष्णुना हता दैत्याः । दैत्यान् हतवान् विष्णुः । खलर्थः । ईषत्करः प्रपञ्चो हरिणा । तृन् । कर्ता लोकान् । हेतौ तृतीया पञ्चमी च वक्तव्या । अनित्यः शब्दः कृतकत्वेन कृतकत्वाद्वा ।

तृप्त्यर्थानां करणे वा षष्ठी । फलैः फलानां वा तृप्तः, अद्भिः अपां वा तृप्तः । शेषं सुगमम् । हेताविति । हेतौ साधके तृतीयापञ्चम्यौ भवतः । इह किल प्रतिज्ञाहेतुदृष्टान्तोपनयननिगमनभेदादनुमानस्य पञ्चावयवाः । तत्र पक्षवचनं प्रतिज्ञा, प्रतिज्ञास्थापको हेतुः, यथा पर्वतो वन्हिमान् धूमवत्त्वात् । अयं पर्वतो वन्हिमान् इति प्रतिज्ञा, सा च धूमवत्त्वादिति हेतुना स्थाप्यते इति तत्र हेताविति द्वितीयानुमानावयवे तृतीया पञ्चमी वा भवति । तत्रोदाहरणं अनित्यः शब्द इति प्रतिज्ञा, कृतकत्वेन कृतकत्वात् इति हेतुस्तत्र तृतीया, विकल्पेन पञ्चमी । हेतुत्वादिति प्रस्तावाच्छेषा अपि त्रयोऽवयवा व्यज्यन्ते । ते चामी, यो यः कृतकः स स अनित्यः । यथा घट इति दृष्टान्तः, कृतकोऽयमित्युपनयः, तस्मादनित्यश्चायमिति निगमनम् ।

भयहेतौ पञ्चमी चवक्तव्या । चौराद्बिभेति । व्याघ्रात्त्रस्यति । विद्युत्पाताच्चकितः ।

भयहेताविति । भयस्य कारणे पञ्चमी । भयस्य हेतुर्यः पशुपुरुषादिजनित-

कारणवर्गस्तस्मिन्नर्थे पञ्चमीविभक्तिर्भवति चौराद्बिभेति, व्याघ्रात्त्रस्यति, विद्युत्पाताच्चकितः । अत्र भयहेतौ भयार्थे पञ्चमी ।

षष्ठी च हेतुप्रयोगे । हेतुप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । चकारात्सर्वादियोगे तृतीयापि । अन्नस्य हेतोर्वसति । कस्य हेतोर्नागतः । केन हेतुना वा नागतः ।

षष्ठी च हेतुप्रयोगे । हेतुशब्दस्य प्रयोगे हेतुरिति शब्दे प्रयुज्यमाने षष्ठी भवति । कस्य हेतोरियं कन्या, कस्य निमित्तमित्यर्थः । चकारात् सर्वादेर्हेतुप्रयोगे तृतीया षष्ठी च । केन हेतुना, कस्य हेतोः, निमित्तकारणहेत्वर्थप्रयोगे सर्वादेः सर्वा विभक्तयो भवन्ति । को हेतुः, कं हेतुं वसति, केन हेतुना, कस्मै हेतवे, कस्मात् हेतोः, कस्य हेतोः, कस्मिन् हेतौ, इत्यादि ।

इत्थंभावे तृतीया । किंचित्प्रकारं प्राप्त इत्थंभावः । अन्यस्यान्यत्रोपचारेण वर्तमानत्वमित्थंभावस्तस्मिन्नित्थंभावे तृतीया विभक्तिर्भवति । शिष्यं पुत्रेण पश्यति । संसारमसारेण पश्यति ।

इत्थंभावे तृतीयेति । असावयमिवेति इत्थंभावस्तस्मिन्नर्थे तृतीया विभक्तिर्भवति । उदाहरणं गुरुः शिष्यं पुत्रेण पश्यति, पुत्रसदृशं पश्यति, पुत्रमिवेति भावः । यद्वाऽयं प्रकार इत्थं तस्य भाव इत्थंभावः, सामान्यस्य भेदको विशेषः प्रकारः । कंचित्प्रकारं प्राप्त इत्थंभावः । यथा मनुष्यसामान्यभेदको विशेषः शिष्यत्वलक्षणं पुत्र इति न भवति किंतु तद्गतस्नेहः पुत्रशब्देनोच्यते इति आचार्यः । शिष्यं पुत्रेण पश्यति, पुत्र इव पश्यतीत्यर्थः । एवं संसारमसारेणेत्यपि ज्ञेयम् । साधुः संसारम् असारमिव पश्यति, असारतया पश्यति । सूत्रम् ।

येनाङ्गविकारः । येन विकृतेनाङ्गेनाङ्गिनोऽङ्गविकारो लक्ष्यते तस्मादङ्गात्तृतीया विभक्तिर्भवति । अक्ष्णा काणः । पादेन खञ्जः । श्रवणेन बधिरः । विकारो द्विविधः, न्यूनत्वाश्रित आधिक्याश्रितश्च । मुखेन त्रिलोचनः । वपुषा चतुर्भुजः ।

येनाङ्गेति । यद् (तृ. ए.) त्यदाद्यत्वेरः । टेन अइए । अङ्गविकारः । अङ्गं विक्रियते

अनेनेत्यङ्गविकारः ( प्र. ए. ) सो० पश्चात् सवर्णे० सिद्धं सूत्रं येन विकृतेनाङ्गेन अक्ष्णादिना अङ्गिनः शरीरिणोऽङ्गविकारः शरीरविकृतिर्लक्ष्यते ज्ञायते, तस्माद्विकृतादङ्गात् तृतीया विभक्तिर्भवतीति । तत्र विकृतत्वं द्विविधं न्यूनत्वेन आधिक्येन चेति । न्यूनत्वं व्याचष्टे । अक्ष्णा नेत्रेण काणः, पादेन खञ्जः, शिरसा मस्तकेन खल्वाटः केशरहितः, करेण कूणिः । न्यूनत्वविकृतेरिदमुदाहरणचतुष्टयम् । एवं मुखेन त्रिलोचनः । वपुषा चतुर्भुजः । इत्येतदुदाहरणद्वयमाधिक्यविकृतं ज्ञेयम् । अथ पञ्चम्या अर्थान्तरमाह । सूत्रम् ।

**जनिकर्तुः प्रकृतिः । जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति । तत्रापादाने पञ्चमी । यस्मात्प्रजाः प्रजायन्ते, तद्ब्रह्मेति ।**

जनि कर्तुरिति । जनेर्जन्मनः, यद्वा जनेर्धातोः क्रियापदस्य कर्त्ता उत्पद्यमानवस्तुजनिकर्त्ता तस्य ( ष. ए. ) ऋतो ङ्उः अस्य उः डित्त्वाट्टिलोपः । स्वर० सो० । प्रकृति ( प्र. ए. ) सिद्धं सूत्रम् । 'जनिकर्तुः प्रकृतिरपादानम्' इत्थं वा सूत्रम् । अथ वृत्तिः । जनि कर्तुरिति कोऽर्थः । जायमानस्य जायमानम् उत्पद्यमानं यत्कार्यं तस्य । प्रकृतिरिति कोर्थः, उपादानं मूलकारणं तदपादानसंज्ञं भवति । तत्र अपादाने पञ्चमी विभक्तिर्भवतीति शेषः । अर्थात् जनेर्धातोर्जनिक्रियाया जननं जनिरुद्भव इति जनेरुत्पत्तेरर्थः कर्त्ता स जायमानः सन् कार्यं भवति । तस्य प्रकृतिः कारणं तत्र पञ्चमी । उदा० यस्मात् प्रजाः प्रजायन्ते तद्ब्रह्मेत्यभिधीयते । प्रजायन्ते इति जनिधातुपदं, प्रजा इति जनिकर्तृपदं जायमानकार्यत्वात् तस्य प्रकृतिर्यच्छब्दनिर्दिष्टं ब्रह्म ततो यस्मादिति मूलकारणत्वात् प्रकृतिपदस्य पञ्चमी ।

**आङादियोगे । आङादियोगे पञ्चमी विभक्तिर्भवति आङ् मर्यादायामभिविधौ च । अपपरी वर्जने, एते आङादयः । आपाटलिपुत्राद्वृष्टो देवः । आबालेभ्यो हरिभक्तिः । आदिशब्दात्परित्रिगर्तेभ्यो वृष्टो देवः । अपत्रिगर्तेभ्यो वृष्टो देवः ।**

आङ्उपसर्गादियोगेऽपि पञ्चमी । आदिशब्दात् आङ् अपपरियोगे । आङ् उपसर्गो मर्यादायाम् अभिविधौ च वर्त्तते । तत्र तेन विनेति मर्यादा, तेन सहेत्यभिविधिरिति भेदः । तत्रोदाहरणं आपाटलिपुत्रादिति । पाटलिपुत्रं नगरं मर्यादीकृत्य त-

स्मादर्वाक् अभिव्याप्य वा देवो मेघो वृष्ट इत्यर्थः। पर्यपाभ्यां वर्जने पञ्चमी। परित्रिगर्तेभ्यो वृष्टो देवः। अपत्रिगर्तेभ्यो देवो वृष्टः। त्रिगर्त्तदेशान् वर्जयित्वा वृष्ट इत्यर्थः। राज्ञि मेघे सुरे देव इति अनेकार्थः।

विद्यास्वीकारे। आख्यातुः पञ्चमी स्यात्। उपाध्यायादधीते।

विद्यास्वीकारे। आख्यातुः पञ्चमी स्यात् उपाध्यायादधीते।

तादर्थ्ये चतुर्थी वक्तव्या।

संयमाय श्रुतं धत्ते नरो धर्माय संयमम्॥
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये॥

आशिषि चतुर्थी। राज्ञे चिरं सौभाग्यं भूयात्।

अथ पुनश्चतुर्थीमाह तादर्थ्ये इति। सोऽर्थो यस्य तत्तदर्थं तस्य भावस्तादर्थ्यं। यद्वा, स एव अर्थस्तदर्थस्तस्य भावस्तादर्थ्यं, यद्वा तस्मै कार्याय इदं कारणं तदर्थं तस्य भावस्तादर्थ्यं तस्मिंस्तादर्थ्ये वाच्यमाने चतुर्थी भवति। तत्रोदाहरणं श्लोकेन संयमायेति। नरो मनुष्यः श्रुतं शास्त्रं धत्ते धारयति। कस्मै, संयमाय संयमार्थमित्यर्थः। धर्माय धर्मार्थं संयमं धत्ते। मेधावी बुद्धिमान् मोक्षाय मोक्षार्थं धर्मं धत्ते। नरो दानाय दानार्थं तथा भुक्तये भोगाय च धनं धत्ते। अत्र संयमादीनां तादर्थ्ये चतुर्थी।

क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोपः। क्रुधाद्यर्थानां प्रयोगे यंप्रति कोपः स संप्रदानसंज्ञकः स्यात्। हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति। द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्ते। सोपसर्गयोः क्रुधद्रुहोर्योगे द्वितीया वक्तव्या। क्रूरमभिक्रुध्यति। मित्रमभिद्रुह्यति। अपवादमारोपयति।

क्रुधादिधातुयोगेऽपि चतुर्थी। क्रुधि, द्रुहि, ईर्ष्या, असूया, श्लाघ्, ह्नुङ्, स्था, शप् धारि, स्पृहि, एते क्रुधादयः। क्रूराय क्रुध्यति, क्रूरं प्रति क्रोध इत्यस्मिन्नर्थे क्रुधधातुयोगे क्रूराय इत्यत्र चतुर्थी, आदिशब्दान्मित्राय द्रुह्यति, गुणवते पुरुषाय असूयतीत्यादिरोषवाचकधातुयोगे चतुर्थी। पुत्राय कुप्यति, दुष्टाय कर्षतीत्येवमादयः। गुणेषु दोषारोपोऽसूया, परसंपत्त्यसहनम् ईर्ष्या इति भेदः। 'सो-

पसगर्याश्चे क्रुधद्रुहोर्योगे चतुर्थीप्रतिषेधो वक्तव्यः । क्रूरमभिक्रुध्यति, मित्रमभिद्रुह्यति चकारात् श्लाघ, शप्, स्था, धृञ्, स्पृहादीनां रुच्यर्थानां च तृप्यमानात्, चतुर्थीति सूचितम् । भगवते श्लाघते, मदनाय शपते, मित्राय तिष्ठति, पत्न्यै धारयति भूषणानि पतिः, कृष्णाय स्पृहयति गोपी, क्षुधिताय रोचते अन्नम्, इत्यादि ज्ञेयम् । 'लोकानां शुभाशुभसूचको भूतादिविकार उत्पातस्तत्रापि चतुर्थी' वाताय कपिला विद्युत् वातोत्पात ज्ञापिका इत्यर्थः । तुमन्तलोपे चतुर्थी । फलेभ्यो याति फलान्याहर्तुं यातीत्यर्थः । 'तुमर्थाच्च भाववचनात्' यागाय याति, यष्टुं यातीत्यर्थः । 'मन्यतेः कर्मण्यनादरे वा चतुर्थी' न त्वां तृणं मन्ये, न त्वां तृणाय मन्ये । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ' व्रजाय व्रजति, व्रजं व्रजति ।

क्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्या । हर्म्यात्प्रेक्षते । हर्म्यमारुह्य प्रेक्षत इत्यर्थः । आसने उपविश्य प्रेक्षते इत्यर्थः ।

क्यबर्थो दृश्यते यत्र क्यबन्तं नैव दृश्यते ॥
तदेव हि क्यब्लोपित्वं ज्ञातव्यं च सदा बुधैः ॥

'क्यब्लोप इति । क्यबर्थो वाच्यमानः क्यपश्च अप्रयोगः स क्यब्लोपस्तस्मिन्नर्थे पञ्चमी वक्तव्या । यतः, क्यबर्थो दृश्यते यत्र क्यबन्तं न प्रयुज्यते ॥ स एव हि क्यब्लोपः स्यादिति प्रोक्तं मनीषिभिः । क्यब्लोपे कर्मण्यधिकरणे पञ्चमी वक्तव्या । उदा० हर्म्यात् प्रेक्षत इति । कोऽर्थः, हर्म्यं गृहमारुह्य प्रेक्षते पश्यतीत्यर्थः । अत्र आरुह्येति क्यप्प्रत्ययान्तं पदं, तस्य लोपो हर्म्यादिति पञ्चमी । एवम् आसनाद्वदति आसने उपविश्य वदतीत्यर्थः । सप्तमीमाह ।

निमित्तात्कर्मयोगे सप्तमी च वक्तव्या ।
चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ॥
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥
गुदमेढ्रान्तरालाङ्गं सीमेति प्रोच्यते बुधैः ॥
पुष्कलो मृगभेदः स्याद्वन्यः सौगन्ध्यहेतुकः ॥

निमित्तादिति । निमित्तं नाम पञ्चमोऽधिकरणभेदस्तस्मान्निमित्तात् । यद्वा निमित्तात् प्रयोजनवाचिनः शब्दात् कर्मयोगे सति सप्तमी वक्तव्या । तत्रोदाहरणं चर्मणीति । चर्मनिमित्तं द्वीपिनं चित्रकं हन्ति विनाशयति, दन्तयोर्दन्तनिमित्तं, कु-

क्षरं हस्तिनं हन्ति, केशेषु केशनिमित्तं चमरीं मृगविशेषं हन्ति, सीम्नि सीमायां सीमानिमित्तं केनापि पुरुषेण पुष्कलको नाम क्षुद्रग्रामाधिपतिः हतो मारितः। पुष्कलकः कीलको वा हतः। निपातकीलः पुष्कलकः।

विषये च। तर्के चतुरः।

विषये चेति। विषये विषयार्थे आक्षेऽर्थे वाच्यमाने सप्तमी विभक्तिर्भवति उदा० तर्के तर्कविषये चतुरो निपुणः। अत्र तर्कः क्रियाश्रयत्वाभावान्नाधिकरणम्। ततो विषये सप्तमी।

षष्ठीसप्तम्यौ चानादरे। बहूनां क्रोशतां गतश्चौरः। पित्रो रुदतोः प्रव्रजति पुत्रः। बहुष्वसाधुषु वदत्स्वपि स्वयमार्यो याति साधुमार्गेण। बहुषु साधुषु वदत्स्वपि स्वयमनार्योऽसाधुमार्गेण।

षष्ठीति। अनादरे क्रियमाणे सति षष्ठी सप्तमी च भवति। तत्रोदाहरणं, बहूनां जनानां क्रोशतां फूत्कुर्वतां स चोरो गतः। बहून् जनानाकुशतोऽवज्ञाय अनादृत्येत्यर्थः। बहुषु असाधुषु निवारयत्सु सत्स्वपि निषेधयत्स्वपि आर्यः साधुः स्वयमात्मना साधुमार्गेण धर्ममार्गेण यातीत्यत्रानादरे सप्तमी। बहुषु साधुषु जनेषु वदत्सु सत्स्वपि कथयत्स्वपि अनार्योऽसाधुः स्वयमात्मना असाधुमार्गेणासमीचीनमार्गेणाधर्ममार्गेण दुराचारेण याति। बहुषु साधुषु जनेष्वनादरं कृत्वा व्रजतीत्यर्थः। एवं मातापित्रो रुदतोः सतोः प्रव्रजति पुत्रः। मातापित्रोरनादरं कृत्वा दीक्षां गृण्हाति इत्यपि ज्ञेयम्। 'इगन्ते कर्मण्यपि सप्तमी' अधीती व्याकरणे। सूत्रम्।

अन्योक्ते प्रथमा। यदिदं कार्याद्यन्येनाख्यातेन कृता चोक्तं भवति, तदा प्रथमा प्रयोक्तव्या। घटः क्रियते। घटः कार्यः। प्राप्तमुदकं यमिति प्राप्तोदको ग्रामः। छन्दसि स्यादिः सर्वत्र। दधि जुहोतीत्यस्मिन्नर्थे दध्ना जुहोति। पुनन्तु ब्रह्मणस्पतिः। व्रजतीर्विरेजुः।

कर्ता कर्म च करणं संप्रदानं तथैव च॥
अपादानाधिकरणमित्याहुः कारकाणि षट्॥
द्वितीया कर्मणि ज्ञेया कर्तरि प्रथमा यदा॥

उक्तकर्तृप्रयोगोऽयं न तदा यक् प्रयुज्यते ॥
तृतीया कर्तरि यदा कर्मणि प्रथमा तदा ॥
उक्तकर्मप्रयोगोऽयं न तदा परस्मैपदम् ॥

स्वतन्त्रः कर्ता । क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । प्रधानीभूतधात्वर्थाश्रयः कर्ता । साधकतमं करणम् । क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् । कर्तृकरणयोस्तृतीया । अनभिहिते कर्तरि करणे च तृतीया स्यात् ॥ अकथितं च । अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ॥
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते, शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति,हरति,कर्षति, वहति वा। अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते, अभिधत्ते, वक्तीत्यादि । अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञः स्यादिति वाच्यम् । कुरून्स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि

कर्ता स णौ । गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानबोधयत् ॥
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥
गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥
बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥

गौर्दुह्यते पयः । अजा ग्रामं नीयते । बोध्यते माणवको धर्मम् । माणवको बालः । देवदत्तो ग्रामं गम्यते । अकर्मकाणां कालादिकर्मणां च कर्मणि भावे च लकार इष्यते । मासं आस्यते देवदत्तेन । णिजन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः । तत्प्रयोजको हेतुश्च । कर्तुः प्रयोजकः कर्तृसंज्ञो हेतुसंज्ञश्च स्यात् । स्वार्थं परित्यज्य अन्यार्थाभिधायित्वमुपसर्जनत्वम् । क्रियाजन्यफलशालित्वं कर्मत्वम् । साक्षात्संबन्धेन क्रियान्वयित्वं मुख्यत्वम् । परम्परासंबन्धेन क्रियान्वयित्वं गौणत्वम् ॥ इति कारकप्रक्रिया ॥

अन्योक्तेति । अन्योक्ते अन्येन उक्तमन्योक्तं तस्मिन् (स. ए.) अइए । प्रथमा (प्र. ए.) आप् इति सिलोपः । सिद्धं सूत्रम् । अन्योक्त इति पदं व्याचष्टे यदिति । यदिदं कार्यादि कारकं । अन्येनेति कोऽर्थः, अन्येन कर्मोक्तिभावोक्तिसंबन्ध्याख्यातेन द्वितीयवृत्त्युक्तसूत्रनिष्पन्नेन प्रत्ययान्तधातुरूपेण कृता च पुनः कर्मोक्तिसंबन्धिकृदन्तप्रत्ययेन तृतीयवृत्तिसाधितशब्देन चशब्दात् समासेन तद्धितेन च यदुक्तं भवति तदा कर्मणि प्रथमा विभक्तिर्भवति । अर्थात् यत्र तृतीयान्तः कर्त्ता तत्र कर्मणि प्रथमा भवतीति भावः । उदा० कुम्भकारेण घटः क्रियते इत्यत्र घटस्य कार्यत्वात्क्रियते इत्याख्यातोक्तत्वेन कर्मणि प्रथमा । एवं 'कारुकेण कटः कार्यः' इत्य-

त्र कृतोक्तत्वात् प्रथमा । छन्दसि कारकानियममाह छन्द० छन्दसि वेदविषये स्यादिर्विभक्तिः सर्वत्र सर्वस्मिन्नर्थे व्यत्ययेन च भवति । तत्रार्थत्वान्न विभक्तिनियम इत्यर्थः । उदा० दध्ना जुहोतीति । दधि जुहोतीति द्वितीयासंभवे छान्दसत्वात् द्वितीयास्थाने तृतीया । भो पूजका ब्रह्मणस्पतिरिति ब्रह्मणस्पतिं पुनन्तु ब्रह्माणं प्रक्षालयन्तु इति द्वितीयार्थे प्रथमा । 'व्रजतीर्विरेजुः' इत्यत्र व्रजन्त्यो गोप्यो विरेजुरिति प्रथमाबहुवचनसंभवे द्वितीयाबहुवचनम्।उक्तं च भागवते दशमस्कन्धे पञ्चमाध्याये कृष्णजन्माधिकारे-नन्दालयं सबलयो व्रजतीर्विरेजुः । एवमन्यान्यपि छान्दसोदाहरणान्यवसेयानि । ग्रन्थगौरवभयान्न लिख्यन्ते । शेषं सुगमम् । अथ विभक्तीनां केचिदर्थाः समाहृत्योच्यन्ते । सामान्यलिङ्गवचनपरिमाणकर्तृसंबोधनान्योक्तेषु प्रथमा । कर्तरि तृतीयान्ते सति कर्मणि प्रथमा स्यात् इत्यर्थः । कर्मण्यभितः, सर्वत, उभयतः, परितः, प्रति, समया, निकषा, हा, अनु, धिग्, उपर्युपरि, अधोऽधः, अध्यधि, विना, अन्तरेण, अन्तरा, स्मरतौ, कालाध्वनोर्नैरन्तर्ये, शतृशानूकसुकानइष्णुस्तुल्काचुमव्ययप्रयोगे, क्रियाविशेषणे च द्वितीया । कर्तृसाधनयोः सहसदृशसाकंसार्द्धविनेत्थंतद्भावयेनाङ्गविकारवारणार्थालंयोगनिषेधार्थकृतादियोगहेतुतुल्यार्थादिषु तृतीया । दानपात्रे, नमः स्वस्तिस्वाहास्वधावषट्तादर्थ्यक्रुधादिरुच्यर्थादिधातुयोगसमर्थार्थालंयोगे, बलिरक्षित हितशब्दयोगोत्पातज्ञापितेषु चतुर्थी । विश्लेषावधौ, ऋते अन्यादिविनापृथग्भिन्नेतर प्रभृत्यारभ्यबहिःशब्दयोगहेत्वर्थजनिकर्तृमर्यादाद्यादियोगकल्पलोपभयहेतुविद्याख्यातृप्रभृत्यर्थेषु पञ्चमी । संबन्धनिर्द्धारणस्वामित्वकर्तृकार्यस्मरणार्थहेतुशब्दप्रयोगतुल्यार्थानादरादिषु षष्ठी । आधारभावस्वामित्वनिमित्तविषयानादराधीत्यादिष्वर्थेषु सप्तमी । छन्दसि सर्वा विभक्तयः सर्वेष्वर्थेषु व्यत्ययेन च भवन्ति । जातावेकवचनं बहुवचनवद्भवति । एको द्वौ वास्मदो विशेषणे बहुवद्भवतः । गुरौ च एको द्वौ बहुवद्भवतः इत्यादि ज्ञेयम् । यथात्र देशे प्रचुरो यवो नो त्पद्यते, तथाऽहम् आवां एतयोरर्थे वयमिति भवति । तथा एकस्मिन्नपि गुरौ परे गुरव इति बहुवचनं भवति ।

॥ इति संक्षेपतः कारकप्रक्रियाविवरणं समाप्तम् ॥

## अथार्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते ।

अथ समासप्रारम्भः । तत्र प्रथमं परिभाषामाह । अथार्थेत्यादि । अथवा अथेति कारककथनानन्तरं समासो निरूप्यते इति संबन्धः । तत्र समसनम् अनेकेषां पदानामेकं पदमित्यादि यत्संक्षेपणं स समासो निरूप्यते कथ्यते । केषां पदानां, स्यादि विभक्त्यन्तानां । एवंविधानां पदानां समासो निरूप्यते कथ्यत इति योगः । कथ-

भूतानां पदानाम् अर्थवदित्यादि। अर्थः प्रथमादीनां लिङ्गादेः सोऽस्त्यासामित्यर्थवत्यस्ताश्च ता विभक्तयश्च अर्थवद्विभक्तयस्ताभिर्विशिष्टानि युक्तानि अर्थवद्विभक्तिविशिष्टानि तेषाम्। यद्वा, अर्थवन्ति च तानि विभक्तिविशिष्टानि च अर्थवद्विभक्तिविशिष्टानि तेषाम्। अथ समासस्य याथातथ्यमाह। सूत्रम्।

समासश्चान्वये नाम्नाम्। नाम्नामन्वययोग्यत्वे सत्येव समासो भवति। चकारात्तद्धितोऽपि। ततो भार्या पुरुषस्येत्यादौ समासो न भवति। स च षड्विधः। अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः कर्मधारयो द्विगुश्चेति। अव्ययस्य अव्ययेन वा भवनं सोऽव्ययीभावः ॥ १ ॥ स एवाग्रिमः पुरुषः प्रधानं यस्यासौ तत्पुरुषः ॥२॥ द्वन्द्वायते उभयपदार्थौ येनासौ द्वन्द्वः॥३॥बहु समातिरिक्तं व्रीहिः प्रधानं यस्मिन्नसौ बहुव्रीहिः ॥४॥ कर्म भेदकं धारयतीति कर्मधारयः॥५॥ द्वाभ्यां गच्छतीति द्विगुः॥६॥पूर्वपदप्रधानोऽव्ययीभावः॥द्विगुतत्पुरुषौ परपदप्रधानौ। द्वन्द्वकर्मधारयौ चोभयपदप्रधानौ। बहुव्रीहिरन्यपदप्रधानः। यत्रानेकसमासप्राप्तिस्तत्र उभयपदप्रधानो बलवान्। तस्य क्रियाभिसंबन्धात्। यत्रैकस्मिन्समसिते पदेऽनेकसमासप्राप्तिस्तद्विषयमिदम्॥निषादस्थपतिं याजयेदित्यत्र तत्पुरुषबहुव्रीहिकर्मधारयप्राप्तौ सत्यां निर्णयमाह। समानाधिकरणव्यधिकरणयोर्मध्ये समानाधिकरणो बलवान्। एकविभक्त्यन्तत्वमेकार्थनिष्ठत्वं वा सामानाधिकरण्यम्।नीलं च तदुत्पलं च नीलोत्पलम्। भिन्नविभक्त्यन्तं भिन्नार्थनिष्ठत्वं वा वैयधिकरण्यं। ऐकपद्यमैकस्वर्यमैकविभक्तिकत्वं च समासप्रयोजनम्। अधि स्त्री इति स्थिते। स्त्रीशब्दाद्द्वितीयैकवचनम्। स्त्रियमधिकृत्य भवतीति विग्रहेऽन्वययोग्यार्थसमर्पकः पदसमुदायो विग्रहो वा-

क्यमिति यावत् । कृते समासेऽव्ययानां पूर्वनिपातो वक्तव्यः ।

समासश्चेति । समास ( प्र. ए. ) स्तो० । च ( प्र. ए. ) अव्य० पश्चाद्विसर्जं० स्तोः श्चुभिः श्चुः । स्वर० । अन्वयेति । अन्वेति पदानामर्थमित्यन्वयस्तस्मिन् (स.ए.) अइए पश्चात्सवर्णे० । नामन् ( ष. ब. ) अल्लोपः० स्वर० मोनु० सिद्धं सूत्रम् । नाम्नामन्वयेत्यादिवृत्तिः कण्ठ्या । परमत्र नामशब्देन पदमेव विवक्षितमन्यथा अविभक्ति नामेत्युक्ते समासप्रत्यययोरिति सूत्रं व्यर्थं स्यादिति द्विवचनस्य बह्वर्थान्तःपातित्वात् द्वयोरपि नाम्नोः समासः स्यात् । यद्वा नाम्नी च नामानि च नामानि तेषां नाम्नाम् ।एकशेषः समासः।तेन द्वयोर्नाम्नोः बहूनां च नाम्नां समासो भवति। नवरं, सत्येवेति परस्परमर्थानुगमनमन्वयः। बाधकप्रमाणाभावो योग्यता । यत्र नाम्नां पदानां शब्दानाम् अन्वययोग्यत्वं संभवति, तत्रैव समासो भवति नान्यत्रेति भावः। चशब्दात्तद्धितोऽपि तद्धितप्रत्ययसबन्धिविग्रहोऽप्यन्वययोग्यत्वे सत्येव भवति । तत इति । तस्मात्कारणात् भार्या पुरुषस्येत्यादौ विपरीतान्वये समासो न भवति । यथा देवदत्तस्य भार्या । पुरुषस्य वस्त्रमित्यत्र चतुर्णां शब्दानां मध्याद् आदिमम् अन्तिमं च शब्दं विहाय मध्यस्थशब्दद्वयग्रहणादन्वययोग्यत्वं नास्ति । ततः समासो न भवति । अन्वयायोग्यत्वादिति । पुरुषस्य भार्येत्यादौ तु भवति । अथ समासः कतिविध इति नामभिस्तद्भेदानाह सचेति । स समासः षड्विधः षट्प्रकारः षट्संख्य इत्यर्थः । तत्राद्योऽव्ययीभावो, द्वितीयस्तत्पुरुषः, तृतीयो द्वन्द्वः, चतुर्थो बहुव्रीहिः, पञ्चमः कर्मधारयः, षष्ठो द्विगुः, इत्येवं समासः षड्विधो ज्ञेयः । सांप्रतं समासेषु पदानां प्राधान्यमाह । **पूर्वपदप्रधानोऽव्ययीभावः** । पूर्वपदमव्ययं परपदमनव्ययं तद्वत्त्वेन अनव्ययस्य अव्ययभवनमव्ययीभावः । **द्विगुतत्पुरुषौ समासौ परपदप्रधानौ** । पूर्वेतरयोः पदयोर्मध्ये यत्परम् अग्रेतनं पदं तदर्थः प्रधानो ययोस्तौ। **द्वन्द्वकर्मधारयौ चोभयपदप्रधानौ** । उभे पूर्वापरे पदे प्रधाने मुख्ये ययोस्तौ । **बहुव्रीहिरन्यपदप्रधानः** । पूर्वोत्तराभ्यां पदाभ्याम् अन्यत्किमपि बहिःस्थितं पदं प्रधानं यस्मिन् सः । कस्मात्, तस्य क्रियाभिसंबन्धात् । अस्य व्याख्या यथा । तस्य क्रियाभिसंबन्धादिति पदं सर्वत्रापि योज्यम् । तत्र तत्र तस्य तस्य पदस्य क्रियाभिः सह अभिसंबन्धात् क्रियायां मुख्याधिकारित्वात् क्रियायोगित्वेन प्राधान्यादित्यर्थः । अव्ययीभावः पूर्वपदप्रधानो यथा-अधिस्त्रि, स्त्रियम् अधिकृत्य भवतीत्यत्र पूर्वपदस्य अधिशब्दस्य क्रियायां मुख्यत्वाद् अव्ययीभावः पूर्वप्रधानः । तथा तस्य

अग्रेतनपदस्य क्रियाभिसंबन्धाद् द्विगुस्तत्पुरुषश्च एतौ परपदप्रधानौ। यथा पञ्चानां गवां समाहारः पञ्चगु इत्यत्र पञ्चन् शब्दस्य संख्यावाचकस्य विशेषणत्वं। गोशब्दस्य विशेष्यत्वं। विशेष्यविशेषणयोर्विशेष्यस्य मुख्यत्वमिति गोशब्दस्य परपदस्य प्रधानत्वं, तथा तत्पुरुषसमासे ग्रामं प्राप्त इत्यादीनां परपदानां प्रधानत्वं, यथा ग्रामं प्राप्तस्तथा पुरं गृहं, धनं, सुखं, प्राप्त इत्यादिषु पूर्वपदस्य परावृत्तिमद्विग्रहत्वात्परपदस्य च परावृत्त्यसहत्वात्तत्पुरुषे परपदस्य प्राधान्यम्। एवं द्विगुतत्पुरुषयोः परपदस्य क्रियाभिसंबन्धात् द्विगुतत्पुरुषौ परपदप्रधानौ तथा द्वन्द्वे कर्मधारये च उभयपदयोः क्रियाभिसंबन्धाद् द्वन्द्वकर्मधारयावुभयपदप्रधानौ। यथा अग्निश्च सोमश्च अग्नीषोमौ वर्त्तेते इत्यादिषु पदद्वयस्यापि क्रियायाम् अधिकारत्वाद्द्वन्द्वे उभयपदयोः प्राधान्यं; तथा कर्मधारये, नीलं च तदुत्पलं चेत्यत्र विशेषणविशेष्ययोरेकार्थनिष्ठत्वादन्योन्याश्रयभूतत्वाच्च पदद्वयस्य प्राधान्यं, बहुव्रीहौ चान्यपदस्य प्राधान्यं। यथा बहु धनं यस्येत्यत्र बहुधनस्य वस्तुभूतत्वं यच्छब्दस्य तु स्वामित्वमिति अन्यपदस्य प्राधान्यं तस्यान्यपदस्य क्रियाभिसंबन्धादिति। अथ बलाबलत्वमाह उभयपदप्रधानो बलवानिति। समासद्वयस्य संभवे य उभयपदप्रधानः समासः स बलवान् भवति। यथा निषादस्थपतिरित्यत्र निषादानां स्थपतिरिति तत्पुरुषे क्रियमाणे परपदप्रधानत्वं, तथा निषादश्चासौ स्थपतिश्चेति कर्मधारये क्रियमाणे उभयपदप्रधानत्वम्। ततोऽत्र कर्मधारय एवोभयपदप्रधानत्वाद् बलवानतोऽत्र कर्मधारय एव स्यात् नतु तत्पुरुषः। ननु विभक्तान्येव पदानि प्रयोक्तव्यानि किं समासेनेति समासस्य प्रयोजनमाह। **ऐकपद्यमैकस्वर्यमैकाविभक्तित्वं च समास प्रयोजनमिति।** अनेकेषां पदानामेकं पदमिति तस्य भाव ऐकपद्यं, बहूनि पदानि द्वे वा पदे उच्चार्य विभक्तिलोपं कृत्वा समासत्वाद् या विभक्तिः क्रियते तस्यां कृतायामेकपदभावो भवति तदैकपद्यं, यद्वा एकशेषे द्वे त्रीणि वा पदान्युच्चार्य एकं पदं विशेष्यते तदैकपद्यम्, देवश्च देवश्च देवश्च देवाः। यथा अनेकेषां स्वराणामेकस्वरस्तस्य भाव ऐकस्वर्यं। यथा श्रियमधिकृत्य भवतीति विभागोच्चारणे प्रयत्नगौरवं स्यात्, समासेनोच्चारणे प्रयत्नलाघवं स्यात्, इदमेकं प्रयोजनम्। ऐकपद्यात् खरवणादौ णत्वमपि प्रयोजनं, तथा वैदिकप्रक्रिया प्रसिद्धोदात्तादिस्वराणाम् ऐकस्वर्यं च प्रयोजनम्। अनेकासां विभक्तीनामेका विभक्तिस्तस्या भाव ऐकविभक्तित्वं समासस्य प्रयोजनमिति। शशाश्च कुशाश्च पलाशाश्च इत्यत्र समासकरणे पदत्रयं, विभक्तिलोपानंतरं त्रयाणामपि पदानामेकं पदम्, तथा समासे किंचित्पदमुदात्तस्वरेण किंचित्स्वरितपदेनोच्चार्यते। ततः समासे कृते एकस्वरेणैवोच्चारणं, तथा विभक्तित्रयस्याप्यैकपदत्वे एकैव विभक्तिरित्यैकविभक्तिकत्वमिति

समासेनैतत्त्रयं साध्यत इत्यर्थः । यतः ' विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते । ऐकपद्यं पदानां च स समासोऽभिधीयते । अथ पूर्वमुद्दिष्टत्वाद् अव्ययीभावोदाहरणमाह । अधिस्त्रि इति । अस्यार्थः । अत्राधिरुपसर्गोऽधिकृत्येत्यर्थस्य वाचकः । स्वपदैरन्यपदैर्वा विविच्य कथनं विग्रहस्तेन अव्ययीभावस्यास्वपदविग्रहत्वात् अधिशब्दो नोच्चार्यते । किंतु तदर्थवाचकोऽधिकृत्येति शब्दोऽलिखित एवाग्रे उच्चार्यते । अतः केवलस्त्रीशब्दादग्रे द्वितीयैकवचनं अम् दीयते स्त्रीभुवोरिति वाम्शसि इति वा इय् । स्वर० स्त्री स्त्रियमिति सिद्धं । ततः स्त्रियमधिकृत्येति विग्रहो भवति । स्त्रियमधिकृत्य इति सप्तमी । अधिरुपसर्गः सप्तम्यर्थे । इति विग्रहः । पदस्यार्थमाह अन्वयेति । परस्परसापेक्षपदैकार्थभावोऽन्वयस्य योग्यो योसावर्थस्तस्य समर्पकः प्रापकः समर्थको वा दार्ढ्यकरो यः पदसमुदायः पदसमूहः स विग्रहस्तस्य अपरं नाम वाक्यमित्यर्थः । समासार्थबोधकं वाक्यं विग्रह इति वा । ततोऽधिस्त्रियमिति पदं स्त्रियमधिकृत्य भवतीति विग्रहे कृते । यद्वा स्त्रियमधीत्युच्चार्य कृते विग्रहे अव्ययस्य पूर्वनिपातः कार्यः । अन्यच्च यत् प्रतिपदं प्रधानं तस्य पदस्य सर्वत्र समासे पूर्वनिपातो वक्तव्य इति । अथ अव्ययीभावस्य लक्षणमाह ।

**पूर्वेऽव्ययेऽव्ययीभावः । अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । इति समाससंज्ञायाम् ।**

**पूर्वेऽव्यय इति ।** पूर्व्व ( स. ए. ) अइए । अव्यय ( स. ए. ) अइए । अव्ययीभाव ( प्र. ए. ) स्रो० अकारद्वयस्यापि एदोतोऽत इति लोपः । त्रिपदमिदं सूत्रम् अव्यये पूर्वपदे सति प्राधान्येन पूर्ववर्त्तिनि सति योऽव्ययः सोऽव्ययीभावसंज्ञकः समासो भवति । अत्र अधेरुपसर्गस्य तदव्ययमिति सूत्रेण अव्ययसंज्ञा ततोऽव्यये पूर्वपदेऽस्यान्वयस्य अव्ययीभाव इति समाससंज्ञा । ततः समाससंज्ञायां सिद्धायां किं कृत्यमिति सूत्रेणाह ।

**समासप्रत्यययोः । समासे वर्तमानाया विभक्तेः प्रत्यये च परे विभक्तेर्लुग्भवति । इत्यमो लुक् नामसंज्ञायां स्यादिविभक्तिर्भवति ।**

**समासेति ।** समासप्रत्यययोः समासश्च प्रत्ययश्च समासप्रत्ययौ तयोः समासप्रत्यययोः ( स. द्वि. ) ओसीत्यकारस्य एकारः एअय् स्वर० स्रो० समासेऽव्ययीभावादौ वर्त्तमानाया विभक्तेः तथा प्रत्यये कृत्तद्धितलक्षणे परे च विभक्तेर्लुग् भवति । समासे वर्तमानत्वं प्रस्तुतमेव । तद्धितप्रत्यये परे यथा उपगोरपत्यमित्यत्र षष्ठीलोपः कृत्प्रत्यये यथा कुंभं करोतीत्यत्र द्वितीया । वर्त्तमानार्थयोर्लोप इति सूत्रेण

अमो लुक्, ततो 'निमित्ताभावे नैमित्तिकस्याप्यभाव' इति वचनात् द्वयोरपि निषेधः। स्त्रीशब्दः प्रकृत एव तिष्ठति अधिस्त्री इति जातं ततः कृत्तद्धितसमासाश्चेति समासस्य संज्ञा। अतो नामत्वात्स्यादयोऽपि सामान्येन (प्र. ए.) सु। अधिस्त्री+सु इति स्थिते। लिङ्गव्यवस्थां सूत्रेणाह।

**स नपुंसकम्। सोऽव्ययीभावः समासो नपुंसकलिङ्गो भवति। नपुंसकत्वाद्ध्रस्वत्वम्।**

स नपुंसकमिति। तद् (प्र. ए.) त्यदादेष्टेरः इति तस्य सः सो० नपुंसक (प्र. ए.) अतोऽम्। अम् शसो० मोनु० सैषाद्धसे इति विसर्गलोपः। द्विपदमिदं सूत्रम्। सोऽव्ययीभावो नपुंसकलिङ्गो भवति इति नपुंसकलिङ्गता। ततो नपुंसकत्वात्-नपुंसकस्येति सूत्रेण ह्रस्वत्वमेव नान्यत्। सेरमादि कार्यम्। नपुंसकात्स्यमोर्लुगिति सूत्रेण स्यमोर्लुकि प्राप्ते सर्वविभक्तिलुगर्थं सूत्रान्तरमाह।

**अव्ययीभावात्। अव्ययीभावात्परस्या विभक्तेर्लुग्भवति। अधिस्त्रि गृहकार्यम्।**

अव्ययीभावात् इति। अव्ययीभाव (पं. ए.) ङसिरत् सवर्णे० अव्ययीभावात्परस्याः सर्वस्या अपि विभक्तेर्लुग् भवति न शब्दनिर्देश इति सर्वविभक्तीनां लुगेव भवति। ननु अतोऽम्, ईमौ, जस्शसोः शिः, इत्यादिसूत्रप्राप्तिः इति सेर्लुक्। अधिस्त्रि इति सिद्धं स्त्रियमधिकृत्य आश्रित्येत्यर्थः। इदं गृहकार्यं स्त्रीस्वामिकं स्त्र्याधारमित्यर्थः। स्त्रिया अधिकारे भवति सप्तस्वपि विभक्तिषु सर्ववचनेषु अधिस्त्रि ईदृशमेव रूपं। एवं हरौ अधिकृत्य प्रवृत्ता कथा अधिहरि। एवम् अतिरै अतिनौ इत्यत्र (द्वि. ए.) अम् ततो रायमतिक्रान्तं नावमतिक्रान्तमिति विग्रहे कृतेऽव्ययीभावसमासस्ततः समासप्रत्यययोरिति विभक्तिलोपः निमित्ताभावे नैमित्तिकस्याप्यभावः। इति-अमभावे ऐ आय् इत्यस्याप्यभावः। ततो नपुंसकत्वात् ह्रस्वत्वं क्रियत इति ह्रस्वकरणविधिमाह।

**ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ। रायमतिक्रान्तमतिरि कुलम्। नावमतिक्रान्तमतिनु जलम्।**

ह्रस्वादेश इति। सन्ध्यक्षराणामेकारौकारादीनां ह्रस्वादेशे क्रियमाणे सति एकारैकारयोरिकारः ओकारौकारयोस्तु उकारादेश इति। अतिरै इत्यत्र ऐकारस्य इकारः, अतिनौ इत्यत्र औकारस्य उकारः। ततः (प्र. ए.) अव्ययीभावादिति

सिलोपः। अतिरि इति सिद्धं । एतत् कुलं अतिरि द्रव्यपूर्णमित्यर्थः। एवं एतज्जलम् अतिनु नौभिरपि तरीतुमशक्यमित्यर्थः । अन्ये त्वत्राव्ययीभावं नेच्छन्ति । किंतु अत्यादयः क्रान्ताद्यर्थे द्वितीयया सह समस्यन्ते समासश्च तत्पुरुषो भवति। तत्पुरुषइति तत्पुरुषमिच्छति तच्चिन्त्यम् । एवम् उपनदं, उपमधु, उपकर्तृ, अभ्यग्नि, प्रत्यग्नि, साग्नि, अनुगिरि, अनुवनम्, अनुज्येष्ठं, प्रत्यक्षं, परोक्षं, समक्षं, नायं निद्रा काल इति अतिनिद्रं, मध्येसमुद्रं, पारेगङ्गम्, इत्यादि लोकात् ज्ञेयम् । यत उक्तं प्रक्रियाकौमुद्याम्; अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु इति । विभक्तौ हरौ अधि प्रवृत्ता कथा इत्यधिहरि, समीपे कुम्भस्य समीपमुपकुम्भं, समृद्धौ मद्राणां समृद्धिः सुमद्रं, व्यृद्धौ ऋद्धेरभावो व्यृद्धिः। यवनानां ऋद्धेर्विगमः दुर्यवनं, अर्थाभावे मक्षिकाणामभावो निर्मक्षिकं, अत्यये अतीतानि हिमानि निर्हिमम्, संप्रति नायं निद्राकालोऽतिनिद्रं, शब्दप्रादुर्भावे इतिहरि हरिशब्द इति प्रकारेण प्रकाशत इत्यर्थः, पश्चाद्विष्णोः पश्चादनुविष्णु देवाः, योग्यता, वीप्सा, पदार्थानतिवृत्तिसादृश्यानि यथार्थाः। रूपस्य योग्यमनुरूपम्, अनुपूर्वं ज्येष्ठमनुक्रम्यानुज्येष्ठं, यौगपद्ये चक्रेण युगपदेहि इति सचक्रं, सादृश्ये सदृशः सख्या इति ससखि, संपत्तौ क्षत्राणां संपत्तिः सक्षत्रं, साकल्ये तृणेन सकलम् अत्ति इति सतृणं, अन्तवचनेऽग्निग्रन्थपर्यन्तमधीते साग्नि, पुनरव्ययीभावस्य संभवमाह यथा शब्दः सादृश्यार्थे असादृश्यार्थे च वर्त्तते. तत्र सादृश्यार्थे उपमानार्थे यथा शब्देन सह समासो न भवतीत्यर्थः। यद्वा योग्यता वीप्सापदार्थानतिवृत्तिसादृश्यानि इति यथाशब्दस्य चत्वारोऽर्थाः । तत्र सादृश्यार्थं विहाय अन्येष्वर्थेषु वर्त्तमानस्य यथाशब्दस्यान्वितेन पदेन सह समासो भवति । बाधाभावो योग्यता। पदार्थानां व्याप्तुमीप्सा वीप्सा उदाहरणं यथारूपं चेष्टते रूपस्य योग्यं यथारूपम् इति योग्यता । यथावृद्धं प्रणमति ये ये वृद्धास्तांस्तान् प्रणमति इति । वीप्सा । शक्तिमनतिक्रम्य करोतीति यथाशक्ति एवं सूत्रम् अनतिक्रम्येति यथासूत्रम् इति पदार्थानतिवृत्तिः । सादृश्ये तु न समासः । यथा विष्णुस्तथा शिवः ।

यथाऽसादृश्ये । यथाशब्दोऽसादृश्येऽर्थे वर्तमानः समस्यते, सोऽव्ययीभावः समासो भवति । योग्यतावीप्सापदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः । शक्तिमनतिक्रम्य करोतीति यथाशक्ति करोति । सादृश्ये किम् । यथा हरि-

स्तथा हरः। कुम्भस्य समीपमिति विग्रहे समासादि पूर्ववत्। अव्ययीभावात इति प्राप्ते।

यथा सादृश्ये। यथा (प्र. ए.) शक्ति (द्वि. ए.) अमूशसोरस्य अग्रे अनतिक्रम्येति उच्चारणमात्रं तामनुल्लङ्घ्येत्यर्थः। अनतिक्रम्येत्यर्थे पूर्वं यथाशब्दः असादृश्यार्थत्वात् समासः स चाव्ययीभाव इति समाससंज्ञायां विभक्तेरमो लोपः नामसंज्ञायां स्यादिर्विभक्तिः अव्ययीभावादि ति सेर्लोपः यथाशक्ति शक्त्यनुसारेण करोतीत्यर्थः। सादृश्ये तु यथा विष्णुस्तथा शिवः अत्र न समासः एवं चाव्ययीभावादिति सूत्रं सामान्यसूचकमथाकारान्तात्परासां स्यादिविभक्तीनां विशेषमाह ॥

अतोऽमनतः। अकारान्तादव्ययीभावात्परस्या विभक्तेरम् भवति। अतं वर्जयित्वा। उपकुम्भं वर्तते।

अतोऽमनतः। अत् (पं० ए०) स्वर० स्रो० अम् (प्र० ए०) हसेपः अनत् न अत् अनत् तस्मात् अनतः (पं० ए०) स्वर०। स्रो०। पश्चादतोत्युः। उओ एदोतोतः। मकारस्य अकारेण सह स्वर० त्रिपदम्। अकारान्तो योऽव्ययीभावस्तस्मात् परस्याः सर्वस्या विभक्तेः समानामपि विभक्तीनाम् अमादेशो भवति। अतमिति पञ्चम्या 'अत्'आदेशं त्यक्त्वा अत् आदेशग्रहणादादेशिनं ङसिं वर्जयित्वेत्यर्थः। पञ्चम्या अम् न भवतीति तात्पर्यार्थः। अत्रोदाहरणं; कुम्भस्य समीपमिति विग्रहे कुम्भ (ष० ए०) ङस्य कुम्भस्य इति सिद्धं। समीपार्थे उप इति पूर्वमुपसर्गरूपमव्ययम्। उपशब्देन समीपार्थस्योक्तत्वादुक्तार्थानामप्रयोग इति समीपशब्दस्याप्रयोजनं। ततोऽव्ययीभावसमाससंज्ञा। समासप्रत्यययोरिति षष्ठीलोपः। उपकुम्भ इति समासपदस्य नामसंज्ञा। तत्र लिङ्गार्थे प्रथमेति (प्र० ए०) अतोऽमनतइति सेरम्। अमूशसोरस्य मोनु०। प्रथमायां कुम्भो वर्त्ततेऽग्रे। उपकुम्भशब्दात् द्वितीयाद्याः सप्तमीपर्यन्ता विभक्तयो यथार्थं योज्याः। तत्र द्वितीयायां उपकुम्भं पश्य। सूत्रम्।

वा टाङ्योः। टा ङि इत्येतयोर्वा अम् भवति। अतोऽमनतः। वा टाङ्योः। अत्र अत् टा ङि एतत्पञ्चम्यास्तृतीयासप्तम्योर्द्विवचनबहुवचनयोरप्युपलक्षणम्। तेन द्विवचनबहुवचनयोरपि वा अम् भवति, न लुक्। पञ्चम्यास्तुअम्लुकोर्निषेधः। उपकुम्भेन कृतं उपकुम्भकृतम्।

उपकुम्भं देहि । अनत इति विशेषणादुपकुम्भादानय। उप-कुम्भं देशः । उपकुम्भं निधेहि उपकुम्भे निधेहि ।

वा टाङ्योरिति । (प्र० ए० ) अव्य०टाच ङिश्च टाङी तयोः (ष० द्वि०) इयं स्वरे। स्वर०द्विपदं सूत्रम्। टाङि इत्येतयोर्वचनयोर्वा अम् भवति उपकुम्भद्विस्थाने उभयत्रापि [ तृ० ए० ] टा एकत्र अम् अन्यत्र वा शस्य बहुलार्थत्वाल्लुक् न. किं तु टेन अइए उपकुम्भं उपकुम्भेन वा कर्त्रा .कृतं कुम्भस्य समीपेन कृतमित्यर्थः । चतुर्थ्यां तु उपकुम्भं देहि कुम्भस्य समीपाय देहीत्यर्थः । पञ्चम्यां अनत इति विशेषणात् अम् न भवति। अतः उपकुम्भात् कुम्भस्य समीपादानय षष्ठ्यां तु उपकुम्भं देशः कुम्भ संबन्धिनः समीपस्य देशः प्रदेश इत्यर्थः । सप्तम्यां तु वाटाङ्योरिति विकल्पेन अम् पक्षे अइए उपकुम्भं उपकुम्भे ङौ रूपद्वयं । कुम्भस्य समीपे निधेहि स्थापयेत्यर्थः ।

अवधारणार्थे यावति च । अवधारणार्थे यावच्छब्दे प्रयुज्य-माने अव्ययपूर्वपदाभावेऽपि योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । यावन्त्यमत्राणि तावतो ब्राह्मणानामन्त्रय-स्वेति यावदमत्रम् । मक्षिकाणामभावो निर्मक्षिकं वर्तते ।

पुनरव्ययीभावं वक्तव्यरूपया फक्किकया निरूपयति। न केवलं अव्यये पूर्वपदे एवाव्ययीभावः। किंत्ववधारणार्थे यावच्छब्देऽपि पूर्वपदेऽव्ययीभावः। अवधारणार्थे यावच्छब्दः। ततो ऽवधारणे अर्थे यावच्छब्दे पूर्वपदे प्रयुज्यमाने योऽन्वयः परिमाणार्थे सोऽव्ययीभावसंज्ञकः समासो भवति । चशब्दादभावार्थेऽपि अव्ययपूर्वकत्वेऽव्ययीभावः समासः इति समाससंज्ञायां यावत् ( प्र० ब०) जश्शसोः शिः। नुमयमः। नश्चा० स्वर० अग्रे अमत्र ( प्र०ब० ) जस्शसोः शिः० नुमयमः नोपधायाः ष्रनॄणो०स्वर० यावन्ति यावत्संख्याकान्यमत्राणि पात्राणि भाजनानि भवन्ति, तावतस्तावत्संख्याकान् ब्राह्मणान् आमन्त्रयस्व भोजनार्थं निमन्त्रयस्वेति विग्रहं कृत्वा पदद्वयेऽपि समासप्रत्यययोरिति विभक्तिलोपः । 'यावत्+अमत्र' इति स्थिते ब्राह्मणानित्यत्र विशेष्यस्य द्वितीयाबहुवचनं शस् अतोऽमनत इति शसोऽम्। अम्शसोः चपा अबे० तस्य द० यावदमत्रमिति पात्रसंख्यया ब्राह्मणानामन्त्रयस्वेत्यर्थः । तथा मक्षिका ( ष. ब.) नुडामः। ष्रनॄणो० स्वर० मक्षिकाणामभाव इति विग्रहे अभावार्थः पूर्वं निर् प्रयोगः। अत्राभावेऽप्यव्ययीभावसमासः। समासप्रत्यययोरिति षष्ठीलोपः । नामसंज्ञायां स्यादि। ( प्र. ए. ) नपुंसकत्वादव्ययीभावस्य ह्रस्वत्वं अतोमनत इति सेरम् अम्शसोरस्य मोनु० निर्मक्षिकं वर्त्तते। अग्रे निर्मक्षिकं पश्य निर्मक्षिकं कृतमित्यादीनि द्वितीयादिषूदाहरणानि ज्ञेयानि । अथ तत्पुरुषसमासमाह । सूत्रम् ।

**अमादौ तत्पुरुषः।** द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति। कृष्णं श्रितः कृष्णश्रितः। ग्रामं प्राप्तो ग्रामप्राप्तः। अन्वये इति किम्। पश्य कृष्णं, श्रितस्त्वं साधून्। दात्रेण छिन्नं दात्रच्छिन्नम्। यूपाय दारु यूपदारु। वृकेभ्यो भयं वृकभयम्। राज्ञः पुरुषो राजपुरुषः। अक्षेषु शौण्डः अक्षशौण्डः।

अमादाविति। अम् आदिर्यस्यासौ अमादिस्तस्मिन् अमादौ (स. ए.) ङे रौ ङित्। ङित्त्वाट्टिलोपः। अग्रे तत्पुरुषः (प्र. ए) सो० अमादावित्यत्र जातावेकवचनं तेन अमाद्या द्वितीयाद्याः सप्तमीपर्यंताः षड्विभक्तयो ग्राह्या इति यस्य पदस्यान्ते द्वितीयाद्या विभक्तयो भवन्ति तस्मिन् पदे पूर्वपदे सति योऽन्वयो विग्रहः स तत्पुरुषसंज्ञकः समासो भवति। अत्रान्वयशब्दोऽन्वयप्रतिपादको विग्रहो ग्राह्यः। तत्र प्रथमं द्वितीयान्तस्य पूर्वपदस्योदाहरणं। ग्राम (द्वि. ए.) अम्। अम्शसो० मोनु० प्राप्त (प्र. ए.) सो० ग्रामं प्राप्त इति द्वितीयान्ते पूर्वपदे तत्पुरुषः। समासप्रत्यययोरम्स्योर्लोपः। नामसंज्ञायां (प्र. ए) सो०। ग्रामप्राप्तः इति सिद्धम्। इति द्वितीयातत्पुरुषः। दात्रसाधने तृतीया। दात्र (तृ. ए) टेन अइए र्ऋर्नो०। छिन्न (प्र. ए.) अतो अम् अम्शसो० मोनु० दात्रेण छिन्नमिति तृतीयान्ते पूर्वपदे तत्पुरुषः। पूर्ववद्विभक्तेर्लोपः। पुनरपि नामसंज्ञायां स्यादिः (प्र. ए.) अतोऽम्। अम्शसो० मोनु० दात्रच्छिन्नमिति। इति तृतीयातत्पुरुषः। एवं यूप (च. ए.) ङे ङेरक् एअय् सवर्णे० स्वर० तादर्थ्ये चतुर्थी यूपाय दारु (प्र. ए.) नपुंसकात् स्यमो० यूपाय यज्ञस्तम्भाय दारु काष्ठं। समासप्रत्यययोरिति + विभक्तिलोपः पुनः (द्वि. ए.) नपुंसकात् स्यमोर्लुक् अत्र चतुर्थीपूर्वपदतत्पुरुषः। वृक (पं. ब.) भ्यस्, एस्मि बहुत्वे। भय (प्र. ए.) अतोऽम् भयहेतौ पञ्चमीति वृकेभ्यो भयमिति विग्रहे विभक्तिलोपादि पूर्ववत् ततस्तत्पुरुषस्य परपदप्रधानत्वात् भयशब्दः क्लीबलिङ्गः (प्र. ए.) अतोऽम् अम्शसो०। इति पञ्चमीतत्पुरुषः। तथा राज्ञः पुरुष इत्यत्र राजशब्दात् संबन्धे षष्ठी, राजन् (ष. ए.) अल्लोपः स्वर० स्तोःश्चुभिः० जञोर्ज्ञः स्वर० अग्रे पुरुषः (प्र. ए.) सो० राज्ञः पुरुष इति विग्रहे समासप्रत्यययोरिति विभक्तेर्लोपः। नाम्नो नो लोपश्धाविति राजन् इत्यत्र नकारलोपः। ततो नामसंज्ञायां स्यादिः (प्र. ए.) सो० अत्र षष्ठीतत्पुरुषः। अक्ष (स. ब.) सुप् एस्मिबहुत्वे किलः० अग्रे शौण्डः (प्र. ए., सो० अक्षेषु पाशकेषु शौण्डश्चतुरः। अत्र विषयार्थे सप्तमी। समासप्रत्यययोरिति विभक्तिलोपादि पूर्ववत् अक्षशौण्ड इति सिद्धम्। सांप्रतं विशेषमाह।

क्वचिदमाद्यन्तस्य परत्वम् । अग्नौ आहित इत्याहिताग्निः । पूर्वं भूत इति भूतपूर्वः । पिशाचादेः सभादीनां नपुंसकत्वं वा । पिशाचानां सभा इति पिशाचसभम्-पिशाचसभा । गृहस्थूणम्-गृहस्थूणा । शशोर्णम्-शशोर्णा । भिन्नपदे णत्वाभावस्तथापि, समासे क्वचिदैकपद्यं णत्वहेतुः । शराणां वनं शरवणम् । आम्राणां वनमाम्रवणम् । संज्ञायां वा त्रीणि नयनानि यस्यासौ त्रिनयनः-त्रिणयनः । पानस्य वा । सुरायाः पानं सुरापानम्-सुरापाणम् ।

क्वचिदमाद्यन्तस्येति तत्पुरुषसमासे वर्त्तमानस्य द्वितीयादिविभक्त्यन्तस्य पूर्वपदस्य परत्वमिति उत्तरपदत्वम् अग्रेवर्त्तित्वं भवति क्वचित्प्रयोगान्तरे न सर्वत्रेत्यर्थः। उदाहरणमाह। अग्नि ( स. ए. )ङेरौ ङित् ङित्त्वाट्टिलोपः। स्वर०आहित (प्र. ए. ) सो०-अग्नौ आहित इति विग्रहे तत्पुरुषसमासः। विभक्तिलोपे कृते अग्निपदमाहितपदस्याग्रे प्रयुज्यते। सवर्णे० सो० आहिताग्निरिति अग्निविषये आहितः स्थापितः एवं पूर्वस्मिन् काले भूत इति विग्रहे सप्तमीप्रथमयोर्लोपः क्वचिदमाद्यन्तस्य परत्वमिति भूत इति पदस्याग्रे पूर्व इति पदं लिख्यते। (प्र. ए.) सो० भूतपूर्व इति सिद्ध्यति । एवं दन्तानां राजा राजदन्तः क्वचिदित्युक्तत्वात् अग्न्याहित इत्यपि भवति। अथ समासे पुनः ऐकपद्यस्य प्रयोजनान्तरमाह समासे क्वचिदैकपद्यं णत्वहेतुः । यद्यपि भिन्नपदे णत्वाभावस्तथापि समासविषये क्वचित्प्रयोगेपूर्वपदस्थात् षकाररेफऋवर्णरूपान्निमित्तादुत्तरपदस्थनकारस्य णत्वकरणे ऐकपद्यं हेतुः कारणं भवतीत्यर्थः। यथा आम्राणां वनम् आम्रवणं, शराणां वनं शरवणम् इत्युभयत्रापि तत्पुरुषः समासः। विभक्तिलोपे एकपदत्वे ष्ऋर्नोणोऽनन्ते इति पूर्वपदस्थात् व्यवहितरेफान्निमित्तादुत्तरवनपदसंबन्धिनो नस्य णत्वं ( प्र. ए. ) अतोऽम् अमृशसो० अत्र णत्वसंभवः। एवं प्लक्षवणं, खदिरवणम् । तथा त्रीणि नयनानि यस्य स त्रिनयनः इत्यत्र क्वचिदिति कथनादेकपदेऽपि न णत्वं। केचित्तु त्रिणयनः।त्रिनयनः।अत्रापि विकल्पेन णत्वमिच्छन्ति । पानस्येति पानसंबन्धिनो नस्य वा णत्वं भवति । सुरायाः पानं सुरापानं चेति विकल्पेन णत्व।एवं क्षीरपानं क्षीरपाणं। क्वचिदिति विशिष्टप्रयोगानुसारेण णत्वे नित्यत्वं विकल्पोऽपवादश्च ज्ञेयः । प्रवणम् अन्तर्व्वणं, पूर्वाह्णः, अपराह्णः, खुरणसः, शूर्पणखा, इत्यादि नित्यं णत्वं, दूर्वावनं दूर्वावणं गिरिनदी गिरिणदी चक्रनितम्बा चक्रणितम्बा इत्यादौ विकल्पेन णत्वं। इन्द्रावाहना हरभामिनी प्रियपूना

परिपक्कानि इत्यादौ ऐकपद्यात् प्राप्तस्यापि णत्वस्यापवादः। एवं लौकिकप्रयोगवशात् ज्ञेयम् । अथ पुनस्तत्पुरुषं सूत्रेणाह ।

नञि । नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति ॥ नञ् । नञ् सुबंतेन समस्यते । नञ उभयार्थत्वं प्रसिद्धम् । तथा चोक्तं वार्तिककारेण ।

उभौ नञौ समाख्यातौ, पर्युदासप्रसज्यकौ ॥
पर्युदासः सदृग्ग्राही, प्रसज्यस्तु निषेधकृत् ॥
प्राधान्यं तु विधेर्यत्र, प्रतिषेधेऽप्रधानता ॥
पर्युदासः स विज्ञेयो, यत्रोत्तरगतो न नञ् ॥
अप्राधान्यं विधेर्यत्र, प्रतिषेधे प्रधानता ॥
प्रसज्यप्रतिषेधोऽयं, क्रियया सह यत्र नञ् ॥

न ब्राह्मणोऽब्राह्मणः ।

नञि । नञ् ( स. ए. ) स्वर० एकपदमिदं यत्र नञ् इति निषेधवाचकमव्ययं पूर्वपदं भवति स नाम्नामन्वयो विग्रहः तत्पुरुषसमासो भवति। न ( प्र. ए. ) अव्ययात्सिलोपः। ब्राह्मणः ( प्र. ए. ) सो० नब्राह्मण इति स्थिते ।

ना । समासे सति नञोऽकारादेशो भवति नाकादिवर्जम् । नाक नक्र नग तनूनपात् नख नपुंसक नक्षत्र नकुल नासत्य नमुचि नर इत्यादि । नाक नमुचि नकुल नागर नासिका नमेरु ननान्द नभाग नान्तरीय नक्र नख नग नद नयाद नवाद नवेद नाऽसत्य नापित नहुष नक्षत्र इत्येते नाकादयः केनाचिद्गणिताः । उभयथापि नाकादौ न भवति ।

ना । न ( प्र. ए. ) अव्यया० अग्रे अ ( प्र. ए. ) साङ्केतिकं० पश्चात्सन्धिः सवर्णेदीर्घः सह । ना इति द्विपदम् । समासे सति नञोऽकारादेशो भवति तत्रापि नाकादीन्वर्जयित्वा। नास्ति अकं दुःखं यस्मिन् स नाकः, नाग, नमुचि, नख, नक्षत्र, नपुंसक, नकुल, नग, नक्र, नभ्राट्, नासत्य. नराव, नाचिकेत, नापित, नमेरु, ननान्द, नभस्वत्, नभो, नरंग, नास्तिक, नग्न, नभाग, नपान्नावेद, नातिविस्तरादयः शब्दा नाकादौ द्रष्टव्याः । इत्यत्र नञोऽकारादेशो न भवति । अनेन न-

कारस्य अकारः अब्राह्मण ( प्र. ए. ) स्रो० अब्राह्मणः ब्राह्मणादन्य इत्यर्थः । पुनः । सूत्रम् ।

अन् स्वरे । समासे सति नञोऽनादेशो भवति स्वरे परे । अनादेशोऽपदान्तवद्वाच्यः । तेन ङ्णन इति न द्वित्वम् । अश्वादन्योऽनश्वः । धर्माद्विरुद्धोऽधर्मः । ग्रहणस्याभावोऽग्रहणम् । तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते । तस्मादन्यस्तदन्यः । तेन विरुद्धस्तद्विरुद्धः । तस्य अभावस्तदभावः । तदन्यश्च तद्विरुद्धश्च तदभावश्च तदन्यतद्विरुद्धतदभावास्तेषु नञ् वर्तते । इतितपुरुषः ।

अन् स्वरे । अन् ( प्र. ए. ) हसेपः। स्वर ( स. ए. ) अइए समासे कृते सति नञ् इत्यस्य [1]अन्यविरुद्धाभाववाचिनः स्वरे परे अन् आदेशो भवति अत्रापि नाकादि वर्जमिति योज्यम् । तदुदाहरणमाह। अश्व ( पं. ए. ) ङसिरत् सवर्णे० अन्य ( प्र. ए. ) स्रो० धर्म्म० ( पं. ए. ) ङसिरत् सवर्णे० विरुद्ध ( प्र. ए. ) स्रो० ग्रहण ( ष. ए. ) ङस्स्य अभाव ( प्र. ए. ) स्रो० अश्वादन्यः धर्माद्विरुद्धः ग्रहणस्याभावइति विग्रहत्रयं। त्रिष्वपि पूर्वं नञ्प्रयोगः। उक्तार्थानामप्रयोगः अन्यविरुद्धाभावानां लोपः । समासप्रत्यययोरीति पञ्चमीषष्ठीलोपः। अश्वशब्दे परे स्वपरत्वात् अन्स्वरे इति नञोऽनादेशः। स्वर० शेषोदाहरणद्वये प्राक् स्वरत्वाभावात् ना इति सूत्रेण नञः केवलोऽकारादेशः ( प्र. ए. ) स् उदाहरणद्वयं पुल्लिङ्गे, तृतीयं नपुंसके । एष्वर्थेषु नञ् प्रयुज्यते इत्याह तदन्येति । तस्मादन्यस्तदन्यः। तेन विरुद्धस्तद्विरुद्धः तस्याभावस्तदभावश्च एषु अर्थेषु नञ् प्रवर्त्तते। नञ्शब्दः पूर्वं प्रयुज्यते इति भावः। तदन्य इति अश्वादन्य इति। तद्विरुद्ध इति तदभाव इति ग्रहणाभावः। एष्वर्थेषु पूर्वमुपसर्गरूपो नञ् भवति, तस्मिन् नञि पूर्वपदे तत्पुरुषसमासो भवतीत्यर्थः । सांप्रतं द्वन्द्वसमासो निरूप्यते ।

चार्थे द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थास्तेषु चार्थेषु द्वन्द्वः समासो भवति । तत्रेश्वरं गुरुं च भजस्वेति । प्रत्येकमेकक्रियासंबन्धे समुच्चये समासो नास्ति । वटो भिक्षा-

---

[1] अन्यश्च विरुद्धश्च अभावश्चेति द्वन्द्वः । द्वन्द्वान्ते श्रूयमाण पद प्रत्येकं संबध्यते इति ' वाचिन ' इति शब्दस्य प्रत्येकमन्वयः। अन्यवाचिनोविरुद्धवाचिनो अभाववाचिनश्चेत्यर्थः ।

**मट गां चानयेति क्रमेण क्रियाद्वयसंबन्धेऽन्वाचये समासो नास्ति। नाम्नां परस्परमसंबन्धात् । इतरेतरयोगे समाहारे चार्थे द्वन्द्वः समासो भवति ।**

**चार्थे द्वन्द्वः।** चस्यार्थश्चार्थस्तस्मिन् ( स. ए. ) अइए द्वन्द्व ( प्र. ए. ) स्रो० द्विपदं सूत्रम्। अथैतत् सूत्रं व्याचिख्यासुश्चार्थान् चार्थेषु समाससंभवासंभवं चाह। समुच्चयः १ अन्वाचयः २ इतरेतरयोगः ३ समाहारश्चेति ४ चत्वारश्चार्थाः । तत्र कर्मद्वयस्य एकक्रियानिष्ठत्वं समुच्चयः १। कर्मद्वयेऽपि प्रत्येकं क्रियाद्वयेन संबन्धोऽन्वाचयः २। पदद्वयेन द्वन्द्वः इतरेतरयोगः ३। बहूनां पदानां समवायः समाहारः ४। एते चस्य अर्थाः । तत्र अर्थचतुष्टयमध्ये समुच्चयान्वाचययोः समासो नास्तीति दर्शयत्यत्र। ईश्वरं च गुरुं च भजेत्यत्र कर्मद्वयस्यैकक्रियानिष्ठत्वे समुच्चये समासो नास्ति। अत्र चकारो भजनक्रियाया ईश्वरेण गुरुणा च संबन्धं द्योतयति इति। एकक्रियाभिसंबन्धाश्चार्थाः तस्मिन् तथा हे बटो भिक्षामट गां चानयेति अटनक्रियाया भिक्षा कर्म, आनयनक्रियायोगः कर्म, अत्र चकार एकस्य बटोः अटने आनयने च क्रियाद्वये संबन्धं द्योतयति। एवमेकस्य कर्तुः कर्मद्वयक्रियाद्वयसंबन्धे अन्वाचये च चार्थे समासो नास्ति । कुतः परस्परमसंबन्धात् अन्वययोग्यत्वाभावात् नाम्नामन्वययोग्यत्वे सत्येव समासविधानम्। अत्र क्रियानिरोधात् नाम्नां परस्परं संबन्धाभावात् समासो नास्तीत्यर्थः। यत ईश्वरस्य गुरोः युगपद्भजनेऽसंबन्धः। तथा अन्वाचये भिक्षाटनस्य गवानयनस्य च परस्परमसंबन्धादन्वाचये समासो नास्ति। इतरेतरयोगे समाहारे च चार्थे संबन्धसंभवात् द्वन्द्वः समासो भवति। अन्योऽन्यं सापेक्षा द्वयोर्योगः एकक्रियाभिसंबन्धः इतरेतरयोगः बहूनां समुदायः समाहारः । अथ द्वन्द्वसमासे पदानां समानत्वात् कः शब्दः पूर्वं योज्यः इत्याशंक्याह ।

**द्वन्द्वेऽल्पस्वरप्रधानेऽकारोकारान्तानां पूर्वनिपातो वक्तव्यः । पटुश्च गुप्तश्च पटुगुप्तौ। इतरेतरयोगे द्विवचनम्। चकारादीनामुक्तार्थानामप्रयोगः। अग्निश्च मारुतश्च अग्निमारुतौ। भोक्ता च भोग्यश्च भोक्तृभोग्यौ। धवश्च खदिरश्च धवखदिरौ।**

**द्वन्द्वेऽल्पस्वर इति ।** द्वन्द्वे द्वन्द्वसमासे प्रस्तावादितरेतरयोगे सदल्पस्वरं पदं समस्वरे वा पदद्वये यत्प्रधानं पदं तथा इकारान्तं उकारान्तं यत्पदं भवति तस्य पूर्वनिपातः प्राक्प्रयोगः कर्तव्यः। परं बहुष्वनियमः। अथ उकारान्तोदाहरणमाह। पटु ( प्र. ए. ) स्रो० च ( प्र. ए. ) अव्यया० विसर्ज० स्तोःश्चुभिः० गुप्तः

( प्र. ए. ) स्लो० च ( प्र. ए. ) अव्यया० विसर्ज० स्तो श्चु० पटुश्च गुप्तश्चेत्यत्र समस्वरत्वेऽपि उकारान्तस्य पूर्वनिपातः समासप्रत्यययोरिति सिलोपः। तत उक्तार्थानामप्रयोगः। उक्तोऽर्थो यैस्ते उक्तार्थाश्चकारादयस्तेषामप्रयोगोऽभावो लोप इत्यर्थः। इति चकारलोपः। पटुगुप्त इति स्थिते नामसंज्ञायां स्यादिः। इतरेतरयोगात् प्रथमाद्विवचनं पटुगुप्तौ कार्यं कुरुत इत्युक्ते पटुसहायो गुप्तः गुप्तसहायः पटुरिति गम्यते इत्यन्योन्यापेक्षाऽस्ति एकस्याभावे तन्न क्रियते एवमन्यत्रापि ज्ञेयं । पटुगुप्तौ इत्यत्र पटुशब्दस्य उकारत्वात् पूर्वं निपातः। परं गुप्तपटू इति न भवति। दक्षामदाम हे पटु एवमेव अग्निश्च मारुतश्चेति अग्निशब्दस्याल्पस्वरत्वात् इकारान्तत्वाच्च पूर्वं प्रयोगः। पूर्ववद्विभक्तेश्चकारस्य च लोपः। ततः ( प्र. द्वि. ) तथा भोक्तृ ( प्र. ए. ) ओऔऔ भोक्तार् यदादेशस्तद्वद्भवतीति न्यायात् सेरा डित्वाट्टिलोपः इत्यार्लोपः । स्वर० च ( प्र. ए. ) अव्य० भोग्य० ( प्र. ए. ) स्लो० च ( प्र. ए. ) अव्य० पश्चाद्विसर्जनी० स्तोः श्चुभिः श्चुः भोक्ता च भोग्यश्चेति विग्रहे भोक्तुः प्रधानभूतत्वाद्भोक्तृशब्दस्य प्रथमं प्रयोगः। भोक्ता पुरुषः भोग्यं विषयादि वस्तु। ततो भोक्तुः भोग्यस्य स्वामित्वात् प्रधानत्वं। ततः प्राग्वद्विभक्त्या लोपः। भोक्तृभोग्य ( प्र. द्वि. ) एवं धवश्च खदिरश्च धवखदिरौ इत्यत्र धवशब्दस्याल्पस्वरत्वात् प्रथमं प्रयोगः। स्त्रीच पुरुषश्च स्त्रीपुरुषौ अत्र पुरुषस्य प्रधानत्वेऽपि अल्पस्वरत्वात् स्त्रीशब्दस्य पूर्वनिपातः । अथ द्वन्द्वे एव विशेषमाह ।

**देवताद्वन्द्वे पूर्वपदस्य वा दीर्घो वक्तव्यः । वाग्रहणात्क्वचिन्न भवत्यग्निमारुतावित्यादौ । अग्निश्च सोमश्च ।**

**देवता द्वन्द्वे।** देवतावाचकशब्दभवे द्वन्द्वसमासे पूर्वपदसंबन्धिनोऽन्त्यस्वरस्य वा दीर्घो वक्तव्यः। इति वाग्रहणत्वात् प्रयोगान्तरे न भवति । अथोदाहरणमाह अग्निश्च सोमश्चेति विग्रहे विभक्तिलोपे उक्तार्थानामप्रयोगे च अग्निसोम इति स्थिते देवता द्वन्द्वे इति अग्निशब्दस्य स्वरस्य दीर्घ ईकारः। द्वयोरपि देवतात्वात् अग्नीसोम इति स्थिते ।

**अग्न्यादेः सोमादीनां षत्वं वक्तव्यम् । अग्नीषोमौ इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती। सूर्याचन्द्रमसौ ।**

**अग्न्यादेः सोमादीनामित्यादि।** अग्न्यादेः दीर्घनाम्यन्तात्परेषां सोमादीनां मध्यसकारस्य षकारो भवति । 'क्लिलात्षः सः' कृतस्येत्यस्य न प्राप्तिः, सकारस्य अकृत्त्वात् । अग्नीषोम ( प्र. द्वि. ) अग्नीषोमौ इति सिद्धम् । अत्र इकारान्तस्य पूर्वत्वम् अग्न्यादेरित्यादिशब्दात् अग्निष्टोमः, अग्निष्टुत्, ज्योतिष्टोमः, आयुष्टोमः,

अङ्गुलिषङ्गः, भीरुष्ठानं मातृष्वसा, पितृष्वसा, इत्यादौ षत्वं एवमिन्द्रश्च बृहस्पतिश्चेत्यत्र इन्द्रशब्दस्याल्पस्वरत्वात् पूर्वनिपातः, विभक्तिलोपे उक्तार्थानामप्रयोगे च 'देवताद्वन्द्वे' इति इन्द्रस्य दीर्घः (प्र. द्वि.) औयू इतीकारः। सवर्णे॰ इन्द्राबृहस्पती। एवं सूर्याचन्द्रमसौ, मित्रावरुणौ, उदाहरणान्युक्तानि। अग्न्यादेरिति वक्तव्यं दृश्यते तच्च प्रागेव व्याख्यातम्। सांप्रतमितरेतरयोगद्वन्द्वस्य वचननियममाह। इतरेतरयोगे द्विवचनमिति। इतरेतरयोगे द्वन्द्वे द्विवचनं भवति पदद्वयात्मकत्वात् लिङ्गनियमस्तु उभयपदप्रधानत्वेऽपि उत्तरपदलिङ्गप्रयोगो भवति। सांप्रतं समाहारद्वन्द्वे वचनविशेषमाह।

**एकवद्भावो वा समाहारे वक्तव्यः । समाहारस्यैकत्वात्समाहारे एकवद्भावः सिद्ध एव । तर्हि वाग्रहणं किमर्थम् । वाग्रहणात्क्वचिद्द्वयोरपीतरेतरयोगे एकवचनं क्वचिद्बहूनामितरेतरयोग एकवचनम् । शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशाः-शशकुशपलाशम् ।**

**एकवद्भावो वा समाहारे वक्तव्यः** । समाहारे द्वन्द्वे पदानां समासे कृते एकवद्भाव एकवचनं वा भवति। एकमिव एकवत् एकवचनं तस्य भावः एकवद्भावः। पक्षे पदानां समाहारत्वात् बहुत्वाद् बहुवचनं भवत्येव। एकवद्भावः समाहारे वा वक्तव्यः इति। अत्र समुदायार्थप्रधानविवक्षायामेकवचनं अवयवार्थप्राधान्यविवक्षायां बहुवचनमपि निपातानामनेकार्थत्वात् वाग्रहणात् क्वचिदितरेतरयोगेऽप्येकवद्भावो भवतीति शेषः। यथा अहिन्। द्वित्वमतन्त्रमिति वचनाद्वा समाहारोदाहरणं यथा शश (प्र. ब.) सवर्णे॰ स्रो॰ च (प्र. ए.) अव्य॰ एवं कुश (प्र. ब.) च (प्र. ए.) अव्य॰ पलाश (प्र. ब.) सवर्णे॰ स्रो॰ च (प्र. ए.) अव्य॰ शशाश्च कुशाश्च पलाशाश्च इति विग्रहे अत्र पदद्वयाधिकपदात्मकत्वात् समाहारद्वन्द्वः। समासप्रत्यययोरिति विभक्तिलोपे उक्तार्थानां चाप्रयोगे शश कुश पलाशद्विस्थाने एकत्र समाहारे बहुत्वे (प्र. ब.) पलाशशब्दस्य वृक्षवाचित्वात्पुल्लिङ्गे (प्र. ब.) सवर्णे॰ स्रो॰ द्वितीयरूपे एकवद्भावो वा समाहारे इति एकवचनं (प्र. ए.) सत्यपि पुंस्त्वे एकत्वे द्विगुद्वन्द्वाविति वक्ष्यमाणसूत्रेण क्लीबलिङ्गः। अतोऽम् अमृशसो॰ मोनु॰। सांप्रतम् इतरेतरयोगेऽपि एकवद्भावोदाहरणमाह। अन्यश्च अन्यश्च इति विग्रहे तथा परश्च परश्चेति विग्रहे समासप्रत्यययोरिति उभयत्रापि विभक्तिलोपे उक्तार्थानां चाप्रयोगे 'अन्य, अन्य' इति 'पर पर' इति स्थिते सति।

अन्यादीना विभक्तिलोपे कर्मव्यतिहारे पूर्वपदस्य सगागमो भवति । अन्योन्यमेकक्रियाकरणं कर्मव्यतिहारः । अन्यश्च अन्यश्च अन्योन्यं विप्रा नमन्ति । परश्च परश्च परस्परम् । परस्परमित्यत्र कस्कादित्वाद्विसर्गोपध्मानीयाभावः ।

अन्यादीनां शब्दानां समासे वर्त्तमानानां पूर्वपदवर्त्तिनां सगागम इति सकारस्य आगमो वक्तव्यः इति । आदिभूतयोरन्यपरशब्दयोः सगागमः कित्वादन्ते अन्यस्+अन्य इति स्थिते स्रो० अतोऽत्युः उओ एदोतोतः अन्योऽन्य (प्र. ए. ) अतोऽमू अत्र पदान्तताश्रयणात् स्रो० एदोतोतः एतयोः सूत्रयोः प्राप्तिः अप्रधानभूतत्वात् श्त्वन्यादेरित्यपि न भवति अन्योन्यम् इति सिद्धम् । पर+पर मध्ये सकारागमः स्वर० परस्पर इत्यत्र वाचस्पत्यादित्वान्न विसर्गोपध्मानीयादि कार्यं स्वर० परस्परः । उभयत्रापि पूर्वोक्तवाशब्देन एकवद्भावइति (प्र. ए. ) एकत्वे द्विगुद्वन्द्वाविति क्लीबत्वात् अतोम्, अमृशसो०मोनु० अन्योऽन्यं परस्परमिति सिद्धं । अन्योऽन्यादयः सहादिमध्ये पठिता इत्यन्ये । केचित्तु अन्योऽन्यमित्यत्र अन्यश्च अन्यश्चेत्येकशेषात्समासं नेच्छन्ति । किंतु कर्मव्यतिहारेऽन्यादीनां द्वित्वं वक्तव्यं समासवद्बहुलं तत्र पूर्वपदे प्रथमैकवचनं उत्तरपदे द्वितीयैकवचनम् इत्यन्योऽन्यं परस्परं नमन्ति साधवः । क्षेमेन्द्राचार्यस्तु अन्यादीनां विभक्तिलोपे सक् कर्मव्यतिहारे वक्तव्यः । कर्मव्यतिहाराभावे तु अन्यश्च अन्यश्च अन्यौ इत्येकशेषसमासः इति व्याख्याति । प्रक्रियाकौमुद्यां तु 'कर्मव्यतिहारे सर्वनाम्नो द्वे स्तः समासवच्च बहुलं' यदा तु समासवत्तदा प्रथमैकवचनं पूर्वपदस्य द्वितीयाद्येकवचनान्तत्वं परपदस्य । अन्योन्यं विप्रा नमन्ति, अन्योन्येन कृतं, अन्योन्यस्मै ददाति, अन्योन्यस्मात् गृह्णन्ति, अन्योन्यस्य अन्योन्यस्मिन्, साधवः । एवं परस्परं । सांप्रतम्ऽलिङ्गविशेषमाह । सूत्रम् ।

एकत्वे द्विगुद्वन्द्वौ । एकत्वे वर्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः ।

एकत्वेत्यादि । एकस्य भाव एकत्वं तस्मिन् ( स.ए. ) अइए द्विगुश्च द्वन्द्वश्च द्विगुद्वन्द्वौ ( प्र. द्वि. ) ओ औ औ द्विपदम् एकत्व इति एकवचने वर्त्तमानौ द्विगुद्वन्द्वसमासौ नपुंसकलिङ्गौ भवतः । तत्र द्विगुसमासे नित्यमेव । तत्र अकारान्तान्नित्यमीप्प्रत्ययः तत्र स्त्रीलिङ्गत्वमेव । अकारान्तवर्जितानां तु नपुंसकलिङ्गत्वमेव द्वन्द्वे तु इतरेतरयोगे द्विवचनमेव, पक्षे कुत्रचिदेकवचनमपि समाहारे बहुवचनमेव पक्षे कुत्रचिदेकवचनमपि तत्र यत्रैकवचनं तत्र नपुंसकलिङ्गमेव द्विवचनं बहुवचनं तु यथासंभवं त्रि-

त्वपि लिङ्गेषु भवतीति भावः । द्वन्द्वस्यैकत्वे नपुंसकत्वं पूर्वं दर्शितम् । अथ क्रमाभा-ऽपि प्रस्तुतत्वाद्द्विगुलक्षणमाह । सूत्रम् ।

**संख्यापूर्वो द्विगुः । संख्यापूर्वः समासो द्विगुर्निगद्यते ।**

**संख्यापूर्वो द्विगुः** । संख्याद्वित्रिचतुरादिका पूर्वा पूर्वपदवर्त्तिनी यस्य स संख्यापूर्वः ( प्र. ए. ) स्रो० द्विगु ( प्र. ए. ) स्रो० संख्या संख्यावाची शब्दो यत्र पूर्वपदे भवति, यत्र समाहारवाचकत्वं च भवति स द्विगुरिति समासो भवति । त-देव सूत्रेणाह । सूत्रम् ।

**समाहारेऽत ईप् द्विगुः । समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप् प्रत्ययो भवति ।**

**समाहारेऽत ईप् द्विगुः** । समाहार ( स. ए. ) अइए अत् ( पं ए. ) स्वर० स्रो० एदोतोतः अतः अग्रे ईप् ( प्र. ए. ) हसेपः० पश्चात् आदबेलोपश् अग्रे द्विगु ( प्र. ए. ) स्रो० चतुःपदमिदं सूत्रं समाहारेऽर्थे द्विगुः समासो भवति यत्र पूर्वपदे सं-ख्यावाचि पदं भवति तच्च समाहारार्थवाचकमेकीकरणार्थसूचकं स द्विगुसमास इ-त्यर्थः । तत इति तस्मात् द्विगुसमासाद् अकारान्तात् ईप् प्रत्ययो भवति ।

**पात्राद्यन्ततो द्विगुर्नेबन्तः । पञ्चानां पात्राणां समाहारः पञ्च-पात्रम् । द्विभुवनम् । त्रिभुवनम् । चतुष्पथम् । दशानां ग्रामाणां समाहारो दशग्रामी । पञ्चाग्नयः समाहृता इति पञ्चाग्नि । पञ्चानां गवां समाहारः पञ्चगु । नपुंसकत्वाद्ध्रस्व-त्वम् । त्रिफला, रूढितः ।**

**पात्रादि वर्जम्** । यद्यपि द्विगुसमासस्य प्राक् क्लीबलिङ्गत्वं प्रतिपादितं तथापि अकारान्तात्परत ईप् प्रत्यये कृते स्त्रीत्वमेव तत्र हि अदन्तवर्जितानां क्लीबलिङ्गता । उदाहरणं दशन् ( ष. ब. ) ष्ण इति नुट् ' दशन् न् आम् ' नोपधाया इति शकार-स्य दीर्घः । नाम्नो नो लोपश धौ स्वर०मोनु० ग्राम ( ष. ब. ) नुडागमः । नामीति दीर्घः ऋषुर्णोणो० स्वर० मोनु० दशानां ग्रामाणां समाहार इति विग्रहे अत्र दश इति संख्यापूर्वपदं समाहारवाचकं च अतो द्विगुसमासः समाससंज्ञायामुभयत्रापि समास-प्रत्यययोरिति आमो लोपः । दशन्+ग्राम इति स्थिते ततोऽकारान्तत्वादीप् यस्य-लोपः स्वर० दशग्रामी ( प्र. ए. ) हसेपः० त्रिलोकी, पञ्चपूली, पञ्चन् ( प्र. ब. ) जश्शसोर्लुक् नाम्नोनो० अग्नि ( प्र. ब. ) पुओजसि एअय् स्वर० स्रो० पञ्चाग्नयः

समाहृताः एकत्रीकृताः इति विग्रहे विभक्तिलोपे नाम्नो० सवर्णे - पञ्चाग्नि । अत्र अ-दन्तत्वाभावान्न ईप् ततः समाहारस्यैकत्वात् एकत्वे द्विगुद्वन्द्वाविति क्लीबे ( प्र. ए. ) नपुंसकात्स्यमोर्लुक् पञ्चाग्नि इति सिद्धम् । तथा पञ्चानां गवां समाहार इति विग्रहे समासप्रत्यययोरिति उभयत्रापि आमो लोपे पञ्चन् गो ( प्र. ए. ) नाम्नो० नपुंसकस्येति ह्रस्वं ओकारस्य उकारः ह्रस्वादेशे सन्ध्यक्षराणां नपुंसकात्स्यमोर्लुक् अ-त्राप्यकारान्तवर्जितत्वान्नेप् त्रि ( ष. द्वि. ) नुडामः त्रेरयङ् स्वर० मोऽनुस्वारः फल ( ष. द्वि. ) नुडामः । नामि स्वर० मोनु० अग्रे समाहारे इति पदं । त्रयाणां फलानां समाहारः इति विग्रहे समासप्रत्यययोः उक्तार्थाना० आबतःस्त्रियां ( प्र. ए. ) आपः त्रिफला इति सिद्धम् । ननु त्रिफला इत्यत्र संख्यापूर्वकत्वेऽपि द्विगुसमासे फलशब्दस्य अकारान्तादीप् प्रत्ययः किं न क्रियते इति शङ्कायामाह । त्रिफला, रूढित इति । त्रिफला इति पदं रूढितः लोकप्रसिद्धितः सिद्धम् । 'लक्षणेनोपपन्नस्य प्रयोगस्य कथं बत । बहुशिष्टावृतत्वं हि रूढिरित्यभिधीयते ।' ननु नियमानुलक्षणोपपन्नं इति । द्विगुसमासस्य पात्रादिवर्जित्वात् पञ्चानां पात्राणां समाहारः पञ्चपात्रं, त्रयाणां भुवनानां समाहारस्त्रिभुवनं, एवं चतुर्युगं, इत्यकारान्तत्वेऽपि ईप् न भवति । सांप्रतं बहुव्रीहिसमासं निरूपयति । सूत्रम् ।

**बहुव्रीहिरन्यार्थे । अन्यपदार्थप्रधानो यः समासः स बहुव्रीहिसंज्ञको भवति । बहुधनं यस्य स बहुधनः । अस्ति धनं यस्य सोऽस्तिधनः । अव्ययत्वादस्त्यादीनां पूर्वनिपातः अन्यपदप्राधान्याद्बहुव्रीहिः । अन्तरङ्गं यस्यासावन्तरङ्गः । बहिरङ्गः । उच्चैर्मुखः । तेन सहेति तुल्ययोगे । सहेत्येतत्तृतीयान्तेन समस्यते स तुल्ययोगबहुव्रीहिः ॥ सहादेः सादेः । इति वक्ष्यमाणेन सकारः । पुत्रेण सह वर्तमानः सपुत्रः । सो वेति केचित् । सहपुत्रो वा गतः । तुल्ययोगवचनं प्रायिकम् । कर्मणा सह वर्तमानः सकर्मकः । सलोमकः । यस्य प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । लम्बौ कर्णौ यस्य स लम्बकर्णः ।**

बहुव्रीहिरन्यार्थे । बहुव्रीहि ( प्र. ए. ) सो० अन्यार्थे अन्यस्य अर्थोऽन्यार्थस्तस्मिन् ( स. ए. ) अइए पञ्चान्नामिनो रः द्विपदम् । समासमध्यवर्तिपदापेक्षया

अन्यपदस्यैव बाह्यपदस्यैवार्थः प्रधानो यस्य स बहुव्रीहिसंज्ञकः समासो भवति । बहु ( प्र. ए. ) नपुंसकात्० धन ( प्र. ए. ) अतोऽम् अम्शसो०मोऽनु०बहु धनं यस्य इति विग्रहे अत्र समासस्थौ बहुधनशब्दौ ताभ्यां अस्येति अन्यपदप्रधानं ततो, बहुव्रीहिसमासः समासंज्ञायामुभयत्रापि विभक्तिलोपः । यस्येत्यस्योक्तार्थानामप्रयोगः ' बहुधन ' इति स्थिते बहुव्रीहेर्वाच्यलिङ्गता इति बहुव्रीहिरन्यपदप्रधानत्वात्पर लिङ्गं यस्य नरस्येति नरशब्दस्य पुलिङ्गत्वात् पुंस्त्वे ( प्र. ए. ) सो० बहुधनः सिद्धम् । एवमस्तीत्यव धनं यस्य सोऽस्तिधनः यदि वा अस्तीत्यव्ययं विद्यमानार्थवाचकं ततो ऽस्ति विद्यमानं धनं यस्येत्यस्तिधनः ( प्र. ए. ) सो० एवं तपोधनः। यशोधनः । द्वितीयाद्यन्तान्यपदेषु प्रधानेषु बहुव्रीहिर्भवति । यथा प्राप्तो राजा यं स प्राप्तराजा, ऊढा कन्या येन स ऊढकन्यः, दत्तं वसु यस्मै स दत्तवसुः, उद्धृतः शल्यो यस्मात्तदुद्धृतशल्यं क्षतं, वीतो गतो रागो यस्मात्स वीतरागः, बहु धनं यस्य स बहुधनः, धर्मिणो लोका यस्मिन्स धर्मिलोको ग्रामः इत्यादि । इह बहुव्रीहिर्द्विधा । तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । तस्य लक्षणं ग्रन्थकार एवाह । तस्येति तस्य प्रधानभूतस्य पुरुषादेः एकदेश एकोऽवयवो हस्त, पाद, मुख, कर्णादिरूपो यत्र विशेषणतया विशेषणत्वेन ज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिसमासः । तस्योदाहरणम् । लम्बौ कर्णौ यस्य स लम्बकर्णः। इत्यत्र कर्ण इति नरस्य एकदेशः कर्णः स एव समस्यमानविशेष्यभूतस्य नरादेर्विशेषण वेन ज्ञातोऽतस्तद्गुणसंविज्ञानो बहुव्रीहिः। अतद्गुणसंविज्ञानो यथा । दीर्घकायः । अत्र कायस्य नरादेश्च ऐक्यात् । एवं दीर्घग्रीवो, महाभुजः, चित्रगुः इत्यादयस्तद्गुणसंविज्ञाने शब्दाः । ननु लम्बकर्ण इत्यत्र अन्यपदार्थप्रधानत्वात्पदसाम्ये कर्णलम्ब इति कथं न प्रयुज्यते इत्यत आह।

बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः । धनं करे यस्य स करधनः । मतिः कृष्णे यस्य स कृष्णमतिः । बुद्धिर्धर्मे यस्य स धर्मबुद्धिः । कंठे हारो यस्य स कंठहारः । करे कंकणं यस्यासौ करकङ्कणः । भुवने कीर्तिर्यस्यासौ भुवनकीर्तिः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ वक्तव्यौ । क्तक्तवतू निष्ठा । क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ स्तः । चक्रं पाणौ यस्य स चक्रपाणिः । दण्डः पाणौ यस्य स दण्ड पाणिः । अस्युद्यतः उद्यतासिरित्यपि भवति । प्रियादीना वा । प्रियगुडः गुडप्रियः । इन्द्वादिभ्यश्च । इन्द्वादिभ्यः श-

ब्देभ्यः सप्तम्यन्तस्य पूर्वनिपातो न । इन्दुः शेखरे यस्यासा-विन्दुशेखरः । पद्मं नाभौ यस्य स पद्मनाभः । कपिध्वजः । प्रजामेधयोरसुक् ।

बहुव्रीहाविति । बहुव्रीहि समासे यद्विशेषणभूतं पदं भवति एतयोः पदयोः पूर्वनिपातः प्रथमं प्रत्ययो भवति । बहुव्रीहेरुपलक्षणत्वात् कर्मधारयेऽपि विशेषण-स्यैव पूर्वनिपातो भवति । रक्तलतेत्यादौ संबन्धे सत् व्यावर्त्तकं विशेषणं विशेषणपदं 'परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणं । विशेष्यं तु प्रधानं स्यात् स्वार्थस्यैव प्रका-शनात्'। यथा लंबकर्णः, दीर्घग्रीवः इत्यादि । सप्तम्यन्तं यथा । ब्रह्मणि योनिर-स्य स ब्रह्मयोनिः, अप्सु योनिरस्येत्यप्सुयोनिः, भाले लोचनं यस्य स भाललोचनः, भुवने कीर्तिर्यस्य स भुवनकीर्तिः, धर्मे मतिर्यस्य स धर्ममतिः इत्यादि । वक्तव्यस्य प्रयोगानुसारित्वात् क्वचित्सप्तम्यन्तस्यापि पुरो निपातः । यथा चन्द्रशेखरः, पद्मं नाभौ यस्य स पद्मनाभः, तत्र टाडका इति ड प्रत्ययः पद्मनाभः चन्द्रमौलिः, शूल-पाणिः, चक्रपाणिः, कपिध्वजः, इत्यादौ सप्तम्यन्तं परपदम् । प्रजासुपूर्वः, तथा दु+र्मेधाः सुष्ठु शोभना प्रजा यस्येति विग्रहे तथा दुर्दुष्टा मेधा यस्येति विभक्तिलोपे सुप्रजा दुर्मेधा इति स्थिते प्रजामेधयोरिति बहुव्रीहौ नञ् सुदुर् , पूर्वयोः प्रजामेधाश-ब्दयोरन्यार्थे वर्त्तमानयोः असुगागमो भवति किच्चादन्ते उकार उच्चारणार्थः । सुप्र-जा+अस् दुर्मेधा+अस् इति स्थिते यस्य लोपः । इत्यालो० स्वर० सुप्रजस् दुर्मेधस् उभयत्रापि अत्वसोऽसौ हसेपः० सो० सुप्रजाः सुप्रजसौ सुप्रजसः । दुर्मेधाः दुर्मेधसौ दुर्मेधसः । एवं अप्रजाः, दुर्मेधाः । क्वचिदन्यत्रापि मन्दमेधाः, अल्पमेधाः । तथा ।

धर्मादन् केवलात् । केवलात्पूर्वपदात्परो यो धर्मशब्दस्तद न्ताद्बहुव्रीहेरनिच् प्रत्ययः स्यात् । कल्याणधर्मा । सुधर्मा । केवलात्किम् । परमः स्वो धर्मो यस्य स परमस्वधर्मः । जायाया निङादेशो बहुव्रीहौ वक्तव्यो यलोपश्च । लक्ष्मी जानिः । उत्पूतिसुसुरभिभ्यो गन्धशब्दस्येकारान्तादेशो बहुव्रीहौ वक्तव्यः । उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सु-रभिगन्धिः । आगन्तुकस्यैकवचनान्तस्य वा । सुगन्धि आ पणः सुगन्धो वा । अल्पाख्यायां च । अल्पपर्यायो गन्ध शब्दः । सूपोऽल्पो यस्मिन् तत्सूपगन्धि भोजनम् । घृतग-

न्धि । वेति केचित् । सूपगन्धम् । घृतगन्धम् ॥ उपमानाच्च । पद्मस्येव गन्धो यस्येति पद्मगन्धिः । मतान्तरे विकल्पः । ऊधसोऽनङ् । ऊधोऽन्ताद्बहुव्रीहेरनङादेशः स्यात्स्त्रियाम् । कुण्डोध्नी गौः । पुंसि तु कुण्डोधा गोगणः ।

धर्मादन् । अन्यार्थे वर्त्तमानाद्धर्मशब्दात् अन् आगमो भवति बहुव्रीहौ । उदाहरणं सुष्ठु शोभनो धर्मो यस्येति विग्रहे सुधर्मइति स्थिते ततोऽनेन अन् यस्य लोपः स्वर० ( प्र. ए. ) नोपधायाः । हसेपः । नाम्नो० सुधर्मा इति सिद्धं । राजन्शब्दवन्नवरं शसादौ मकारान्त सँय्युक्तत्वादल्लोपः स्वरे इति न भवति ।

धनुषश्च । शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा । संज्ञायां वा । शतधन्वा, शतधनुः ।

धनुषश्च । धनुष्शब्दस्यान्त्यषकारस्य अन् आदेशो भवति बहुव्रीहौ । शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा एवं पुष्पधन्वा इत्यादि । रूपवती ( प्र. ए. ) हसेपः० भार्या ( प्र. ए. ) आपः रूपवती भार्या यस्य इति वग्रहे विभक्तिलोपेऽवशिष्टं रूपवती भार्या इति । सूत्रम् ।

अन्यार्थे । स्त्रीलिङ्गस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति । यङ्कानिन्त्वशमंतरादौ चारूप्ये । एनीव आचरतीति एनायते । पत्न्यादित्वात्तो न । पण्डितमानिनी । पट्व्या भावः पटुत्वम् । अल्पं देहीति अल्पशः । पटुतरा पटुतमा पटुकल्पा पटुदेश्या पटुदेशीया । अरूप्ये इति किम् । शुभ्रारूप्या । प्रियादौ न । प्रिया भक्ति मनोज्ञा सुभगा दुर्भगा क्षान्ता कल्याणी चपला वामना सचिवा समा वामा कान्ता बाला तनया दुहिता स्वसा । इति प्रियादयः । एषु परेषु भाषितपुंस्कस्य स्त्रीप्रत्ययान्तस्य न पुंवत् । ऊप्रत्ययान्तस्य च न पुंवत् । वामोरूभार्यः । अभाषितपुंस्कस्य च न पुंवत् । गङ्गाभार्यः । कोपधपूरणीसंज्ञानां च न पुंवत् । पाचकीभार्यः, पञ्चमीभार्यः, दत्ताभार्यः । जातिवाचकात्स्वाङ्गवाचकाद्धईसद-

न्तस्य न पुंवदमानिनि । ब्राह्मणीभार्यः । सुकेशीभार्यः । अमानिनीति किम् । ब्राह्मणमानिनी ॥ युड्वर्जितरक्तविकारार्थवर्जिततद्धितान्तस्य न पुंवत् । मैथिलीजायः । युड्वर्जितरक्तविकारार्थवर्जितेति किम् । वैयाकरणभार्यः, काषायकन्थः, हैममुद्रिकः । वाग्रहणादियं विवक्षा ।

अन्यार्थे । अन्यार्थे ( स. ए. ) अइए एकपदं स्त्रीलिङ्गस्य स्त्रीप्रत्ययान्तस्य शब्दस्य अन्यार्थे परार्थे वर्त्तमानस्य ह्रस्वो भवति उत्तरपदस्य इति शेषः । अन्यथा पूर्वपदे रूपवती इत्यादौ प्रसङ्गः । अतो भार्याशब्दस्य ह्रस्वः । रूपवतीभार्य इति स्थिते । सूत्रम् ।

पुंवद्वा । समासे सति समानाधिकरणे पूर्वस्य स्त्रीलिङ्गस्य पुंवद्वा भवति । वाग्रहणात्कल्याणीप्रिय इत्यादौ न भवति । पुंवद्भावादीबापोर्निवृत्तिः । रूपवद्भार्यः ।

पुंवद्वा । पुंवत् ( प्र. ए. ) अव्यया० वा ( प्र. ए.) अव्य० पश्चाच्चपा०तस्य दः । स्वर० द्विपदम् । समासे सति समानाधिकरणे एकविभक्त्यन्तानां पदानां विशेषण विशेष्यभावेन एकार्थनिष्ठत्वं सामानाधिकरण्यं तस्मिन् वर्तमानस्य पूर्वपदस्य पूर्वभूतस्य उक्तपुंस्कस्य स्त्रीलिङ्गस्य पुंवत् पुल्लिङ्गवत् रूपं भवति । अनेन पुंवद्भावाद्रूपवतीत्यत्र वर्त्तमानस्य ईपो निवृत्तिरतो ' रूपवद्+भार्य ' इति स्थिते चपा० अनेन तस्य दः स्वर० सो० रूपवद्भार्यः सिद्धम् । नहि पुंवद्भावे केवलस्य ईपो निवृत्तिः किंतु क्वचिदापोऽपि निवृत्तिः । शोभनभार्यः, दीर्घजंघः, दीर्घजंघी, वा । रक्तलतेत्यादौ अयं वाशब्दो व्यवस्थितविकल्पं द्योतयतीत्याह । वाग्रहणात् कल्याणीप्रियइत्यादौ पुंवद्भावो न भवति कल्याणी प्रिया यस्येति विग्रहे समानाधिकरणे उक्तपुंस्कस्य कल्याणीशब्दस्य न पुंवद्भावः, आदिशब्दात् वामोरूभार्यः, गौरीभार्यः, पञ्चमीप्रियः, इत्यादौ न पुंवद्भावः । मनोज्ञा, सुभगा, दुर्भगा, क्षान्ता, चपला, वामा, वामना, सचिवा, श्यामा, बाला, तनया, ब्राह्मणी, दत्ता, रसिका, मैथिली, इत्यादयः कल्याण्यादिषु ज्ञेयाः । तथा श्येना इवाचरतीति श्येनायते इत्यादौ यङि पण्डितां मन्यते पण्डितमानिनी । यद्वा भावः पटुता, पटुत्वं, अल्पां देहि, अल्पशः, अल्पतरा, अल्पतमा, अनुकूलदेश्या अनुकूलदेशीयाः पण्डिता, पट्वी अल्पा अनुकूला, सर्वत्र पुंवद्भावः इत्यादौ प्रयोगानुसारेण पुंवद्भावो दर्शनीयः । अन्यार्थे वर्त्तमानस्येत्युक्तत्वात् न केवलं बहुव्रीहाविति भावः । शुभ्राः, रूप्या इत्यादौ न । वाग्रहणादेवेति ज्ञातव्यम् । सूत्रम् ।

गोः। गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति । पञ्च गावो यस्यासौ पञ्चगुः। संख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्याकारस्य लोपो वक्तव्यः । सहस्रं पादा यस्यासौ सहस्रपात् । व्याघ्रस्य पादाविव पादौ यस्यासौ व्याघ्रपात् । शोभनौ पादौ यस्य स सुपात् । पादः पद् । द्विपदः, द्विपदा, द्विपदी । त्रिपदी । नदादित्वादीप् ।

गोः। गो (ष. ए.) ङस्येत्यकारलोपः स्रो० एकपदमन्यार्थे परार्थे वर्तमानस्य सतो गोशब्दस्य ह्रस्वो भवति। गोशब्दस्य पुंस्त्रीलिङ्गत्वे विशेषसूचकमिदं सूत्रम्। पञ्चन् (प्र. ब.) जस्शसोर्लुक्। गो (प्र. ब.) ओरौ औआव् स्वर० स्रो० नाम्नो० पञ्च गावो यस्य इति विग्रहे बहुव्रीहिसमासः। समासप्रत्यययोः। उभयत्रापि जसो लोपः 'पञ्चन्–गो' इति स्थिते पूर्व नाम्नो० गोरित्यनेन सूत्रेण ह्रस्वत्वे ओकारस्य उकारः। (प्र. ए.) स्रो० पञ्चगुरिति सिद्धम् । पुनर्विशेषमाह । संख्यासु इत्यादि । संख्या एकद्व्यादिका तद्वाचकः शब्दः, तथा सुइत्यव्ययं शोभनार्थवाचकं, व्याघ्रादयः शब्दा उपमात्वं प्राप्ता, एते पूर्वे आदौ वर्तमाना यस्य पादशब्दस्य तत्संबन्धिनोऽकारस्य लोपो वक्तव्यः। बहुव्रीहौ सर्वविभक्तिषु परतः। सहस्र (प्र. ए.) अतोऽम् अम्शसोरस्य मोनु० पाद (प्र. ब.) सवर्णे० स्रो० सहस्रं पादा यस्य इति विग्रहः। शोभनौ (प्र. द्वि.) पादौ (प्र. द्वि.) यस्य तथा व्याघ्रस्य (ष. ए.) ङस्य, पाद (प्र. द्वि.) ओऔऔ, इव (प्र. ए.) अव्य० पाद (प्र. द्वि.) ओऔऔ व्याघ्रस्य पादाविव पादौ यस्येति विग्रहत्रयं। सर्वत्रापि बहुव्रीहिसमासे समासप्रत्यययोरिति विभक्तिलोपः। सहस्रपाद, शोभनपाद इति स्थिते द्वितीये सहादेः सादिति शोभनस्य सु आदेशः व्याघ्रेत्यादौ वैयधिकरण्ये बहुव्रीहौ इत्यादिना मध्यमपादशब्दस्य लोपः सर्वत्र संख्यासुव्याघ्रादीत्यादिना दकारमध्यस्थस्य अकारस्य लोपः। (प्र. ए.) हसेपः० वावसाने दस्यतः सहस्रपात्, सुपात्, व्याघ्रपात्, सहस्रपादौ सहस्रपादः। सहस्रपादं सहस्रपादौ। एवं द्वौ पादौ यस्य स द्विपात् द्विपादौ द्विपादः। द्विपादं द्विपादौ। शसादौ विशेषमाह । 'शसादौ स्वरे पादशब्दस्य पदादेशो वक्तव्यः' अनेन शसादौ स्वरादौ विभक्तौ परे पद् इति आदेशः। चकारादन्यत्रापि नपुंसके स्त्रीलिङ्गे ईपि परे तद्धिते च पदादेशः। कुम्भपदी, सहस्रपदी, एकपदी, द्विपदी, स्त्री नदादित्वादीप्। द्विपदा द्विपदः इत्यादौ पदादेशः प्रकृतेः। द्विपदः द्विपदा द्विपाद्भ्यामित्यादि। सहस्रपदः सहस्रपदा सहस्रपाद्भ्यां सहस्रपाद्भिः। भ्यां भिस् इत्यादौ स्वरादित्वाभावान्न पदादेशः। संख्यासुव्याघ्रादीत्यादि-

शब्दात्क्वचिदन्यत्रापि पदस्याकारलोपः सपात् अपात् । अथ सर्वसमाससाधारणान् प्रत्ययानाह ।

टाडकाः । समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति ।

टश्च तत्पुरुषे ज्ञेयो ह्यकारो द्वन्द्व एव च ॥

डकारस्तु बहुव्रीहौ ककारोनियमो मतः ॥

टाडकाः । टश्च अश्च डश्च कश्च टाडकाः ( प्र. द्वि. ) सवर्णे० स्रो० सिद्धम् । समासे इति बहुव्रीहौ तत्पुरुषे द्वन्द्वे कर्मधारये च नाम्नः ट, अ, ड, क, एते चत्वारः प्रत्यया भवन्ति यथासंभवम् । टकार ईवर्थः, डकारश्च टिलोपार्थः, अकारः ककारश्च यथास्थित एव । तत्र प्रथमं टप्रत्ययोदाहरणमाह । अचिन्त्य ( प्र. ए. ) स्रो० महिमन् ( प्र. ए. ) नोपधायाः हसेपः सेर्लोपः नाम्नो० पश्चात् हवे उओ । अचिन्त्यो महिमा यस्येति विग्रहे बहुव्रीहिसमासे विभक्तिलोपे अचिन्त्यमहिमन् इति स्थिते टाडका इति टप्रत्ययः ततः । सूत्रम् ।

नो वा । नान्तस्य पदस्य टेर्लोपो वा भवति स्वरे यकारे च परे । अचिन्त्यो महिमा यस्य सोऽचिन्त्यमहिमः । वाग्रहणात्क्वचिन्न भवति किंतूपधालोपश्च । अह्नो मध्यं मध्याह्नः । द्वयोरह्नोः समाहारो द्व्यह्नः ॥ रात्राह्नाहाः पुंसि । एते पुंस्येव स्युः । सर्वरात्रः । सर्वाह्णः । त्र्यहः । कवीनां राजा इति कविराजः । टकार ईवर्थः । कविराजी । ङ्नितः । राज्ञां पूः इति राजपुरम् । अप्रत्ययः । वाक् च मनश्च वाङ्मनसम् । चोः कुः । अमे अमा वा । दक्षिणस्यां दिशि पन्था इति दक्षिणापथः । अहश्च रात्रिश्च अहोरात्रम् । अप्रत्ययः । अहोरात्रमित्यत्र नपुंसकत्वं वा वक्तव्यम् । अहोरात्रः । द्वौ च त्रयश्च द्वित्राः । पञ्चषाः । बहुत्वविवक्षायां बहुवचनं जस् । बहवो राजानो यस्यां सा बहुराजा नगरी । अत्र टिलोपे कृते आवतः स्त्रियाम् इत्याप् डप्रत्ययः । बहवः कर्तारो यस्यासौ बहुकर्तृको यागः ।

नोवा । न् ( प ए. ) स्वर० स्रो० वा ( प्र. ए. ) अव्य० । नकारान्तस्य

पदस्य टेरन्त्यस्वरादेः टेर्लोपो भवति यकारे स्वरे च परे । यकारे यथा—राज्यं । तथा स्वरे परे इति प्रस्तुतमेव ततो महिमन् इत्यत्र अकारनकारयोर्लोपः स्वर ( प्र. ए. ) स्रो० अचिन्त्यमहिम इति सिद्धम् । परं न बहुसंमतोऽयं प्रयोगः । किंतु अचिन्त्यमहिमा इत्येव संमतं । वाग्रहणात्क्वचिट्टेर्लोपो न भवति च पुनः यत्र टेर्लोपो न तत्र उपधाया लोपो भवति तस्योदाहरणं यथा अहन् ( ष. ए. ) अल्लोपः स्वरे स्वर० स्रो० मध्य ( प्र. ए. ) अतोऽम् हवे उओ अह्नो मध्यम् इति विग्रहे तत्पुरुषसमासः समासप्रत्यययोरिति विभक्तिलोपे अहन् मध्य इति स्थिते क्वचिदमाद्यन्तस्य परत्वमिति मध्य अहन् इति स्थिते सवर्णे० वा ग्रहणादुपधाया लोपः स्वर० स्रो० मध्याह्नः एवं सायाह्नः टप्रत्यये तु तत्पुरुषे कवीनां ( ष. ब. ) राजा ( प्र. ए. ) इति विग्रहे तत्पुरुषे विभक्तिलोपे कविराजन् ट प्रत्ययः नोवेति टिलोपः स्वर० स्रो० कविराजः तथा टकारानुबन्ध ईबर्थस्ततः ङ्गितइतीप् यस्यलोपः स्वर० (प्र. ए.) हसेपः कविराजी एवं महाराजः । राज्ञां ( ष. ब. ) पुर ( प्र.ए. ) य्वोर्विहसे० हसेपः स्रो० तत्पुरुषे समासप्रत्यययोरिति विभक्तिलोपः राजन् पुर इतिस्थिते अत्र अ प्रत्ययः स्वर० ( प्र. ए. ) अतोऽम् अमूशसो० राजपुरं । पूःशब्दस्य अदन्तत्वे नपुंसकत्वम् । वाच् ( प्र. ए. ) चोःकुः हसेपः । च ( प्र. ए. ) अव्य० मनस् ( प्र. ए. ) नपुंसके नपुंसकात्स्यमोर्लुक् स्रो० च ( प्र. ए. ) अव्य० वाक् च मनश्च इति विग्रहे द्वन्द्वसमासे विभक्तिलोपः चोःकुः चस्य कः वाक् मनस् अमेऽमावा कस्य ङ् टाडका इति अप्रत्ययः स्वर० अतोऽम् अमूशसो० वाङ्मनसम् इतिसिद्धम् । वाङ्मनसे इति दक्षिणा ( स. ए. ) आम्ङेरिति ङेराम् ङितां यट् यटोचेतिसगागमः पूर्व आकारस्य च अकारः स्वर० सवर्णे० पथिन् ( प्र. ए. ) इतोत्पंचसु धोनुट् पन्थन् आसौ नश्चा० स्रो० दक्षिणस्यां पन्था इति विग्रहे तत्पुरुषे विभक्तिलोपे दक्षिणापथिन् अप्रत्ययः नोवा इति टिलोपः स्वर०स्रो०दक्षिणापथ इति सिद्धं केचिदत्र डप्रत्ययमेवेच्छंति अहन् ( प्र. ए. ) हसेपः अन्हः सः स्रो० च ( प्र. ए. ) अव्य० विसर्जनी० स्तोः श्चुभिः श्चुः । रात्रि ( प्र. ए. ) स्रो० च ( प्र. ए.) अव्य० अहश्च रात्रिश्चेति विग्रहे समासप्रत्यययोःअहन्रात्रि इति स्थिते अन्हः सः स्रो० रात्र्यादिवर्जितत्वात् न रेफः किंतु हवे उओ टाडका इति डप्रत्ययः डित्वाट्टिलोपः स्वर० ( प्र. ए. ) अतोऽम् अमूशसो० अहोरात्रम् इति सिद्धम् । द्वि ( प्र. द्वि० ) त्यदादेष्टेरः द्व ओऔऔ त्रि ( प्र. ब. ) एओजसि एअय् स्वर० स्रो० द्वौ च त्रयश्च इति विग्रहे द्वंद्वे विभक्तिलोपः टाडका इति डप्रत्ययः टिलोपः स्वर० (प्र. द्वि. )सवर्णे० स्रो० द्वित्राः । पञ्चन् ( प्र. द्वि.) जस्शसोर्लुक् नाम्नो० षष् ( प्र द्वि. ) जसूशसो० षोडः वावसाने डस्य टः पञ्च च षट् च इति विग्रहे द्वन्द्वे विभक्तिलोपे पञ्चन् षष् टाडकाः डप्रत्ययः डित्वाट्टिलोपः स्वर० ( प्र. द्वि.)

सवर्णे० स्रो० नाम्नो० पञ्चषाः। बहु(प्र. बि.) एओजसि ओअव् स्वर० स्रो० राजन् (प्र. बि.) नोपधायाः स्वर० स्रो० पश्चात् हबे ओ बहवो राजानो यस्यामितिविग्रहे बहुव्रीहौ विभक्तिलोपे टाडका इति डप्रत्ययः टिलोपः स्वर० आबतः स्त्रियामित्याप् (प्र. ए.) आप इति सेर्लोपः बहुराजा एषा नगरी बहवः पूर्ववत् कर्तृ (प्र. बि.) स्तुरार् स्वर० स्रो० बहवः कर्त्तारो यस्य इति विग्रहे बहुव्रीहिसमासे विभक्तिलोपे बहुकर्तृ टाडका इति कप्रत्ययः (प्र. ए.) स्रो० बहुकर्तृकः प्रासादः। अधातुस्त्रीलिङ्गेभ्य इकारान्तोकारान्तऋकारान्तेभ्य उरस् शब्दाच्च नित्य एव कप्रत्यय इति ज्ञातव्यम्। सपत्नीकः,प्रियसीमन्तिनीकः,सवधूकः, फलितजंबूकः आरामः, नदीमातृको देशः,जीवत्पितृकः, व्यूढोरस्कः, नतु सपत्नी सवधूः जीवत्पिता व्यूढोरा इत्यादि प्रयोगार्हः। एवमन्येऽपि प्रयोगाः। मैत्रस्य सखा मैत्रसखा कङ्कणस्रजं, मांसलत्वचं, वाक्त्विषं, छत्रोपानहं, द्विनावं, द्विखारं, ग्रामतक्षः,पूर्वरात्रः, अपररात्रः, पुण्यरात्रः, कृष्णभूमः, पाण्डुभूमः, द्विभूमः, त्रिभूमः, उपदशाः, आसन्नत्रिंशाः, बहुदातृकः, बहुलक्ष्मीकः इत्यादयो यथासंभवं ज्ञेयाः। इति बहुव्रीहिसमासः॥

सांप्रतं कर्मधारयंनिरूपयति। सूत्रम्।

**कर्मधारयस्तुल्यार्थे । पदद्वयतुल्यार्थे एकार्थनिष्ठत्वे सति कर्मधारयसंज्ञकः समासो भवति। नीलं च तदुत्पलं च नीलोत्पलम्। रक्ता चासौ लता च रक्तलता। पुमांश्चासौ कोकिलश्च पुंस्कोकिलः।**

**कर्मधारय०** (प्र. ए.) स्रो० तुल्यः सदृशोऽर्थोदेश एव अर्थोऽभिधेयो वाच्यप्रयोजनं यस्य स तुल्यार्थः तस्मिन् (स. ए.) अइए पदद्वये इति पूर्वपदे उत्तरपदे चैकार्थनिष्ठे एकार्थसंबन्धे विशेषणविशेष्यत्वेन पदद्वयेऽप्येकवस्तुवाचके सति योऽन्वयः स कर्मधारयनामा समासो भवति एकस्मिन्नर्थे निष्ठा स्थैर्यं प्रवृत्तिर्वा यस्य तत् एकार्थनिष्ठं तस्मिन्। उदाहरणम्। नील (प्र. ए.) अतोऽम् अम्शसो मोऽनु. च (प्र. ए.) अव्य०तद् (प्र. ए.) नपुंसकात्स्यमो र्वावसाने उत्पल (प्र. ए.) अतोऽम् अम्शसो० मोऽनु० च (प्र. ए.) अव्य० एकार्थताद्योतनाय चकारस्तच्छब्दस्य अथवा असौशब्द आनीयते नीलं च तदुत्पलं च इति विग्रहे अत्र नीलशब्दो विशेषणभूतः।उत्पलशब्दश्च विशेष्यभूतः नीलं चेति विशेषणत्वात् पूर्वनिपातः। गुणद्रव्ययोराधेयाधारसंबन्धित्वात् एकार्थनिष्ठत्वं ततः कर्मधारयसमासः समासप्रत्यययोरिति विभक्तिलोपः।उक्तार्थाना० नील उत्पल इति स्थिते उओ (प्र. ए.) अतोऽम् अम्शसो० मोनु० नीलोत्पलं रक्ता चासौ लता च इति विग्रहे रक्ता

( प्र. ए. ) आपः च ( प्र. ए. ) अव्य० अदस् ( प्र. ए. ) त्यदादे० सौसः सेरौ ओंऔंऔ लता ( प्र. ए. ) आपः च ( प्र. ए. ) अव्य० ततः समाससंज्ञा प्राग्वत् । विभक्तिलोपश्च रक्तलता। पुंवद्वा पुंवद्भावादीपो निवृत्तिः। पूर्वपदस्य रक्ता इत्यस्य रक्त इति ततो रक्तलता ( प्र. ए. ) आपः पुम्स् ( प्र. ए. ) पुंसोऽसुङ् सकारस्य असू नितोनुम् पुमन् स सन्सयहतोऽधाविति दीर्घः हसेपः संयोगान्तस्येति सलोपः पुमान् च ( प्र. ए. ) अव्य० पश्चान्नः सकछते इति सकारागमः 'स्तोः श्चुभिः श्चुः' 'नश्चापदान्ते०' अदस् ( प्र. ए. ) त्यदादे० सौसः सेरौ ओऔऔ पश्चात्सवर्णे० कोकिल ( प्र. ए. ) सो० च ( प्र. ए. ) अव्य० पुमांश्चासौ कोकिलश्चेति विग्रहे पूर्ववत्कर्मधारयः समासः । विभक्तिलोपः तत उक्तार्थानां० पुम्स् कोकिल इति स्थिते। ननु संयोगान्तस्येति सकारलोपोऽत्र क्रियतां तत्राह।

**पुंसः खपे ख्यावर्जिते च अम्परे संयोगान्तस्यालोपो वक्तव्यः। तेन पुंख्यानं पुंक्षीरं इति भवति।**

पुंसः खपेइति। पुंस्शब्दस्य खपप्रत्याहारे परे संयोगान्तस्य सकारस्य अलोपो भवति। नलोपः अलोपः तेन सकारस्य लोपो न भवतीत्यर्थः। ततो नश्चापदान्ते स्वर० पुंस्कोकिल इति सिद्धम्। एवं परमश्चासौ ईश्वरश्च परमेश्वरः। एवं महेश्वरः ईश्वरः महादेवः। पुनः समासविशेषमाह सूत्रम्।

**नाम्नश्च कृता समासः। प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समासः। स तत्पुरुषसंज्ञको भवति। चकारात्कुशब्दस्याव्ययस्य उरीउररीशब्दयोश्चिवप्रत्ययान्तादेश्च कृदन्तेन समासस्तत्पुरुषो भवति। प्रकृष्टो वादः प्रवादः। कुम्भकारः।**

नाम्नश्चेति। नामन् ( प. ए. ) अल्लोपः स्वरे० स्वर० सो० च ( प्र. ए. ) अव्य० पश्चात् विसर्जनी० स्तोः श्चुभिः श्चुः। कृत् ( तृ. व. ) स्वर० समासः ( प्र. ए. ) सो० चतुःपदमिदं सूत्रम्। प्रादेरुपसर्गस्य तथा नाम्नश्च धातोः प्राक् प्रयुक्तश्च कृदन्तेन कृत्प्रत्ययान्तशब्देन सह तत्पुरुषसंज्ञकः समासो भवति। चकारात् कुशब्दः सहादयो गतिसंज्ञकाश्च ग्राह्याः। अत्रोदाहरणं वद् व्यक्तायां वाचि, वद् प्रपूर्वः प्रवदनं, प्रवादः, प्रकृष्टो वादः, प्रवादः, 'घञ् भावे' इति घञ्प्रत्ययः ञित्वादत उपधाया वृद्धिः। स्वर० सो० ( प्र. ए. ) प्रवादः अत्र प्रोपसर्गस्य कृदन्तेन तत्पुरुषः तथा डुकृञ् करणे कृ कुम्भपूर्वः कुम्भाग्रे ( द्वि. ए. ) अम् अमृशसो० मोऽनु० वर्त्तमाने तिप् तनादेरुप् उ गुणः कर उप इति उकारस्य गुणः उ स्वर० कुम्भं करोति इति विग्रहे पश्चात्कार्येऽण् समासप्रत्यययोः उभयत्रापि विभक्तेर्लोपः। कुम्भकृ

थ इतिस्थिते णित्त्वाद्वृद्धिः कार् स्वर० स्रो० अत्र कुम्भशब्दस्य कृदन्तेन सह तत्पुरुषः कुम्भकारः । सूत्रम् ।

**सहादेःसादिः ।** सहादीनां सादिर्भवति । सहसंतिरसां सध्रिसमितिरयः । सह अञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । तिरः अञ्चतीति तिर्यङ् । क्वचिन्न भवति । सह चरतीति सहचरः । **कुगतिप्रादयः ।** कुशब्दो गतिसंज्ञाः प्रादयश्च समर्थेनान्वये समस्यन्ते स तत्पुरुषः । कुपुरुषः । कुत्सितमन्नं कदन्नम् ॥

सहादेःसादिः। सह आदिर्यस्य गणस्य स सहादिस्तस्य (ष. ए.) ङितिङस्येत्य कारलोपः स्रो० सादिः स आदौ यस्य स सादिः (प्र. ए.) स्रो० द्विपदं। समासे कृते सति सहादीनां सह, सम्, तिरस्, इत्यादीनां पूर्वपदानां क्रमेण स, समि, सध्रि, तिरि, इत्यादय आदेशा भवंति। आदिशब्दात्अन्येऽप्यादेशा यथासंभवं भवन्ति इतिभावः। तत्रोदाहरणं सह (प्र. ए.) अव्य० पुत्र (तृ. ए.) टेन अइए श्रुर्नोणो० सहपुत्रेण अत्र चशब्देन तत्पुरुषः प्रक्रियामतेषु बहुव्रीहिः तेन सहेति तुल्ययोगे सहेत्येतत्तृतीयान्तेन समस्यते स बहुव्रीहिः विभक्तिलोपे सहस्य स आदेशः (प्र. ए.) स्रो० समासे सो भवतीति सूचयति तेन ज्योतिर्जनपदे, पिण्ड, बन्धु, लोहित, नाभि, वेणि, रात्रि, गन्ध, कुक्षि, ब्रह्मचारि, तीर्थ्य, पत्नी, पक्षेषु समानशब्दस्य स आदेशः। समानं ज्योतिर्यस्य स सज्योतिः, सजनपदः, सपिण्डः, सबन्धुः, सलोहितः, सनाभिः, सवेणी, सरात्रिः, सगन्धः, सकुक्षिः, सब्रह्मचारी, सतीर्थ्यः, समाना पत्नी सपत्नी, सपक्षः, रूपादिषु विकल्पेन समानशब्दस्य स आदेशः समानं रूपं यस्य स सरूपः समानरूप इति वा। सवर्णः समानवर्णः, सजातीयः समानजातीयः, सगोत्रः समानगोत्रः, संस्थानं समानस्थानं, सधर्मा समानधर्मा, सवया समानवया, सनामा समाननामा, इति यथा प्रयोगमवसेयम्। अञ्चुगतिपूजनयोः। अञ्च् सहपूर्वः सह (प्र. ए.) अव्य० अञ्च् तिप् अप् कर्तरि स्वर० सह अञ्चति गच्छति इति विग्रहे कृदन्तेन क्विप्प्रत्ययेन तत्पुरुषसमासः क्विप्इति क्विप्प्रत्ययः क्विपः सर्वापहारी लोपः अञ्च् इत्यत्र नोलोप इति नकारस्य अनुस्वारस्य लोपः। सहादेःसादिरिति सहस्य सध्रि आदेशः इयं स्वरे सध्यच् (प्र. ए.) 'अञ्चेः पञ्चसु नुम्' इति नुमागमः 'स्तोश्चुभिः श्चुः' नस्य ञः हसेपः संयोगान्तस्येति चलोपः। चोः कुः चस्य ङ् सध्र्यङ् अग्रे प्रत्यच् शब्दवत्। एवं सम्पूर्वोऽञ्च् समः समि आदेशः अग्रे पूर्ववत् सम्यञ्च् सं सम्यक् प्रकारेण अञ्चतीति सम्यङ् एवं तिरस् पूर्वोऽञ्च तिरसस्तिर्यादेशः

इयं स्वरे तिर्यच् द्वितीया द्वित्वं यावत् शसादौ स्वरे तु तिरश्चादय आदेशा निपात्यन्ते। उदच् शब्दस्य उदीच् इति निपातः शसादौ स्वरे इति। तिरश्चः तिरश्चा पूर्ववत् एवं विष्वक् अञ्चतीति विष्वग्यङ् सहादेःसादिरिति विष्वक्स्थाने विष्वद्रि देवम् अञ्चतीति देवग्यङ् सहादेः सादिरिति देवस्य देवद्रि अमुम् अञ्चतीति अदग्यङ् अमुम् इत्यस्य अदद्रि आदेशः। इत्यादयो यथासंभवं ज्ञेयाः।

कुत्सितेषदर्थयोः। कुत्सितेषदर्थयोर्वर्तमानस्य कुशब्दस्य का कव कत् इत्येते आदेशा भवन्ति। तत्पुरुषे न तु बहुव्रीहौ। बहुव्रीहौ तु कुत्सिता विद्या यस्यासौ कुविद्यः। कुत्सिता उष्ट्रा यस्य स कूष्ट्रः। कुत्सितः पन्था यस्मिन्नसौ कुपथो देशः। काकवकदुष्णे। उष्णशब्दे परे कुशब्दस्य का कव कत् इत्येते आदेशा भवन्ति। कु ईषदुष्णं कोष्णम्- कवोष्णम्- कदुष्णम्। कु ईषत् लवणं कालवणम्।

कुत्सितेषदर्थयोः। काकवादयो वक्तव्याः। कुअन्नं कुत्सितमन्नं इति विग्रहे अत्र व्याकरणान्तरमते तत्पुरुषः स्वमते तु कर्मधारयः कुशब्दस्य कत् चपा अबेजबा तस्यदः स्वर० कदन्न ( प्र. ए. ) अतोऽम् मोनु०। एवं कदशन ( प्र. ए ) अतोऽम् मोनु० एवं कदध्वा। उष्णः सर्वत्र कुपूर्वः ईषदर्थे उष्ण शब्दे परे कु इत्यस्य कत् का कव एते त्रय आदेशा भवन्ति। कु ईषदुष्णमिति विग्रहे एकत्र कत् द्वितीये का तृतीये कव। कदुष्ण कवोष्ण कोष्ण (प्र. ए. ) स् सर्वत्र कुलशब्दवत्। लवणः कुपूर्वः कु ईषल्लवणमिति विग्रहे ईषदर्थे कोः का कालवणम्।

पुरुषे वा। पुरुषशब्दे परे कुशब्दस्य वा कादेशो भवति तत्पुरुषे।

पुरुषे वा। पुरुषशब्दे परे कुइत्यस्य वा कादेशो भवति। कुत्सितः पुरुषः कुपुरुषः कापुरुषः। एवं कत्तृणं, कद्रथः, कद्वदः, कदध्वा, कापथः, काक्षः, काग्निः, कदग्निः इत्यादयः प्रयोगानुसारेण ज्ञेयाः।

विभाषा पुरुषे का स्यान्नियमेन हसे परे॥
अचि त्रिरथवदे कोः कत्काक्षे वा पुरुषे पथि॥
ईषदर्थे च वाच्ये स्युरप्यावुष्णे काकत्कवाः॥

कुत्सितास्त्रयः कत्त्रयः । कद्रथः कद्वदः काक्षः कापथः कुपथः कुपुरुषः कापुरुषः ।

षष उत्वं दृधोर्डढौ । षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वा भवतीति वाच्यम् । बहुवचनं जस् । जसृशसोर्लुक् नाम्नो नो लोपशधौ षड्भिरधिका दश षोडश । षट्प्रकारमिति षोढा । धासु वा वक्तव्यमिति विकल्पात् षस्योत्वाभावे षोडः । इति षस्य डत्वम् । षड्धा । संख्यायाः प्रकारे धा अव्ययाद्विभक्तेर्लुक् षट् दन्ता यस्य इति विग्रहे ।

षष्-दशन् । ष्टुभिः ष्टुः दस्य डः सहादेरित्यनेन षष् इत्यस्य षो षोडशन् ( प्र. बि. ) जस्शसोर्लुक् नाम्नो० षड्भिरधिका दश षोडश यद्वा षट् च दश चेति विग्रह्य विभक्तिलोपे षकारस्योकारो दस्य डः इति वर्णविकारो जातः । यदि वा षोडशानां संख्यापूरणः षोडशः षोडशन् एकादशादेर्डः डित्त्वाट्टिलोपः स्वर० ( प्र. ए. ) देवशब्दवत् । षष्-दन्त षट् दन्ता अस्य । इत्यनेन पूर्वं विभक्तिलोपे कृते ।

दन्तस्य दतृ । षट् दन्ता यस्याऽसौ षोडन् बृहतां पतिः बृहस्पतिः । तत्-करः तस्करः । महांश्चासौ ईश्वरश्च महेश्वरः । द्विशब्दस्य द्यावादेशो भवति । द्यौश्च भूमिश्च द्यावाभूमी । आकृतिगणोऽयम् । सिद्धं शब्दाकारमुपलभ्य तदनुसारेणादेशविधानं क्रियते यत्र स आकृतिगणः ।

दन्तस्य दतृ । ऋकारो नुमागमार्थः । ततः ष्टुभिः ष्टुः । दस्यडः । षषः षो त्रितोनुम् हसेपःसेर्लोपः संयोगान्तस्यलोपः षोडन् द्विदन् द्विदतौ तथा षष्संख्यायाः प्रकारे धाप्रत्ययः षड्भिः प्रकारैः षोढा यथा षट् प्रकारा यस्य सः षोढा ष्टुभिः ष्टुः धस्य ढः सहादेरिति षो यद्वा सहादेः सादिरिति षस्य उः धस्य ढः षोढा इत्यव्ययम् । तथोक्तं षषः उक्तं दत् दशधा सु उत्तरपदादेः ष्टुत्वं च वक्तव्यमिति वृहतः पतिः, बृहतां पतिः, बृहस्पतिः । अत्र सहादेरिति तकारस्य सकारः केचिदत्र बृहस्पतिरिति न पठन्ति वाचस्पत्यादिषु साधितत्वात् अथवा बृहत्याः पतिः बृहस्पतिः सहादेः सादिरित्यनेन बृहतीइत्यत्र बृहस्आदेशः महांश्चासावीश्वरश्च अत्र

सहादेः सादिरिति महच्छब्दस्य महा इत्यादेशः। अइए। महेश्वरः, महादेवः, महामाया, द्योभूमिः, द्यौश्च भूमिश्च द्यावाभूमी, अत्र सहादेरिति दिव्इत्यस्य द्यावा इत्यादेशः। ततः ( प्र. ब. ) ओयू ई सवर्णे० एवं जायापतिः, दयितापतिः, दयिता च जाया च पतिश्च दम्पती, जंपती। दयिताजाययोः क्रमेण दं, जं, इत्येतावादेशौ उभयत्रापि (प्र. द्वि.) औयू ईसवर्णे० दंपती दंपती दंपतीभ्यां दंपतीभ्यां दंपतीभ्यां दंपत्योः दंपत्योः। प्रक्रियामते तु जायाया जंभावदंभावौ वा निपात्यौ। ननु स्वच्छन्दमादेशाः कथं क्रियन्ते इत्याशंकायामाह। आकृतिगणोयं। यादृशी आकृतिः आकारस्य प्रयोगस्य दृश्यते तादृश एव प्रयोगो निपात्यते इति आकृतिगणः कथ्यते। लक्ष्यानुसारेण सूत्रस्य प्रवृत्तिः। सिद्धं शब्दाकारमुपलभ्य तदनुसारेणादेशविधानमित्यर्थः। पुनर्विशेषमाह। सूत्रम्।

अलुक् क्वचित्। समासे तद्धिते कृदन्तेऽपि विभक्तेरलुग्भवति। कृच्छ्रान्मुक्तः। अप्सु योनिर्यस्येत्यप्सुयोनिः। उरसि लोमानि यस्यासौ उरसिलोमः। हृदि स्पृशतीति हृदिस्पृक्। कंठेकालः, वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः इत्यादि। समासे समानाधिकरणे शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्यः। शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिवः। देवपूजकश्चासौ ब्राह्मणश्च देवब्राह्मणः।

अलुक् ( प्र. ए. ) हसेपः। क्वचित् ( प्र. ए. ) अव्य० क्वचिदिति समासे कृते तद्धितप्रत्ययेऽपि परे पूर्वपदविभक्तेरलुक् लोपो न भवतीत्यर्थः। तद्धितप्रत्यये यथा आमुष्यायणः, इत्यादौ विभक्तेरलुक्। समासे तु दर्शयति। कृच्छ्र ( पं. ए. ) ङसिरत् सवर्णे० मुक्त ( प्र. ए. ) सो० अमेऽप्रावा तस्य नः कृच्छ्रान्मुक्तः इति विग्रहे अत्र तत्पुरुषसमासः। अत्र पूर्वपदविभक्तेरलुक् उत्तरपदविभक्तेस्तु समासप्रत्यययोरिति लुक् ( प्र. ए. ) सो० कृच्छ्रान्मुक्तः स्तोकान्मुक्तः इति वा एवंस्तोकान् मुक्तः तथा अप्सुयोनिः अप् ( स. ब. ) स्वर० योनि (प्र. ए.) सो० अप्सु योनिर्यस्येति बहुव्रीहिः। अत्र सप्तमीबहुवचनस्य अलुक् केवलमुत्तरपदस्य संलुक् उरस् (स. ए.) स्वर० लोमन् (प्र. ब.) जश्शसोः शि इ नोपधायाः मास्वर० उरसि लोमानि यस्येति विग्रहे पूर्वपदसप्तम्या अलुक् उत्तरपदजसो लुक् पुनः ( प्र. ए. ) नोपधायाः हसेपः नाम्नो० उरसिलोमा एवं हृद् ( स. ए. ) स्वर० स्पृश् संस्पर्शने हृदिपूर्वः हृदि स्पृशतीति

१ विभक्तिलन्यईकारात्ईकारान्तशब्दोनभवतितेनेदंपतीभ्यामिति चिन्त्यम्.

विग्रहे तत्पुरुषसमासः । ततः क्विप्प्रत्ययः क्विपः सर्वापहारीलोपः [ प्र. ए. ] दिशामिति शस्य कः । हसेपः । अत्र क्वचिदितिवचनात् कृदन्तेऽपि विभक्तेरलुक् । एवं कण्ठे (स. ए.) कालः । वाचो (ष. ए.) युक्तिः (प्र ए.) दिशः ( ष.ए. ) दण्डः (प्र.ए.) पश्यतो ( ष. ए. ) हरः, दास्याः पुत्रः, एतेषु प्रयोगेषु यथासंभवं विभक्तेरलुक् कण्ठे इत्यत्र सप्तमी अन्यत्र षष्ठी एवं स्तम्बेरमः, कर्णेजपः युधिष्ठिरः, अग्न्यादेरिति षत्वं आत्मनेपदं, परस्मैपदं, देवानांप्रियः, दिवस्पतिः, वास्तोष्पतिः, इत्यादावलुक् । एवं विभक्त्यन्तानां पदानामेकार्थनिष्ठत्वं सामानाधिकरण्यं तत्र वर्त्तमानानां शाकपार्थिवादीनां शब्दानां मध्यपदस्य द्वयोः पदयोः मध्यवर्तिनः पदस्य लोपो वक्तव्यः । केचित्तु उत्तरपदलोप इति पठन्ति । ते पूर्वपदात् उत्तरपदस्य लोपमिति व्याचक्षते । विशेषणविशेष्यभावेन शाकपार्थिवादीनामित्यशेषस्यापि पदस्य निरूपितत्वात्तत्र संमतं पुनश्चित्यं । शाकप्रिय+पार्थिव इति स्थिते शाकं प्रियं यस्य स शाकप्रियः शाकप्रियश्चासौ पार्थिवश्चेति विग्रहे अत्र एकविभक्तिकत्वेन सामानाधिकरण्यं ततो मध्यपदस्य प्रियशब्दस्य लोपः शाक+पार्थिव इति स्थिते ( प्र. ए. ) स्रो० तथा देवपूजको ब्राह्मणः देवान् पूजयतीति देवपूजकः देवपूजकश्चासौ ब्राह्मणश्चेति विग्रहे पूर्ववद्विभक्तिलोपे मध्यपदस्य पूजकस्य लोपः । देवब्राह्मणः ( प्र. ए. ) प्राग्वत् स्रो० । पुनराह ।

आदेश्चद्वन्द्वे । द्वन्द्वसमासे सति आदिपदस्य लोपो भवति । माता च पिता च पितरौ । दुहिता च पुत्रश्च पुत्रौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ ।

आदेश्चद्वन्द्वे । आदिशब्दस्य अजहल्लिङ्गत्वात् पदविशेषणत्वेऽपि पुंस्त्वम् । द्वन्द्वे द्वंद्वसमासे इतरेतरयोगे आदिपदस्य लोपो भवति । चकारात् कुत्रचित् नतु सर्वत्र । मातृ ( प्र. ए. ) सेरा ङित्वाट्टिलोपः ऋल्लोपः स्वर० च ( प्र. ए. ) अव्य० पितृ ( प्र. ए ) पूर्ववत् च ( प्र. ए. ) अव्यय० माता च पिता च इति विग्रहे द्वन्द्वसमासे समासप्रत्यययोरिति विभक्तिलोपे उक्तार्थानामिति च लोपे मातृपित्रादेश्च द्वन्द्वे मातृशब्दस्य लोपः । इतरेतरयोगे द्विवचनं (प्र. व. ) पञ्चसु ऋकारस्यार् भवतीत्यर् स्वर० पितरौ । श्वश्रूश्च श्वशुरश्च इति विग्रहे विभक्तिलोपे आदेश्च द्वन्द्वे इति श्वश्रूपदलोपः । श्वशुरः ( प्र. द्वि. ) ओऔऔ एवं दुहितृपुत्र, दुहिता च पुत्रश्चेति विग्रहे विभक्तिलोपे आदिभूतस्य दुहितृशब्दस्य लोपः । पुत्र ( प्र. व. ) ओऔऔ चकारो बहुलार्थस्तेन कुत्रचिन्नतु सर्वत्र । यथा धवखदिरौ इत्यादौ लोपो न । चकारात् पक्षे मातापितरौ श्वश्रूश्वशुरौ इत्यपि भवति । पुनर्विशेषमाह ।

ऋतां द्वन्द्वे। ऋकारान्तानां द्वन्द्वसमासे सति पूर्वपदस्य वा आकारो वक्तव्यः। मातापितरौ।

ऋतांद्वन्द्वे। ऋतां (ष. ब.) द्वन्द्वे (स. ए.) ऋतामिति ऋकारान्तशब्दानां द्वन्द्वे पूर्वं यत्पदं तत्संबन्धिन ऋकारस्य आकारो वा भवति। माता च पिता च अत्र विभक्तिलोपे मातृशब्दे ऋकारस्य आ मातापितृ (प्र. द्वि.) पश्चसु अङ् स्वर० मातापितरौ एवं पितापुत्रौ, दुहितापुत्रौ, होतापोतारौ,इत्यादिः। पक्षे पूर्वपदलोपे पितरौ वाग्रहणादेव मातरपितरावित्यपि।

द्वन्द्वे सर्वादित्वं वा। वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे-वर्णाश्रमेतराः।

द्वन्द्वे सर्वादित्वं वा। द्वन्द्वसमासे सर्वादीनां शब्दानां सर्वादित्वं सर्वादिकार्यं वा भवति, वा न भवतीत्येवेत्यर्थः। उदाहरणं वर्णाश्रमेतरा द्विस्थाने वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचर्यादयः, इतरे शूद्रवृषलादयः। ततो वर्णाश्च आश्रमाश्च इतरे च समाहारद्वन्द्वस्ततो विभक्तिलोपे उभयत्रापि (प्र. ब.) एकत्र सर्वादित्वाज्जसी अइए आदौ सवर्णे० आश्रम अग्रे इतर अइए यत्र सर्वादित्वं न तत्र (प्र. ब.) सवर्णे० स्रो०।

वैयधिकरण्ये बहुव्रीहौ मध्यमपदलोपो वक्तव्यः। कुमुदस्य गन्ध इव गन्धो यस्यासौ कुमुदगन्धिः। हंसस्य गमनमिव गमनं यस्याः सा हंसगमना।

वैयधिकरण्ये इति। भिन्नविभक्त्यन्तानां पदानां भिन्नार्थनिष्ठत्वं वैयधिकरण्यं, यद्वा भिन्नविभक्त्यन्तत्वे सति भिन्नार्थप्रतिपादकद्वारा एकस्मिन्नर्थे वृत्तिर्व्यधिकरणं तस्य भावो वैयधिकरण्यं तस्मिन् वर्त्तमाने बहुव्रीहिसमासे मध्यमपदलोपो वक्तव्यः। कुमुद (ष. ए.) ङसः स्य गन्ध इव (प्र. ए.) अव्य० गन्ध (प्र. ए.) स्रो० कुमुदस्य गन्ध इव गन्धो यस्येति विग्रहे अत्र कुमुदस्येति षष्ठ्यन्तं शेषाणि प्रथमान्तानि समासप्रत्यययोरिति विभक्तिलोपे उक्तार्थानामिति इवलोपे कुमुदगन्धगन्ध इति स्थिते अत्र मध्यपदस्य गन्धस्य लोपः। पश्चात् मध्यमपदलोपश्चेति चकारात् गन्धादेरिः इप्रत्ययः। यस्यलोपः स्वर० (प्र. ए.) स्रो० कुमुदगन्धिः। तथैव हंस (ष. ए.) ङस्स्य गमन (प्र. ए.) अतोऽम् अम्शसोरस्य मोनु० इव (प्र. ए) अव्य० गमन (प्र. ए.) पूर्ववत् हंसस्य गमनमिव गमनं यस्या इति विग्रहे बहुव्रीहिः समासप्रत्यययोः। उक्तार्थानामप्रयोगः। हंस+गमन+गमन इति स्थिते मध्यपदस्य

गमनस्य लोपः । पश्चादाबतः स्त्रियां ( प्र. ए. ) आपः हंसगमना । समासश्चतुर्द्धा । नित्यानित्यालुगलुक्भेदात् । अथ नित्यसमासमाह ।

**दिक्संख्ये संज्ञायाम्** । दिग्वाचकसंख्यावाचकशब्दावुत्तरपद-तुल्यार्थौ संज्ञायां समस्येते स तत्पुरुषः । संज्ञायामिति पदेन नित्यसमासो दर्शितः । अविग्रहो नित्यसमासः । अन्यस्त्वस्वपदविग्रहोऽपि भवति । विग्रहो द्विविधः । एकः स्वपदविग्रह एकोऽस्वपदविग्रहोऽपि भवति । अस्वपदेन समा-सव्यतिरिक्तेनापि पदेन विग्रहो वाक्यं यत्र स नित्यः । तेन लम्बौ कर्णौ यस्य स लम्बकर्णः । दात्रेण छिन्नमिति स्वपदविग्रहः । अस्वपदविग्रहो नित्यः।यस्मिन्समासाववबोधकं वाक्यं न तिष्ठति स नित्यः । दक्षिणाग्निः सप्तग्रामः ।

॥ इति समासप्रक्रिया ॥

**दिक्संख्ये संज्ञायाम्** । दिक्संख्ये ( प्र. द्वि. ) संज्ञायां ( स. ए. ) दिग्वाचकं संख्यावाचकं च पदं संज्ञायां वाच्यमानायां तुल्यार्थेन एकार्थेन उत्तरपदेन सह अविग्रहं विग्रहरहितं समस्यते, समासश्च तत्पुरुषो भवति । तत्र समासश्च नित्यो भवति । अथ नित्यानित्यसमासस्वरूपमाह । **अविग्रहो नित्यसमासः** । यो नित्यसमासः स विग्रहरहितः असमस्यमानपदविग्रहो भवति । अन्योऽनित्यसमासो ऽस्वपदविग्रहः । परपदविग्रहोऽपिशब्दात् स्वपदविग्रहोऽपि भवति । अस्वपदविग्रहो यथा स्त्रियमधिकृत्य अत्र अधिकृत्येति परपदेन विग्रहः बाह्यपदत्वात् । अस्वपदम्, अथवा बहु धनं यस्य सः । अत्र यस्येति परपदेन विग्रहः इति अस्वपदविग्रहः । स्वाद-न्यः इत्यप्यस्वपदविग्रहः तथा ग्रामं प्राप्त इत्यादौ स्वाभ्यां विग्रहमध्यव-र्त्तिभ्यां पदाभ्यां विग्रहः । अथ नित्यसमासोदाहरणं यथा दक्षिणाग्निरिति अग्नि-भेदः । स्युर्दक्षिणाहवनीय, गार्हपत्याख्ययोऽग्नयः इति । दिग्वाची दक्षिणाशब्दः एकार्थेन अग्निना परपदेन समस्यते, समासश्च तत्पुरुषः । नित्यत्वाद्विग्रहो न क्रियते तथा सप्तग्राम इत्यत्र सप्तशब्दः संख्यावाचकः । एकार्थेन ग्रामपदेन समसितः । अथ विग्रहं विनापि नित्यस्तत्पुरुषः समासः। नित्यं पदद्वयात्मकत्वात् समासरूपमेव पद-मित्यर्थः। दक्षिणाग्निरिति अग्निभेदः। नामवाची शब्दः सप्तग्राम इति ग्रामादिनामवाची शब्द इति । पूर्वेऽव्ययेऽव्ययीभावोऽमादौ तत्पुरुषः स्मृतः ॥ चकारे बहुलो द्वन्द्वः

संख्यापूर्वो द्विगुः स्मृतः ॥ १ ॥ यस्य येन बहुव्रीहिः सचासौ कर्मधारयः इति किंचित् समासानां षण्णां लक्षणमीरितम् ॥ २ ॥

इति चन्द्रकीर्तिविरचितायां सारस्वतसुदीपिकायां समासदीपिका संपूर्णा ॥

---

अथ तद्धितो निरूप्यते । अथेति समासकथनानन्तरं तद्धितस्तद्धितसंज्ञकः प्रत्ययो निरूप्यते । तस्य समासस्य हितो यदि वा तेषां पूर्वोक्तानां नामादीनामर्थान्तरप्रकाशनेन हितस्तद्धितः स निरूप्यते कथ्यते इत्यर्थः । यद्यपि तद्धितसंज्ञकप्रत्यया बहवः सन्ति तथापि जात्यभिप्रायेणैकवचनम् ॥ सूत्रम् ।

अपत्येऽण् । नाम्नोऽपत्येऽर्थेऽण्प्रत्ययो भवति । उपगोरपत्यं पुमानिति विग्रहे । उपगोः अण् इति स्थिते । समासप्रत्यययोः इति षष्ठीलोपः । णकारो वृद्ध्यर्थ ईवर्थश्च ।

अपत्येऽण् । न पतति पिता दुर्गतौ यस्मात्तदपत्यं तस्मिन् (स. ए.) अण् अण् (प्र. ए.) हसेपः० नाम्नो० इति अपत्ये पुत्रपौत्रादिसन्ताने शिष्यप्रशिष्यादिसन्ताने वाच्ये सति नाम्नः अण्प्रत्ययो भवति । अत्रापि नामशब्देन पदमेव विवक्षितम् । अन्यथा अविभक्ति नामेत्युच्यमाने उपगोरिति षष्ठ्यन्तात् अण् प्रत्ययो न स्यात् । यद्वा उपगुशब्दात् प्रथमं अण्प्रत्ययः । ततः षष्ठीं कृत्वा विग्रहः कार्यः । उदाहरणम् । उपगु अपत्यार्थेऽण्प्रत्ययः। ततः (प. ए.) इति गोदरपेत्यकारलोपः। स्त्रो० उपगोरपत्यमिति वाक्ये तद्धितविग्रहोऽप्यन्ययपोऽयत्ने स्यैव भवति। तेन चैत्रमुपगोरपत्यं चैत्ररपेत्यादो न। उपगुनाम्नः नापत्यापत्यं सन्तानः पुत्रादिरिति विग्रहे कृते समासप्रत्यययोरिति विभक्तिलोपे [illegible] अपत्यशब्दे उपगु+अण् इति स्थिते णकारो वृद्ध्यर्थः ईवर्थश्च । [illegible]

आदिस्वरस्य ञ्णिति च वृद्धिः । स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः । उकारस्यौकारो वृद्धिः ।

आदिस्वरस्य ञ्णिति च वृद्धिः । आदिश्चासौ स्वरश्च [illegible] (ष. ए.) [illegible] ञ्णित् [illegible] ञ्णिति (स. ए.) [illegible] वृद्धि (प्र. ए.) [illegible] सूत्रम् । [illegible] मध्ये य आदिस्वरस्तस्य ञिति णिति च [illegible] [illegible] । [illegible] औपगु+अ इति स्थिते । सूत्रम् ।

वोव्यस्वरे । उकारस्य औकारस्य च अव् भवति स्वरे यकारे च परे । कृत्तद्धितसमासाश्चेति नामत्वम् । नामत्वात्स्यादयः । औपगवः । वसिष्ठस्यापत्यं वासिष्ठः । गोतमस्यापत्यं गौतमः । शिवादिभ्यश्चेत्यण् वक्तव्यः । अन्यथा ढञः प्राप्तिः । शिवस्यापत्यं शैवः । विदेहस्यापत्यं वैदेहः ॥

वोव्यस्वरे । उश्च ओश्च वो तस्य वो ( ष. ए. ) साङ्केतिकम् । अव् ( प्र. ए. ) हसेपः० यश्च स्वरश्च यस्वरं तस्मिन् ( स. ए. ) अइए त्रिपदं अन्त्यस्य उवर्णस्य ओकारस्य अव् भवति तद्धितसंबन्धियकारे स्वरे च परे । अत्र स्वरे परे उकारस्य अव् गव् स्वर० औपगव कृत्तद्धितसमासाश्चेति नामसंज्ञायां ( प्र. ए. ) स्रो० उपगुर्नाम कश्चित् मुनिस्तस्य पुमपत्यं औपगवः । स्त्र्यपत्यंचेत्तर्हि औपगवी । एवं वसिष्ठस्यापत्यं वासिष्ठः । अण् प्रत्ययः । अत्र वकारस्थिताकारस्य आदिस्वरस्य वृद्धिराकारः । यस्यलोपः । स्वर० एवं गोतमस्यापत्यं गौतमः । इत्यत्राणूनिमित्ता वृद्धिः ओकारस्य औकारः ( प्र. ए. ) स्रो० सर्वत्र तद्धिते विकल्पानुवृत्तिर्ज्ञेया इति स्वायंभुव इत्यादौ अवादेशो न, किंतु नुधातोः । सूत्रम् ।

ऋउअणि । मातृशब्दस्य ऋकारस्य उर् भवति अणि परे । षोडः स्वन्मदेकत्वे इति सूत्रनिर्देशात्क्वचिदपदान्तेऽपि झसानां ञमा एष्टव्याः । षण्णां मातृणामपत्यं षाण्मातुरः । तिसृणां मातृणामपत्यं त्रैमातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ।

ऋउअणि । ऋ ( ष. ए. ) साङ्केतिकम् । उर् ( प्र. ए. ) हसेपः० अण् ( स. ए. ) स्वर० पश्चात् स्वर० अण् प्रत्यये परे मातृशब्दसंबन्धिन ऋकारस्य उर् भवति षष्+मातृ । षष् ( ष. ब. ) ष्णइति नुट् न् षोडः ष्टुः ' ष्टुभिः ष्टुः ' स्वर० मोनु० मातृ ( ष. ब. ) नुडामः नामि षण्णां मातृणाम् अपत्यमिति विग्रहे अथवा षट् च ता मातरश्च षण्मातरः षण्मातृणामपत्यमिति विग्रहे समासप्रत्यययोरिति विभक्तिलोपः। षष्+मातृ+अ इति स्थिते आदिस्वरस्येति वृद्धिः । षोडः।वावसाने ।डस्य टः। ञमे ञमा वा टस्य णः । यद्वा, षषो णो वाच्यो मातरि इति केचित् । क्वचित् जवानामपि ञमा एष्टव्या इति केचित् । ऋ उरणीति उर् स्वर० ( प्र. ए. ) स्रो० षाण्मातुरः कार्तिकेय इत्यर्थः । एवं द्वयोर्मात्रोरपत्यमिति विग्रहे उभयत्रापि ( प. द्वि. ) द्वि ( ष. द्वि. ) त्यदादेष्टे० आवतः स्त्रियां टौसोरेः ए अय् स्वर० मातृ ( प. द्वि. ) ऋरम्० । अपत्येऽण् णित्त्वाद्वृद्धिः द्विइत्यस्य द्वैऋउरणीति उर् स्वर० ( प्र. ए. )

स्रो० द्वैमातुरः गणेशः एवं सामातुरः, माद्रमातुरः, सत्यास्तु तनये सामातुरवद्भा- द्रमातुरः द्वावपि सतीसुतवाचकौ इत्यादिरणन्तः । अन्यत्राप्यण् प्रत्ययो भवति। यतः। रागान्नक्षत्रयोगाच्च समूहात् सास्य देवता ॥ तद्वेत्त्यधीते तस्येदमेवमादिरणि- ष्यते ॥ १ ॥ रागाद्यथा। कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । नक्षत्रयोगात् पुष्येण युक्तः कालः पौषः। समूहात् नराणां समूहो नारं। सास्यदेवतेत्यर्थे इन्द्रो देवताऽस्येति ऐन्द्रम्। तद्वेत्तीत्यस्यार्थे व्याकरणमधीते वेद वा वैयाकरणः । तस्येदमित्यस्यार्थे देवदत्तार्थमिदं दैवदत्तं सुवर्णस्येदं सौवर्णम् इत्याद्यर्थेष्वप्यण्प्रत्ययः स्यात् । तदग्रे यथास्थाने साधयिष्यति। अथापत्येऽर्थे प्रत्ययान्तरमाह।

अत इञनृषेः । अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ्प्रत्ययो भवति। यस्य लोपः देवदत्तस्यापत्यं दैवदत्तिः। श्रीधरस्यापत्यं श्रैधरिः। दशरथस्यापत्यं दाशरथिः। पौरं- दरिः। क्वचिदृषिशब्दादपि भवति। तेन औद्दालकिः।

अत इञनृषेः। अत् (पं. ए.) स्वर० स्रो० इञ् (प्र. ए.) हसेपः प- श्चादादबे लोपश्। अनृषे न ऋषिः अनृषिः तस्मात् (पं. ए.) ङिति इकारस्यैकारः ङस्येत्यकारलोपः स्रो० पूर्वं स्वर० त्रिपदम्। ऋषिवाचकशब्दवर्जितादकारान्तान्ना- म्नोऽपत्येऽर्थे इञ्प्रत्ययो भवति । अणोऽपवादः। अत्र ञकारो वृद्ध्यर्थः । उदा- हरणम् दैवदत्तिः देवदत्तस्यापत्यं इञ्प्रत्ययः ञकारो वृद्ध्यर्थः आदिस्वरश्चेति वृद्धिः दै यस्य लोपः स्वर० (प्र. ए.) स्रो० दैवदत्तिः। एवं श्रीधरस्यापत्यं श्रैधरिः।अत्र इञ् प्रत्यये श्री इत्यस्य श्रै इति वृद्धिः। तथा दशरथस्यापत्यं दाशरथिः। अत्र वृद्धि- कार्ये दस्य दा। पुरन्दरस्यापत्यं पौरन्दरिः अत्र उकारस्य औकारो वृद्धिः एवं रावणः।

बह्वादेश्च । बह्वादेः पर इञ् प्रत्ययो भवत्यपत्येऽर्थे। बह्वोः अपत्यं बाहविः। उपबिन्दोरपत्यमौपबिन्दविः । कृ- ष्णस्यापत्यं कार्ष्णिः। उडुलोम्नोऽपत्यमौडुलोमिः। नो वा। अग्निशर्मणोऽपत्यमाग्निशर्मिः ।

बह्वादेश्च। बह्वादेस्तु अकारान्तत्वाभावेऽपि इञ् वक्तव्यः। बाहविः, वार्ष्णिः, आग्निः, शार्मिः,। सर्वत्र तद्धिते विकल्पानुवृत्तिरस्त्येव तेन वासुदेवः, शैवः, वैदेहः, इत्यादौ इञ् न स्यात्। व्यास, वरुट, सुधातृ, निषाद, बिम्ब, चाण्डालादन्तस्य

वाडक् । एभ्योऽपत्ये इञ् तद्योगेवैमन्तस्य अक् आदेशः । वैयासकिः, वारुटकिः, सौधातकिः, नैषादिकिः, बिम्बकी, चाण्डालकिः । सूत्रम् ।

ण्यायनणेयण्णीयागर्गनडात्रिस्त्रीपितृष्वस्रादेः । गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात्पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे यथासंख्येन । चकारात्पितृष्वस्रादेरेयणप्रत्ययो भवति । गर्गस्यापत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । जमदग्नेरपत्यं जामदग्न्यः । सोमस्यापत्यं सौम्यः । नडस्यापत्यं नाडायनः । चरस्यापत्यं चारायणः । चन्द्रस्यापत्यं चान्द्रायणः । अलुक् क्वचित् अमुष्यापत्यमामुष्यायणः । यस्य लोपः । अत्रेरपत्यमात्रेयः । मृकण्डस्यापत्यं मार्कण्डेयः । कपेरपत्यं कापेयः । गङ्गाया अपत्यं गाङ्गेयः । मह्या अपत्यं माहेयः । क्वचित्स्त्रीलिङ्गादण्भवति । भूमेरपत्यं भौमः ॥ मातृपितृभ्यां स्वसा । मातृपितृभ्यां शब्दाभ्यां परस्य स्वसृशब्दस्य सकारस्य षकारः स्यात्समासे सति । पितुःस्वसा । पितृष्वसा । पितृष्वसुरपत्यं पैतृष्वस्रीयः । मातुःस्वसा मातृष्वसा । मातृष्वसुरपत्यं मातृष्वस्रीयः ॥ ढकि लोपः । मातृष्वसुरन्तस्य लोपः स्याड्ढकि । अतएव ढक् ॥ आयनेयीनीयियः फढछखघा प्रत्ययादीनाम् । प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः । आयन् एय् ईन् ईय् इय् एते आयन्नादयः ॥ किति च । किति तद्धिते परे अचामादेरचो वृद्धिः स्यात् । पैतृष्वसेयः ॥ मातृष्वसुश्च । पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रेयः ॥ मातृपितृभ्यां पितरि डामहच् । आभ्यां परो डामहच् प्रत्ययो भवति । मातुः पिता मातामहः । पितुः पिता पितामहः ।

ण्यायनणेयणीयाःगर्गनडेति । ण्यश्च आयनण् च एयण् च णीयश्च

ण्यायनणेयणीयाः (प्र. ब.) सवर्णे० गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च गर्गनडात्रिस्त्रीपितृष्वसारस्ते आदौ यस्य स गर्गनडात्रिस्त्रीपितृष्वस्रादिस्तस्मात् (पं. ए.) ङितिङ्स्येत्यकारलोपः स्तो० द्विपदमिदम्। द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं संबन्धात् इत्यादिशब्दस्य प्रत्येकं योगः। तेनापत्येऽर्थे गर्गादेर्ण्यः नडादेरायनण् अत्र्यादेः स्त्रीलिङ्गाच्च एयण् पितृष्वस्रादेर्णीयः सर्वत्र णकारो वृद्ध्यर्थः। ण्यणीययोः वृद्ध्यर्थमादौ प्रयुक्तो णकारोऽणन्तत्वनिराससूचकः। अणन्तत्वाभावा दीन्निषेधः। गर्गवत्स गर्गस्यापत्यं वत्सस्यापत्यं इति विग्रहे ण्यप्रणित्त्वाद्वृद्धिः गार्ग, वात्स्य यस्यलोपः उभयत्रापि स्वर० स्तो० गार्ग्यः, वात्स्यः। स्त्र्यपत्यं चेत् गार्ग्या, वात्स्या। नड नडस्यापत्यं नाडायणः आयनण् प्र० णित्त्वाद्वृद्धिः। ना यस्य लोपः स्वर० (प्र. ए.) स्तो० एवं चरस्यापत्यं चारायणः। स्त्रियां नाडायणी, चारायणी। अदस् (प. ए.) त्यदादेष्टे० दस्यमः ङस्य भाद् अमु क्लिा० अमुष्यापत्यमिति विग्रहे आयनण् प्र० णित्वात् वृद्धिः आ अलुक् क्वचिदिति षष्ठ्या विभक्तेर्न लोपः यस्य लोपः स्वर० (प्र ए) स्तो० आमुष्यायणः। अस्यार्थः। स्यादामुष्यायणोऽमुष्य पुत्रः प्रख्यातवप्तृकः। इति। अत्रि अत्रेरपत्यं आत्रेयः एयण् प्र० वृद्धिः यस्य लोपः स्वर० (प्र. ए.) स्तो० एवं कपेरपत्यं कापेयः अणन्तत्वादीप् आत्रेयी कापेयी। गङ्गाया अपत्यं गाङ्गेयः। मह्या अपत्यं माहेयः। एवं वैनतेयः, रैहिकेयः, कादम्बेयः। पितृष्वसा मातृष्वसा। पितुः स्वसा पितृष्वसा। 'मातृपितृभ्यां स्वसुः सकारस्य षत्वं वक्तव्यं' पितृष्वसृ (प. ए.) ऋतोङ्डः डित्वाट्टिलोपः अग्रे अपत्य (प्र. ए.) अतोऽम् पितृष्वसुरपत्यं पैतृष्वसीयः। एवं मातृष्वसुरपत्यं मातृष्वसीयः। उभयत्रापि णीयः प्र०। पितृशब्दे इकारस्य ऐकारो वृद्धिः मातृशब्दे न वृद्धिः आदेरेव सद्भावात्। एवं स्वसुरपत्यं स्वस्रीयः। अत्र णितोवेति विकल्पान्न वृद्धिः। अथ रयादौ विषये तद्धितप्रत्ययान्तानां साधनविधिमाह।

**लुग्बहुत्वे क्वचित्।** अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदनृषिविषये ऋषिविषये च लुग्भवति। गर्गस्यापत्यानि पुमांसो गर्गाः। बहुत्वविवक्षायां जस्। अत्रेरपत्यानि अत्रयः। एओ जसि विदेहस्यापत्यानि विदेहाः। भृग्वत्रिकुत्साङ्गिरोवसिष्ठगोतमदेशतुल्याख्यक्षत्रियेभ्यः परस्य प्रत्ययस्य लुग्भवति। भृगवः, कुत्साः, वसिष्ठाः।

लुग्बहुत्वेक्वचित्। लुक् (प्र. ए.) हसेपः बहुत्व (स. ए.) अइए क्वचित्

---

१ मातुः स्वसा मातृष्वसा।

( प्र. ए. ) अव्य० त्रिपदं अपत्येऽर्थे उत्पन्नस्य: अणादेः प्रत्ययस्य बहुवचने सति क्वचिदिति ऋषिवाचकशब्दविषये अनृषिवाचके विषये वा लुग्भवति। न स्त्रियां। तत्र ण्यप्रत्ययस्य यथा गार्ग्यः, गार्ग्यौ बहुवचने गार्ग्य+अस् इति लुग् बहुत्वे इति ण्यप्रत्ययस्य लुक् निमित्ताभावे नैमित्तिकस्याप्यभाव इति वृद्धेरभावः। गर्ग+अस् इति सवर्णे० स्रो० गर्गाः। अग्रेऽपि गार्ग्यं, गार्ग्यौ, गर्गान्। गार्ग्येण, गर्गाभ्यां, गर्गैः। एवं सर्वत्र बहुवचने ण्यप्रत्ययस्य लुक्। एवं वासिष्ठः, वासिष्ठौ, बहुवचने वासिष्ठ ( प्र. ब. ) अत्र अणो लोपः। निमित्ताभावे इति वृद्धेरप्यभावः। सवर्णे० स्रो० आत्रेय ( प्र. ब. ) अत्र ण्यणूलोपः अत्रि+अस् ए ओजसि ए अय् स्वर० स्रो०। आत्रेयः, आत्रेयौ, अत्रयः। आत्रेयं, आत्रेयौ, अत्रीन्। इत्यादिरूपाणि। वैदेह ( प्र. ब ) अणो लोपः वृद्धेरप्यभावः विदेह+अस् सवर्णे० स्रो० विदेहाः। एवं राघवः, राघवौ, रघवः। सूत्रम्।

**देवतेदमर्थे। देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति। इन्द्रो देवता यस्येत्यैन्द्रं हविः। सोमो देवता यस्येति सौम्यं हविः। देवदत्तार्थमिदं दैवदत्तं वस्त्रम्।**

देवतेदमर्थे। देवता च इदं च देवतेदमौ तयोरर्थौ देवतेदमर्थस्तस्मिन् (स ए.) अइए एकपदमिदं सूत्रम्। देवता स्वामित्वेनाधिष्ठायकः तस्यार्थे इदमर्थेति अस्येदं वस्तु अस्मिन्नर्थेऽपि उक्ता अणादयः प्रत्यया भवन्ति। इन्द्र इन्द्रो देवता अस्येति वाक्ये अत्र देवतार्थेऽण् णित्त्वाद्वृद्धिः। ऐन्द्र यस्यलोपः स्वर० ( प्र. ए. ) अतोऽम् अम्शसो० ऐन्द्रं हविः। इन्द्रार्थे कल्पितं घृतमित्यर्थः। स्त्रियां ऐन्द्री दिक्। सोमः सोमो देवताऽस्येति वाक्ये अत्र देवतार्थे ण्यप्रत्ययः। आदिस्वरस्येति वृद्धिः, सौ यस्यलोपः स्वर० कुलशब्दवत् सौम्यम्। देवदत्त देवदत्तार्थमिदं देवदत्तस्य इदं अत्रेदमर्थेऽण् वृद्धिः दै यस्यलोपः स्वर० कुलशब्दवत्। एवम् आग्नेयं, वायव्यं, पैत्र्यं, उषस्यं, इति देवतार्थे। अथ इदमर्थे। नद्या अयं नादेयः इत्यादि। देवतेदमौ इत्युक्तेऽपि सिद्धौ अर्थग्रहणादन्यत्राप्यर्थे। उदुम्बराणि सन्त्यस्मिन्नर्थे देशे औदुम्बरो देशः। एवं बादरः इत्यादि ज्ञेयम्। अथ वृद्धिविशेषमाह।

**क्वचिद्द्वयोः। क्वचित्पूर्वोत्तरपदादेरचो वृद्धिर्भवति ञिति णिति च तद्धिते परे। अग्निमरुतौ देवते यस्य तदाग्निमारुतं कर्म। सुष्ठु हृदयं यस्यासौ सुहृत्। सुहृदो भावः सौहार्दम्। अत्र भावेऽण् वक्तव्यः। सुष्ठु भावः सौष्ठवम्। अत्र**

सुष्ठु अव्ययम्। एवमेव अव्ययं तिष्ठति। सुभगस्य भावः सौभाग्यम्।

क्वचिद्द्वयोः। क्वचित् ( प्र. ए. ) अव्य० द्वि ( ष. द्वि. ) त्यदादेष्ट० ओसि० ए अय् स्वर० स्रो० पूर्वं चपा० क्वचिदिति। क्वचित्प्रयोगान्तरे पूर्वपदादेः स्वरस्य उत्तरपदादेः स्वरस्य च द्वयोरपि वृद्धिर्भवति। यथा अग्निमरुत् अग्निश्च मरुच्च अग्निमरुतौ तयोरिदं इदमर्थेऽण्। यद्वा कर्मण्यप्यण् वक्तव्यः क्वचिद्द्वयोरिति अग्निमरुतोरुभयोरप्याद्यस्वरस्य वृद्धिः। स्वर० कुलशब्दवत् आग्निमारुतं एतत् कर्म। सुहृत् शोभनं हृत् हृदयं यस्य स सुहृद् सुहृदो भावः अत्र भावेऽण् वक्तव्यः। पश्चात् क्वचिद्द्वयोरिति सुहृत् इत्यत्र उकारऋकारयोर्द्वयोरपि वृद्धिः। सौहार्द राद्यपोद्धिः जल० स्वर० ( प्र. ए. ) कुलशब्दवत् सौहार्दम्। अत्र भावेऽण् वक्तव्य इति वक्तव्यबलादनुक्तोऽपि अण्। एवं सौभाग्यम्। एवं परस्त्रिया अपत्यं पारस्त्रैणेयम्। अथ प्रयोगानुसारेण वृद्धेरभावमाह। सूत्रम्।

णितो वा। उक्ता वक्ष्यमाणाश्च प्रत्यया विषयान्तरे णितो वा भवन्ति। अजो गौर्यस्यासावजगुः शिवः। गोः इति ह्रस्वः। वोऽव्यस्वरे तस्येदं धनुराजगवं-अजगवं वा। कुमुदस्येव गन्धो यस्याः सा कुमुदगन्धिः। तस्या अपत्यं स्त्री कौमुदगन्ध्या। वा कुमुदगन्ध्या। आबतः स्त्रियाम्। इत्याप्। श्वशुरस्यायं श्वाशुर्यो ग्रामः। विष्णोरिदं वैष्णवं। गोरिदं गव्यम्। कुले भवं कुल्यम्। तवेदं त्वदीयम्। ममेदं मदीयम्। अत्र णीयप्रत्ययो न णित्।

णितो वा। णित् ( प्र. ब. ) स्वर० स्रो० वा ( प्र. ए. ) अव्य० हवे० उओ। उक्ता अणादयः प्रत्यया विषयान्तरेऽर्थान्तरे णितो णकारानुबन्धा णित्संज्ञका वा भवन्ति। अत्र वाशब्दो व्यवस्थावाचको बहुलार्थः। तेन एतेषु परेष्वादिस्वरस्य क्वचिद्वृद्धिः, क्वचित् वृद्धेरभावोऽपीत्यर्थः। क्वचिद्विकल्पः। उदाहरणम्। अजगु अजोऽजन्मा गौः वृषभो यस्य सः अजगुः शिवः गोः इति सूत्रेण गोशब्दस्य ह्रस्वः अजगुस्थाने अजगोरिदं धनुः अत्र इदमर्थे अण् उभयत्र। एकत्र वृद्धिः आ, अन्यत्र न वृद्धिः। वो अव् यस्वरे अव् स्वर० कुलवत् आजगवमजगवं वा धनुः अत्र वा वृद्धिः। कुमुदगन्ध कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः वैय-

धिकरण्ये बहुव्रीहौ मध्यमपदलोपः गन्धादेरिः यस्य लोपः स्वर० कुमुदगन्धिस्त-स्यापत्यमिति वाक्ये ऽपत्येऽर्थे ण्यप्र० अत्राद्यस्य उकारस्य नित्यं वृद्धिः । कौ । यस्यलोपः स्वर० स्त्रीत्वादाबतः स्त्रियामित्याप् अत्र नित्यं वृद्धिः । एवं श्वशुरः । श्वशु-रस्यायमिति वाक्ये इदमर्थे ण्य प्र० वृद्धिः यस्य लोपः जलतुं० (प्र. ए.) श्वाशुर्यो ग्रामः । विष्णु विष्णोरिदमिति वाक्ये अण् प्र० वृद्धिः वै वो अव्यस्वरे स्वर० (प्र. ए.) कुलवत् । केचित्तु विष्णोः स्वरूपं वैष्णवमिति पठन्ति । इदमर्थस्य पूर्वं प्रणीतत्वा-द्विष्णोरिदमिति न पठन्ति । एवं गोरिदं घृतादि गव्यं इदमर्थे ण्य प्र० वो अव्य० स्वर० गव्यम् । कुले भवं कुल्यं कादिण्य० य अत्र प्रयोगद्वये वृद्धेरभावः यस्यलोपः युष्मद् अस्मद् तवेदं ममेदमिति विग्रहे इदमर्थे णीयः त्वन्मदेकत्वे त्वत् मत् क्वचि-त् पदान्ताश्रयणात् चपा अबेजबाः स्वर० अतोऽम् तवेदं, त्वदीयं, ममेदं मदीयं अत्रापि न वृद्धिः । एवं तस्येदं तदीयं, यस्येदं यदीयं, एतस्येदं एतदीयं, अत्र णी-यप्रत्ययः न णित् ।

**चतुरश्च लोपो ण्यणीययोः । चतुर् शब्दस्य चकारस्य लोपो भवति ण्यणीययोः प्रत्यययोः परतः ।**

**चतुरश्च लोपेति** । चतुःशब्दसंबन्धिनश्चकारस्य लोपो भवति ण्यणीययोः परयोः इत्यनेनोभयत्रापि च लोपः ।

**पूरणेऽर्थेण्यणीयौ भवतः । चतुर्णां संख्यापूरकं तुर्यं-तुरीयम् ।**

**पूरणेऽर्थेण्यणीयौ०** । चतुर्णां संख्यापूरणः अयं तुर्यः तुरीयः अत्र पूरणा-र्थस्य इदमर्थान्तःपातित्वात् इदमर्थे ऽण्यणीयप्रत्ययौ । अत्रापि न णित्त्वम् ।

**अन्यस्य दुक् । अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे । अन्यस्येदमन्यदीयम् । अर्धं जरत्यस्याः सार्धजरती । अर्धजरत्या इदमर्धजरतीयम् । स्वपरयोः कक् । स्वकीयम् परकीयम् ।**

**अन्यस्य दुक्** । अन्यशब्दस्य णीयप्रत्यये परे दगागमो भवति । ककारः स्थाननियमार्थः अकार उच्चारणार्थः । अन्य अन्यस्येदमिति विग्रहे इदमर्थे णीयः प्र० ईये दगागमे स्वर० अन्यदीयम् । अन्यत्रापि दगागममिच्छन्ति अन्यदर्थः अन्य-दृग्, अन्यदासा, अन्यदासी, अन्यदुत्सुकः, अन्यद्धविः, अन्यदास्था इत्यादि । अर्द्धजरती अर्द्धजरत्याः अर्द्धवृद्धायाः स्त्रिया इदं वस्त्रादि अर्द्धजरतीयम् । इदमर्थे णीयः प्र० यस्य लोपः स्वर० (प्र. ए.) कुलवत् गव्यमित्यारभ्योक्तप्रयोगेषु न वृद्धिः । सूत्रम् ।

कारकात्क्रियायुक्ते । कारकादप्येते अणादयः प्रत्यया भवन्ति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये। कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । मथुराया आगतो जातो वा माथुरः । ग्रामे भवो ग्राम्यः-ग्रामीणः । धुरं वहतीति धुर्यः-धौरेयः ।

कारकात्क्रियायुक्ते । कारक ( पं. ए. ) ङसिरत् सवर्णे० क्रियायुक्ते क्रियया युक्तं क्रियायुक्तं तस्मिन् ( स. ए. ) ङइए द्विपदम् । कारकात् कर्तृ, कर्म, करण, संप्रदान, अपादान, आधारलक्षणादपि एते अणादयः प्रत्यया भवन्ति क्रियासहिते कर्तरि कर्मणि च वाच्ये सति । षट् कारकाणि सन्ति ततः कारकेभ्य इति वक्तव्ये कारकादित्येकवचनं जात्यभिप्रायेण। कुङ्कुम (तृ. ए.) टेन अइए कुङ्कुमेन रक्तं वस्त्रमिति विग्रहे अत्र कुङ्कुमेनेत्यत्र करणं कारकं, तथा रञ्जनरूपक्रियासहितं वस्त्रं कर्म, तच्चात्राभिधेयं अतोऽण् समासप्रत्यययोरिति तृतीयालोपः उक्तार्थानामप्रयोगः णित्त्वाद्वृद्धिः यस्यलोपः एवं कुसुम्भेन रक्तं कौसुम्भं एवं माञ्जिष्ठं मथुरा ( पं. ए. ) ङिताख्यट् सवर्णे० मथुराया आगतस्तत्र जातो वा इति वाक्ये अत्र अपादानं कारकं विश्लेषावधाविति पञ्चमी आगमनक्रियायुक्तो नरः कर्ता अभिधेयस्ततोऽण् प्र० आदिस्वर० यस्य लोपः स्वर० माथुरः एवं ग्रामे भवो ग्राम्यः अत्र भवनक्रियायुक्ते कर्तरि अभिधेये ग्रामे इत्यधिकरणकारकात् ण्यप्र० यस्यलोपः स्वर० ( प्र. ए. ) स्रो० धुर् ( द्वि. ए. ) द्विस्थाने धुरं वहतीति धुर्यो धौरेयो वा एकत्र ण्यप्र० तत्र वा ग्रहणान्न वृद्धिः । अन्यत्र एयण् तत्र वृद्धिः धौ । स्वर० उभयत्र ( प्र. ए. ) धुर्यः य्वोर्विहसे इति तद्धितयकारे नेति वक्तव्यं तेन धुर्यः इत्यत्र दीर्घत्वाभावः प्रक्रियामते तु नप्रकुर्छुरामिति दीर्घत्वनिषेधः धौरेयः । अत्र वहनक्रियाश्रये कर्तरि अभिधेये धुरमिति कर्म कारकात् ण्य, एयण् प्रत्ययौ एवं आत्मने हितः आत्मनीनः विश्वजनाय हितः विश्वजनीनः अत्र संप्रदान कारकाद्वक्ष्यमाण ईनप्रत्ययः । सूत्रम् ।

केनेयेकाः । क ईन इय इकइत्येते प्रत्यया भवन्ति । भवाद्यर्थेषु । णित्त्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः-कर्णाटकः । ग्रामादागतस्तत्र जातो वा ग्राम्यः-ग्रामीणः । अञ्चेर्दीर्घश्च । सध्रीचि भवो वा सध्रीचा युक्तः सध्रीचीनः । समीचि भवो वा समीचा युक्तः समीचीनः । तिरश्चादयो निपात्यन्ते । तिरश्चि भवो वा तिरश्चा युक्तः तिरश्चीनः । उदीचि भवो वा उदीचा युक्त उदीचीनः । यलोपश्च । क-

न्यादीनामन्त्ययकारस्य लोपो भवति यकारे स्वरे परे । कन्यादीनामुपधायाः क्वचिद्यकारस्य लोपो भवति स्वरे यकारे च ताद्धिते परे । यस्य लोपः । कन्यायां भवः कानीनः । पुष्येण युक्ता पौर्णमासी पौषी । नक्षत्रादण् वक्तव्यः । अणन्ताद्दीप् । पौष्यां भवः पौषीणः । चातुर्मास्यं व्रतमाचरतीति चातुर्मासिकः । इयो वा । क्षत्रशब्दाद्वा इयप्रत्ययो भवति । क्षतात्त्रायते इति क्षत्त्रम् । क्षत्राद्या निपात्यन्ते । क्षत्रे भवः क्षत्रियः । क्षात्रः । क्षत्रशब्दादण् वक्तव्यः । शुक्रो देवता यस्य तच्छुक्रियम्-शौक्रम् । इन्द्रो देवता यस्येत्यैन्द्रं-इन्द्रियम् । अक्षैर्दीव्यतीत्याक्षिकः । तर्के चतुरः तार्किकः । शब्दे कुशलः शाब्दिकः । वेदे भवा वैदिकी । अत्रेकोऽण्वत्कार्यम् ।

केनेयेकाः । कश्च ईनश्च इयश्च इकश्च केनेयेकाः ( प्र. ब. ) सवर्णे० स्रो० एकपदम् । नाम्नो भवाद्यर्थेषु उत्पन्ना गताद्यर्थेषु इदमर्थे च वाच्ये क, ईन, इय, इक, एते चत्वारः प्रत्यया भवन्ति । णित्वं चैषामिति । एषां कादीनां प्रत्ययानां अणित्त्वेऽपि वैकल्पिकं णित्वं व्यवस्थितविकल्पेन णित्त्वं भवति । णितो वेत्युक्तत्वात् तेन कचित् प्रयोगे विकल्पेन वृद्धिः कचिन्नित्यं वृद्धिः कचित्सर्वथापि वृद्धिर्न भवति भवार्थः । कर्णाट कर्णाटे देशे भवः कार्णाटकः, कर्णाटको वा । उभयत्रापि कप्र० एकत्र वृद्धिः अन्यत्र न ( प्र. ए. ) स्रो० अत्र भवार्थे कः । ग्राम ग्रामादागतस्तत्र जातो वा ग्रामीणः । आदिशब्दात् अत्र आगतार्थे ईन् प्रत्ययः यस्य लोपः न्षुर्नोणो० सध्यच् सध्यङ् एव सध्रीचीनः अथवा सध्रीचो भवः सध्रीचीनः अत्र स्वार्थे ईनः भवार्थे वा ईनः वर्णविश्लेषे सध्रि+अच् अञ्चेरलोपो दीर्घश्चेति अल्लोपः इकारस्य च ई दीर्घः स्वर० एवं सम्यङ् एव । यद्वा समीचि भवः समीचीनः सम्यच् ईन प्रत्ययः अञ्चेर्दीर्घश्च समीच् स्वर० प्रयोगद्वयेऽपि वैकल्पिकत्वान्न वृद्धिः । एवं तिरश्चि भवस्तिरश्चीनः तिर्यच्+ईन प्र० तिरश्चादय इति तिरश्च् आदेशः स्वर० ( प्र. ए. ) स्रो० यलोपश्च तद्धितप्रत्यये परे नाम्नामुपधाभूतस्य यकारस्य लोपो भवति कन्या ( पं ए. ) कन्यायाः भवः कानीनः ईनप्र० कल्पितणित्त्वाद्वृद्धिः अनेन यलोपः यस्य लोपः कानीनः ( प्र. ए. ) ननु कन्यायाः कथमपत्यं संभवति ।

नैवं। देवतामुनिमाहात्म्यात्कन्याया अप्यपत्यं घटते। कानीनो द्वैपायनमुनिः। एवं पुष्य पुष्येण युक्ता रात्रिः पौर्णमासी वा पौषी अत्र कारकादिति अण् वृद्धिः यलोपश्चेति यकारलोपः यस्यलोपः स्वर० ईप् पुनः यस्यलोपः स्वर० ( प्र. ए. ) हसेपः० पौषी यकारलोपः प्रसङ्गादिहेदमुदाहरणम्। अन्यत्रापि यलोपमाह। मत्स्यस्य यस्य स्त्रीकारे ईये वा ऽगस्त्यसूर्ययोः। तिष्यपुष्ययोर्नक्षत्रे अणि यस्य विभक्षना॥ मत्सी, अगस्त्यस्यायम् आगस्तीयः, अगस्त्यस्येयं दिक् आगस्ती, सूर्यस्यायं सौर्यः तत्र भवः सौरीयः, सूर्यस्येयं दिक् सौरी, तिष्येण युक्तः कालस्तैषः पुष्येण युक्तः कालः पौषः, इत्यादि क्षतात् महारात् त्रायते इति क्षतं क्षत्राद्भवं क्षत्रियं, अत्र इय यस्यलोपः स्वर० अतोऽम् पक्षेऽण् क्षत्रः। एवं शुक्राद्भवं शुक्रियं यद्वा शुक्रो देवताऽस्येति शुक्रियं तथा इन्द्राद्भवमिन्द्रियं यद्वा इन्द्रस्यात्मनः प्रत्यक्षं ज्ञानकरणम् इन्द्रियं। क्षत्रियं शुक्रियं इन्द्रियं अत्र प्रयोगत्रयेऽपि विकल्पत्वात् सर्वथापि न वृद्धिः। अक्षैः पाशकैर्दीव्यति आक्षिकः अत्र कारकादिति क्रीडनार्थं इकप्रत्ययः। भवादित्वाद्वा णित्त्वं चैषामिति णित्त्वं वृद्धिश्च यस्य लोपः स्वर० ( प्र. ए. ) स्रो० शब्दमधीते वेत्ति वा शाब्दिकः वेदे भवा वैदिकी स्तुतिः ऋक् वा इक् प्रत्यये इकण् णित्त्वाश्रयणादणन्तत्वे त्रणईप् यस्यलोपः ( प्र. ए. ) हसेपः० वैदिकी। एवं शस्त्रेण जयतीति शास्त्रिकः, धनुषा जयतीति धानुष्कः, भवता प्रोक्तं भवत इदं वा भावत्कम्। सूत्रम्।

त्यतनौ। त्यश्च तनश्च त्यतनौ किमादेरद्यादेर्भवाद्यर्थे त्यतनौ प्रत्ययौ भवतः। कुत्र भवः कुत्रत्यः। कुतो भवः कुतस्त्यः। अद्य भवोऽद्यतनः तत्र भवस्तत्रत्यः। ततो भवस्ततस्त्यः। अत्र भवोऽत्रत्यः। अतो भवोऽतस्त्यः। सदा भवः सदातनः। ह्यो भवो ह्यस्तनः। श्वो भवः श्वतनः। पुरा भवः पुरातनः। चिरं भवश्चिरन्तनः। सायं भवः सायन्तनः। प्राह्णे भवः प्राह्णेतनः। चिरादिभ्यस्त्नः। चिरपरुपरादिभ्यस्त्नो भवाद्यर्थे। चिरं भवश्चिरत्नः। परु भवः परुत्नः। परारि भवः परारित्नः।

त्यतनौ। त्यश्च तनश्च त्यतनौ ( प्र. व, ) ओऔऔ। एकपदम्। किमादेरद्यादेश्चेति। किमादेर्भवाद्यर्थे त्यः प्रत्ययो भवति तथैव अद्यादेस्तनः अद्याद्ययसाहचर्यात् किमोऽप्ययं गृह्यते भवाद्यर्थं इत्यत्र आदिशब्दादागतं सदृशा गृह्यन्ते।

कुत्र भवः कुत्रत्यः । अत्र किमोऽव्ययाद्भवेऽर्थे त्यः प्रत्ययः । एवं तत्र भव इति तदोऽव्ययात् अत्रभवोऽत्रत्यः इत्यत्र इदमोऽव्ययं तथा कुतो भवः कुत आगतो वा कुतस्त्यः । अमा सह भवोऽमात्यः । इह भवः इहत्यः । इत्यादिशब्दात् ज्ञेयम् । अद्यभवो ऽद्यतनः अत्र अद्यादेर्भवेऽर्थे तनः प्र० । ह्यो गतकल्ये भवो ह्यस्तनः । श्वः आगामिदिने भवतीति श्वस्तनः । सदा भवः सदातनः । सना निरंतरमेव भवतीति सनातनः । एवं दोषातनः, सायंतनः, चिरंतनः, प्रगेतनः, पुरातनः, प्राक्तन इत्यादि । 'दक्षिणापश्चात् पुरसस्त्यण् वक्तव्यः' । दाक्षिणात्यः, पाश्चात्यः, पौरस्त्यः । सूत्रम् ।

स्वार्थेऽपि । उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति । देवदत्त एव दैवदत्तिकः । चत्वारो वर्णा एव चातुर्वर्ण्यम् । चोर एव चौरः ॥ अव्ययसर्वनाम्नामकच् प्राक् टेः । अव्ययस्य सर्वादेश्चान्त्यस्वरात्पूर्वोऽकच्प्रत्ययो भवति । उच्चैरेवोच्चकैः । नीचैरेव नीचकैः । सर्व एव सर्वकः । विश्व एव विश्वकः । मया एव मयका । त्वया एव त्वयका । तदेव तकत् । यदेव यकत् । एतदेव एतकत् । अणीनयोर्युष्मदस्मदोस्तकादिः । अण् च ईनश्च अणीनौ तयोः अणीनयोः प्रत्यययोः परतो युष्मदस्मदोस्तवकादय आदेशा भवन्ति । आदिशब्दात्तवकममकयुष्माकास्माकाः । एकत्वे तवकममकौ द्वित्वे बहुत्वे च युष्माकास्माकौ । तवेदं तावकम् । ममेदं मामकम् । तवायं तावकीनः । ममायं मामकीनः । युवयोरयं यौष्माकः । आवयोरयमास्माकः । युवयोरयं यौष्माकीणः । आवयोरयमास्माकीनः । युष्माकमयं यौष्माकः । अस्माकमयमास्माकः । युष्माकमयं यौष्माकीणः अस्माकमयमास्माकीनः ।

स्वार्थेऽपि । स्वस्य अर्थः स्वार्थस्तस्मिन् ( स. ए. ) अपि ( प्र. ए. ) अव्य० पूर्वोक्ता अणादयः केनेयेकाः कप्रत्ययः स्वार्थेऽपत्याद्यर्थवर्जिते मूलार्थे भवन्ति देवदत्त एव दैवदत्तकः अत्र स्वार्थे कः । चतुर+वर्ण चत्वार एव वर्णा इति वाक्ये ष्य

प्रत्ययः वृद्धिः जलतुं० यस्यलोपः स्वर० ( प्र. ए. ) कुलवत्। चातुर्वर्ण्यम्। चोर। चोर एव चौरः स्वार्थेऽण् यस्यलोपः वृद्धिः। एवं द्वितीय एव द्वैतीयीकः। तृतीय एव तार्त्तीयीकः। त्रयो लोका एव त्रैलोक्यं अग्नीयोरित्यादि वक्तव्यरूपम्। युष्मदस्मद् इत्येतयोः अण् प्रत्यये ईनप्रत्यये च परे तवकादिरादेशो भवति। आदिशब्दाद्द्विवचनबहुवचनयोर्विषये युष्मदस्मदोः युष्माकास्माकौ आदेशौ भवतः। तत्र युष्मद एकत्वे अणीनयोः परयोः तवकादेशः। द्वित्वे बहुत्वे च युष्माकः। अस्मदश्च एकत्वे ममकः। द्वित्वे बहुत्वेऽस्माकः। युष्मद, अस्मद, तव अयं तावकः ममायं मामकः उभयत्रापि इदमर्थे अण् एकस्य तवकः द्वितीयस्य ममकः णित्त्वादादिस्वरस्येति वृद्धिः। यस्यलोपः ( प्र. ए. ) स्नो०। पुनः युष्मद् अस्मद् तवायं तावकीनः। ममायं मामकीनः। उभयत्रापि भवाद्यर्थे इति आदिशब्दात् इदमर्थेऽपि ईन प्र० वृद्धिश्च० यस्य लोपः स्वर० सिद्धम्। युष्मद, अस्मद, युवयोः युष्माकं वा अयं यौष्माकः। आवयोः अस्माकं वा अयं आस्माकः। एवं युवयोः युष्माकं वा अयं यौष्माकीणः। आवयोः अस्माकं वा अयं आस्माकीनः। द्वाभ्यां अण्, द्वाभ्यां इनः। युष्मदो युष्माक, अस्मदश्च अस्माकः। वृद्धिः यौष्माकः आस्माकः सर्वत्र यलोपः। यौष्माकीण इत्यत्र अव प्रत्याहारकवर्गपवर्गान्तरत्वात् ऋषुर्नोणो० इत्यनेन णत्वम्। सूत्रम्।

**वत्तुल्ये। तुल्ये साहश्यार्थे वत् प्रत्ययो भवति। चन्द्रेण तुल्यं चन्द्रवन्मुखम्। घटेन तुल्यं घटवदुदरम्। पटेन तुल्यं पटवत्कम्बलम्।**

**वत्तुल्ये।** वत् ( प्र. ए. ) हसेपः० तुल्ये ( स. ए. ) सदृशत्वस्यार्थे उपमानार्थे वाच्ये वत्प्रत्ययो भवति। चन्द्र, चन्द्रेण तुल्यं सदृशं चन्द्रवत्। वत्प्रत्ययः। क्त्वाद्यन्तं चेति वत्प्रत्ययान्तस्य अव्ययसंज्ञा। ततः ( प्र. ए. ) अव्यया०। एवं घटेन तुल्यं घटवत् सार्वविभक्तिकाद्वत इत्येके। यथा घटवत् वेणुकरण्डे तिष्ठति, किं निर्मलं नीरं, अत्र घटेवत् घटवत् इति सप्तम्यन्ताद्वत्। गिरिवत्तुङ्गो गज इत्यादौ गुणतुल्यत्वेऽपि वत्। राजेव वर्तते राजवत्। देवमिव भवन्तं पश्यामि देववत्। राज्ञेव व्यवहृतमनेन राजवत्। ब्राह्मणायेव देवदत्ताय ददाति ब्राह्मणवत्। पर्वतादिव आसनादवरोहति पर्वतवत्। ब्राह्मणस्येव वृत्तमस्येति ब्राह्मणवत्। मथुरायामिव पाटलिपुत्रे प्रासादा मथुरावत्। एवं यथाप्रयोगं ज्ञेयम्। सूत्रम्।

**भावे तत्वयणः। तश्च त्वश्च यण् च ते तत्वयणः। शब्दस्य प्रवृत्तिनिमित्तं भावः तस्मिन्भावे त त्व यण् इत्येते**

प्रत्यया भवन्ति । ब्राह्मणस्य भावो ब्राह्मणता । तान्तस्य नित्यं स्त्रीलिङ्गत्वादाप् ।

भावेतत्त्वयणः । भाव ( स. ए. ) अइए तत्वयण् तश्च त्वश्च यण्च तत्वयण् ( प्र. ब. ) स्वर० स्रो० । अथ सूत्रं व्याचिख्यासुः प्रथमं भावशब्दं व्याचष्टे । ' शब्दस्य प्रवृत्तिनिमित्तं भावः ' । येन शब्दस्य प्रवृत्तिः प्रवर्तनं संपद्यते भवति तत् प्रवृत्तिनिमित्तं ततो यच्छब्दस्य ब्राह्मणादेः प्रवृत्तेः कारणं स एव भावः जातिद्रव्यगुणक्रियाभिः शब्दस्य प्रवृत्तिनिमित्तं भाव इत्युच्यते । तस्मिन् भावेऽर्थे त, त्व, यण् इत्येते त्रयः प्रत्यया भवन्ति । उदाहरणम् । ब्राह्मण, ब्राह्मणस्य भाव इति विग्रहे अत्र ब्राह्मण इति जातिरूपशब्दस्य यो भावो ब्रह्मज्ञत्वं ब्रह्मणोऽपत्यत्वं यजनादिक्रियानिष्ठत्वं इत्यादिलक्षणः स ब्राह्मणशब्दस्य प्रवृत्तिनिमित्तमतस्तप्रत्ययः । अत्र तप्रत्ययान्तं नाम स्त्रीलिङ्गम् । त्व, यण् इत्येतदन्तं नपुंसकलिङ्गम् । तत्र तान्तस्य नित्यं स्त्रीलिङ्गे वर्तमानत्वात् आबतः स्त्रियामित्याप् स्त्रीलिङ्गाधिकारात् ॥ पुनर्विशेष वक्तव्यमाह ।

समाहारे ता च त्रैगुणश्च । त्रयाणां समाहारस्त्रेता । चकारात्समूहे प्रत्ययान्तरमपि । तेन हस्तिनां समूहो हास्तिकम् । धेनूनां समूहो धैनुकम् । अत्र कप्रत्ययः । तस्य णित्त्वादादिवृद्धिः ॥ अचित्तवाचकादिकः । कवचानां समूहः कावचिकम् । अपूपानां समूह आपूपिकम् । शष्कुलीनां समूहः शाष्कुलिकम् ॥ कवचिशब्दादिकः । कवचिनां समूहः कावचिकम् ॥ गणिकाया ण्यः । गणिकानां समूहो गाणिक्यम् ॥ केदाराद्यञ् च । चकारादिकः । केदाराणां समूहः कैदार्यम् । कैदारिकम् ॥ युवत्यादेरण् । युवतीनां समूहो यौवतम् । भिक्षाणां समूहो भैक्षम् ॥ पाशादिभ्योयः । स च स्त्रियाम् । पाशानां समूहः पाश्या । वातानां समूहो वात्या । रथानां समूहो रथ्या । खलानां समूहः खल्या । खलगोरथेभ्य इनित्रकट्याः । खलिनी । रथानां समूहो रथकट्या इत्यपि । गवां समूहो गोत्रा, गव्येत्यादिप्रयोगा

उह्याः। जनानां समूहो जनता। ब्राह्मणस्य भावो ब्राह्मण्यम्। त्वयणन्तं नपुंसकम्। ब्राह्मणस्य भावो ब्राह्मण्यम्। सुमनसो भावः सौमनस्यम्। सुभगस्य भावः सौभाग्यम्। विदुषो भावो वैदुष्यम्। वसोर्व उ॥ कर्मण्यपि अण् वक्तव्यः। कर्मण्यपीत्यपिशब्दात्साध्वर्थेऽण् तस्य णित्वं न। सामनि साधुः सामन्यः। कर्मणि साधुः कर्मण्यः। सभायां साधुः सभ्यः। ब्राह्मणस्येदं कर्म ब्राह्मण्यम्। राज्ञ इदं कर्म राजन्यम्-राज्यम्। नो वा इति टेर्लोपः। अन्यत्रापि यण् प्रत्ययः। समानस्य वा स इत्यादेशः। समाने उदरे शयितः समानोदर्यः, सोदर्यः। शतेन क्रीतः शत्यः।

समाहारे ता च। समाहारेऽर्थेऽपि ताप्रत्ययो भवति। चशब्दात् तस्मिन् परे त्रेर्गुणः ता प्रत्ययान्ताश्च आबन्तवदित्यर्थः। क्वचित्तु समाहारे तश्च इति पश्चादावतः०। त्रि, त्रयाणां समाहारस्त्रेता अत्र ताप्रत्यये कृते त्रेर्गुणः (प्र. ए.) आप इति सेर्लोपः। जन, जनानां समाहारो जनता। एवं त्वप्रत्यये ब्राह्मणस्य भावो ब्राह्मणत्वम्। यण् प्रत्यये ब्राह्मण्यं (प्र. ए.) अतोऽम्। सुमनस्, सुमनसो भावः सौमनस्य अत्र द्रव्यं यण् वृद्धिः सो स्वर० अतोऽम् सुभग, सुभगस्य भावः सौभाग्यं अत्र यण्प्रत्यये क्वचिद्द्वयोरिति सुभग इत्येतयोर्द्वयोर्वृद्धिः यस्यलोपः स्वर० (प्र., ए.) अतोऽम्। विद्वस्, विदुषो भावो वैदुष्यम्। अत्र क्रिया। अत्र यण् वृद्धिः वै। वसोर्व उ० क्विलात्षःसः सस्य षः स्वर० कुलवत्। एवं विद्वत्ता विद्वत्त्वम्। वसांरसे स्वसेचपा० स्वर० सर्वत्र तद्धिते विकल्पानुवृत्तिः। तेन यूनो भावो यौवनं, रमणीयस्य भावो रामणीयकम्। वृद्धस्य भावो वार्द्धक्यम्। चपलस्य भावः चापल्यम्। इत्यादौ अण् प्रत्ययोऽपि भवति॥ कर्मण्यपि कर्मार्थेऽपि यण् प्रत्ययो वक्तव्यः। ब्राह्मणस्य कर्म ब्राह्मण्यं, सुगमम्। राज्, राज्ञः इदं कर्म राज्यं राजन्यं च उभयत्रापि कर्मणि यण् प्र० एकत्र नोवेति टिलोपः। राज् स्वर० अन्यत्र न टिलोपः स्वर० उभयत्रापि (प्र. ए.) कुलवत्। जातावपि यण्। राज्ञो जातीयः राजन्यः। अपिशब्दात् मुनेः कर्म मौनम्। कर्मणि साधुः कर्मण्यः। सभायां साधुः सभ्यः। यशसे हितं यशस्यम् इत्यादि। सूत्रम्।

लोहितादेर्डिमन्। लोहितादेर्गणाद्भावेऽर्थे डिमन्प्रत्ययो भवति। डित्त्वाट्टिलोपः। लोहितस्य भावो लोहितिमा।

लोहितादेरिति अनेकस्वरात् डित् वक्तव्यः । यत्र एकस्वरस्तत्र न डित् । लोहितादेरिमन् वैकल्पिकः । तेन लौहित्यम् । लोहितत्वम् । कालस्य भावः कालिमा । लघोर्भावो लघिमा । अणोर्भावः अणिमा । गुर्वादेः इति गुरोर्गरादेशः । गुरोर्भावो गरिमा । वरस्य भावो वरिमा । इमनि लोपः । इमनि प्रत्यये परे वकारस्य लोपो भवति । स्थूलस्य भावः स्थेमा । स्थूलस्य स्थवादेशः ।

लोहितादेर्डिमन् । लोहितादि लोहित आदिर्यस्य स लोहितादिस्तस्मात् ( पं. ए. ) ङितिङस्येत्यलोपः स्तो० डिमन् ( प्र. ए. ) हसेपः० । लोहितादेर्नाम्नो भावस्यार्थे इमन्प्रत्ययो भवति स च डित्संज्ञकः । परं 'अनेकस्वरात् ङिदिति वक्तव्यं' तेन भूमा इत्यत्र एकस्वरे टिलोपो न । उदा० लोहित, लोहितस्य रक्तस्य भाव इति विग्रहे इमन् प्र० । डित्त्वाट्टिलोपः ङिति टेः स्वर० ( प्र. ए. ) नोपधायाः हसेपः नाम्नो० एवं अणोर्भावः अणिमा, तथा लघोर्भावः लघिमा, एवं महतो भावो महिमा राजवत् ।

ऋ र इमनि । इमनि प्रत्यये परे हसादेर्लघोर्ऋकारस्य रो भवति । पृथोर्भावः प्रथिमा । दृढस्य भावो द्रढिमा । मृदोर्भावो म्रदिमा । भृशस्य भावो भ्रशिमा । कृशस्य भावः क्रशिमा । हसादित्वाभावात् । ऋजोर्भाव ऋजिमा । लघुत्वाभावात् । कृष्णस्य भावः कृष्णिमा । संयोगपूर्वकत्वान्न लघुः । बहोर्भाव इति विग्रहे—

ऋर इमनि । ऋ ( ष. ए. ) साङ्केतिकम् । र ( प्र. ए. ) इमनि ( स. ए. ) पृथु, मृदु, दृढ, कृश, इत्यादीनां नाम्नां आदेर्ऋकारस्य इमनि प्रत्यये परे र आदेशो भवति । पृथु पृथोर्भावः इति विग्रहे अनेन ऋस्थाने रः प्र० टिलोपः पूर्ववत् प्रथिमा । एवं मृदोर्भावो म्रदिमा । दृढस्य भावो द्रढिमा । कृशस्य भावः क्रशिमा । हसादेर्लघोश्च ऋकारस्येति व्याख्येयं, तेन कृष्णिमा ऋजिमा इत्यादौ रकारो न भवति । सर्वत्र तद्धिते विकल्पानुवृत्तिरिति लोहितता लोहितत्वं लौहित्यम् । अणुता अणुत्वम् । लघुता लघुत्वम् । पृथुता पृथुत्वम् । मृदुता मृदुत्वम् । कृशता कृशत्वम् । दृढता दृढत्वम् । इत्याद्यपि भवति । सूत्रम् ।

बहोरिलोपो भू च बहोः । बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहोः स्थाने भू चादेशः । भूमा ।

बहोरिलोपो भू च बहोः । बहु ( पं. ए. ) ङितिङस्येति अलोपः स्रो० लोपः ( प्र. ए. ) स्रो० पश्चान्नामिनो रः भू ( प्र. ए. ) साङ्केति० पश्चादवे ओ ओ च ( प्र. ए. ) अव्य० बहु ( ष. ए. ) ङितिङस्येत्यकारः स्रो० पञ्चपदम् । बहुशब्दात्परेषां इमन्प्रत्ययादीनां संबन्धिन इकारस्य लुग् भवति बहुशब्दस्य च भू इत्ययमादेशो भवति । अत्र इमनादीनामिति आदिशब्दात् इमन्, इष्ठ, ईय, सु, इत्येते प्रत्यया गृह्यन्ते । यद्यपि ईयस ईकारोस्ति कारग्रहणेन केवलग्रहणमिति न्यायस्तथापि भू चादेश इत्यत्र चकारान्न दोषः । केचित्तु इमनादीनामादेर्लोपो भवत्येवं व्याख्यान्ति । अन्येतु इमनादीनामिवर्णस्य लोपमिति व्याख्यान्ति । बहु, बहोर्भावः इति विग्रहे लोहितादित्वादिमन् एकस्वरत्वादेरलोपः बहोर्लोपः इति इकारलोपः बहोर्भूआदेशः पूर्ववत् ( प्र. ए. ) सि नोपधायाः हसेपः नाम्नो० भूमा । सूत्रम् ।

अस्त्यर्थे मतुः । नाम्नो मतुः प्रत्ययो भवति अस्यास्मिन्वास्तीत्येतस्मिन्नर्थे । उकारो नुम्विधानार्थः । गौरस्यास्तीति गोमान्-गोमती॥ फलबर्हरथेभ्य इनेनौ वा वक्तव्यौ । फलमस्यास्तीति फलिनः-फली । बर्हमस्यास्तीति बर्हिणः-बर्ही । रथोऽस्यास्तीति रथिनः-रथी ॥ बलवाताभ्यामूलः । बलूलः । वातूलः । वातातिसाराभ्यां किन् । वातकी । अतिसारकी ॥ ऊर्णाहंशुभंभ्यो युः । अस्त्यर्थे । ऊर्णायुः । अहंयुः । शुभंयुः ॥ अर्णःकेशयोर्वः । अर्णसः सलोपश्च । अर्णवः । केशवः ॥ शंकंभ्यां बभयुस्तितुतयसः । आभ्यामेते प्रत्ययाः स्युरस्त्यर्थे । शं विद्यते यस्यासौ शंबः । शंभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः । कं विद्यते यस्यासौ कंबः । कंभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । इत्यादि । लोमादिभ्यः शः । लोमशः । पामादेर्नः । पामनः । अङ्गना । पिच्छादेरिलच् । पिच्छिलः । फेनादिभ्य इलच् । फेनिलः । तुन्दिवलिचटिभ्यो भः । तुन्दिभः ।

वलिभः । चटिभः । कृष्यादिभ्यो वलच् दीर्घश्च । कृषीवलः । प्रज्ञार्चाश्रद्धावृत्तिभ्योऽण् । प्रज्ञाऽस्यास्तीति प्राज्ञः । आर्चः । श्राद्धः । वार्तः । शृङ्गवृन्दाभ्यामारकच् । प्रशस्तं शृङ्गमस्यास्तीति शृङ्गारकः । प्रशस्तं वृन्दमस्यास्तीति वृन्दारकः ॥ मध्वादेरः । मधुरः । मुखरः । शुषिरः । रन्ध्रवानित्यर्थः । कुञ्जरः । कुञ्जो हस्तिहनुः ॥ सिध्मादेर्लः । सिध्मास्यास्तीति सिध्मलः । चूडास्यास्तीति चूडालः ।

अस्त्यर्थेमतुः । अस्तेर्धातोरर्थोऽस्त्यर्थस्तस्मिन् ( स. ए. ) अइए मतु ( प्र. ए. ) स्रो० अस्यास्ति अस्मिन् विषये वा इदमस्ति इत्येतस्मिन्नर्थे तद्धितान्नाम्नो मतुप्प्रत्ययो भवति । अत्र मतुप्प्रत्यये उकारो न्रितोनुमिति नुम्विधानार्थः । तथा ङ्गित इति ईप्विधानार्थश्च। गो, द्विस्थाने गौरस्यास्तीति द्वितीये स्त्रीविशेषणे गौरस्यास्तीति उभयत्रापि मतुः मत् आद्ये ( प्र. ए. ) न्रितोनुम् मनूत् अत्वसोःसौदीर्घः मा हसेपः० संयोगां० गोमान् द्वितीये ङ्गित इति ईप् स्वर० हसेपः गोमती नपुंसकलिङ्गे तु गोमत् । एवं श्रीमान् श्रीमती नित्यमतिशयप्रशस्तादिविशिष्टे अस्त्यर्थे वतुरिति केचित् तन्मते नित्यं श्रीरस्त्यस्येति श्रीमान् । अतिशयिता प्रीतिरस्यास्तीति प्रीतिमान् । प्रशस्ता धीरस्त्यस्येति धीमान् । किंच ।

अइकौ च मत्वर्थे । मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयन्ती पताका यस्यासौ वैजयन्तः । मायाविद्यते यस्यासौ मायिकः ।

अइकौ च मत्वर्थे । अश्च इकश्च अइकौ ( प्र. द्वि. ) मतोः अर्थः मत्वर्थस्तस्मिन् ( स. ए. ) यद्यपि समासे सन्धिर्निश्चयेन स्यात्तथाप्यत्रासपष्टार्थत्वात् अइकावित्यसन्धिर्न कृतः । क्वचित्तु ' एकौच मत्वर्थे ' इत्येव दृश्यते। मत्वर्थे इति मतुप्रत्ययार्थे अर्थात् अस्त्यर्थे एव नाम्न अइकइत्येतौ प्रत्ययौ भवतः । वैजयन्ती । वैजयन्ती नाम पताका ध्वजो विद्यते अस्मिन् प्रासादे इति विग्रहे अप्रत्ययः । यस्येति ईलोपः । स्वर० स्रो० वैजयन्तः प्रासादः । तथा मायाऽस्त्यस्येति मायिकः इक प्र० यस्यल्लोपः स्वर० मायिकः । क्वचिदप्रत्ययो णिदपि प्रज्ञाऽस्यास्तीति प्राज्ञः । श्रद्धाऽस्यास्तीति श्राद्धः । सूत्रम् ।

मान्तोपधाद्वत्विनौ । मान्तोपधात् वत्विनौ । मश्च अश्च मौ, अन्तश्च उपधा च अन्तोपधे, मौ अन्तोपधे यस्यासौ

मान्तोपधस्तस्माद्वत्विनौ,मकारान्तान्मकारोपधादकारान्ताद-कारोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे। मघोऽस्यास्तीति मघवान् ॥

श्रियां यशसि सौभाग्ये योनौ कान्तौ महिम्नि च ॥
सूर्ये संज्ञाविशेषे च मृगाङ्केऽपि भगः स्मृतः ॥

भगं भाग्यं विद्यते यस्यासौ भगवान्। लक्ष्मीरस्यास्तीति लक्ष्मीवान्। पुत्रोऽस्यास्तीति पुत्रवान्। धनमस्यास्तीति धनवान्-धनी। छत्रमस्यास्तीति छत्रवान्-छत्री। इनां शौ सौ०। दण्डो विद्यते यस्यासौ दण्डवान्-दण्डी। क्षेत्रं विद्यते यस्यासौ क्षेत्रवान्-क्षेत्री। विद्यास्यास्तीति विद्यावान्। दृषदो विद्यन्ते यस्यासौ दृषद्वान्-दृषद्वती भूमिः। स्त्रितः। यशोऽस्यास्तीति यशस्वान्। किं विद्यते यस्यासौ किंवान्। कामो विद्यते यस्यासौ कामी। कृमयो विद्यन्ते यस्यासौ कृमिवान्। शमोऽस्यास्तीति शमी। दमोऽस्यास्तीति दमी।

मान्तोपधाद्वत्विनौ। अश्चमश्चमौ, अन्तश्च उपधा च अन्तोपधे। मौ अन्तोपधे यस्य स मान्तोपधस्तस्मात् ( पं. ए. ) पुनःपूर्वं सवर्णे० अग्रे वत्विन् वतुश्च इन् च वत्विनौ ( प्र. ब. ) पूर्वं चपा० द्विपदं सूत्रं मकारान्तान्मकारोपधाच्च तथा अकारान्तादकारोपधाच्च यद्वा अवर्णान्ताद् अवर्णोपधाच्च नाम्नोऽस्त्यर्थे वतु इन एतौ द्वौ प्रत्ययौ भवतः। इनप्रत्ययस्तु अकारान्तादेव भवत्यस्त्यर्थे। प्रथमं मान्तोदाहरणम्। किम्, किमस्यास्तीति वाक्ये अत्र वतुः वत्। क्वचित्पदान्ताश्रयणान्मोनुस्वारः स्रितोनुम् अत्वसो० हसेपः० संयोगां० किंवान्, लक्ष्मीरस्यास्तीति लक्ष्मीवान्, अत्र मकारोपधात् वतुर्नामादिभ्यः इति ऊर्म्मिवान्, भूमिवान्, भूमान्, तिमिमान्, इत्यादौ मान्तोपधत्वेऽपि न वतुप्रत्ययः किंतु मतुप्रत्यय एव। शम, शमोऽस्यास्तीति शमी अत्र मकारोपधत्वात् अकारान्तत्वा च्च इन्। एवं भानि नक्षत्राणि सन्त्यस्येति भवान् चन्द्रः। अथवा भानि नक्षत्राणि सन्त्यस्मिन् इति भवान् आकाशः। अत्र अकारान्तात् वतुः एवं मालावान्, दयावान्, कृपावान्, अत्र अकारान्तात् वतुः। धन, छत्र, दण्ड, धनमस्यास्तीति धनी। छत्रमस्यास्तीति छत्री। दण्डोऽस्यास्तीति दण्डी। एषु सर्वत्र इन् अकारान्तेभ्यः यस्य लोपः स्वर० त्रिष्व-

पि ( प्र. ए. ) इनां 'शौ सौ दीर्घः' 'हसेपः०' 'नाम्नो०' इषद्, इषदः सन्त्यस्यामिति इषद्वती । अकारोपधत्वाद्वतुः उकारानुबन्धत्वात् 'ङ्वित' इति ईप् । क्वचिद्वतौ दीर्घः । क्वचिद्वतुप्रत्यये परे दीर्घत्वमपि भवति । यथा अमरावती, पद्मावती, मृगावती, पुष्करावती, उदुम्बरावती, महीवती, हनूमान् इत्यादि । पुष्पावती, शरावती, सांप्रतं मान्तोपधत्वं विनापि वतुप्रत्ययं वक्तव्येनाह ।

तडिदादिभ्यश्च । तडिदादिभ्यः शब्देभ्यो वतुः प्रत्ययो भवति । तडिद्विद्यते यस्यासौ तडित्वान् । भानि नक्षत्राणि विद्यन्ते यस्यासौ भवान् । यशस्वान् । मरुद्विद्यते यस्यासौ मरुत्वान् । तकारान्तस्य सकारान्तस्य हसादावस्त्यर्थे प्रत्यये परे अपदान्तता वक्तव्या । यस्वरादौ प्रत्ययमात्रे परे सर्वेषामपदान्तता भवति ईये परे पदान्तता । तेन भवदीयम् ।

तडिदादिभ्यश्चेति । तडिदादिभ्यो मान्वोपधत्वरहितेभ्योऽपि वतुप्रत्ययो भवति । चकारात् तडित् इत्यत्र उपसर्जनत्वं न भवति । तडित् तडिदस्यास्मिन् वास्तीति तडित्वान् । एवं विद्युत्, विद्युदस्यास्मिन् वास्तीति विद्युत्वान् उभयत्रापि वतुप्रत्ययो भवति । पूर्ववत् । एवं सरस्वान्, मरुत्वान्, समिद्वान्, चकारात् राजन्वान् । राजन्वती सौराज्ये, उदधौ उदन्वान् एतौ निपात्यौ । तथा 'चूडासिध्मादेश्च ल प्रत्ययः' चूडाऽस्त्यस्येति चूडालः, सिध्मलः, मांसलः, अंसलः इत्यादि ऐश्वर्ये स्वशब्दादामिन् स्वं ऐश्वर्यं अस्त्यस्येति स्वामी ।

एतत्कियत्तद्भ्यः परिमाणे वतुः । एतत्कियत्तद्भ्यः शब्देभ्यः परिमाणेऽर्थे वतुः प्रत्ययो भवति ।

एतत्किमित्यादि । एतद्, किम्, यद्, तद्, इत्येतेभ्यः शब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति । उकार उच्चारणार्थं ईब्विधानार्थः । यद्, तद्, यत् परिमाणमस्य यावान् तत्परिमाणमस्य तावान् परिमाणे वत् ।

यत्तदोरा । यत्तदोष्टेरात्वं भवति वतौ परे । यत्परिमाणमस्येति यावान् । तावान् ।

यत्तदोरा । यद्, तद्, इत्येतयोष्टेराकारो भवति परिमाणेऽर्थे वतौ परे इत्यर्थः । यावत् तावत् उभयत्र ( प्र. ए. ) ञितो नुम् अत्वसोसौ हसेपः संयोगान्तस्येति तलोपः सिद्धम् । स्त्रीलिङ्गे यावती । नपुंसके यावत् । किम्, किंपरिमाणमस्येति कियान् एतत्किमित्यादि नावतु प्र० ।

किमः किर्यश्च । किंशब्दस्य किरादेशो भवति । वतोर्वकारस्य एकारादेशो भवति । किं परिमाणमस्येति कियान् ।

किमः किर्यश्च । वतुप्रत्यये परे किंशब्दस्य कि रित्यादेशः कृत्स्नस्य भवति, वतोर्वकारस्य यकारो भवति । अनेन किमः किवस्य यः -चकारात् शित्त्वं गुरुत्वं विनापि सर्वस्य किरादेशः ( प्र. ए. ) पूर्ववत् । एतद २ उभयत्रापि वतुप्र० ।

आ इश्चैतदो वा । एतदष्टेरात्वं भवति वतौ परे । यस्मिन्पक्षे आत्वं न तस्मिन्पक्षे इशादेशः स्यात् । शकारः सर्वादेशार्थः । एतत्परिमाणमस्येति एतावान् । इयान् । एतदष्टेर्वा आत्वम् । यस्मिन्पक्षे आत्वं न तत्र एतद इशादेशः । चकाराद्वतोर्वकारस्य यकारः । वा शब्दोऽनुक्तसमुच्चयार्थः । तेन इदमो वतुः प्रत्ययः । इदम इश् चकाराद्वतोर्वकारस्य यश्चेति वाच्यम् । इदं परिमाणं यस्य स इयान् । शकारः सर्वादेशार्थः ।

आइश्चैतदोवा । वतु प्रत्यये परे एतद्शब्दस्य आ इश् इत्येतावादेशौ भवतः । गुरुशिच्चेति न्यायात् कृत्स्नस्य आ इति गुरुस्तथापि चकारग्रहणादन्तस्यैव टेराकारादेशो न । कृत्स्नस्य इश इति शित् गुरुःशिच्चेति शित्त्वात् सर्वस्य एतद इ इत्यादेशः । वाग्रहणात् यत्र इशादेशस्तत्र वकारस्य यः, अन्यत्र न । एतावत्, इयत् ( प्र. ए. ) पूर्ववत् नितोनुम्, हसेपः, संयोगान्तस्य लोपः ।

तुन्दादेरिलः । तुन्दादेर्गणात् इलः प्रत्ययो भवति । प्रशस्तं तुन्दं यस्यासौ तुन्दिलः । उदरिलः ।

तुन्दादेरिलः । तुन्दादेः शब्दादस्त्यर्थे इलप्रत्ययो भवति । तुन्द, तुन्दमस्यास्तीति तुन्दिलः । इलप्र० । यस्यलोपः स्वर० ( प्र. ए. ) एवं उदरिलः, फेनिलः ।

औन्नत्ये दन्तादुरः । औन्नत्येऽर्थे वाच्ये सति दन्तशब्दादुरः प्रत्ययो भवति । उन्नता दन्ता यस्यासौ दन्तुरः ।

औन्नत्ये दन्तादुरः । दन्तशब्दात् औन्नत्ये उच्चत्वे अर्थे उरप्रत्ययो भवति । उन्नता उच्चा दन्ता अस्येति दन्तुरः ।

श्रद्धादेर्लुः । श्रद्धा विद्यते यस्यासौ श्रद्धालुः । कृपा विद्यते

यस्यासौ कृपालुः । मायालुः । दयालुः । सिध्मादेर्लः । सिध्मलः । स्नेहिलः ।

श्रद्धादेर्लुः । श्रद्धादेर्नाम्नोऽस्त्यर्थे लुप्रत्ययो भवति । श्रद्धा, दया, कृपा । श्रद्धास्यास्तीति श्रद्धालुः, दयाऽस्यास्तीति दयालुः, कृपाऽस्यास्तीति कृपालुः, सर्वत्र लु प्रत्ययः । ( प्र. ए. ) स्रो० ।

अस्मायामेधास्रग्भ्योऽस्त्यर्थे विनिर्वक्तव्यः । तपो विद्यते यस्यासौ तपस्वी । यशस्वी । मायावी । मेधावी । स्रक् विद्यते यस्यासौ स्रग्वी ।

अस्माया, मेधा इत्यादि । अस् इति वचादेरस् इत्युणादिसूत्रोक्तोऽस् प्रत्ययस्तदन्तान्नाम्नः पुनः । ' माया, मेधा, स्रज्, शब्देभ्यश्चास्त्यर्थे विनिप्रत्ययो वक्तव्यः' । इकार उच्चारणार्थः । तपस्, तप सन्तापे इत्यस्याऽसन्तस्य रूपं । विन् । तपोऽस्यास्तीति तपस्वी । दण्डिन्शब्दवत् ( प्र. ए. ) इनां शौ सौ, हसेपः, नाम्नो० एवं यशस्वी । एवं मायास्यास्तीति मायावी । मेधा बुद्धिरस्त्यस्येति मेधावी । स्रक् माऽलास्यास्तीति स्रग्वी । स्रज् इत्यत्र अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदान्तताश्रयणाच्चोःकुः जस्य गः ( प्र. ए. ) सिः पूर्ववत् ।

वाचो ग्मिनिः । वाक्शब्दात् ग्मिनिः प्रत्ययो भवति अस्त्यर्थे । ग्मिनो गकारो व्यवधानार्थः । तेन अमे अमा वा इत्यस्याप्राप्तिः । प्रशस्ता वाक् विद्यते यस्यासौ वाग्मी ॥ एकादाकिनिच्चासहाये । न विद्यते एकः सहायो यस्य स एकाकी । स्त्री चेत् एकाकिनी ।

वाचो ग्मिनिः । वाच्शब्दात् ग्मिनि प्रत्ययो भवति अस्त्यर्थे, गकारोऽनुबन्धः मकारादित्वनिषेधार्थः । तेन अमे अमा वा इति न भवति । वाच्, प्रशस्ता वागस्यास्तीति वाग्मी । मिन् प्र० चोः कुः पदान्तताश्रयणात् चपा अबेजबाः कस्पगः स्वर० दण्डिन्शब्दवत् गोरप्यस्त्यर्थे मिनिः गावो विद्यन्तेऽस्येति गोमी ।

आलाटौ कुत्सितभाषिणि । कुत्सितभाषिण्यर्थे वाच्ये सति आलाटौ प्रत्ययौ भवतः । आलप्रत्ययो बहुभाषित्वे कुत्सितभाषित्वे च । आटप्रत्ययस्तु केवलकुत्सितभाषित्वे । कु-

त्सिता वाक् विद्यते यस्यासौ वाचालः । एवं वाचाटः ।

लः समाहारप्रकृष्टयोः । नाम्नः समाहारप्रकृष्टयोर्विषये लः प्रत्ययो भवति । क्लेशस्य समूहः-प्रकृष्टः क्लेशो वा क्लेशलः ।

आलश्च आटश्च आलाटौ । कुत्सितभाषिणि ( स. ए. ) बहुभाषिणीत्येके । कुत्सितं भाषत इत्येवंशीलः कुत्सितभाषी तस्मिन् अभिधेये वाच्शब्दात् आल, आट इत्येतौ प्रत्ययौ भवतः । वाच्, कुत्सिता वागस्येति वाचालः, वाचाटः एकत्र आल अन्यत्र आट ( प्र. ए. ) सो० ।

ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः । ईषदपरिसमाप्तः सर्वज्ञ इति सर्वज्ञकल्पः । ईषदपरिसमाप्तः पटुरिति पटुदेश्यः । पटुदेशीयः । ईषदूनः कविरिति कविदेश्यः । कविदेशीयः ।

ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः । ईषदपरिसमाप्तौ ( स. ए. ) कल्पदेश्यदेशीय ( प्र. ब. ) स्तोकमात्रमपरिसमाप्तौ अपरिपूर्णत्वे किंचिन्न्यूनत्वे वाच्ये नाम्नः कल्प, देश्य, देशीय इत्येते त्रयः प्रत्यया भवन्ति । सर्वज्ञ, पटु, कवि, ईषदपरिसमाप्तः अपरिपूर्णः सर्वज्ञः सर्वज्ञकल्पः । ईषदसमाप्तः पटुः पटुदेश्यः । ईषदसमाप्तः पटुश्चतुरः पटुदेशीयः । ईषदसमाप्तः कविः कविदेशीयः । त्रिषु क्रमेण कल्पदेश्यदेशीयप्रत्ययाः ।

प्रशंसायां रूपः । प्रशंसायां रूपः प्रत्ययो भवति । प्रशस्तो वैयाकरणो वैयाकरणरूपः ।

प्रशंसायां रूपः । प्रशंसायां श्लाघायां वाच्यमानायां रूपप्रत्ययो भवति वैयाकरण, प्रशस्तो वैयाकरणो व्याकरणस्य पाठी वैयाकरणरूपः ।

कुत्सायां पाशः । कुत्सायां वाच्यायां सत्यां पाशः प्रत्ययो भवति । कुत्सितो वैयाकरणो वैयाकरणपाशः ।

कुत्सायां पाशः । इत्यपि पठन्ति । तन्मते कुत्सितो देशः देशपाशः । एवं भिषक्पाशः इत्युदाहरणम् ।

भूतपूर्वे चरट् । भूतपूर्वेऽर्थे वाच्ये सति चरट् प्रत्ययो भवति । पूर्वं भूत इति भूत पूर्वः । पूर्वं भूत इति भूतचरः । पूर्वं दृष्ट इति दृष्टचरः । स्त्री चेद्दृष्टचरी । ङ्कितः

भूतपूर्वे चरट् । पूर्वं भूत इति दर्शनादिक्रियया तत्समयात् प्राग्विषयीभूतो भूतपूर्वस्तस्मिन्नर्थे चरट्प्रत्ययो भवति । दृष्ट २ पूर्वं दृष्ट इति विग्रहे अत्र दर्शनक्रियया वर्तमानकालात् प्रागपि दृष्टत्वात् स्मृतिज्ञानेन विषयीभूतत्वात् पूर्वोऽतश्चरट् । उभयत्रापि टकार ईबर्थः । एकत्र पुंस्त्वे देववत् । मयट् ( प्र. ए. ) अन्यत्र टित्वादीप् । ङ्वितः । यस्य लोपः । स्वर० नदीवत् । सूत्रम् ।

प्राचुर्यविकारप्राधान्यादिषु मयट् । गोः पुरीषे च । गोः पुरीषं गोमयम् । अन्नं प्रचुरं यस्मिन्नसौ अन्नमयो यज्ञः । मृदो विकारो मृण्मयो घटः । स्त्री प्रधानं यस्यासौ स्त्रीमयो जाल्मः । आदिशब्दात्स्वरूपार्थे मयट् । अमृतस्वरूपोऽमृतमयश्चन्द्रः ।

प्राचुर्येति । प्राचुर्यविकारप्राधान्यादिषु (स. ब.) मयट् (प्र. ए.) प्रचुरस्य भावः प्राचुर्यं विकारोऽवस्थान्तरापादनं प्राधान्यं मुख्यत्वं तथा आदिशब्दान्निर्वर्त्तनस्वरूपपुरीषावयवेषु च । एष्वर्थेषु च नाम्नो मयट् प्रत्ययो भवति । उदाहरणानि अन्न, अन्नं प्रचुरम् अस्त्यस्मिन्निति अन्नमयो यज्ञः । अत्र प्राचुर्यार्थे मयट् । टित्वादीप् अन्नमयी स्थाली । मृद्, मृदो विकारो मृन्मयः अत्र विकारे मयट् । अवसाने दस्य तः प्रमे प्रमा वा तस्य नः स्वर० । यद्वा क्वचिज्जवानामपि प्रमा एष्टव्याः । इति दस्य नः । स्वर० मृन्मयो घटः । स्त्री प्रधानाऽस्येति स्त्रीमयो जाल्मः । जाल्मो मूर्खः अविचार्यकारी इत्यर्थः । अमृतेन निर्वृत्तो अमृतमेव स्वरूपं वा यस्य सोऽमृतमयश्चन्द्रः । अत्र निर्वर्त्तनार्थे मयट् । गोः पुरीषं गोमयः । शरस्यावयवाः शरमया बाणाः ।

तदधीते वेद वेत्यत्राण्वक्तव्यः । अधीतेऽथवा वेद इत्यत्रार्थे द्वितीयान्तान्नाम्नोऽण् वक्तव्यः । व्याकरणमधीते वेद वा वैयाकरणः । द्वारि नियुक्तो दौवारिकः । स्वस्ति इत्याह सौवस्तिकः । न्यग्रोधस्येदं नैयग्रोधम् । व्यासादेः किः । व्यासस्यापत्यं वैयासकिः ॥ सुधातुरकङ् च । सुधातुरिञ् स्यादकङादेशश्च । सुधातुरपत्यं साधातकिः । शोभनोऽश्वः स्वश्वः । तं वेदेति सौवश्वः । न्याये कुशलो नैयायिकः ।

तदधीते इत्यादि । तच्छास्त्रादि अधीते पठति वेद जानाति वा इत्येतस्मिन्नर्थेऽण्प्रत्ययो वक्तव्यः । उदा० व्याकरणमधीते पठति अथवा वेद जानातीति

वैयाकरणः। सुष्ठु शोभनोऽश्वः स्वश्वस्तं वेदयति असौ स्वश्वः पुरुषः। व्याकरण १ स्वश्व २ एकत्र अध्ययनार्थे अण् अन्यत्र वेदेत्यर्थेऽण् णकारो वृद्ध्यर्थः।

न संधिय्वोर्युट् च। सन्धिजौ य्वौ सन्धिय्वौ तयोः सन्धिजयोर्यकारवकारयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति। किन्तु तयोर्युडागमो भवति। इट् उट् इत्येतावागमौ भवतः। किं कृत्वा वर्णविश्लेषं कृत्वा। यकारात्पूर्वं इकारः। वकारात्पूर्वं उकारः। पश्चादादेः स्वरस्य ञ्णिति च वृद्धिः।चटकादैरण्। चटकस्यापत्यं चाटकैरः॥ कल्याण्यादीनामिनेयः। कल्याण्या अपत्यं कल्याणिनेयः।

न सन्धिय्वोर्युट् च। नन्वत्र स्वश्वपदे वृद्धिराकारः क्रियतां तत्राशङ्कायामाह। सूत्रम्। न (प्र. ए.) अव्य० सन्धिय्वोः एतस्य समासो वृत्तावेव विहितो यथा सन्धिजौ य्वौ सन्धिय्वौ तयोः सन्धिय्वोः (ष. द्वि.) स्वर० सो० इट् च उट् च युट् (प्र. ए.) हसेपः च (प्र. ए.) अव्य० पूर्वं नामिनोरः चतुः पदं सन्धिजातयोर्यकारवकारयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति। अत्र व्या इत्यत्र वि आङ् उपसर्गयोर्योगसन्धिजो यकारस्तत्संबन्धी स्वर आकारः स च वृद्धिरूप एव अतो न तस्य वृद्धिकार्यम्। किंतु अन्येषु ह्रस्वेष्वयं विधिः स्व इत्यत्र उवमिति वकारः तत्संबन्धी स्वरोऽकारः तस्य णित्त्वाद्वृद्धिसंभवेऽपि प्रस्तुतसूत्रेण वृद्धिनिषेधः। ततः किंतु तयोर्यकारवकारयोर्युमागमो भवति। युगागम इति कोर्थः। तदेव विवृणोति। इट् उट् इत्येतावागमौ भवत। टित्त्वादादौ। ननु कथं संश्लिष्टस्य यकारस्य वकारस्य च इट्, उट् आगमौ भवतः इत्याह। यथा सुव्इति असंयोगेनोच्चारणं कृत्वा यकारात् पूर्वमिकारः कर्तव्यः। वकारात् पूर्वमुकारः कर्तव्यः। स्वर० वियासुव् इति जातं पश्चादादिस्वरस्य ञ्णिति वृद्धिः वैया सौव यस्यलोपः स्वर० सो० वैयाकरणः सौवश्वः इति सिद्ध्यति। अन्यत्रापि सौवस्तिकः, दौवारिकः इत्यादि।

इतो जातार्थे। जातार्थे इतः प्रत्ययो भवति। लज्जा संजाता यस्यासौ लज्जितः। त्रपा संजाता यस्यासौ त्रपितः। क्षुधा संजाता यस्यासौ क्षुधितः।

इतो जातार्थे। उत्पन्नार्थे इतप्रत्ययो भवति। उदा० लज्जा जाता-

ऽस्येति लज्जितः। जाताऽर्थे इत प्र० यस्यलोपः स्वर० स्रो०। एवं पुष्पितः फलितो वा वृक्षः, तारकितं नभः, पुलकितः, कण्टकितः। सूत्रम्।

तरतमेयस्विष्ठाः प्रकर्षे। अतिशयेऽर्थे तरः तमः इयसुः इष्ठः इत्येते प्रत्यया भवन्ति। अतिशयेन कृष्णः कृष्णतरः। अतिशयेन कृष्णः कृष्णतमः। अतिशयेन शुक्लः शुक्लतरः शुक्लतमः।

तरतमेयस्विष्ठाः। तरश्च, तमश्च, ईयसुश्च, इष्ठश्च, तरतमेयस्विष्ठाः (प्र. ब.) सवर्णे० स्रो० प्रकर्षे (स. ए.) प्रकर्षे अतिशयार्थे नाम्नस्तर, तम ईयसु इष्ठ इत्येते चत्वारः प्रत्यया भवन्ति। इष्ठप्रत्ययः वान्तः। कृष्ण, अतिशयेन कृष्णः श्याम इति कृष्णतरः, कृष्णतमः, एकत्र तर प्रत्ययः, अन्यत्र तम त्ययः (प्र. ए.) स्रो० एवं शुक्लतरः, शुक्लतमः।

ईयस्विष्ठौ डिताविति वक्तव्यौ। अतिशयेन लघुर्लघीयान् अति० लघुर्लघीयसी। अति० लघुर्लघिष्ठः। अति० पापी इति पापीयान्। अति० पापी इति पापीयसी। अति० पाप इति पापिष्ठः।

ईयस्विष्ठौ डिताविति। 'ईयसु इष्ठइत्येतौ प्रत्ययौ डित्संज्ञौ वक्तव्यौ'। लघु, अतिशयेन लघुर्लघीयान्, स्त्री लघीयसी, अतिशयेन लघुर्लघिष्ठः, रूपद्वये ईयसुः, तृतीये इष्ठः। डित्त्वादुकारलोपः स्वर० आद्ये (प्र. ए.) उकारानुबन्धत्वात्तद्धितो नुमिति नुमागमः नस्महतो धौ दीर्घः हसेपः० संयोगान्तस्य लोपः द्वितीये ङ्तिः स्वर० (प्र. ए.) हसेपः० लघीयसी तृतीये इष्ठप्र० डित्त्वाट्टिलोपः स्वर० (प्र. ए.) स्रो० लघिष्ठः। पाप, अत्र पापशब्दः पापयुक्तस्य नरस्य वाचको न पापस्य। यतः पापशब्दस्य व्याकरणान्तरेषु इन् प्रतिषिद्धोऽस्तीति 'यथा नो पापदरिद्राभ्यामिन्' अतः अतिशयेन पापः पापीयान् स्त्रीचेत्पापीयसी। उभयत्रापि ईयसु, डित्त्वाट्टिलोपः स्वर० आद्ये (प्र. ए.) लघीयसु वत्। द्वितीये ङ्ति इति ईप् पुनः अतिशयेन पापः पापिष्ठः स्त्रीचेत्पापिष्ठा इष्ठप्र० डित्त्वाट्टिलोपः स्वर० (प्र. ए.) स्रो० पापिष्ठः।

गुर्वादेरिष्ठेमेयस्सु गरादिष्टचलोपश्च। इष्ठेमेयस्सु परतो गुर्वादेर्गरादिरादेशो भवति। टेर्लोपः। गुरोर्गरादेशः। अति० गुरुर्गरीयान्। गरीयसी। गरिष्ठः। गुरोर्भावो गरिमा। प्रियस्य

प्रादेशः। अति० प्रिय इति प्रेयान्-प्रेयसी-प्रेष्ठः। लोहितादेर्डिदिमन् प्रेमा। स्थूलस्य स्थवादेशः। अति० स्थूलः स्थवीयान्-स्थवीयसी-स्थविष्ठः-स्थेमा। स्थिरस्य स्थादेशः। स्थेयान्-स्थेयसी-स्थेष्ठः-स्थेमा। बहुशब्दस्य बंहादेशः। अति० बहुः बंहीयान्-बंहीयसी-बंहिष्ठः। तृप्रशब्दस्य त्रपादेशः। त्रपिष्ठः। ह्रस्वस्य ह्रसादेशः। ह्रसिष्ठः। वृद्धस्य वर्षादेशः। अति० वृद्धः वर्षीयान्-वर्षीयसी-वर्षिष्ठः। अन्तिकबाढयोर्नेदसाधौ। अति० अन्तिकः नेदीयान्-नेदीयसी-नेदिष्ठः। अति० बाढः साधीयान्-साधीयसी-साधिष्ठः। दूरस्य दवादेशः। अति० दूरः दवीयान्-दवीयसी-दविष्ठः। युवन् शब्दस्य यवादेशः। अति० युवा यवीयान्-यवीयसी-यविष्ठः। अल्पस्य कनादेशः। कनियान्-कनीयसी-कनिष्ठः।

गुर्वादेरिष्ठेमेयस्सु गरादिष्ट्यलोपश्च। गुर्वादेः शब्दस्य इष्ठ, इमन्, ईयस्, इत्येतेषु परेषु गर इत्यादय आदेशा भवन्ति। गुरु १ प्रिय २ स्थिर ३ स्थूल ४ प्रशस्य ५ वृद्ध ६ दीर्घ ७ बहुल ८ दूर ९ निकट १० लघूनां ११ (प्र. ए.) क्रमेण गर १ प्र २ स्थ ३ स्थव् ४ ज्या ५ श्र ६ द्राघ् ७ बंह ८ दव् ९ नेद १० कन ११ एते आदेशा भवन्ति टेश्च अलोपः इति लोपो न भवतीत्यर्थः। गुरुः ३ एकत्र ईयस् अन्यत्र इष्ठः तृतीयो भावेऽर्थे लोहितादेरिति इमन्। सर्वत्र गुरु इत्यस्य गरः। अत्र ईयसिष्ठयोर्डित्त्वेऽपि निषेधकथनादेर्नलोपः। साधनाप्रक्रिया पूर्ववत्। अतिशयेन गुरुर्गरीयान्, गरिष्ठः, तृतीये गुरोर्भावो गरिमा इमन् स्वर० राजन्शब्दवत्। स्त्रीचेत् गरीयसी। प्रिय २ अतिशयेन प्रियः प्रेयान् प्रेष्ठः ईयस् इष्ठ उभयत्रापि गुर्वादेरित्यादिना प्रियस्य प्र इति आदेशः अइए स्त्रीचेत् प्रेयसी। एवं स्थिर इत्यत्र स्थः अतिशयेन स्थिरः स्थेयान् स्थेष्ठः स्थिरस्य भावः स्थेमा स्थूलस्य स्थवः। अतिशयेन स्थूलः स्थवीयान् स्थविष्ठः। प्रशस्यस्य श्र आदेशः। अतिशयेन प्रशस्यः श्रेयान्, श्रेष्ठः, श्रेयसी।

ईलोपो ज्याशब्दादीयसः। ज्याशब्दादीयस ईकारस्य लोपो भवति। वृद्धस्य ज्यादेशः। अति० वृद्ध इति ज्यायान्-ज्यायसी-ज्येष्ठः-ज्येमा। उत्तमस्य वरादेशः। अति० उत्तम इति

वरीयान्-वरीयसी वरिष्ठः-वरिमा। दीर्घस्य द्राघादेशः। अति० दीर्घ इति द्राघीयान्-द्राघीयसी-द्राघिष्ठः-द्राघिमा। प्रशस्यस्य श्रादेशः। अति० प्रशस्यः श्रेयान्-श्रेयसी-श्रेष्ठः-श्रेमा। विन्मतोर्लुक्। एतयोर्लुक् स्यादिष्ठादौपरे। स्रजिष्ठः। स्रजीयान्। त्वचिष्ठः। त्वचीयान्।

वृद्ध, अतिशयेन वृद्धो ज्यायान्, ज्येष्ठः। वृद्धस्य ज्या आदेशः एकत्र ईलोपो ज्या० ज्याशब्दात्परस्य ईयसः प्रत्ययस्य ईकारस्य लोपो वक्तव्यः (प्र. ए.) न्रितोनुम् न्सम्महतो धौ दीर्घः। हसेपः, संयोगान्तस्य लोपः अन्यत्र इष्ठ प्र० अइए दीर्घः अतिशयेन दीर्घो द्राघीयान् द्राघिष्ठः दीर्घस्य द्राघ् आदेशः। अतिशयेन बहुलः बंहीयान् बंहिष्ठः बंहीयसी। अतिशयेन दूरः दवीयान् दविष्ठः स्त्री चेद्दवीयसी। नेदीयसी अतिशयेन निकटः नेदीयान् नेदिष्ठः, स्त्रीचेत् नेदीयसी। अतिशयेन कनीयान् कनिष्ठः कनीयसी। पाणिनीये तु युवाऽल्पयोः कन् वा अतिशयेन युवाऽल्पो वा कनीयान् कनिष्ठः, पक्षे यविष्ठः अल्पिष्ठः। अन्तिकबाढयोः नेदसाधौ। अतिशयेन अन्तिकः नेदीयान् नेदिष्ठः। अतिशयेन बाढः साधीयान् साधिष्ठः। गुरु १ स्थिर २ वृद्ध ३ तृप्रानां ४ च क्रमेण वर्ग १ स्थु २ वर्ष ३ त्रप्र ४ एते स्युः विन्मतो र्लुक् विनो मतुपश्च लुक्स्यात् इष्ठ ईयसोः परयोः। अतिशयेन स्रग्वी स्रजिष्ठः स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः, त्वचीयान्। एवमन्येऽपि यथासंभवं ज्ञेयाः। कचित्तु स्थूल १ दूर २ युव ३ ह्रस्व ४ क्षिप्र ५ क्षुद्राणां ६ अन्त्या यरलवाः सस्वरा एव लेख्याः, पूर्वस्य च गुणः इष्ठेयसोः परयोः। स्थविष्ठः स्थवीयान् दविष्ठः, यविष्ठः, ह्रस्वस्य गुणः। ह्रसिष्ठः २ क्षेपिष्ठः २ क्षोदिष्ठः २। बहु, अतिशयेन बहुर्भूयान् अत्र ईयस् प्रत्यये बहोर्लोपो० इत्यादिना भू आदेशः। चकारात् इमनादीनामिति बहुत्वात् ईकारस्य लोपः पुनः। बहु इष्ठप्रत्ययः बहोर्लोपइति इकारलोपः। बहोश्च भू आदेशः। ततः,

बहोरिष्ठे यिः। बहुशब्दात्परस्य इष्ठे वर्तमानस्येकारस्य यिर्भवति बहोर्भूरादेशः। अ० बहुरिति-भूयान्-भूयसी-भूयिष्ठः-भूमा। क्षिप्रस्य क्षेपादेशः। अति० क्षिप्रः क्षेपीयान्-क्षेपीयसी-क्षेपिष्ठः। क्षुद्रस्य क्षोदादेशः। अ० क्षुद्रः क्षोदीयान्-क्षोदीयसी-क्षोदिष्ठः।

बह्वोरिष्ठे यिः। बहुशब्दात् इष्ठप्रत्यये परे यिरिति इकारस्वरसहितो यकारागमो भवति । उक्तं च प्रक्रियायां । इष्ठस्य यि च । अत्र बहोर्भू आदेशो यदादेशस्तद्वद्भवतीति बहुवत् तथा इष्ठस्य इकारे लुप्तेऽपि एकदेशविकृतमनन्यवद्भवतीति विरुद्धम् । भूयिष्ठः । अत्र केचित् बहुशब्दादिष्ठसंबन्धिन इकारस्य यि इत्यादेश इत्येवं व्याचक्षते । तदसङ्गतम् । इकारलोपस्य प्रधानत्वात् । भू इत्यादेशस्तु इकारलोपाद्वते हृस्साप्यः, पुनश्चिन्त्यम् ।

किमोऽव्ययादाख्याताच्च तरतमयोराम्वक्तव्यः । अति कुतः कुतस्तरां परमाणवः । अति कुत इति कुतस्तराम् तेषामारम्भकत्वम् । उच्चैस्तरां गायति । उच्चैरिति उच्चैस्तमाम् । नीचैस्तराम्-नीचैस्तमाम् । किंतराम्-किंतमाम् । अति पठति इति पठतितराम्-पठतितमाम् । अति पचति इति पचतितराम्-पचतितमाम् ।

किमोऽव्ययादिति । किमिति अव्ययरूपात्किमः शब्दस्य संबन्धिनोऽव्ययात् अन्यस्मादप्यव्ययादाख्याताच्च सिद्धम्वादिधातुप्रयोगात्परयोस्तरतमप्रत्यययोराम् भवति । अयं भावः । किंशब्दसंबन्धिनोऽव्ययात् अन्यस्मादपि 'उच्चैस्' इत्यादिकादव्ययात् आख्याताद्भवतिपचतीत्यादिरूपात् स्वार्थे अतिशयार्थे वा तरतमप्रत्ययौ भवतः तस्मात् पुरतः आम्प्रत्ययो भवति । उदा० कुत इति । तत्रादिगणकिमः पंचम्यन्तस्य निपातरूपमव्ययं तस्मात्तरप्रत्ययस्तमप्रत्ययश्च । उभयत्रापि आम् कुतस्तरां परमाणवः प्रादुरभवन्नित्यध्याहारः। तथा तेषां परमाणूनां कुतस्तमामारम्भकत्वं परमाणुद्वयपोगे द्व्यणुकाद्युत्पादकत्वम् । उच्चैस्तरां गायति इति । केचित्तु केवलात्किम एवाव्ययात्तरतमयोराम इति व्याचक्षते । ते चशब्दात् उच्चैर्नीचैरव्यययोरपीति । डुपचष् पाके ।पच् । तिप् शप् कर्तरि स्वर० पचति अग्रे स्वार्थे तरस्तमश्च तस्माच्च आम् । एवं पठ् व्यक्तायां वाचि । पठ् पूर्ववत् पठतितमां लिखतितरां, लिखतितमाम् ।

परिमाणे दघ्नादयः । परिमाणेऽर्थे वाच्ये सति दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवन्ति । जानु परिमाणं यस्य तज्जानुदघ्नं जलम् । शिरः परिमाणं यस्य तच्छिरोद्वयसम् । पुरुषः परिमाणं यस्य तत्पुरुषमात्रं जलम् ।

परिमाणे दघ्नादय इति । उर्ध्वपरिमाणेऽर्थे, दघ्नट्, द्वयसट्, मात्रट् इत्येते त्रयः प्रत्यया भवन्ति वक्तव्यमात्रमेतत् । उदाहरणम् जानु, जानु परिमाणमस्य जानुदघ्नं अत्र परिमाणे दघ्नट्प्रत्ययः । जानुपरिमितं जलमित्यर्थः । तथा पुरुषः, पुरुषः परिमाणमस्येति पुरुषमात्रम् । तथा शिरस्, शिरः परिमाणमस्य शिरोद्वयसम् । टकारानुबन्धत्वात् ट्टित इति ईप् । तेन ऊरुद्वयसी, ऊरुदघ्नी, शिरोद्वयसी, इत्यादि ।

**द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ । कतरो भवतोर्मध्ये काण्वः । क इति कतरः । कतमो भवतां तान्त्रिकः । क इति कतमः । भवतोर्यतरस्तार्किकस्ततर उद्गृह्णातु । य इति यतरः । स इति ततरः । यतमः, ततमः ।**

द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमावित्यस्य व्याख्या । द्वयोर्मध्याद्बहूनां वा नराणां मध्यादेकस्य निर्द्धारणे पृथक्करणे जात्यादिपरिप्रश्ने वा किमादिभ्य इति किंयत्तद्भ्यो ङितौ अतरअतमौ भवत इत्यर्थः । किम्, वहूनां द्वयोर्वा मध्ये कः कतरः । अत्र निर्द्धारणं पृथक्करणं तस्यार्थे डतरः । डित्वाट्टिलोपः । स्वर० कतरो भवतां काण्वः । काण्वगोत्रीयः काण्ववंशीयः कः । तथा किम्, डतरः पूर्ववत् । कतमो भवतां मध्ये तान्त्रिकः शास्त्रविदित्यर्थः । सैद्धान्तिकस्तु तान्त्रिकः । यद्, तद्, उभयत्रापि डतरः टिलोपः स्वर० सो० भवतोर्द्वयोर्मध्ये यतरस्तार्किकस्ततर उद्गृह्णातु ब्रवीतु इति भावः । चकारात् 'एकशब्दादपि डतरडतमौ वक्तव्यौ' एकतरः, एकतमः । अन्यतरः, अन्यतमः ।

**संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः । द्वयोः संख्यापूरकः द्वितीयः ।**

संख्येयेति । संख्यातुं योग्यः संख्येयः । द्वयोस्त्रयाणां वा मध्ये योऽन्यः संख्येयो गणनायां प्रस्तुतः संख्यापूरणस्तस्य विशेषावधारणे अयमयम् इत्यस्मिन्नर्थे परिच्छेदे द्वित्रिशब्दाभ्यां तीयप्रत्ययो भवति ।

**त्रेः संप्रसारणं सस्वरस्य । त्रयाणां संख्यापूरकः तृतीयः ।**

त्रेः संप्रसारणं सस्वरस्य । त्रिशब्दस्य संप्रसारणं रेफस्य ऋकारः । द्वि-त्रि, द्वयोः पूरणो द्वितीयः एकस्यापेक्षयाऽपरःसंख्येयः तस्य विशेषपरिच्छेदः क्रियत इति द्विशब्दात्तीयप्रत्ययः। अन्यत्र तु द्वौ । त्रयाणां संख्यापूरणत्वेन विशेषान्वया-

णे तत्रापि तीयः। तस्मिंश्च परे त्रेः संप्रसारणं यकारस्य सस्वरस्य संप्रसारणं इकारः, कारस्य उकारः, रेफस्य ऋकारः, सस्वरस्यैव ऋकारः,। दीर्घस्वरयुक्ते च दीर्घ ईका- ादिति संप्रसारणं। अत्र त्रिशब्दे रेफस्य ऋकारः। द्वितीयः, तृतीयः।

**षट्चतुरोस्थट् । षण्णां संख्यापूरकः षष्ठः । ष्टुभिष्टुः । चतुर्णां संख्यापूरकः, चतुर्थः ।**

**षट्चतुरोस्थट् इति** । षट्चतुरोः इत्येतयोः संख्येयविशेषावधारणे सं- ख्यापूरणेर्थे थट् प्रत्ययो भवति। षण्णां संख्यापूरणः षष्ठः। थ प्रत्ययः ष्टुभिष्टुः थस्य ठः स्वर० ( प्र. ए. ) स्रो० चतुर् चतुर्णां संख्यापूरणश्चतुर्थः प्र० जल० टित्वादीप्। षष्ठी चतुर्थी ।चतुर्णां संख्यापूरणः तुर्यः तुरीयः इति तु पूर्वमेवोक्तम् सूत्रम् ।

**पञ्चादेर्मट् । पञ्चमः । सप्तमः । अष्टमः । नवमः । दशमः । इत्यादि ।**

**पञ्चादेर्मट्** । पञ्चादेर्नाम्नो दशपर्यन्तात् संख्येयविशेषावधारणेऽर्थे मट् प्र- त्ययो भवति। पञ्चानां संख्यापूरणः पञ्चमः। मप्रत्ययो नाम्नो० ( प्र. ए. ) पञ्चमः। एवं सप्तमः, अष्टमः, नवमः, दशम इति ।

**एकादशादेर्डः । एकेनाधिका दश एकादश । एकादशानां संख्यापूरकः एकादशः एकादशी ।**

**एकादशादेर्डः** । टकारानुबन्धत्वमत्राप्यनुवर्तनीयम् । एकादशन्, एकादशा- नां संख्यापूरणः एकादशः। डप्रत्ययः अत्र डित्वाट्टिलोपः। स्वर०( प्र. ए. ) स्रो० सहादेः सादिरिति एकस्य एका इत्यादेशः देवशब्दवत् एकत्वात्प्राय एकवचनमेव एवं द्वादशः, त्रयोदशः।

**द्वित्र्यष्टैकानां द्वात्रयोष्टैकाः । प्राक्शतादनशीतिबहुव्रीह्योरिति वक्तव्यम् । द्वादशः द्वादशी। त्रयोदशः त्रयोदशी। चतुर्दशः चतुर्दशी । सप्तदशः सप्तदशी । अष्टादशः अष्टादशी ।**

**द्वित्र्यष्टानां द्वात्रयोष्टा इति** । द्विशब्दस्य द्वा इत्यादेशः त्रिशब्दस्य त्रय इत्यादेशः अष्टन् इत्यस्य अष्टा इत्यादेशः। चतुर्दशः, पञ्चदशः, षोडशः, सहादेः सादि- रिति षस्यउः दस्यडःउओ सप्तदशः, अष्टादशः, एकोनविंशतिरित्यत्र, डप्रत्यये कृते निपातनात् तिसहितस्य टेरकारस्य लोपः । स्वर० एकोनविंशः ।

**विंशत्यादेर्वा तमट् । विंशतेः संख्यापूरकः विंशतितमः । पक्षे विंशतेस्तिलोपः । विंशः ।**

**विंशत्यादेर्वा तमट् ।** विंशत्यादेर्नाम्नः संख्येयविशेषावधारणे तमट् प्रत्ययो वा भवति । वाग्रहणादेकत्र तमट्, द्वितीये डः, तृतीये प्रत्ययो न । यथास्थित एव तिष्ठति । विंशतिः आद्ये तमट्प्रत्ययः टकार ईबर्थः विंशतेः संख्यापूरणः विंशतितमः, तथा स्त्रीत्वे विंशतितमी इत्यपि भवति, द्वितीये ड प्रत्ययः डानुबन्धेत्यस्वरादेर्लोपस्तेर्विंशतेरपि इति इत्यनेन तिसहित टिलोपः पूर्वं ति इत्यस्य लोपः पश्चाट्टेर्लोपः । स्वर० विंशः, तथा प्रक्रियायां विंशतेर्डेतिः विंशतेर्मस्य तिशब्दस्य लोपः स्यात् डिति परे । यद्वा केचित्तु वाग्रहणादेव पश्चादेर्म इति मप्रत्ययमपीच्छन्ति । तन्मते विंशतिम इत्यपि स्यात् । एवं एकविंशतितमः एकविंशः । द्वाविंशतितमः द्वाविंशतितमी, द्वाविंशः । त्रिंशत्तमः । चत्वारिंशत्तमः, चत्वारिंशत् । पञ्चाशत्तमः पञ्चाशः पञ्चाशत् । षष्टितमः, एकषष्टितमः, एकषष्टः । इत्यादि ज्ञेयम् ।

**चत्वारिंशदादौ वा । द्विचत्वारिंशत्-द्वाचत्वारिंशत् । त्रिचत्वारिंशत्-त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत्-अष्टाचत्वारिंशत् । अनशीतीति विशेषणाद्द्व्यशीतिः । त्र्यशीतिः । अष्टाशीतिः ।**

**चत्वारिंशदादौ वा ।** चत्वारिंशदादिषु शब्देषु परेषु द्वित्र्यष्टानां द्वात्रया वा भवन्ति । द्विचत्वारिंशत्, द्वाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत्, अष्टाचत्वारिंशत् । द्विपञ्चाशत्, द्वापञ्चाशत् । त्रिपञ्चाशत्, त्रयःपञ्चाशत् । अष्टपंचाशत्, अष्टापंचाशत् । एवं द्विषष्टिः, द्वाषष्टिः । द्विसप्ततिः द्वासप्ततिः । द्विनवतिः, द्वानवतिः । अनशीतिरिति विशेषणात् द्व्यशीतिः, द्व्यशीतितमः । अशीतिः, अष्टाशीतिः । अत्र द्वात्रयोष्टा न भवन्ति ।

**शतादेर्नित्यम् । शततमः । कतिकतिपयाभ्यां थः । कतिथः । कतिपयथः ।**

**शतादेर्नित्यं तमट्** प्रत्ययः स्यात् । शतस्य संख्यापूरणः शततमः । एकादशादेरधिकार्थात् सप्तम्यर्थे शते सहस्रे च डप्रत्ययः । एकादश अधिका यस्मिन् तदेकादशं शतं । एवं द्वादशं, त्रयोदशं, एकविंशं, इत्यादिशब्दात् शततमः, एकशततमः, मासतमः, अर्धमासतमः, संवत्सरतम इत्यादि ज्ञेयम् । शतादीनि संख्येययोगीनि लोकादवगन्तव्यानि ।

**संख्यायाः प्रकारे धा । संख्यावाचकाच्छब्दात्प्रकारेऽर्थे वाच्ये सति धाप्रत्ययो भवति । द्विप्रकारं द्विधा, त्रिधा, चतुर्धा, पंचधा, षोढा ।**

**संख्यायाः प्रकारे धा ।** संख्यावाचिनो नाम्नः प्रकारेऽर्थे धाप्रत्ययो

भवति । द्विप्रकारमिति । द्वौ प्रकारौ अस्येति वा द्विधा, त्रिधा, चतुर्धा, पञ्चधा, षोढा इत्यादि ।

**गुणोण् वा । द्वेधा त्रेधा । द्वैधं त्रैधम् ।**

**गुणोऽण्वा ।** धाप्रत्यये परे द्वित्रिशब्दयोर्गुणो भवति, अण्च वा भवति । इकारस्य ए गुणः । द्वेधा, त्रेधा । क्त्वाद्यन्तंचेति । अव्य० । तथा धाप्रत्ययात् स्वार्थेऽण्प्रत्ययो भवति । णकारो वृद्ध्यर्थः । द्विधा, त्रिधा । उभयत्राप्यण् वृद्धिः । यस्य लोपः । गायन्त्याद्यण् । नपुंसके ( प्र. ए. ) अतोऽम् ( प्र. ए. ) द्वैधं, त्रैधम् ।

**क्रियाया आवृत्तौ कृत्वस् । पंचकृत्वः । सप्तकृत्वः ।**

**क्रियाया आवृत्तौ कृत्वस् ।** क्रियायाश्चलनगमनचरणादिकाया आवृत्तौ तत्संख्येन परावृत्तेन पौनःपुन्यगणने वारंवारार्थे च सप्तादिसंख्यायाः कृत्वस् इति प्रत्ययो भवति । पंचन् पंचवारान् इति पञ्चकृत्वः । कृत्वस् प्रत्ययः । नाम्नो०प्रथमैकवचनं सि अव्यया० स्रो० पंचकृत्वः । एवं सप्तकृत्वः, कतिकृत्वः । इत्यादीन्युदाहरणानि ।

**द्वित्रिभ्यांसुः । द्विरुक्तं त्रिरुक्तम् ।**

**द्वित्रिभ्यां सुः ।** द्वित्रिशब्दाभ्यां क्रियाया आवृत्तौ सुप्रत्ययो भवति । उकार उच्चारणार्थः । द्वौ वारौ इति द्विः । त्रीन् वारान् इति त्रिः । स् प्रत्यये कृते ( प्र. ए. ) अव्यया० स्रो० अग्रे उक्तमिति नामिनोरः । स्वर० एवं द्विर्भुंक्ते । द्वौवारौ इत्यर्थः । त्रिरधीते त्रिः । त्रीन् वारान् अधीते पठतीत्यर्थः ।

**एकस्य सुप्रत्ययसहितस्य सकृदादेशो वक्तव्यः । सकृदेकवारम् । बह्वादेः शस् । बहुशः । स्तोकशः । अल्पशः । शतशः । सहस्रशः । कोटिशः ।**

**बव्हादेः शस् ।** बव्हादेः नाम्नो वारंवारार्थे शस्प्रत्ययो भवति । बहु, बहून् वारान्, इति बहुशः । शस् प्रत्ययः । अव्य० एवं शतशः, सहस्रशः, लक्षशः, कोटिशः, अनेकशः, भूरिशः, गणशः-इत्यादीनि ।

**तयायटौ संख्यायाः । द्वितयं त्रितयं द्वयं त्रयं द्वितयी त्रितयी द्वयी त्रयी । शेषा निपात्याः कत्यादयः ।**

**तयायटौ संख्याया अवयवार्थे ।** संख्यायां वाच्यमानायां तय अयट् इत्येतौ प्रत्ययौ भवतः । तत्र तयट् संख्यावाचिनः शब्दाद्यथासंभवं भवति ।

अयट् द्वित्रिशब्दाभ्यामेव । द्वित्रि उभयत्र तयट् क्लीबे द्वितयं त्रितयं त्रयोऽवयवा यस्य तत्रितयं, एवं द्वयं, त्रयं द्वित्रि अयट् प्रत्ययः । यस्य लोपः। स्वर० (प्र. ए.)अतोम् स्त्रीलिंगे द्वितयी, त्रितयी, द्वयी, त्रयी, उभयशब्दादप्ययट् वक्तव्यः । उभाववयवौ यस्य स उभयः । टित्त्वादुभयी । यस्य लोपः । **अल्पेशमीकुटीशुण्डाभ्योरः।** अल्पार्थे लघ्वर्थे वाच्ये शमी कुटी शुंडा इति त्रिभ्यः शब्देभ्यो रप्रत्ययो भवति। अल्पा शमी शमीरः । अल्पा कुटी कुटीरः । अल्पा शुंडा शुंडारः । **स्त्रीपुंसोर्नण् स्नणौ ।** स्त्रीपुंसोः शब्दयोः क्रमेण नण् स्नणौ प्रत्ययौ भवतः अत्यल्पार्थे। स्त्रीषु भवः स्त्रिया अपत्यं स्त्रीणां समूहो वा स्त्रैणं। पुंसि भवः पुंसोऽपत्यं पुंसां समूहो वा पौंस्नं। तत्र स्त्रैणमित्यत्र नण् णित्त्वाद्वृद्धिः। ष्ऋर्नोणो०तथा पुंस् स्नण् प्रत्ययः। णित्त्वाद्वृद्धिः । पौंस्नं । संयोगांतस्येति सलोपः। (प्र. ए. ) क्लीबे अतोम् । अम्शसो० मोनु० । **अथोपसंहारमाह।** शेषा निपात्याः कत्यादयः। शेषा अत्र व्याकरणेऽनुक्ता ग्रंथांतरेषु च उदाहृताः शब्दाः कति-कतिपय-कतिथ-कतिपयथ-यति-तति-अन्येपि विंशति-त्रिंशत्-चत्वारिंशत्-षष्टि-सप्तति-अशीति-नवति इत्यादयः शब्दा निपात्या निपातसिद्धाः । अत्र प्रयोगानुसारेण साध्याः ।

सुबोधिकायां कृतायां, सूरिश्रीचंद्रकीर्तिभिः ॥
स्यादीनां प्रक्रिया पूर्णा, बभूवेत्थं मनोहरा ॥ १ ॥
तेषामेवहि सच्छिष्यो हर्षकीर्त्याख्यपाठकः ॥
लेखनोपज्ञतामस्याः प्रपेदे प्रीतमानसः ॥ २ ॥

॥ इति श्रीनागपुरीयतपगच्छाधिराजश्रीचंद्रकीर्तिसूरिकृतायां सारस्वतदीपिकायां प्रथमवृत्तिः संपूर्णा ॥ १ ॥

॥ इति प्रथमवृत्तिः संपूर्णा ॥

अथाख्यातप्रत्यया निरूप्यंते ॥ वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ।

ॐनमः परमात्मने ॥ सरस्वतीं सदाभक्तवांछितार्थविधायिनीम् । सद्वाग्विलाससंदोहदोहां कामदुघामिव ॥ १ ॥ नत्वानागपुरीयाव्हतपोगणविभूषणम् ॥ श्रीराजरत्नसूरिं चाख्यातव्याख्या विधीयते ॥ २ ॥ ( युग्मम् ) अथ ग्रन्थकार आख्यातप्रत्ययान्विवक्षुः प्रतिज्ञां करोति । अथाख्यातेत्यादि । अथेति संज्ञासंधिविभक्तियुष्मदस्मद्स्त्रीप्रत्ययकारकसमासतद्धितलक्षणाधिकाराष्टककथनानंतरम् आख्यातं नाम व्याकरणस्य नवमोधिकारस्तस्य प्रत्यया निरूप्यंते कथ्यंते । आख्यायंते कथ्यंते अर्थात् निष्पाद्यन्ते भ्वादीनां रूपाणि येन तदाख्यातम् अथवा आख्यांति आचक्षते कर्तृव्यापारमित्याख्याताः। प्रतीयते ज्ञायतेऽर्थो येभ्यस्ते प्रत्ययाः आख्यातसंज्ञकाः प्रत्ययाः आख्यातप्रत्ययाः। तत्रप्रथममधिकारसूत्रम् धातोः।धातोरिति पंचम्येकवचनान्तं पदं।वक्ष्यमाणा इति वक्ष्यन्ते कथयिष्यन्ते ये ते वक्ष्यमाणा अतःपरं ये वक्ष्यंते प्रत्ययास्ते धातोरेवाग्रे ज्ञेया न नाम्नः । अत्र प्रत्ययशब्देन प्रायो विभक्तयो ज्ञेयाः। तदधिकारादवादयोऽपि प्रत्यया धातोरेव ज्ञेयाः । तांश्च यथाधिकारं ग्रन्थकृदेव वक्ष्यति । अथ कोऽसौ धातुरित्यत । आह । सूत्रम् ।

भ्वादिः । भूसत्तायामित्यादिशब्दो धातुसंज्ञो भवति । सच त्रिविधः । आत्मनेपदी परस्मैपद्युभयपदी चेति ।

भ्वादिः । भूः आदिर्यस्यासौ भ्वादिः स्रो० भूधातुः सत्तायां विद्यमानार्थे वर्त्तते इत्येवमादिर्यः शब्दो वर्णसमुदायात्मको धातुपाठेऽभिहितः स धातुसंज्ञो भवति । विभक्तिप्रत्ययरहितः केवलो भ्वादिर्धातुसंज्ञो भवति । तत्क्रमश्च धातुपाठादवगन्तव्यः । इह ग्रन्थगौरवभयान्न लिख्यते । दधात्यर्थमिति धातुः स चेति । स धातुस्त्रिविधः तिस्रो विधाः प्रकारा यस्य स त्रिविधः पदभेदात्रिप्रकारः । आत्मनेपदं अष्टादशसु वक्ष्यमाणेषु विभक्तिवचनेषु अंत्यनववचनात्मकं विद्यते यस्य स आत्मनेपदी एधृ वृद्धावित्यादिः ॥१ ॥ तथा परस्मैपदं वक्ष्यमाणवचनेषु आद्यं नववचनात्मकं विद्यते यस्य स परस्मैपदी भूसत्तायामित्यादिः ॥ २ ॥ तथा उभये परस्मैपदात्मनेपदे विद्येते यस्म स उभयपदी पचति करोति इत्यादिः ॥ ३ ॥ यद्यपि निविशादेरिति सूत्रेण केषांचिद्धातूनां पदविपर्ययो भवति । तथाप्यत्र स्वभावेन पदत्रयेण त्रिविधत्वमुक्तम् । अथ प्रथममात्मनेपदं येभ्यो भवति तान् दर्शयति सूत्रम् ॥

आदनुत्तदात्तङितः । अनुदात्तेतो ङितश्च धातोरादित्यात्मनेपदं भवति ।

आदनुदात्तेति । आत् ( प्र० ए० ) हसेपः अनुदात्तश्च ङ् च अनुदात्तङौ तौ इतौ यस्य सोऽनुदात्तङित् तस्मात् अनुदात्तङितः । द्विपदं सूत्रम् । अनुदात्तेत् इति धातुपाठे योऽभिहितः धातुः सः अनुदात्तेत्संज्ञकः कल्पितः । एधृ वृद्धौ इत्यादिकः । तथा ङित् ङकारानुबन्धः शीङ् स्वप्ने इत्यादिकः ततोऽनुदात्तेतो ङितश्च धातोः आत् इति शब्देन आत्मनेपदं भवतीत्यर्थः । अथोभयपदिनां लक्षणमाह ।

ञित् स्वरितेत् उभे । ञितः स्वरितेश्च धातोरुभे आत्मनेपदपरस्मैपदे भवतः । आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्परस्मैपदं प्रयोक्तव्यम् । अन्वर्थत्वात् ।

ञित्स्वरितेत्यादि । ञकार इत् यस्य स ञित् यश्च स्वरितेत्संज्ञको धातुपाठे उक्तः । ञिच्च्स्वरितेच्च ञित्स्वरितेत् तस्मात् ञित्स्वरितेतः ( पञ्चम्येकवचनम् ) उभे ( प्र० द्वि० ) ईमौ अइए द्विपदं सूत्रम् ञितो धातोर्डुदाञ् दाने डुकृञ् करणे वृञ् इत्यादेः प्रसिद्धात्तथा स्वरितेत् इति यस्य धातोर्धातुपाठे स्वरितेत् इति संज्ञा कल्पितास्ति तस्मात् डुपचष् पाके इत्यादेर्धातुपाठोक्तात् धातुगणात् उभे इति आत्मनेपदपरस्मैपदे द्वे अपि भवतः । अथ ग्रन्थकार एवोभयपदिनां धातूनां पदप्रयोगशिक्षामाह । आत्मगामि चेदिति चेद्यदि । उभयपदिनां धातूनां क्रियायाः फलम् आत्मगामि भवति । तदात्मनेपदं प्रयोज्यं यथा आत्मार्थं पचते । परार्थं पचति । तथा च । यथा जगतः पितरौ वन्दे इत्यत्र वन्दनलक्षणक्रियायाः फलस्यात्मगामित्वात्कालिदासकविर्वन्दे इत्यत्रात्मनेपदं प्रयुक्तवान् । तथा यद्यपि सारस्वतीमृजुं कुर्वे इत्यत्र पठनस्य परगामित्वात्परस्मैपदं युज्यते । तथापि तत्पाठनादुत्पन्नं पुण्यलक्षणं फलं कर्तृगाम्येवेत्यवधार्यात्मनेपदं प्रयुक्तं । परगामीति चेद्यदि क्रियायाः फलं परगामि भवति । तदोभयिनां धातूनां परस्मैपदं भवति । यथा प्रक्रियाकौमुदीं कुर्म्मः इत्यत्र करोतेर्धातोः परस्मैपदं ग्रन्थस्य शिष्यानुशिष्यपठनपाठनलक्षणस्य फलस्य परगामित्वात्प्रयुक्तं । एवमन्यदपि यथासंभवमूह्यम् ॥ एतत्पदद्वयस्य प्रयोजनं कुत इत्यत आह । अन्वर्थादिति । आत्मने परस्मै इति द्वयोर्नाम्नोरनुगतार्थत्वात् । यादृशं नाम तादृश एवार्थः । यथा आत्मनिमित्तमात्मनेपदं परनिमित्तं परस्मैपदमित्यर्थः । तस्मात् इदं त्वात्मगामीत्यादिपदप्रयोगकथनमुभयपदिनामेवावगन्तव्यं नान्येषां । असार्वत्रिकश्चायं विधिः । अथ परस्मैपदप्रयोगमाह ।

परतोन्यत् । पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति ।

परतः (पं ए.) तसुप्रत्ययान्तम् अन्यत्। (प्र० ए०) अन्यशब्दस्य नपुंसकलिङ्गे पदप्रयोगस्त्वन्यादेः द्विपदं। पूर्व्वोक्तेत्यादि। पूर्व्वोक्तानि यानि सूत्रद्वयोक्तनिमित्तानितत्रानुबन्धरहिताच्च धातोः परस्मैपदं भवति। स च धातुपाठात् ज्ञेयः। अथ विभक्तिषु परस्मैपदात्मनेपदयोर्वचनसंख्यामाह। सूत्रम्।

**नव परस्मै पदानि। तिबादीनामष्टादशसंख्याकानामाद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति। पराण्यात् पराण्यग्रेतनान्यात्मनेपदानि भवंति।**

नव। (प्र० ब०) जश्शसोर्लुक्। परस्मैपदानि (प्र० ब०) नपुंसकद्विपदं सूत्रम्। तिबादीनामिति वर्त्तमानविधिसंभावनाशीःप्रेरणानद्यतनपरोक्षार्थाशीरर्थश्वस्तनार्थभविष्यत्क्रियातिपत्तिभूतार्थलक्षणानां दश विभक्तीनां यान्यष्टादशाऽष्टादश वचनानि तेषां मध्ये आद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति। तानि परस्मैपदिभ्यो धातुभ्यः प्रयुज्यंते। पराणि तिबादानामेव पराणि नवव चनेभ्य उत्तराणि ते आते अन्ते इत्यादीनि नव वचनानि आत्मनेपदसंज्ञानि भवन्ति तथात्रकेषुचित्पुस्तकेषु पराण्यात् इति सूत्रं दृश्यते। तत्र पराणि (प्र.ब.) आत्द्विपदं पराणि नववचनानि आत्मनेपदसंज्ञानि भवंतीति वृत्तिः सुगमा॥ अथाख्यातविभक्तीनां मध्ये सर्व्ववैयाकरणसमयप्रतिपालनार्थं वर्तमानविभक्तिप्रयोगसूत्रमाह।

**वर्तमाने॥ परस्मैपदानि॥**

| | | | |
|---|---|---|---|
| १ | तिप् | तस् | अन्ति |
| २ | सिप् | थस् | थ |
| ३ | मिप् | वस् | मस् |

**॥ आत्मनेपदानि॥**

| | | | |
|---|---|---|---|
| १ | ते | आते | अन्ते |
| २ | से | आथे | ध्वे |
| ३ | ए | वहे | महे |

**प्रारब्धो परिसमाप्तश्च वर्तमानः तस्मिन्नभिधेये तिबादयः प्रत्यया भवन्ति। अस्य तिबादेः पाणिनीयानां लडिति संज्ञा।**

वर्त्तमाने (स० ए०) तिप्। तस्। अन्ति। सिप्। थस्। थ। मिप्। वस्। मस्। ते। आते। अन्ते। से। आथे। ध्वे। ए। वहे। महे। सर्वाण्यप्येतानि प्रथमैकवचनान्तानि साङ्केतिकानि एवमेकोनविंशतिपदं सूत्रम्। अथ वृत्तिकारो वर्त्तमानइति पदं व्याचष्टे। प्रारब्धेति। कश्चित्कालः क्रियायाः

प्रथमक्षणे एव लग्नः स प्रारब्धः स यावत् अपरिसमाप्तः अपरिपूर्णस्तावद्वर्त्तमान इत्युच्यते । प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्त्तमानस्तस्मिन् उक्तलक्षणे वर्त्तमाने कालेऽभिधेये वाच्यमाने सति धातोस्तिबादयो महेपर्यन्ता अष्टादश प्रत्यया विभक्तिलक्षणा भवन्ति, प्रयुज्यन्ते इत्यर्थः । तत्र तिबादयो मस्पर्यंताः परस्मैपदसंज्ञाः तेआदयो महेपर्यंता आत्मनेपदसंज्ञाः । अथ ग्रंथान्तरे एतेषामेवाष्टादशवचनानां संज्ञान्तरमाह । अस्येति । पाणिनीयानाम् आचार्याणां पाणिन्युक्तग्रन्थपाठिनां वा मते अस्य तिबादेरष्टादशसंख्यस्य प्रत्ययगणस्य लट् इति संज्ञा ज्ञेया। वर्त्तमानेलट् १, विधिसंभावनयोर्लिङ् २, आशीःप्रेरणयोर्लोट् ३, अनद्यतने० लङ्४, परोक्षे लिट् ५, आशिषि लिङ् ६,श्वस्तने लुट् ७, भविष्यति लृट् ८,क्रियातिपत्तौ लृङ्९, भूतेलुङ्१० इति दश लकारास्तत्र वर्तमाने लट् । एतेषामेव प्रत्ययानां त्रित्रिवचनविभागभेदेन पुरुषसंज्ञामाह । सूत्रम् ।

**नाम्नि च युष्मदि चास्मदि च भागैः । नामादिषूपपदेषु प्राप्तेषु सत्सु त्रिभिर्भागैरेते प्रत्यया भवन्ति । ते च त्रयो भागा यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । नाम्नि प्रयुज्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषः । युष्मदि मध्यमः । तथैवास्मद्युत्तमः । भू सत्तायाम् ।**

**नाम्नि च युष्मदि च अस्मदि च भागैः ।** ( सप्तपदं सूत्रम् ) नामादिष्विति । देवः देवौ देवाः । अथवा सः तौ ते इति नामत्वं । युवां यूयम् इति युष्मद् । अहम् आवां वयम् इति अस्मद् । नामयुष्मदस्मल्लक्षणेषु पदेषु उपपदेषु समीपे प्रयुज्यमानेषु परस्मैपदिनामात्मनेपदिनां च प्रत्येकं त्रिभिर्भागैश्छेदैः कृत्वा एते उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति । तत्र तिप् तस् अन्ति इति परस्मैपदे । ते आते अन्ते इत्यात्मनेपदे । सिप् १, थस् २, थ ३, से, आथे २, ध्वे ३ इति परस्मैपदात्मनेपदयोर्मध्यमपुरुषसंज्ञा । मिप् १ वस् २ मस् ३ परस्मैपदे । ए १ वहे २ महे ३ आत्मनेपदे इत्युत्तमपुरुषसंज्ञा ॥ ३ ॥ अथ नामादिषु प्रथमादिपुरुषप्रयोगशिक्षामाह । नाम्नीति । नाम्नि सामान्यलक्षणे प्रयुज्यमाने उच्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषो भवति । युष्मदस्मदोश्च प्रयोगेऽप्रयोगे मध्यमपुरुषोत्तमपुरुषौ भवतः । ते च त्रयो भागाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवंति । तेषां ग्रंथेषूदाहरणानि प्रदर्श्यन्ते । प्रयुज्यमाने यथा । चंपूकथायां+' जयति गिरिसुतायाः कामसंतापवाहिन्युरसि रसनिषेकश्चंदनश्चंद्रमौलेः ' इति । यदि वा–' तं संतः श्रोतुमर्हन्ति । ' तथाऽप्रयुज्यमाने यथा रत्नमालायां । ' शिशिरपूर्वमृतुत्रयमुत्तरं श्ययनमाहुरहश्च

तदामरम्।' इत्यत्र बुधा इत्यप्रयुज्यमानेऽपि नाम्नि आहुरितिप्रथमपुरुषप्रयोगः। तथा युष्मदि प्रयुज्यमाने ऽप्रयुज्यमानेऽपि मध्यमपुरुषः। यथा+कुमारसंभवे--'त्वं पितॄणामपि पिता देवानामपि देवता॥ परतोऽपि परश्चासि विधाता वेधसामपि॥ १॥' इति प्रयुज्यमाने मध्यमपुरुषप्रयोगः। अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमपुरुषः। प्रयुज्यमाने यथा। 'तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवंदे भग्नैहैःकालमीशम्'। अप्रयुज्यमाने यथा। 'मंदः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्' इत्यादि। अथ परस्मैपदप्रयोगशिक्षामाह।

**कर्तरि पं च। पं च परस्मैपदं कर्तरि भवति। चकारादात्मनेपदमपि। तत्र भूइत्येतस्मात्परस्मैपदिनोऽब्विकरणात्कर्तरि तिबादयो योज्यन्ते। तत्रैकत्वविवक्षायां प्रथमपुरुषैकवचने भू तिप् इति स्थिते। पकारः पित्कार्यार्थः।**

**कर्तरि पंच।** त्रिपदम्। पम् इति परस्मैपदं तिप् तस् अन्ति इत्यादि नवलक्षणं कर्तरि कर्त्रुक्तावेव भवति। न केवलं परस्मैपदं किंतु आत्मनेपदमपि कर्त्रुक्तौ भवति। अयं भावः। परस्मैपदिनां धातूनां कर्तरि परस्मैपदं भवति। आत्मनेपदिनामात्मनेपदं भवति। उभयपदिनां तु उभे अपि आत्मनेपदपरस्मैपदे भवतः। यथा-'जयंति सन्त' इति परस्मैपदम्। तदनु च विजयन्ते इत्यात्मनेपदम्। 'सारस्वतीमृजुं कुर्वे' इत्यत्र करोतेर्धातोरात्मनेपदम्। 'प्रक्रियाकौमुदीं कुर्मः' इति परस्मैपदम्। एवमन्यत्राप्यूह्यं। कर्मोक्तौ तु आत्मनेपदमेव भवति। अत्र प्रथमं यदुक्तं भ्वादिरिति सूत्रेण भूइत्यादीनां धातुसंज्ञा प्रतिपादिता तेन भूधातोर्देशानामपि लकाराणां प्रयोगं चिकीर्षुः प्रथमं वर्तमानार्थविभक्तिप्रयोगं दर्शयति। तत्रेति। तेषु परस्मैपदात्मनेपदोभयपदलक्षणेषु धातुषु भूसत्तायामित्यादिर्धातुरुदात्तत्वात्परस्मैपदी वर्तते। स चाब्विकरणो भवति। विक्रियतेऽवस्थान्तरं भजते धातुरनेनेति विकरणम्। यथा प्रकृतिप्रत्ययार्थाभिधानेन सहापोविकरणम्। यद्वा प्रकृतिप्रत्ययांतःपाती गणविभागकारकः प्रत्ययो विकरणं सचाप्कर्त्तरीत्याद्याख्यातोक्तः प्रत्ययस्तद्विकरणमुच्यते। अब्विकरणं यस्यासौ अब्विकरणस्तस्मात्परस्मैपदिनोऽब्विकरणाच्च तिबादयः परस्मैपदार्था नव प्रत्यया योज्यन्ते। इह हि धातवो दशधा। तत्राब्विकरणा भ्वादयः १, लुग्विकरणा अदादयः २, लुग्विकरणा अपि द्विरुक्तह्लादयः ३, यविकरणा दिवादयः ४, उविकरणाः स्वादयः ५, नुम्विकरणा रुधादयः ६, उप्विकरणास्तनादयः ७, अविकरणास्तुदादयः ८, नाविकरणाः क्र्यादयः ९, स्वार्थेऽय्यंताश्चुरादयः १०। तेषु भूधातुरब्विकरणस्तस्मात्तिबादयः प्रयोज्यन्ते। भूसत्तायाम् अयं धातुः सत्तायां विद्यमानार्थे भवनार्थे। परस्मैपदी। परतोऽन्यत्

सूत्रात् । अकर्मकोऽयं । भूङ् प्राप्तौ आत्मनेपदी । सकर्मकोऽयम् । द्वयोर्धात्वो रूपाणि निगद्यन्ते । तत्रादौ परस्मैपदिनो रूपाणि कथ्यन्ते । पश्चादात्मनेपदिनः । भूधातोस्तिबादयो नव विभक्तयो भवन्ति । भूप्रथमपुरुषैकवचनं तिप् । अत्र पकारः पित्कार्यार्थः, पित्कार्यं च । अपित्तादिर्ङित् । अवादावीप्पित्तिन्त्स्मि । उरौ इत्यादि तदर्थोऽयं पकारः । 'भू ति' इति स्थिते । सूत्रम् ।

अप् कर्तरि । धातोरप्प्रत्ययो भवति कर्तरि विहितेषु त्यादिषु चतुर्षु दिप्पर्यन्तेषु परतः । पकारो विकरणभेदज्ञापनार्थो गुणार्थश्च । प्रकृतिप्रत्ययान्तः पतति यः प्रत्ययः स विकरणः ।

अप् (प्र. ए.) कर्त्तरि (स० ए०) द्विपदं सूत्रम् । धातोरिति भ्वादेर्धातोः प्रत्ययान्ताच्च धातोः कर्त्तरि अप्प्रत्ययो भवति तिबादिषु दिबाद्यन्तेषु चतुर्षु वर्त्तमानार्थविधिसंभावनार्थाशीःप्रेरणार्थानद्यतनार्थलक्षितेषु चतुर्षु प्रत्ययगणेषु परेषु सत्सु अप्रत्ययोभवतीत्यर्थः । अप्इत्यत्र पकारो विकरणभेदज्ञापनार्थः । यतोऽत्राप्प्रत्ययोऽवशिष्यते तुदादेरः इत्यत्राप्यकारोऽवशिष्यते । इत्थम् अप्प्रत्ययस्यान्तरं न लक्ष्येत । अतः प्रत्ययभेदज्ञापनार्थमयं पकारः । पित्कार्यार्थश्च । भू अ इति स्थिते

गुणः । धातोरन्त्यभूतस्य नामिनो गुणो भवति । अवादेशः । भवति । द्व्यर्थविवक्षायां तस् ।

गुणः । (प्र० ए०) स्रो०धातोः धातुसंबंधिनोऽन्त्यभूतस्य नामिनः इवर्णोवर्णऋवर्णानां गुणः संज्ञासंप्युक्तो भवति । क्वचित्पिति परे इति दृश्यते तदनियतं । पितं विनापि बिभरांचक्रतुरित्यादौ गुणस्य दृश्यमानत्वात् । भोअति इति स्थिते । अवादेशश्चेति । ओअव् स्वरहीनं । भवति इति सिद्धम् । द्व्यर्थविवक्षायां । द्वयोर्वाच्यमानयोः सतोः प्रथमपुरुषद्विवचनं तस् । भू तस् । (अप्कर्त्त०) भू अ तस् इति स्थिते गुणः । ननु अप्प्रत्ययं विनापि गुणः क्रियतां तदर्थं सूत्रमाह ।

अपित्तादिर्ङित् । पकारेतंतादिकं च विहायान्यः प्रत्ययो ङित्संज्ञो भवति । अन्य इति किम् । इडामाद्यवर्जितो दशलकारान्तःपाती ङित् । आदिशब्दात्सीसिग्रहणम् ।

( अपित्तादि० ) प इत् यस्यासौ पित् । त आदिर्यस्यासौ तादिः पिच्च तादिश्च पित्तादी । ताभ्यामन्योऽपित्तादिः ( प्र० ए० ) ङ् इत् यस्या-

सौ ङित् (प्र. ए.) द्विपदं पकारानुबन्धं तिप् उप् प्रत्ययादिकं तादिकं । ता । तारौ । तारस् । इत्यादिश्वस्तनार्थप्रत्ययं च विहाय त्यक्त्वा योऽन्यः प्रत्ययः स ङकारानुबन्धं विनापि आख्याते ङित्संज्ञो भवति । पकारेतं तादिकं चेति आदिशब्दात्सिस्योर्ग्रहणम् । तेन भूतार्थे सिप्रत्यये परे अवर्तिष्ट अदर्शयत् इत्यादौ गुणः । तथा आशिषि सीष्टप्रत्यये परे चेषीष्ट स्तोषीष्टेत्यादौ गुणः । अथ ङित्प्रयोजनमाह । सूत्रम् ।

क्ङित्यद्व्युसि । किति ङिति च परे धातोर्गुणो भवति द्व्युसं वर्जयित्वा । कृतद्विर्वचनस्य उसि परे तु गुणो भवति । ततो ङित्त्वात्तसि गुणप्रतिषेधेऽप्प्रत्ययनिमित्तो गुणो भवत्येव । स्रोर्विसर्गः । भवतः । बह्वर्थविवक्षायां भव अन्ति इति स्थिते । अदे । अकारस्य लोपो भवति अकारे एकारे च परे । अदे इत्यत्र अकारैकारौ तिबादिप्रत्ययस्येत्यर्थः । भवन्ति । भवसि भवथः भवथ ।

क्ङित्यद्व्युसि । क्च ङ्च क्ङौ तौ इतौ यस्य स क्ङित् तस्मिन् क्ङिति (स. ए.) द्विरिति द्विरुक्तो धातुः । द्वेः द्विरुक्तस्य धातोः उस् द्व्युस् तस्मादन्योऽद्व्युस् । तस्मिन् अद्व्युसि (स. ए.) द्विपदं सूत्रम् । किति पिति व्यतिरिक्तेण बादौ यक् प्रत्ययादौ च ङिति तादिवर्जिते प्रत्यये यङ्प्रत्ययादौ च परे धातोर्नामिनो गुणो न भवति । तत्रापि विशेषमाह । द्व्युसमित्यादि द्वेर्द्विरुक्तस्य धातोः उस् द्व्युस् तं द्व्युसं वर्जयित्वाऽन्यत्र गुणो न भवतीत्यर्थः । कृतद्विर्वचनादिति अप्प्रत्ययस्य लुकि कृते भ्वादेर्धातोर्द्विरुक्तात्कृतद्वित्वात्परस्य योऽन्स्थाने उसादेशो विहितः तस्मिन्परे सति ङित्त्वेपि गुणो भवतीत्यर्थः । ततोऽत्र प्रस्तुते भूधातौ तस्य ङित्त्वात्तसि परे गुणप्रतिषेधेपि अप्प्रत्ययनिमित्तो गुणो भवत्यव गुणे कृते ओ अव् । स्वर० । स्रो० भवतः इति सिद्धं वन्हर्थानां बहूनां वक्तुमिच्छा यत्र क्रियते तत्र बहुवचने भू अन्ति इति स्थिते(अप्कर्त्त०) ( गुणः ) ओ अव् । स्वर० भव अंति इति जातम् । सूत्रम् । अच एच अदे तस्मिन् (स. ए.) सांके० । अकारस्य त्यादिप्रत्ययस्थे अकारे एकारे च परे लोपो भवति । अनेन वमध्यस्थितस्याऽप्प्रत्ययसंबंधिनोऽकारस्य लोपः । स्वर० । भवंति इति प्रथमपुरुषस्य वचनत्रयसाधनम् । एवं भवसि । भवथः । भवथ । इति मध्यमपुरुषे वचनत्रयसाधना । उत्तमपुरुषवचनत्रयेऽपि अप्प्रत्यये नामिनो गुणे च कृते । ओअव् । स्वर० भवामि । भववः । भवमः । इति स्थिते । सूत्रम् ।

व्मोरा । अकारस्य आत्वं भवति वकारे मकारे च परे ।

भवामि भवावः भवामः । स राजा धार्मिको भवति । त्वं साधुर्भवसि । अहमात्मविद्भवामि । इत्यादि प्रयोक्तव्यम् ।

वृन्च मृच वमौ तयोर्म्मौः । ( स. द्वि. ) आ ( प्र. ए. ) । सांके० । प्रत्ययसंबंधिनोऽकारस्य तिबादेर्वकारे मकारे च परे आत्वं भवति । अनेनाऽपोऽकारस्य आकारः । भवामि । भवावः । भवामः । इति सिद्धम् । अथ ग्रंथकारः उक्तिप्रयोगमाह । स राजा धार्म्मिको भवति । अत्र राजा इति कर्तृपदम् । भवतीति क्रियापदम् । धातोः कर्म्मनिरपेक्षत्वात् अकर्म्मकत्वं धार्म्मिक इति विशेषणपदम् । एवं तौ राजानौ धार्म्मिकौ भवतः । ते राजानो धार्म्मिका भवन्ति । त्वं साधुर्भवसि । युवां साधू भवथः । यूयं साधवो भवथ । अहम् आत्मविद्भवामि । आवाम् आत्मविदौ भवावः । वयम् आत्मविदो भवामः । इत्यादि उक्तिवाक्यं प्रयोज्यं । अथ पुरुषभेदमाह । नामयुष्मदस्मदां द्वयोस्त्रयाणां वा युगपद्योगे कस्य पुरुषस्य क्रियापदं भवतीत्यत आह । सूत्रम् ।

अव्यवधानाच्च पुरुषविशेषः । यस्य क्रियापदेन व्यवधानं नास्ति ततः पुरुषविशेषः । अत्र व्यवधानं सूत्रस्थं ग्राह्यं न तु वाक्यस्थम् । सूत्रक्रमेण पुरुषप्रयोगो भवति । साधू स च त्वं च भवथः । अहं, त्वं, स च पण्डिता भवामः । भूङ् प्राप्तौ आत्मनेपदी । तस्मात्तेप्रभृतीनि नव वचनानि प्रयोज्यानि । अपूगुणावः । भवते ।

अव्यवधानाच्चेति । अव्यवधानात् पुरुषविशेषः । अव्यवधानाच्च पुरुषक्रियाभिः सहाऽव्यवधानादन्तरराहित्यात् प्रथममध्यमोत्तमानां क्रमेण पुरुषविशेषः, चकारात् क्रियाभिर्व्यवधानादंतरसाहित्यात् उत्तममध्यमप्रथमानां व्युत्क्रमेण पुरुषविशेषः, मध्यमप्रथमयोर्मध्यमः, उत्तममध्यमयोरुत्तमः । उत्तममध्यमप्रथमेपूत्तमः । एवं सर्वलकारेषु ज्ञेयम् । स च त्वं च भवथः इति क्रमव्युत्क्रमे पुरुषविशेषः । अहं स च भवावः । अहं च त्वं च भवावः । अहं च त्वं च स च भवामः । इति व्युत्क्रमोऽप्येवमेव ज्ञातव्यः ॥ १ ॥ ( अव्यवधानात् अंतरराहितत्त्वात् क्रियायाः सामीप्यात् पुरुषविशेषः प्रयोक्तव्यः । प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाणां विशेषः स्यात् । अयमर्थः । नामयुष्मदस्मदां पुरुषत्रयाणां मध्ये द्वयोस्त्रयाणां वा युगपत्प्रयोगे सति य· क्रियायाः समीपस्थं पदं तस्यैव पदस्य पुरुषो भवति । तस्यैव पुरुषस्य क्रियापदं प्रयोज्यम् । यथा साधू स च त्वं भवथः इति । अत्र स च त्वं च इत्यत्र युष्मदः क्रि-

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ईत | ईयाताम् | ईरन् |
| २ | ईथास् | ईयाथाम् | ईध्वम् |
| ३ | ईय | ईवहि | ईमहि |

**विधिश्च संभावनं च** विधिसंभावने तयोर्विधिसंभावनयोः (स. द्वि.) शेषाण्यष्टादशापि पदानि प्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । अथ विधिसंभावनयोरिति पदं व्याचष्टे विधिरित्यादि।कर्त्तव्यः कर्त्तुं योग्यो योऽर्थः तस्योपदेशः शिक्षा स कर्त्तव्यार्थोपदेशः अथवाऽज्ञातस्य वस्तुनो ज्ञापनं विधिः। कर्त्तव्यार्थोपदेशो यथा विप्रो वेदमधीते । अज्ञातज्ञापनं मातःकृत्यादिशिक्षारूपः सर्वोऽप्ययं विधिः तथा संभावनं कल्पनं विचारणमुच्यते । तस्य पर्यायान्तरम् ऊह इति वितर्के इत्यर्थः । ततो विधौ संभावने च यादादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां यादादीनामष्टानां पाणिनीयपाठकानां मते लिङ् इति संज्ञा । लिट् इत्यशुद्धः पाठः । तत्र प्रथमपुरुषैकवचने 'भूयात्' इति स्थिते । अप्कर्त्त॰ गुणः॰ । ओ अव् । स्वरही॰ । भव यात् इति स्थिते । सूत्रम् ।

**याई । अकारात्परो या ई भवति । अइए । भवेत् भवेताम् भवेयुः ।**

याई । (प्र. ए.) सांके॰ । अकारात्परो विधिसंभावनसंबंधी प्रत्ययस्य यो या इति वर्णः स इ भवति । अनेन या इत्यस्य इकारः । अइए । भवेत् अग्रे प्रथमपुरुषबहुवचनोत्तमपुरुषैकवचनं वर्ज्जयित्वा सर्वत्र या इत्यस्य इकारः । अइए । भवेतां । बहुवचने भव युस् इति स्थिते । सूत्रम् ।

**युस इट् । अकारात्परस्य युस इडागमो भवति । भवेः, भवेतम्, भवेत ।**

युस् (ष. ए.) इट् (प्र. ए.) द्विपदं सूत्रम् । अकारात्परस्य युस् इत्येतस्य वचनस्य इडागमो भवति । टित्त्वादादौ । अइए । भवेयुः । भवेः भवेतं भवेत । सर्व्वत्र या इतीकारः । उत्तमपुरुषैकवचने भव याम् इति स्थिते । सूत्रम् ।

**यामियम् । अकारात्परो यामियं भवति । भवेयम् भवेव भवेम । शिष्यो गुरुशुश्रूषको भवेदिति विधिः । भवेदसौ वेदपारगो ब्राह्मणत्वादिति संभावनम् । भवेत, भवेयाताम्,**

भवेरन्। भवेथाः, भवेयाथाम्, भवेध्वम्। भवेय, भवेवहि, भवेमहि। अहं हरिभक्तिं भवेय।

याम्। (ष. ए.) इयम् (प्र. ए.) अकारात्परस्य याम् इति वचनस्य इयम् इत्यादेशो भवति गुरुत्वात्सर्वस्यादेशः। अइए। भवेयं। द्वित्वबहुत्वयोः या इतीकारः। भवेव भवेम इति सिद्धं। अथोदाहरणमाह। शिष्यो गुरुशुश्रूषको भवेदिति विधिः। अत्र शिष्यस्य गुरुशुश्रूषारूपः कर्त्तव्यार्थः अस्योपदेशो विधिः। शिष्येण गुरुशुश्रूषा कर्त्तव्येत्युपदिश्यते। ततोऽत्रविधौ यादादयः। तथासौ ब्राह्मणो ब्राह्मणत्वाद्वेदपारगो भवेत् इति संभावने संभवेऽर्थे यादादयः प्रत्ययाः स्युः। ब्राह्मणत्वेन वेदपारगत्वं संभाव्यते इत्यर्थः। एवमन्यान्यप्युदाहरणानि ज्ञेयानि। तथात्मनेपदिनो भूङ्धातोरीतादीनि नव वचनानि प्रयोज्यानि। भू ईत इति स्थिते अप् कर्त्तरि गुणः। ओ अव्। स्वरहीनम्। अइए। भवेत। भवेयातां। भवेरन्। अन्यानि रूपाणि मूले सन्ति। तानि अनेनैव प्रकारेण साध्यानि। अह हरिभक्तिं भवेयेत्युदाहरणम्। समाप्तोयं लिङ्लकारः। अथ लोट्लकारः कथ्यते। सूत्रम्।

आशीःप्रेरणयोः। अप्राप्तप्रार्थनमाशीः परस्येष्टार्थशंसनं प्रेरणं प्रवर्तनं तत्र तुवादयः प्रत्यया भवन्ति। एषां संज्ञा लोट्।

॥ परस्मैपदानि ॥

| | एकवचनानि। | द्विवचनानि। | बहुवचनानि। |
|---|---|---|---|
| १ | तुप् | ताम् | अन्तु |
| २ | हि | तम् | त |
| ३ | आनिप् | आवप् | आमप् |

॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ताम् | आताम् | अन्ताम् |
| २ | स्व | आथाम् | ध्वम् |
| ३ | ऐप् | आवहैप् | आमहैप् |

आशीःप्रेरणयोः। आशीश्च प्रेरणं च आशीःप्रेरणे तयोः आशीःप्रेरणयोः (स. द्वि.) शेषाणि तुवादीनि आमहैप् पर्यन्तान्यष्टादश पदानि प्रथमैकवचनान्तानि साङ्केतिकानि एवमेकोनविंशतिपदं सूत्रम्। आशिषं प्रेरणं च व्याचष्टे। अप्राप्तस्य

वस्तुनः स्वयं प्रार्थनं मे इदं वस्तु भवतु इत्याशीः । परस्यान्यजनस्य वा इष्टार्थशंसनं वांछितार्थकथनं वा आशीरुच्यते । तथा हे सौम्येदं कार्यं कुरु इति यत्प्रवर्त्तनं तदेव प्रेरणं तत्र आशिषि प्रेरणे च तुबादयआमहैप् पर्यन्ता अष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवंति । एषां च तुबादीनां पाणिनीयमते लोट् इति संज्ञा कथ्यते । तत्र परस्मैपदिनो भूधातोस्तुबादयो नव प्रत्यया भवंति । भू तुप् । इति स्थिते । अप् कर्त्तरि । गुणः । ओ अव् । स्वरहीनं । पकारः । भवतु । भू तुप् । इति स्थिते । सूत्रम् ।

तुह्योस्तातङाशिषि वा वक्तव्यः । भवतु-भवतात्, भवताम्, भवन्तु ।

तुह्यो० । तुश्च हिश्च तुही तयोः तुह्योः । आशीःप्रेरणे तुप् हि इत्येतयोर्वचनयोराशिष्यर्थे वाच्यमाने तातङ् इत्यादेशो वा भवति । ङकारो ङित्कार्यार्थः । गुणनिषेधार्थः । न त्वन्त्यादेशार्थः । अत्र तु अप्प्रत्ययनिमित्तो गुणो भवत्येव । अकार उच्चारणार्थः । गुरुत्वात्सर्वस्य तात् इति । तेन प्रथमपुरुषैकवचने रूपद्वयम् । अनेन सूत्रेण भू तात् इति जाते अप्कर्त्तरि । गुणः । ओ अव् । स्वरहीनं० । भवतात् । भवतां । भव अन्तु इति स्थिते । अदे । अनेनाकारस्य लोपः । भवन्तु । मध्यमपुरुषैकवचने । भव हि । इति स्थिते । सूत्रम् ।

अतः । अकारात्परस्य हेर्लुग्भवति । न तु तातङः । तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं नत्वन्त्यादेशार्थम् । भव-भवतात्, भवतम्, भवत । भवानि, भवाव, भवाम । आयुष्मान् भवतु भवान् । अध्ययनायोद्यतो भव सौम्य । भवताम्, भवेताम्, भवन्ताम् । भवस्व, भवेथाम्, भवध्वम् । भवै, भवावहै, भवामहै । हरिं भवस्व स त्वम् ।

अतः । ( पं. ए. ) अकारादुत्तरस्य हि इति वचनस्य लुग्भवति । न तु तातङः । अनेन हेर्लुक् । भव इति सिद्धं । द्वितीयरूपे तुह्योरिति तातङादेशः । भवतात् । भवतं । भवत । उत्तमपुरुषवचनत्रयेऽपि । सवर्णे । भवानि । भवाव भवाम । अथोदाहरणम् । भवान् आयुष्मान् भवतु । दीर्घायुर्भवतु इत्याशीः । एवं भवन्तौ आयुष्मन्तौ भवतां । भवंतः आयुष्मंतो भवंतु । अत्र यद्यपि भवच्छब्दो युष्मदर्थवाची तथापि सामान्येन नामरूपत्वात्प्रथमपुरुषप्रयोगः । हे सौम्य त्वम् अध्ययनाय पठनाय उद्यतः सावधानो भव । अत्र प्रेरणे मध्यमपुरुषैकवचनप्रयोगः । एवमन्यदप्युदाहरणं

ज्ञेयम्। तथात्मनेपदिनो भूङ्धातोस्तामादयो नव प्रत्यया भवन्ति। भू ताम् इति स्थिते। अप्कर्त्तरि। गुणः। ओ अव्। स्वरहीनं०। भवतां। भव आताम् इति स्थिते। 'आदाथई' अनेनाकारस्य ईकारः। भवेतां। अदे। भवन्तां। भवस्व। आदाथई। भवेथां। भवध्वं। एएऐ। भवै। सवर्णे दीर्घः। भवावहै। भवामहै। हरिं भवस्व त्वम् इत्युदाहरणम्। अथ। लङ्लकारः कथ्यते। सूत्रम्।

अनद्यतनेऽतीते। अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमयामद्वयं सोऽद्यतनस्ततोऽन्योऽनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले दिबादयः प्रत्यया भवन्ति। एषां संज्ञा लङ्॥

॥ परस्मैपदानि ॥

| | एकवचनानि। | द्विवचनानि। | बहुवचनानि। |
|---|---|---|---|
| १ | दिप् | ताम् | अन् |
| २ | सिप् | तम् | त |
| ३ | अमिप् | व | म |

॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | तन् | आताम् | अन्त |
| २ | थास् | आथाम् | ध्वम् |
| ३ | ई | वहि | महि |

दिसिमि इत्येतेषामिकार उच्चारणार्थः। ततो नकार इणुतन्यकर्तरीति विशेषणार्थः। वावसाने इति दकारस्य तकारः।

अनद्यतने इत्यादि। अद्यभवोऽद्यतनस्तदन्योऽनद्यतनः। तस्मिन् अनद्यतने (स. ए.) अतीते (स. ए.) अग्रे दिबादीन्यष्टादश पदानि। प्रथमैकवचनान्तानि साङ्केतिकानि। एवं विंशतिपदं सूत्रम्। अथ वृत्तिकारोऽनद्यतनेऽतीते इति पदं व्याचष्टे। अतीताया इति वर्त्तमानदिनात् प्राक् अतीताया गताया रात्रेः अन्त्ययामद्वयात् अर्वाक् वर्त्तमानदिनं संयोज्य यावत् आगामिन्या आसन्नवर्त्तिन्या रात्रेः प्रथमप्रहरद्वयं सोऽष्टप्रहरप्रमाणः कालोऽद्यतन इत्युच्यते। गतरात्रेः पश्चिमप्रहरद्वयं सकलो दिवसः आगामिन्या रात्रेः पूर्वं प्रहरद्वयं सोऽद्यतनः ततोऽन्या कालोऽनद्यतनः स च अनद्यतनो द्विधा अतीताऽनागतभेदात्। तत्रातीते गतेऽन-

द्यतने काले वाच्यमाने धातोः दिवादयो महिपर्यन्ताः परस्मैपदात्मनेपदभेदेनाऽष्टादश प्रत्यया भवन्ति । एषां चाष्टादशानां पाणिनीयमते लङ् इति संज्ञा । अनद्यतने लङ् । दिसिमीत्यादि । तत्र दिप् सिप् अमिप् इत्येतेषां पकारः पित्कार्यार्थः। इकार उच्चारणार्थः । तेन द् स् अम् इत्येव शिष्यते । आत्मनेपदे तन् इति वचनस्य नकारः इणूतन्यकर्त्तरीति सूत्रार्थः । परस्मैपदिनो भूधातोर्दिवादयो नव प्रत्यया भवन्ति । भू दिप् इति स्थिते अप्कर्त्तरि । गुणः । ओ अव् । स्वरहीनं० । प्रथमपुरुषैकवचने 'वावसाने' अनेन दस्य तः । भवत् इति जाते । सूत्रम् ।

दिवादावट् । दिवादौ परे धातोरडागमो भवति । अभवत्, अभवताम्, अभवन् । अभवः, अभवतम्, अभवत । अभवम्, अभवाव, अभवाम । ह्योऽभवत्त्वत्पुत्रः । अभवत, अभवेताम्, अभवन्त । अभवथाः, अभवेथाम्, अभवध्वम् । अभवे, अभवावहि, अभवामहि । स राज्यमभवत ।

दिवादावट् । दिप् आदिर्यस्यासौ दिवादिः । तस्मिन् दिवादौ (स. ए.) अट् (प्र. ए.) मध्ये उ अव् । द्विपदं सूत्रम् । दिवादौ प्रत्यये परे सति धातोः अट् इत्यागमो भवति टित्त्वादादौ । अभवत् । अभवद् । अभवतां । बहुवचने अदे इत्यकारलोपः । स्वर० । अभवन् । मध्यमपुरुषैकवचने स्रो० । अभवः । अभवतं । अभवत । उत्तमपुरुषैकवचने अदे । स्वर० । अभवं द्वित्वबहुत्वयोः । व्योरा । अभवाव । अभवाम । अथोदाह० । ह्यः अतीतदिने पूर्वेद्युः तव पुत्रोऽभवत् । एवं ह्यः तव पुत्रावभवतां । ह्यः तव पुत्रा अभवन् । ह्यस्त्वमभवः । ह्यो युवामभवतं । ह्यो यूयमभवत । ह्योऽहमभवं । ह्यः आवामभवाव । ह्यो वयमभवाम । इत्यादीन्युदाहरणानि योज्यानि । तथात्मनेपदिनो भूङ्धातोस्तनादयो नव प्रत्यया भवन्ति । भू तन् इति स्थिते । अप् कर्तरि गुणः । ओ अव् । दिवादावट् । तनो नकारः । अभवत ॥ आदाथई । अइए । अभवेताम् । अभवन्त । अभवथाः । अभवेथां । अभवध्वं । अइए । अभवे । अभवावहि । अभवामहि । स पुरुषो राज्यमभवत ॥ इत्युदाहरणम् ॥

॥ समाप्तोऽयं चतुर्थो लकारः ॥ ४ ॥

---

परोक्षे । धातोः परोक्षेऽतीतेकाले णबादयःप्रत्यया भवन्ति । एषां संज्ञा लिट् ।

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | णप् | अतुस् | उस् |
| २ | थप् | अथुस् | अ |
| ३ | णप् | व | म |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ए | आते | इरे |
| २ | से | आथे | ध्वे |
| ३ | ए | वहे | महे |

अथ णबादिविभक्तिषट्कं कर्त्तरि कर्त्रुक्तौ प्रणीयते दर्श्यते इत्यर्थः । सूत्रं । परोक्षे । (स० ए०) अक्षेभ्यः परोऽगोचरः परोऽक्षस्तस्मिन् परोक्षे । कचित्समासान्तस्य परत्वमिति परशब्दस्यादौ प्रयोगः । अक्षशब्दस्य परत्वं परः शब्दोऽत्र सान्तो निपातो गृह्यते । परार्थवाचको न परशब्दः यथा अलुक् कचित् । प्रक्रियामते तु पारस्करादित्वात् । सुडागमः । णबादीन्यष्टादशापि पदानि साङ्केतिकप्रथमैकवचनान्तानि । एवमेकोनविंशतिपदं सूत्रम् । परोक्षे इन्द्रियागोचरे अतीते गते काले णबादयोऽष्टादश प्रत्ययाः । परस्मैपदात्मनेपदभेदेन भवन्ति । एषां पाणिनीयमते लिट् इति संज्ञा ।

णादिः कित् । अपित् णादिः किद्भवति ।

णादिः कित् । अपित्णादिःकित् भवति । कित्त्वात्गुणाभावः । अथ भूधातोः परस्मैपदप्रक्रिया दर्श्यते ॥ भू णप् इति स्थिते । णो वृद्ध्यर्थः । पकारोऽपित्कार्यार्थः । भू अ इति स्थिते ॥ सूत्रम् ।

द्विश्च । णबादिसंयोगे धातोर्द्विर्वचनम् ।

द्विश्च । (प्र० ए०) अव्ययं च द्विपदं णबादिसंयोगेसति धातोर्द्विर्वचनं द्वित्वं भवति । सूत्रम् ।

सस्वरादिर्द्विरद्विः । सस्वराद्योऽवयवोऽद्विरुक्तो द्विर्भवति । भू भू णप् इति स्थिते । णकारो वृद्ध्यर्थः । पकारः पित्कार्यार्थः ।

सस्वरादिर्द्विरद्विः ॥ त्रिपदं सूत्रम् । सस्वरः अद्विरुक्तः आद्यावयवः द्विर्भवति भू भू अ इतिस्थिते ॥ सूत्रम् ॥

आभ्वोर्णादौ । आ अश्च भूश्च आभ्वौ तयोः पूर्वस्याकारस्य भूशब्दस्य च आकारो भवति णादौ सति ह्रस्वः । पूर्वसंबन्धिनो दीर्घस्य ह्रस्वो भवति ।

आभ्वोर्णादौ ॥ आ ( प्र. १ ) आश्च भूश्च आभ्वौ तयोः आभ्वोः ( ष. द्वि. ) णआदिर्यस्यासौ णादिः तस्मिन् णादौ ( स० ए० ) आदौ सवर्णे दीर्घः सह । द्वितीये । नामिनो रः ॥ त्रिपदं सूत्रम् । णादौ परे द्वित्वे कृते सति पूर्वस्य द्विरुक्तरूपस्य अकारस्य तथा भूधातुसंबन्धिन ऊकारस्य च आकारादेशो भवति । यद्यप्यासेत्यादौ आकारकरणं विनैव सिद्धिस्तथापि व्यानशे आनञ्ज आनर्च इत्यादिसिद्धयर्थमकारत्वमिति पूर्वस्य भू इत्येतस्य भा ॥ भा भू अ इति जाते ॥ सूत्रम् । ह्रस्वः ( प्र० ए० ) एकपदं । पूर्वसंबन्धिनः दीर्घस्य ह्रस्वो भवति । अनेन पूर्वस्य ह्रस्वः ।

झपानां जबचपाः । पूर्वसंबन्धिनां झपानां जबाश्चपाश्च भवन्ति । झढधघभानां जडदगबा भवन्ति । खफछठथानां चटतकपा भवन्ति ।

झपानां जबचपाः ॥ झपानां ( ष० ब० ) जबाश्च चपाश्च जबचपाः ( प्र० ब० ) पूर्वसंबन्धिनां झपानां जबाः चपा भवन्ति । झढदघभानां जडदगबा भवन्ति खफछठथानां कपचटता भवन्ति इत्यनेन सूत्रेण भकारस्य बकारो जातः । पुनश्च बभू अ इति जाते । सूत्रम् ।

भुवो वुक् । भुवो वुगागमो भवति णादौ स्वरे परे । बभूव बभूवतुः बभूवुः ॥

भुवः ( ष० ए० ) वुक् । ( प्र० ए० ) भूधातोः णवादौ स्वरे परे वुगागमो भवति कित्त्वादन्ते उकार उच्चारणार्थः वुग्विधानसामर्थ्यादेव गुणवृद्धी न भवतः । स्वरहीनं० । बभूव । बभूवतुः । बभूवुः । बभूव् थ इति स्थिते सूत्रम् ।

क्रादेर्णादेः । डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् संवरणे । द्रु गतौ । श्रु श्रवणे । स्नु प्रस्रवणे । ष्टुञ् स्तुतौ । कृसृभृवृद्रुश्रुस्नुस्तु इत्येतस्मात्परस्य वसादेर्णादेर्गणस्येट् न भवत्यन्यस्माद्भवतीति नियमादनिटोऽपीडाग-

मः। यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति न्याया-दिटोऽपि णबाद्यन्तत्वेन थपि वुक्। बभूविथ बभुवथुः बभू-व। बभूव बभूविव बभूविम। बलिर्बलवान् बभूव। बभूवे बभूवाते। बभूविरे। बभूविषे। बभूवाथे।

क्रादेः। कृआदिर्यस्यासौ क्रादिस्तस्मात्क्रादेः( पं० ए० ) णादेः ( ष० ए० ) द्विपदं सूत्रम्। डुकृञ्करणे। सृगतौ। डुभृञ्धारणपोषणयोः। वृञ्वरणे। द्रुगतौ। श्रु श्रवणे। ष्टुञ्स्तुतौ। इत्येतेभ्यो धातुभ्यः परस्य वस् प्रत्याहारादेर्णादिगणस्य। व-सूप्रत्याहारः आदौ यस्य स वस्प्रत्याहारादिस्तस्य वस्प्रत्याहारादेः थप् व मासे ध्वे वहे महे। इति प्रत्ययस्येडागमो न भवति। यथा चकर्थ। ससर्थ। बभर्थ। दु-द्रोथ। शुश्रोथ। तुष्टोथ। इत्यादौ इडागमो न भवति। अन्यस्माद्धातोस्तु इडागमो भवति। यतो निषेधः प्राप्तिपूर्वको भवतीति। एभ्यो धातुभ्य इड्निषेधेऽन्यस्माद्धा-तोः इट् भवतीति नियमः। इति भूधातोः णबादिषु स्वरादिव्यतिरिक्तेषु थकारवका-रमकारेषु इडागमो भवति। स्वर० बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम। बलिर्बलिराजा बलवान् बभूव। एवं रामलक्ष्मणौ बलवन्तौ बभूवतुः। पाण्डवा बलवन्तो बभूवुः। त्वं बलवान् बभूविथ। इत्युदाहरणम्। इति लिट्ल-कारस्य परस्मैपदम्। अथात्मनेपदं लिख्यते। बभूवे। बभूवाते। बभूविरे। बभूवि-षे। बभूवाथे। एतेषु रूपेषु पूर्वोक्तसूत्रेणैव सिद्धिः॥ बभूविध्वे इति जाते सति। सूत्रम्।

नामिनोऽचतुर्णां धो ढः। नाम्यन्ताद्धातोरुत्तरस्य तिबादिच-तुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोश्च धस्य ढो भवति। अत्र सेटो हलाद्वेति वक्तव्यम्। बभूविध्वे बभूविढ्वे। बभूवे बभूवि-वहे बभूविवहे। रामो राज्यं बभूवे।

नामिनोऽचतुर्णां धो ढः॥ नाम् अस्यास्तीति नामी तस्य नामिनः ( पं० ए० ) अचतुर्णां ( ष० ब० ) धः ( ष० ए० ) ढः ( प्र० ए० ) नामी अन्ते यस्य सः नाम्यन्तः तस्मात् नाम्यन्तात् धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लि-ङो लुङ्लिटोः धस्य ढकारो भवति। अनेन सूत्रेण धकारस्य ढकारो जातः। अत्र अस्मिन् सूत्रे सेटो हलाद्वेति वक्तव्यम्। अस्यार्थः॥ इटा सह वर्तमानः सेट् तस्मा-त् सेटः ( पं. ए० ) हलात् वा भवति इति विकल्पेन धस्य ढो भवति। अतो बभू-विध्वे। बभूविढ्वे। इति रूपद्वयं जातम्। बभूवे। बभूविवहे। बभूविमहे॥ रामो राज्यं बभूवे॥ भूधातो लिंट्लकारः समाप्तिमगमत्॥ एवं पञ्च लकारा उक्ताः॥ अथ षष्ठो लकारः प्रारभ्यते॥ सूत्रम्

आशिषि । धातोराशिषि यादादयो भवन्ति । एषां संज्ञा लिङ् ॥

॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | यात् | यास्ताम् | यासुस् |
| २ | यास् | यास्तम् | यास्त |
| ३ | यासम् | यास्व | यास्म |

॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | सीष्ट | सीयास्ताम् | सीरन् |
| २ | सीष्ठास् | सीयास्थाम् | सीध्वम् |
| ३ | सीय | सीवहि | सीमहि |

आशिषि । ( स० ए० ) अग्रे यादादीन्यष्टादश पदानि प्रथमैकवचनान्तानि साङ्केतिकानि । एकोनविंशतिपदं सूत्रम् ॥ धातोः केवलायामाशिषि अप्राप्तमार्थनालक्षणायां परस्येष्टार्थशंसनलक्षणायां वाच्यमानायां यादादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । पाणिनीयानां मते एषां संज्ञा लिङ् । भूधातोः परस्मैपदित्वात् नव यादादयः प्रत्यया भवन्ति । सूत्रम् ।

आशीर्वादादेः पं किदिति वक्तव्यम् । ततो गुणाभावः । भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म । सश्रीमान् भूयात् । भू सीष्ट इति स्थिते ॥

आशीर्वादादेरिति ॥ आशीर्वादादेः पं परस्मैपदं कित् भवति इति वक्तव्यम् कित्त्वात् गुणाभावः । भूयात् । भूयास्तां । भूयासुः । भूयाः । भूयास्तं । भूयास्त । भूयासं । भूयास्व । भूयास्म ॥ स पुरुषः श्रीमान् लक्ष्मीवान् भूयात् । इत्युदाहरणम् । एवं तौ श्रीमन्तौ भूयास्तां । ते श्रीमन्तो भूयासुः ॥ भूङ् प्राप्तौ इति धातोरात्मनेपदित्वात् सीष्टादयो नव प्रत्यया भवन्ति । भू सीष्ट इति स्थिते । गुणः । भोसीष्ट इति जाते । सूत्रम् ।

सिसतासीस्यपामिट् । धातोः परेषां सि स तासी स्यप् इत्येतेषामिडागमो भवति । गुणावादेशौ । षत्वम् । भविषीष्ट

भविषीयास्ताम् भाविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । सीऽव्यवधानेऽपि ढत्वम् । भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । हरिभक्तिं भाविषीष्ठाः ।

सिसतासीस्यपामिट् । सिश्च सश्च ता च सीश्च स्यप् च सिसतासीस्यपः तेषां । सिसतासीस्यपां ( ष० ब० ) इट् ( प्र० ए० ) द्विपदं सूत्रम् । सिः भूते सिः । स इति इच्छार्थः सः । तादिः श्वस्तनार्थेऽष्टादशको गणः । सी सीष्ट सीयास्तामित्यादिः आशीरर्थात्मनेपदे नवको गणः । स्यप् भविष्यत्क्रियातिपत्त्योः । धातोः परेषाम् इत्येतेषां प्रत्ययानामिडागमो भवति । टित्वादादौ । अत्र प्रथमं सीष्टादिकस्याङित्त्वाद् गुणं विधाय तत इडागमः ॥ अथवा इडागमे कृतेऽपि टित्त्वे सति ङित्त्वाभावात् गुणकरणे न दोषः ॥ ओअव् । किलात् । भविषीष्ट । भविषीयास्तां भविषीरन् । भविषीष्ठाः । भविषीयास्थां । भविषीध्वं । सीऽव्यवधानेऽपि ढत्वं भवेत् । भविषीढ्वं । भविषीय । भविषीवहि । भविषीमहि । त्वं हरिभक्तिं भविषीष्ठा इत्युदाहरणम् । इत्यात्मनेपदिनो रूपाणि । समाप्तिमगमत्षष्ठो लकारः ॥

अथ सप्तमो लकारः प्रारभ्यते ।

श्वस्तने । श्व आगतेऽह्नि भाविन्यर्थे तादयो भवन्ति । एषां संज्ञा लुट् ॥

॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | ता | तारौ | तारस् |
| २ | तासि | तास्थस् | तास्थ |
| ३ | तास्मि | तास्वस् | तास्मस् |

॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ता | तारौ | तारस् |
| २ | तासे | तासाथे | ताध्वे |
| ३ | ताहे | तास्वहे | तास्महे |

इङ्गुणावः । भविता भवितारौ भवितारः । भवितासि भवि-

तास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वस्ते हरिः प्रत्यक्षो भविता । भविता भवितारौ भवितारः । भवितासे भवितासाथे भविताध्वे । भविताहे भवितास्वहे भवितास्महे । श्वो हरिं भवितासे ।

श्वस्तने । श्वो भवः श्वस्तनस्तस्मिन् श्वस्तने ( स० ए० ) ता तारौ तारस् । इत्याद्यष्टादश पदानि सांकेतिकानि प्रथमैकवचनान्तानि इत्येकोनविंशतिपदं सूत्रम् । धातोः श्व आगामिदिने भाविनि कालेऽर्थे तादयोऽष्टादश प्रत्ययाः परस्मैपदात्मनेपदभेदेन भवन्ति । एषां पाणिनीयानां मते लुट्संज्ञा । प्रथमं परस्मैपदिनो धातो रूपाणि । भू ता इति स्थिते । गुणः । सूत्रम् । सिसतासीस्यपामिट् । इत्यनेन सूत्रेण इट् । ओ अव् । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वः प्रातःकाले तव हरिः प्रत्यक्षो भविता । अथात्मनेपदिनो भूङ्धातो रूपाणि पूर्वोक्तेनैव सूत्रेण साधितव्यानि । भविता भवितारौ भवितारः । भवितासे भवितासाथे भविताध्वे भविताह्वे । भविताहे भवितास्वहे भवितास्महे । इति रूपाणि । 'श्वो हरिं भविता' इत्युदाहरणम् । एतेषामुदाहरणानि विस्तरभयात् न लिखितानि । लुड्लकारोऽयं समाप्तिं प्राप्तः ॥ समाप्तोऽयं सप्तमो लकारः ॥ ७ ॥

अथाष्टमो लकारः प्रारभ्यते । सूत्रम् ।

त्यादौ भविष्यति स्यप् । धातोर्भविष्यति काले स्यप् प्रत्ययो भवति तिबादिष्वष्टादशसु परेषु । अस्य संज्ञा लृट् । भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः । कल्किर्धर्मप्रवर्तको भविष्यति । भविष्यते भविष्येते भविष्यन्ते । भविष्यसे भविष्येथे भविष्यध्वे । भविष्ये भविष्यावहे भविष्यामहे । सावर्णीराज्यं भविष्यते ।

त्यादौ भविष्यति स्यप् । त्यादौ ( स० ए० ) भविष्यति ( स. ए. ) स्यप् ( प्र० ए० ) त्रिपदं सूत्रम् । भविष्यति इति भविष्यन् तस्मिन् भविष्यति काले धातोः तिबाद्यष्टादशसु परस्मैपदात्मनेपदवचनेषु परेषु स्यप्प्रत्ययो भवति । पका-

रः पित्कार्यार्थः। पाणिनीयानां मते अस्य लृट् इति संज्ञा। भू तिप् इति स्थिते। स्यादौ भविष्यति स्यप्। अनेन सूत्रेण स्यप् प्रत्ययः। सिसतासीस्यप्। अनेन सूत्रेणेट् गुण इति सूत्रेण गुणः। ओ अव् इति सूत्रेण। अव्। किलात् इति सूत्रेण सकारस्य षकारः। पूर्वोक्तेन सूत्रेण भविष्यति इति रूपं सिद्धम्। अत्रान्यानि सूत्राणि पूर्वोक्तानि ज्ञेयानि। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः। कल्किर्नामेश्वरस्यावतारो धर्मप्रवर्तको भविष्यति इत्युदाहरणम्। इति परस्मैपदिनो रूपाणि कथितानि। अथात्मनेपदिनो रूपाणि कथ्यन्ते। पूर्वोक्तेनैव सूत्रेणात्मनेपदिनोऽपि रूपाणि सिध्यन्ति। भविष्यते। भविष्येते। भविष्यन्ते। भविष्यसे। भविष्येथे। भविष्यध्वे। भविष्ये। भविष्यावहे। भविष्यामहे। सावर्णिर्मनूराज्यं भविष्यते। इत्युदाहरणम्। इत्यात्मनेपदिनो रूपाणि। समाप्तोऽयं लृट्लकारः। समाप्तिं प्राप्तोयमष्टमो लकारः। अथ नवमो लकारो निगद्यते। सूत्रम्।

**स्यप् क्रियातिक्रमे। धातोः क्रियाया अतिक्रमे कुतश्चिद्वैगुण्यादनिष्पत्तौ सत्यां दिबादिपरः स्यप्रत्ययो भवति भविष्येऽर्थेक्वचिद्भूतेऽपि। अस्य संज्ञा लृङ्। अडागमः। अभविष्यत्--अभविष्यद् अभविष्यताम् अभविष्यन्। अभविष्यः अभविष्यतम् अभविष्यत। अभविष्यम् अभविष्याव अभविष्याम। यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्यत्। अभविष्यत अभविष्येताम् अभविष्यन्त। अभविष्यथाः अभविष्येथाम् अभविष्यध्वम्। अभविष्ये अभविष्यावहि अभविष्यामहि। यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत्।**

स्यप् क्रियातिक्रमे। द्विपदं सूत्रं। स्यप् (प्र. ए.) क्रियातिक्रमे (स. ए.) क्रियाया अतिक्रमोऽभवनं क्रियातिक्रमः तस्मिन् क्रियातिक्रमे क्रियायाः कर्तृव्यापाररूपाया धात्वर्थलक्षणायाः कार्यस्य वातिक्रमे कुतश्चित्कारणात् अनिष्पत्तौ असिद्धौ सत्यां धातोर्दिबादिषु विभक्तिषु परतः स्यप् प्रत्ययो भवति॥ पाणिनीयानां मते एषां लृङ् इति संज्ञा। भू दिप् इति स्थिते। अनेन सूत्रेण स्यप्प्रत्ययः। सिसतासीस्यपाम्। अनेन सूत्रेणेडागमः। 'गुणः' इत्यनेन सूत्रेण गुणः। ओ अव्। इडि

सूत्रेणाट् ।'किलात्' इति सूत्रेण सकारस्य षकारः । 'वावसाने' अनेन तकारस्य दकारो भवति । 'दिबादावट्' इति सूत्रेणाडागमो भवति । स्वरहीनं० । अभविष्यत् । अभविष्यतां । अभविष्यन् । 'अदे' इति सूत्रेणाकारस्य लोपः कार्यः प्रथमपुरुषस्य बहुवचने । अभविष्यः । अभविष्यतं । अभविष्यत । अदे । अभविष्यं । ष्मोरा । अभविष्याव । अभविष्याम । अथोदाहरणम् । यदि सुवृष्टिः सुराज्यं च अभविष्यत् तदा सुभिक्षमभविष्यत् । इति परस्मैपदिनो भूधातो रूपाणि । अथात्मनेपदिनो भूङ्धातो रूपाणि कथ्यन्ते । तेषामनेनैव सूत्रेण सिद्धिः । अभविष्यत अभविष्येतां अभविष्यन्त । अभविष्यथाः अभविष्येथां अभविष्यध्वं । अभविष्ये अभविष्यावहि अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत् । समाप्तिं गतो नवमोऽयं लृङ्लकारः । अस्येतराण्युदाहरणानि न दर्शितानि विस्तरभयात् ।

अथ दशमो लकारः आरभ्यते । सूत्रम् ।

**भूते सिः । धातोर्भूतमात्रे काले सिः प्रत्ययो भवति । दिबादिपरः । अस्य संज्ञा लुङ् । इकारः सेरिति विशेषणार्थः । अभूस् त् इति स्थिते ।**

भूते ( स. ए. ) सिः । ( प्र. ए. ) धातोर्भूतमात्रे तत्कालोत्पन्नमात्रे अतीते कालेऽर्थे सिप्रत्ययो भवति दिबादौ परे । इकारः सेरितिविशेषणार्थः । अस्य पाणिनीयानां मते लुङ् इति संज्ञा । भू दिप् इति स्थिते । भूते सिः । अनेन सूत्रेण सिप्रत्ययः । इकारः सेः । दिबादावट् । अनेनाडागमः । वावसाने । अनेन दकारस्य तकारः । पूर्वोक्तसूत्रैः अभूस् त् इति जातम् । तत्र सूत्रम् ।

**दादेः पे । परस्मैपदे परे अपित् । दाधास्थेण्भूपिबतिभ्यः परस्य सेर्लोपो भवति ।**

दादेः ( पं. ए. ) पे ( स. ए. ) अपित् दा धा स्था इण् भू पा पाने इत्येतेभ्यः परस्य भूतार्थस्य सेर्लोपो भवति परस्मैपदविषये । द्वितीयं सूत्रम् ।

**शाच्छासाघ्राधेटो वेति वक्तव्यम् । भुवः सिलोपो लुग्वाच्यः । लुकि न तन्निमित्तम् । लुकि सति तन्निमित्तं कार्यं न स्यात् । तेन गुणेड्वृद्धयो न । अभूत् अभूताम् ।**

शाच्छेति । शाच्छासाघ्राधेट्एभ्यो धातुभ्यः सिलोपो वा भवति इति वक्तव्यम् । भुवः ( ष. ए. ) इदं सूत्रमस्ति । भूधातोः सिलोपो लुग् वाच्यः । लुकि न त-

निमित्तं। तेन गुणवृद्धयो न भवन्ति। अभूत्। अभूतां। बहुवचने अभू अन् इति स्थिते। सूत्रम्।

**भुवः सिलोपे स्वरे वुगवक्तव्यः। अभूवन्। अभूः अभूतम् अभूत। अभूवम् अभूव अभूम। अभूद्वृष्टिः। आत्मनेपदे। सिः इट् गुणावौ षत्वं ष्टुत्वं अट्। अभविष्ट अभविषाताम्।**

भुवः (पं० ए०) भूधातोः सिलोपे कृते सति स्वरे परे अमि अनि च वुगागमो भवति। ककारो गुणप्रतिषेधार्थः। स्थाननियमार्थश्च। उकार उच्चारणार्थः। इति अनि वकारागमः। स्वरहीनं०। अभूवन्। अभूः। अभूतम्। अभूत। अभूवं। अभूव। अभूम। इति परस्मैपदिनो भूधातो रूपाणि। अभूत् वृष्टिरित्युदाहरणम्। अथात्मनेपदिनो भूङ्धातो रूपाणि कथ्यन्ते। आत्मनेपदे सिः इट् गुणावौ षत्वं ष्टुत्वं अट् एते भवन्ति। अभविष्ट। अभविषातां। अभविष् अन्त इति स्थिते। सूत्रम्।

**आतोऽन्तोऽदनतः। आत आत्मनेपदस्यान्त इत्येतस्याद्भवति। अकारादुत्तरस्य न भवति। अभविषत। अभविष्ठाः अभविषाथाम्।**

आतोन्तोदनतः। आतः (ष. ए) अंतः (प्र.ए.) अत् (प्र.ए.) अत् अकारः न अत् अनत् तस्मात् अनतः (पं. ए.) आद्ये पदद्वयेऽतोत्युः। उओ। एदो। तृतीये चपा अ बेजबाः। चतुःपदं सूत्रम्। आत्मनेपदसंबन्धिनः प्रथमपुरुषबहुवचनस्य अन्ते इत्यस्यात् भवति। अन्ते इत्यस्याते इति भवति। अन्ताम् इत्यस्याताम् अन्त इत्यस्यातो भवतीति भावः। परम् अकारादुत्तरस्य न भवति। अनेनान्ते इत्यस्याते कृते स्वरहीनं। अभविषत। अभविष्ठाः। अभविषाथां। अभविस् ध्वम्। इति स्थिते सूत्रम्।

**ध्वे च सेर्लोपः। ध्वे परे सेर्लोपो भवति। वा सस्य द इति केचित्। अभविध्वम्-अभविढ्वम्। अभविषि अभविष्वहि। अभविष्महि। देवदत्तो राज्यमभविष्ट।**

ध्वे च सेर्लोपः। ध्वे (स. ए.) च अव्ययं। सेः (ष. ए.) लोपः (प्र. ए.) ध्वे परे सति सेर्लोपो भवति। अभविध्वं। वा सस्य दकारो भवति। इति केचित्के-

षांचिदाचार्याणां मतेन सकारस्य दकारो भवति । स्वरहीनं । अभविध्वं । अभविषि अभविष्वहि अभविष्महि । इत्यात्मनेपदिनो रूपाणि । देवदत्तो राज्यमभविष्टेत्युदाहरणम् । सूत्रम् ।

माङि लुङेव वक्तव्यः । सर्वलकारापवादः ।

माङि । माङि प्रयुज्यमाने लुङ्लकार एव वक्तव्यः । सर्वलकारापवादो भवति ।

मेटः । माशब्दे प्रयुज्यमाने अटो लोपो भवति । मा हर्यभक्तो भवान् भूत् ।

मेटः । इदं सूत्रमस्ति । मे ( स० ए० ) अटः । ( ष० ए० ) द्विपदं सूत्रम् । निषेधार्थमाशब्दे प्रयुज्यमाने दिवादिनिमित्तोत्पन्नस्याटोऽडागमस्य लोपो भवति । अनेन सूत्रेणाटो लोपो भवति । मा हर्यभक्तो भवान् भूत् । इत्यादिप्रयोगसिद्धिः ।

स्मयोगे भूतार्थता वक्तव्या ।

स्मयोगे भूतार्थता वक्तव्या । स्पष्टमिदं सूत्रम् । द्वितीयं सूत्रम् ।

मास्मयोगे लङ्च । मास्मभवत् । मास्मभूत् । चिती संज्ञाने । इकार इदित्कार्यार्थः । पूर्ववत्तिबादयः । अप् कर्तरि ।

मास्मयोगे लङ् च । स्पष्टम् । च पुनः मास्मइत्येतयोः द्वयोः योगे लङ् लकारो भवतीत्यर्थः । मा स्म भवत् । इत्युदाहरणम् द्वितीयसूत्रस्य । मा स्म भूत् । इत्युदाहरणं प्रथमसूत्रस्यास्ति इति भू सत्तायाम् इत्यस्य भूङ्प्राप्तौ इत्यस्य च रूपाणि दर्शितानि । तत्र भूधातुः परस्मैपदी ज्ञातव्यः । परतोऽन्यत् इति सूत्रात् । भूङ्धातुरात्मनेपदी ज्ञातव्यः ङित्त्वात् । परस्मैपदिनः परस्मैपदानि भवन्ति । आत्मनेपदिन आत्मनेपदानि भवन्तीति ज्ञातव्यम् । अत्र बहुस्थले संधिर्न कृतः । बालानां सुखेन बोधकरत्वात् । समाप्तोऽयं दशमो लकारो लुङ् ॥ १० ॥ इति द्वयोर्धात्वो रूपाणि ॥ अथभ्वादिगणः प्रारभ्यते । तत्रादौ परस्मैपदप्रक्रिया कथ्यते । चिती संज्ञाने । ईकार इदित्कार्यार्थः । पूर्ववत् तिबादयो भवन्ति । अप् कर्तरि । अनेनाप् । चित् अप् तिप् इति जाते सूत्रम् ।

उपधाया लघोः । धातोरुपधाया लघोर्नामिनो गुणो भवति । चेतति चेततः चेतन्ति । १ । चेतेत् चेतेताम् चेतेयुः

। २ । चेततु--चेततात् चेतताम् चेतन्तु । ३ । अचेतत् अचेतताम् अचेतन् । ४ । द्वित्वम् । चिचेत । कित्त्वाद्गुणाभावः । चिचिततुः चिचितुः । चिचेतिथ चिचितथुः चिचित । चिचेत चिचितिव चिचितिम । ५ । कित्त्वाद्गुणाभावः । चित्यात् चित्यास्तां चित्यासुः । ६ । चेतिता चेतितारौ चेतितारः । ७ । चेतिष्यति चेतिष्यतः चेतिष्यन्ति । ८ । अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन् । ९ । चित् सित् इति स्थिते । सिसता० इतीट् ।

उपधाया लघोः । उपधायाः (ष. ए.) लघोः (ष ए.) द्विपदं सूत्रम् । धातोरुपधाभूतस्य लघोर्नामिनः । क्ङिद्वर्जिते प्रत्यये परे गुणो भवति । पकारः । स्वर० । लट् । चेतति । चेततः । चेतन्ति । चेतसि । चेतथः । चेतथ । चेतामि । चेतावः । चेतामः । लिङ् । चेतेत् । चेतेतां । चेतेयुः । चेतेः । चेतेतं । चेतेत । चेतेयं । चेतेव । चेतेम । लोट् । चेततु । चेततात् । चेततां । चेतन्तु । चेत । चेततात् । चेततं । चेतत । चेतानि । चेताव । चेताम । लङ् । अचेतत् । अचेततां । अचेतन् । अचेतः । अचेततं । अचेतत । अचेतं । अचेताव । अचेताम । लिट् । द्विश्च । सस्वरादिर्द्विरद्भिः । चि चित् णप् इति स्थिते । णकारः । पकारः । गुणः । स्वरहीनं० । चिचेत । कित्त्वाद्गुणाभावः । चिचिततुः । चिचितुः । चिचेतिथ । चिचितथुः । चिचित । चिचेत । चिचितिव । चिचितिम । लिङ् । चित्यात् । चित्यास्तां चित्यासुः । चित्याः । चित्यास्तं । चित्यास्त । चित्यासं । चित्यास्व । चित्यास्म । लुट् । चेतिता । चेतितारौ । चेतितारः । चेतितासि । चेतितास्थः । चेतितास्थ । चेतितास्मि । चेतितास्वः । चेतितास्मः । लृट् । चेतिष्यति । चेतिष्यतः । चेतिष्यन्ति । चेतिष्यसि । चेतिष्यथः । चेतिष्यथ । चेतिष्यामि । चेतिष्यावः । चेतिष्यामः । लृङ् । अचेतिष्यत् । अचेतिष्यतां । अचेतिष्यन् । अचेतिष्यः । अचेतिष्यतं । अचेतिष्यत । अचेतिष्यम् । अचेतिष्याव । अचेतिष्याम । लुङ् । चित् सि दिप् इति स्थिते । सिसता० ॥ अनेन सूत्रेण इट् । चित् इट् सि दिप् इति जाते सूत्रम् ।

सेः सिशब्दात्परयोर्दिस्योरीडागमो भवति । इट ईटि । इट उत्तरस्य सेर्लोपो भवति ईटि परे । अचेतीत् अचेतिष्टाम् ।

सेः। (पं० ए०) सिशब्दात् परयोर्दिस्योरीडागमो भवति। अनेनेट् तदा चित् इट् सि ईट् दिप् इति जातम्। तत्र सूत्रम्। इट ईटि। इटः (पं. ए.) ईटि (स. ए.) इट उत्तरस्य सेरीटि परे लोपो भवति। इति दिस्योर्विषये सिलोपः। अनेन सूत्रेण सिलोपः कार्यः। तदा चित् इट् ईट् दिप् इति जाते। टकारः। दि सि मि! पकारः। तदा चित् इ ई द् इति स्थिते गुणः। सवर्णे। स्वरहीनं०। दिबादावट्। वावसाने। एभिः पूर्वोक्तैः सूत्रैः। अचेतीत् इति रूपं सिद्धं भवति। अचेतीत्। अचेतिष्टां। अचेति सि अन् इति स्थिते सूत्रम्।

स्याविदः। सेराकारान्ताद्विदश्चोत्तरस्यान उस् भवति। अचेतिषुः। अचेतीः अचेतिष्टम् अचेतिष्ट। अचेतिषम् अचेतिष्व अचेतिष्म। च्युतिर् आसेचने इरनुबन्ध इरितो वेति विशेषणार्थः। उच्चरितप्रध्वंसो ह्यनुबन्धः। च्योतति, च्योतेत्, च्योततु, अच्योतत्। च्युत णप् द्वित्वम्।

स्याविदः। (पं० ए०) एकपदं सूत्रम्। सेः भूतार्थोत्पन्नात् आकारान्तात् दा इत्यादेः विद् ज्ञाने इत्यस्माद्धातोश्च परस्य अन उस् भवति। अनेनान उस् जातः। स्वरहीनं०। स्रोर्विसर्गः। अचेतिषुः। अचेतीः। अचेतिष्टं। अचेतिष्ट। अचेतिषम्। अचेतिष्व। अचेतिष्म। समाप्तिं प्राप्तोऽयं धातुः। च्युतिर् आसेचने इह अनुबन्धोऽस्ति इरितो वा इति सूत्रस्य विशेषणार्थः। उच्चरितप्रध्वस्तो ह्यनुबन्धो भवति। पूर्ववत् तिबादयः। उपधाया लघोः। अनेन गुणः। लट्। च्योतति। च्योततः। च्योतन्ति। लिङ्। च्योतेत्। च्योतेतां। च्योतेयुः। लोट्। च्योततु। च्योततात्। च्योततां। च्योतन्तु। लङ्। अच्योतत्। अच्योतताम्। अच्योतन्। सुगमत्वात्। एतेषां विवेचनं न कृतम्। लिट्। च्युत् णप् इति स्थिते। द्विश्च। च्युत् च्युत् णप् इति जाते सूत्रम्।

पूर्वस्य हसादिः शेषः। पूर्वस्यादिर्हसः शिष्यते अन्यो लुप्यते। चुच्योत चुच्युततुः चुच्युतुः। चुच्योतिथ चुच्युतथुः चुच्युत। चुच्योत चुच्युतिव चुच्युतिम। च्युत्यात् च्योतिता च्योतिष्यति अच्योतिष्यत्। अच्योतीत् अच्योतिष्टाम् अच्योतिषुः। अच्योतीः अच्योतिष्टं अच्योतिष्ट। अच्योतिषम् अच्योतिष्व अच्योतिष्म।

**पूर्वस्य हसादिः शेषः ॥** पूर्वस्य ( ष. ए. ) हसयोर्हसानां वा संयुक्तानामुतासयुक्तानामादिः ( प्र. ए. ) हसादिः शेषः । अथवा हस इति पृथक्पदं सांकेतिकं प्रथमैकवचनान्तम् । द्विर्वचने कृते सति पूर्वरूपस्य संयोगे सति आदिमो हसः शिष्यते रक्ष्यतेऽन्यो द्वितीयो लुप्यते । अनेन यकारतकारयोर्लोपः कार्यः । तदा चुच्युत् णप् । इति जाते । गुणः । उपधाया लघोः । स्वरहीनं० । णकारः । पकारः । चुच्योत । चुच्युततुः । चुच्युतुः । चुच्योतिथ । चुच्युतथुः । चुच्युत । चुच्योत । चुच्युतिव । चुच्युतिम । लिङ् । च्युत्यात् । च्युत्यास्तां । च्युत्यासुः । लुट् । च्योतिता । च्योतितारौ । च्योतितारः । लृट् । च्योतिष्यति । च्योतिष्यतः । च्योतिष्यन्ति । लृङ् अच्योतिष्यत् । अच्योतिष्यताम् । अच्योतिष्यन् । लुङ् । अच्योतीत् । अच्योतिष्टाम् । अच्योतिषुः । अस्य धातोर्लुङ्लकारे सेरपवादो ङप्रत्ययो विकल्पेन भवति । तद्विधायकं सूत्रम् ।

**इरितोवा ।** इरितो धातोर्वा ङः प्रत्ययो भवति दिबादिपरः परस्मैपदे । सेरपवादः । ङकारो गुणप्रतिषेधार्थः । अच्युतत् अच्युतताम् अच्युतन् । अच्युतः अच्युततम् अच्युतत । अच्युतम् अच्युताव अच्युताम । श्च्युतिर् क्षरणे । श्च्योतति, श्च्योतेत्, श्च्योततु, अश्च्योतत् । द्वित्वम् ।

**इरितो वा ।** इर् इत् यस्य स इरित् तस्मात् इरितः ( पं. ए. ) द्विपदं सूत्रम् । च्युतिर् । रुधिर् । भिदिर् । छिदिर् । दृशिर् । रुदिर् । स्कन्दिर् । इत्यादेरिरनुबन्धात् धातोर्भूतेऽर्थे दिबादौ परे वा ङप्रत्ययो भवति । ङकारो गुणप्रतिषेधार्थः । ङप्रत्ययोऽयं परस्मैपदे भवेन्मूल उक्तत्वात् । यस्मिन्पक्षे ङप्रत्ययस्तस्मिन्पक्षे सेरभावः । अनेन ङप्रत्ययः । दिबादावट् । स्वरहीनं० । अच्युतत् । अच्युतताम् । अच्युतन् । अच्युतः अच्युततं अच्युतत । अच्युतं अच्युताव अच्युताम । समाप्तोऽयंधातुः । श्च्युतिर् क्षरणे । पूर्ववत् तिबादयो भवन्ति । लट् । श्च्योतति । श्च्योततः । श्च्योतन्ति । लिङ् । श्च्योतेत् । श्च्योतेतां । श्च्योतेयुः । लोट् । श्च्योततु-श्च्योततात् । श्च्योततां । श्च्योतन्तु । लङ् । अश्च्योतत् । अश्च्योतताम् । अश्च्योतन् । लिट् । द्विश्च । श्च्युत् श्च्युत् णबिति स्थिते ।

**शसाव् खपाः ।** द्विर्वचने कृते यत्पूर्वरूपं तस्य शसादुत्तराः खपाः शिष्यन्ते न शसाः । इति चकारशेषः । चुश्च्योत चुश्च्युततुः चुश्च्युतुः । श्च्युत्यात् श्च्योतिता श्च्योतिष्यति अ-

श्च्योतिष्यत् अश्च्युतत् अश्च्योतीत् । मन्थ विलोडने । मन्थति मन्थेत् मन्थतु अमन्थत् ममन्थ ।

शसात् खपाः । शसात् ( पं. ए. ) खपाः ( प्र. ब. ) द्विपदं सूत्रम् । संयोगपूर्वस्य धातोर्द्वित्वे कृते सति यत्पूर्वरूपं द्वित्वसंबन्धि तस्य शसखपसंयोगे सति शसादुत्तरा अग्रे वर्तमानाः खपाः शिष्यन्ते रक्ष्यन्ते न शसाः आदौ । वर्त्तमानाः शसा लुप्यन्त इत्यर्थः । अनेन शकारस्य लोपः कार्यः । पुनः पूर्वस्य हसादिः शेषः इति सूत्रेण तकारस्य लोपः कार्यः । गुणः । स्वरहीनं० । चुश्च्योत । चुश्च्युततुः । चुश्च्युतुः । चुश्च्योतिथ । चुश्च्युतथुः । चुश्च्युत । चुश्च्योत । चुश्च्युतिव । चुश्च्युतिम । मध्ये चुश्च्योतेत्युदाहरणम् । लिङ् । श्च्युत्यात् । श्च्युत्यास्तां । श्च्युत्यासुः । लुट् । श्च्योतिता । श्च्योतितारौ । श्च्योतितारः । लृट् । श्च्योतिष्यति । श्च्योतिष्यतः । श्च्योतिष्यन्ति । लृङ् । अश्च्योतिष्यत् । अश्च्योतिष्यतां । अश्च्योतिष्यन् । लुङ् । अस्मिंल्लकारे साधनं तु पूर्ववत् । अश्च्योतीत् । अश्च्योतिष्टाम् । अश्च्योतिषुः । समाप्तोऽयं धातुः । मन्थ विलोडने । लट् मन्थति । मन्थतः । मन्थन्ति । लिङ् । मन्थेत् । मन्थेतां । मन्थेयुः । लोट् । मन्थतु–मन्थतात् । मन्थतां । मन्थन्तु । लङ् । अमन्थत् । अमन्थताम् । अमन्थन् । लिट् । ममन्थ । ममन्थ् अतुस् इति स्थिते सूत्रम् ।

नो लोपः । धातोरुपधाभूतस्य नकारस्य लोपो भवति किति ङिति च परे । इत्युपधानकारलोपे प्राप्ते ।

नो लोपः । नः ( ष. ए. ) लोपः ( प्र. ए. ) द्विपदं सूत्रम् । धातोरुपधाभूतस्य नकारस्य अर्थात् नकारस्थानीयानुस्वारस्य किति ङिति च परे लोपो भवति । अत्र लोपाधिकारे नकारस्यादेशरूपस्यानुस्वारस्य लोपः । अनेन सूत्रेण नकारस्य लोपे प्राप्ते सति ।

ऋसंयोगात् णादेरकित्त्वं वाच्यम् । तेन नलोपाभावः । ममन्थतुः ममन्थुः । ममन्थिथ ममन्थथुः ममन्थ । ममन्थ ममन्थिव ममन्थिम ।

ऋसंयोगात् इदं वार्त्तिकम् । ऋश्च संयोगश्च ऋसंयोगं तस्मात् ऋसंयोगात् ( पं. ए. ) ण आदिर्यस्य स णादिः तस्य णादेः । कितो भावः कित्त्वं न कित्त्वम् अकित्त्वं ( प्र. ए. ) वाच्यं ( प्र. ए. ) ऋकारान्तात् संयोगान्तात् धातोश्च णादेरकित्त्वं वाच्यम् । अस्य धातोः संयोगत्वात् । अनेन सूत्रेण नकारस्य लोपाभावो भवति । स्वरहीनं० । स्रोर्विसर्गः । ममन्थतुः । ममन्थुः । वार्तिकम् ।

केचित्संयोगादेति वक्तव्यम् । ममथतुः ममथुः । नलोपः । मथ्यात्, मन्थिता, मन्थिष्यति, अमन्थिष्यत्, अमन्थीत् अमन्थिष्टाम् अमन्थिषुः । पुथि लुथि मथि कुथि हिंसासंक्लेशनयोः ।

केचिदार्याः संयोगात् धातोर्णादेः कित्त्वं वा वक्तव्यमिति वदन्ति । अनेन णादे विंकल्पेन कित्त्वम् । तदा ममथतुः ममथुः । ईदृशानि रूपाणि भवन्ति । लिङ् । नलोपः । मथ्यात् । मथ्यास्तां । मथ्यासुः । लुट् । मन्थिता । मन्थितारौ । मन्थितारः । लृट् । मन्थिष्यति । मन्थिष्यतः । मन्थिष्यन्ति । लृङ् । अमन्थिष्यत् । अमन्थिष्यताम् । अमन्थिष्यन् । लुङ् । अमन्थीत् । अमन्थिष्टाम् । अमन्थिषुः । समाप्तोऽयं धातुः । पुथि लुथि मथि कुथि एते धातवो हिंसासंक्लेशनयोः प्रवर्तन्ते । सूत्रम् ।

इदितो नुम् । इदितो धातोर्नुमागमो भवति । कुन्थति कुन्थेत् कुन्थतु अकुन्थत् । द्वित्वम् ।

इदितो नुम् । इत् इत् यस्य स इदित् तस्मात् इदितः ( पं. ए. ) नुम् ( प्र. ए. ) द्विपदं सूत्रम् । इदितो धातोर्दशस्वपि लकारेषु नुमागमो भवति । पूर्ववत् तिबादयः । इदितो नुम् । मित्वात् । नश्चापदान्ते । लट् । कुन्थति । लिङ् । कुन्थेत् । लोट् । कुन्थतु । लङ् । अकुन्थत् । लिट् । कुन्थ् णप् इति स्थिते । द्विश्च । पूर्वस्य हलादिः शेषः । कुकुन्थ् णप् इति जाते सूत्रम् ।

कुहोश्चुः । पूर्वसंबन्धिनोः कवर्गहकारयोश्चुत्वं भवति । वर्गचतुर्थो हस्य सवर्णः । चुकुन्थ चुकुन्थतुः चुकुन्थुः । चुकुन्थिथ चुकुन्थथुः चुकुन्थ । चुकुन्थ चुकुन्थिव चुकुन्थिम । लघूपधत्वाभावादगुणः ।

कुहोश्चुः । कुश्च हश्च कुहौ तयोः कुहोः ( ष. द्वि. ) चुः ( प्र. ए. ) द्विपदं सूत्रम् । द्वित्वे कृते सति पूर्वसंबन्धिनोर्द्वित्वसंबन्धिनोः कवर्गहकारयोश्चवर्गादेशो भवति । ननु कवर्गस्य चवर्गो यथासंख्यं भवति परं हकारस्य चवर्गत्वं कथं क्रियते । अत्रोच्यते । मातृकापाठे शषसह इत्यत्र हकारस्य चतुर्थस्थानवर्त्तित्वात् हकारस्य चुत्वे झकारो भवति । अथवा । वर्गचतुर्थो हस्य सवर्ण इति वचनात् चवर्गमध्ये हस्य सवर्णो झो भवति । अनेन कवर्गस्य चवर्गो भवति । स्वरहीनं० । चुकुन्थ । चुकुन्थतुः । चुकुन्थुः । लिङ् । ‘ नो लोपः ’ इति सूत्रेण नकारस्य लोपे प्राप्ते सति ।

इदितो नलोपाभावो वाच्यः । कुन्थ्यात्, कुन्थिता, कुन्थिष्यति, अकुन्थिष्यत् । अकुन्थीत् अकुन्थिष्टाम् अकुन्थिषुः ।
षिधु गत्याम् । उकार उच्चारणार्थः ।

वार्त्तिकम् इदितः । इदितो धातोः किति ङिति च परे नलोपस्याभावो वाच्यः । कुन्थ्यात् । लघूपधत्वाभावात् गुणाभावो भवति । लुट् । कुन्थिता । लृट् । कुन्थिष्यति । लृङ् । अकुन्थिष्यत् । लुङ् । अकुन्थीत् । पुथि लुथि मथि इति त्रयाणां धातूनां सुगमत्वाद्रूपाणि न लिखितानि । षिधु गत्याम् । उकार उच्चारणार्थः । सूत्रम् ।

आदेः ष्णः स्नः । षोपदेशस्य णोपदेशस्य च धातोरादौ वर्तमानयोः षकारणकारयोः सकारनकारौ भवतः ।

सेक्सृप्सृस्तृसृज्स्तृस्त्यांन्ये दन्त्याजन्तसादयः ॥
एकाचः षोपदेशाः ष्वष्क्स्विद्स्वद्स्वञ्जस्वपस्मिङः ।

सेकृ गतौ । सृप्लृ गतौ । सृ गतौ । स्तृ आच्छादने । सृज् विसर्गे । स्तृ छादेन । स्त्यै ष्ट्यै शब्दसंघातयोः । एभ्योऽन्ये दन्त्याजन्तसादयः । एकाचः षोपदेशा दन्त्याजन्तसादयः । दन्ते भवः दन्त्यः दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ यस्य सदन्त्याजन्तः स चासौ सश्च दन्त्याजन्तसः स आदिर्येषां ते दन्त्याजन्तसादयः । दन्त्यः केवलदन्त्यः न तु दन्तोष्ठजोऽपि । ष्वष्कादीनां पृथग्ग्रहणात् । ष्वष्क् गतौ । ञिष्विदा गात्रप्रक्षरणे । स्वद् आस्वादने । स्वञ्ज् परिष्वङ्गे । ञिष्वप् शये । स्मिङ् ईषद्धसने । एते षोपदेशाः ।

णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्नॄनृतः ॥
नर्द गतौ । नट नर्तने । नाथ्नाध् याच्ञोपतापैश्वर्याशीष्षु । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽन्ये णोपदेशाः ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ॥
सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥ १ ॥

आदेः ष्णः स्नः । आदेः (ष. ए.) ष्णः (ष. ए.) स्नः (प्र. ए.) ष उपदेशे यस्य स षोपदेशः । ण उपदेशे यस्य स णोपदेशः । षोपदेशस्य णोपदेशस्य च धातोरादौ वर्त्तमानयोः षकारणकारयोः सकारनकारौ भवतः । यथासंख्यम् । षोपदेशस्य णोपदेशस्य च धातोर्लक्षणं मूलोक्तमेव ज्ञेयम् । अस्यां विस्तरभयात् न लिखितम् । तथा च षत्वनिषेधकं सूत्रम् ।

नामधातुष्ठ्यैष्वष्कष्ठिवां षः सो नेति वाच्यम् । गुणः । सेधति । निपूर्वः ।

नामधातुरिति । नामधातुष्ठ्यैष्वष्कष्ठिवां (ष. ब.) षकारस्य सकारो न भवति इति वाच्यम् । गुणः । लट् । सेधति । यदा निपूर्वोऽयं धातुः स्यात् तदा कीदृशं रूपं कार्यम् । तदर्थं सूत्रम् ।

प्रादेश्च तथा तौ सुनमाम् । प्रादेरुपसर्गात्परेषां स्वादीनां नमादीनां च धातूनां सकारनकारयोस्तौ पूर्वभाविनावेव षकारणकारौ भवतः षत्वणत्वनिमित्ते सति । निषेधति । सेधेत् सेधतु । अड्व्यवधानेऽपि षत्वम् । न्यषेधत् । द्वित्वव्यवधानेऽपि षत्वम् । निषिषेध । सिषिधतुः । सिषिधुः । सिषेधिथ । सिध्यात्, सेधिता, सेधिष्यति, असेधिष्यत् । असेधीत्, असेधिष्टाम्, असेधिषुः । षिधू शास्त्रे माङ्गल्ये च । ऊकार इड्विकल्पार्थः । सेधति, सेधेत्, सेधतु, असेधत्, सिषेध, सिध्यात् ।

प्रादेश्च तथा तौ सुनमाम् । प्र आदिर्यस्य स प्रादिः तस्य प्रादेः (पं. ए.) च तथा तौ (प्र. द्वि.) सुनमां (ष. ब.) पञ्चपदं सूत्रम् । प्रादेरुपसर्गात्परेषां स्वादीनां षुञ् अभिषवे, षोऽन्तकर्मणि, ष्टुञ् स्तुतौ, ष्टुभ् स्तोभे, षिञ् बन्धने, षञ्ज संगे, ष्वञ्ज् परिष्वंगे, इत्यादीनां नमादीनां च णम् प्रह्वीभावे, णीञ् प्रापणे, टुणदि समृद्धौ, णिदि कुत्सायाम्, इत्यादीनां धातूनां यौ सकारनकारौ तयोः क्रमेण तौ पूर्वभाविनौ एव पूर्वावस्थायां वर्त्तमानौ षकारणकारौ एव भवतः । तथा तेष्वेवेत्यादि । तथेति सूत्रोक्तं पदं तस्यार्थः । तेष्वेव निमित्तेष्विति । अत्रायं भावः । स-

कारस्य षकारनिमित्तानि कवर्गेण्लक्षणानि । नकारस्य णत्वनिमित्तानि षकाररेफऋ-वर्णाः । अवप्रत्याहारकवर्गपवर्गव्यवधानानि च ततो यद्युपसर्गान्ते कवर्गस्येत्प्र-त्याहारस्य च योगो भवति । तदा तस्मात्परस्य सकारस्य षकारो भवति । यदा चोपसर्गे षकाररेफऋवर्णानामन्यतमो भवति नकारस्य वा प्रत्याहारकवर्गपवर्गान्तरं च भवति तदा नकारस्य णकारो भवति । अत्रोपसर्गे इत्प्रत्याहारोऽस्ति तेन सेधतेः सकारस्य षकारो भवति । निषेधति । लिङ् । सेधेत् । लोट् । सेधतु । लङ् । अड्-व्यवधानेऽपि षत्वं भवति न्यषेधत् । इति प्रयोगदर्शनात् । यदा निपूर्वस्तदा न्यषे-धत् । तदभावे असेधत् । लिट् । द्वित्वव्यवधानेऽपि षत्वं, नास्ति व्याख्यानेन प्रयो-जनं तदभावेऽपि प्रयोगसिद्धेः । निषिषेध । निपूर्वसति । तदभावे सिषेध । लिङ् । सिध्यात् । लुट् । सेधिता । लट् । सेधिष्यति । लङ् । असेधिष्यत् । लुङ् । असेधी-त् । समाप्तोऽयं धातुः । षिधू शास्त्रे माङ्गल्ये च । ऊकार इड्विकल्पार्थः । आदेः ष्णः स्नः । पूर्ववत् तिबादयः । सेधति । सेधेत् । सेधतु । असेधत् । लिट् । सिषेध । सिध्या-त् । सिध् ता इति स्थिते सूत्रम् ।

ऊदितो वा । ऊदितो धातोः परस्य वसादेरिड्वा भवति ।

ऊदितो वा । ऊत् इत् यस्य स ऊदित् तस्मात् ऊदितः (पं. ए.) वा । ऊदितो धातोः परस्य वसादेः प्रत्ययस्य वा इडागमो भवति । द्वितीयं सूत्रम् ।

स्वृसूतिसूयतिधुञ्रधादीनामिड्वा वक्तव्यः । स्वृ शब्दे । षूङ् प्राणिगर्भविमोचने । षूङ् प्रसवे । धूञ् कम्पने । रध् हिंसा-याम् । नश् अदर्शने । तृप् प्रीणने । दृप् हर्षविमोचनयोः । द्रुह् जिघांसायाम् । मुह् वैचित्त्ये । ष्णुह् उद्गिरणे । ष्णिह् प्रीतौ । एते रधादयः । सेधिता । पक्षे ।

स्वृसूति० । स्वृसूतिसूयतिधूञित्यादीनां धातूनां वा इडागमो वक्तव्यः । व-सादेः प्रत्ययस्यैवेति शेषः । धातवस्तु मूले दर्शिताः । अनेन सूत्रेण वा इट् । सेधिता । सिध् ता इति स्थिते । सूत्रम् ।

तथोर्धः । दधातिं विना झभान्ताद्धातोः परयोस्तकारथका-रयोर्धकारादेशो भवति । झबे जबाः । सेद्धा, सेधिष्यति-से-त्स्यति । असेधिष्यत् असेत्स्यत् । असेधीत् । असेधिष्टा-म् असेधिषुः । इडभावे ।

तथोर्धः । तश्च थ्च तथौ तयोः तथोः (ष. द्वि.) धः (प्र. ए.) द्विपदं

सूत्रम्। दधातिं वर्जयित्वा झभान्तात् धातोः परयोस्तकारथकारयोर्धकारादेशो भवति। सुगममिदं सूत्रम्। अस्याधिकं व्याख्यानं नास्ति। अनेन तकारस्य धकारः। झबे जबाः। प्रथमधकारस्य दकारः। स्वरहीनं। गुणः। सेद्धा। सेद्धारौ। सेद्धारः। सेद्धासि। सेद्धास्थः। सेद्धास्थ। सेद्धास्मि। सेद्धास्वः। सेद्धास्मः। लृट्। सेधिष्यति। सेत्स्यति। 'खसेचपाझसानां'। लृङ्। असेधिष्यत्। असेत्स्यत्। लुङ्। असेधीत्। असेधिष्टाम्। असेधिषुः। इडभावे अ सिधू सि ईट् दिप् इति स्थिते सूत्रम्।

**अनिटो नामिवतः। नामिवतोऽनिटो धातोः परस्मैपदे परे सिप्रत्यये वृद्धिर्भवति। चपत्वम्। सेः। असैत्सीत् असैद्धाम्। प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवति।**

**अनिटो नामिवतः।** अनिटो नामिवतः। नास्ति इट् यस्य सः अनिट् तस्यानिटः (ष.ए.) नामी अस्यास्ति इति नामिवान् तस्य नामिवतः (ष.ए.) द्विपदं सूत्रम्। 'नामिवतो नाम्युपधस्य नैकस्वरादनुदात्तात्' इति सूत्रेणोक्तात् अनिटो धातोः संबन्धिनो नामिनः परस्मैपदविषये सिप्रत्यये परे वृद्धिर्भवति। अनेन वृद्धिः। परं पूर्ववत्। खसे। असैत्सीत् असैध् सिताम् इति स्थिते। सूत्रम्।

**झसात्। झसादुत्तरस्य सेर्लोपो भवति झसे परे। असैत्तुः। असैत्सीः असैद्धम् असैद्ध। असैत्सम् असैत्स्व असैत्स्म। खद स्थैर्येहिंसायां च। खदति, खदेत्, खदतु, अखदत्।**

**झसात्।** (पं. ए.) एकपदं सूत्रम्। झसादुत्तरस्य सेर्लोपो झसे परे भवति। अनेन सेर्लोपः कार्यः। प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवति। इति न्यायात्। वृद्धिर्भवति। तथोर्धः। झबे जबाः। स्वरहीनं। असैद्धाम्। असैत्सुः। असैत्सीः। असैद्धं। असैद्ध। असैत्सम्। असैत्स्व। असैत्स्म। खद् स्थैर्ये हिंसायां च। पूर्ववत् तिबादयः। खदति। खदेत्। खदतु। अखदत्। खद् खद् णप् इति स्थिते पूर्वस्य हसादिः शेषः। खखद् णबिति जाते सूत्रम्।

**अत उपधायाः। धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे। चुत्वम्। चखाद चखदतुः चखदुः। चखदिथ चखदथुः चखद।**

**अत उपाधायाः।** अतः (ष. ए.) उपधायाः (ष. ए.) धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे। कुहोश्चुः। चखाद। चखदतुः चखदुः चखदिथ। चखदथुः चखद।

**णलुत्तमो वा णिद्वक्तव्यः । चखाद-चखद चखदिव चखदिम । खद्यात्, खदिता, खदिष्यति, अखदिष्यत् ।**

णलुत्तमो० । उत्तमो णल् वा णित् वक्तव्यः । तेन वृद्धेर्विकल्पो भवति । चखाद । चखद । चखदिव चखदिम । खद्यात् । खदिता । खदिष्यति । अखदिष्यत् । अखदीत् इति स्थिते ।

**णित्पे । पे परस्मैपदे परे सिर्णिद्भवति । अत उपधाया इति वृद्धिः । अखादीत् अखादिष्टाम् अखादिषुः ।**

सूत्रम् । णित्पे । ण इत् यस्य स णित् (प्र. ए.) पे (स ए.) द्विपदं सूत्रम् । परस्मैपदे परे सिर्णित् भवति । अनेन सेर्णित्त्वात् अत उपधाया इति सूत्रेण वृद्धिः । अखादीत् अखादिष्टाम् अखादिषुः । वृद्धिविकल्पकरं सूत्रम् ।

**हसादेर्लघ्वकारोपधस्य वा वृद्धिः सेटि सौ वाच्या । अखदीत् । गद् व्यक्तायां वाचि । गदति ।**

हसादेः । हस् आदिर्यस्य स हसादिस्तस्य हसादेः । लघुश्चासौ अकारश्च लघ्वकारः लघ्वकार उपधायां यस्य स लघ्वकारोपधस्तस्य लघ्वकारोपधस्य हसादेर्लघ्वकारोपधस्य च धातोर्वा वृद्धिः सेटि सौ वाच्या । अनेन वृद्धिविकल्पो भवति । अखदीत् अखदिष्टां अखदिषुः । सुगमोऽयं धातुः समाप्तः । गद् व्यक्तायां वाचि । गदति ।

**उपसर्गस्थनिमित्तान्नेर्गदादौ णत्वं वाच्यम् । गद् नद् पत् पद् स्था अपित् दा धा मा सो हन् या वा द्रा प्सा वप् वह् चि शम् दिह् एते गदादयः । गद् व्यक्तायां वाचि । नद् अव्यक्ते शब्दे । पत्लृ पतने । पद् गतौ । ष्ठा गतिनिवृत्तौ । डुदाञ् दाने । डुधाञ् धारणपोषणयोः । माङ् माने षोऽन्तकर्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायां गतौ च । प्सा भक्षणे । डुवप् बीजतन्तुसन्ताने । वह् प्रापणे । चिञ् चयने । शम् उपशमे । दिह उपचये । प्रणिगदति । गदत् गदतु अगदत् । कुहोश्चुः । जगाद जगदतुः जगदुः । जगदिथ जगदथुः ज-**

गद् । गद्यात्, गदिता, गदिष्यति, अगदिष्यत् । अगादीत्-अगदीत् । रद् विलेखने । रदति, रदेत्, रदतु, अरदत्, रराद ।

उपसर्गस्थनिमित्तात् । उपसर्गस्थनिमित्तात् नेर्गदादौ णत्वं वाच्यं ।गदादयस्तु मूले उक्ताः सन्ति । तएव ज्ञातव्याः । आतोनेन सूत्रेण नकारस्य णकारो भवति । प्रणिगदति । गदेत् । गदतु । अगदत् । कुहोश्चुः । अनेन गकारस्य जकारः । अतउपधायाः । जगाद । जगदतुः । जगदुः ॥ गद्यात् । गदिता । गदिष्यति । अगदिष्यत् । अगादीत् । हसादेः । अगदीत् । रद् विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद । रद् अतुस् इति स्थिते सूत्रम् ।

लोपः पचां किये चास्य । पचादीनामनादेशादीनां किति णादौ सति पूर्वस्य लोपः । असंयुक्तहसयोर्मध्यस्थस्याकारस्यैकारः । रेदतुः रेदुः ।

लोपः पचां किये चास्य । लोपः (प्र. ए.) पचां (ष.ब) किति (स. ए.) ए (प्र. ए.) च (प्र.ए.) अस्य (ष.ए.) षट्पदमिदं सूत्रम् । येषां धातूनां द्विवचनस्य कुहोश्चुः झपानां जबचपा इति जबादिरादेशो न भवति तेषां पचादीनां पच्सहशानां पत् पठ् चल् चर् तन् मन् इत्यादीनां पूर्वस्य द्वित्वस्य किति णादौ सति लोपो भवति । एक एव हसो यस्य सः । यद्वा एकश्च एकश्च एको एको असंयुक्तौ केवलौ संयोगरहितौ पूर्वापरौ हसौ यस्य स एकहसस्तस्य एकहसस्य । असंयुक्तहसमध्यस्थस्याकारस्य च एकारो भवति । मूले तु न संयुक्तौ असंयुक्तो असंयुक्तो च तौ हसौ च असंयुक्तहसौ तयोरसंयुक्तहसयोः । पूर्वं व्याख्यानं चन्द्रिकानुसारेण । इदं तु मूलानुसारेण । चकारात् उक्तनिमित्ताभावेऽपि तृ फल् भज् त्रप् सध् ग्रन्थ्दम्भानामेत्वपूर्वलोपौ भवतः । तथा जृष् भ्रम् त्रस् फण् राज् भ्राग् भ्राज् म्लाश् स्वन् राध् एतेषां विकल्पेन एत्वपूर्वलोपौ भवतः । इति सूत्रम् । अनेन पूर्वरकारस्य लोपश्च धातोरकारस्यैकारो भवति । स्वरहीनं० । रेदतुः । रेदुः । ररद् थप् इति स्थिते सिसता० अनेनेट् । ररद् थप् इति जाते ।

सेटि थपि एत्वपूर्वलोपौ वक्तव्यौ । रेदिथ रेदथुः रेद । रराद-ररद रेदिव रेदिम । रद्यात्, रदिता, रदिष्यति, अरदिष्यत् । अरादीत् अरादिष्टाम् अरादिषुः । अरदीत् । णद् अव्यक्ते शब्दे । आदेः ष्णः स्नः । नदति, नदेत्, नदतु, अ-

नदत् । प्रपूर्वः । प्रादेश्च । इति णत्वम् । प्रणदति । गदादित्वात् प्रणिनदति । ननाद नेदतुः नेदुः । नेदिथ नेदथुः नेद । ननाद-ननद नेदिव नेदिम । नद्यात् । नदिता, नदिष्यति, अनदिष्यत् । अनादीत् अनादिष्टाम् अनादिषुः । अनदीत् अनदिष्टाम् । अर्द् गतौ याचने च । अर्दति, अर्देत्, अर्दतु, आर्दत् । द्वित्वे कृते आभ्वोर्णादौ० । आ अर्द इति स्थिते ।

सेटिथपि । वार्तिकम् । सेटि थपि परे एत्वपूर्वलोपौ वक्तव्यौ । अनेनैत्वपूर्वलोपौ स्तः । स्वरहीनं० । रेदिथ । रेदथुः । रेद । रराद-ररद । रेदिव । रेदिम । लिङ् । रद्यात् । रदिता । रदिष्यति । अरदिष्यत् । अरादीत् । हसादेः । अरदीत् । समाप्तोऽयम् । णद् अव्यक्ते शब्दे । पूर्ववत् तिवादयः । धादेः षणः स्नः । नदति । अन्यानि रूपाणि सुगमत्वान्न लिखितानि । लिट्लकारे । लोपः पचां किरये चास्य । अनेनैत्वपूर्वलोपौ कार्यौ । ननाद । नेदतुः । यदा प्रपूर्वोऽयं धातुस्तदा प्रादेश्च । अनेन सूत्रेण नकारस्य णकारः । प्रणदति इति रूपं भवति । प्रपूर्वत्वे सति यदा निपूर्वः स्यात् तदा गदादित्वात् नेर्णत्वं भवति । प्रणिनदति इति रूपं सिद्धं भवति । नद्यात् । नदिता । नदिष्यति । अनदिष्यत् । अनादीत् । हसादेः । अनदीत् । सोऽनादीत् इत्युदाहरणम् । अर्द् गतौ याचने च । अर्दति । अर्देत् । अर्दतु । आर्दत् । लङ्लकारस्य रूपे स्वरादेः परः । अनेन वक्ष्यमाणेन सूत्रेण द्वितीयोऽडागमो भवति । अर्द् णप् इति स्थिते । द्वित्वम् । द्वित्वे कृते सति । आभ्वोर्णादौ इति सूत्रेण पूर्वस्याकारस्याकारो भवति । तदा आ अर्द् णपिति जाते सूत्रम् ।

नुगशाम् । अश्नोतेर्ऋकारादिधातूनां संयोगान्ताकारादिधातूनां च पूर्वस्य नुगागमो भवति णादौ सति । आनर्द आनर्दतुः आनर्दुः । आनर्दिथ आनर्दथुः आनर्द । आनर्द आनर्दिव आनर्दिम । अर्द्यात् अर्दिता अर्दिष्यति आर्दिष्यत् । आर्दीत् आर्दिष्टाम् आर्दिषुः । इदि परमैश्वर्ये । इन्दति, इन्देत, इन्दतु ।

नुगशां । नुक् ( प्र. ए. ) अशां ( प. ब. ) अशूङ् व्याप्तौ । अशू अर्द् अर्द्

ऋच्छ् इत्यादीनां धातूनाम् द्विर्भावे कृते सति णबादौ परे पूर्वस्य द्वित्वस्य नुगागमो भवति। ककारः स्थानविश्यर्थः। किस्वादन्ते। उकार उच्चारणार्थः। अनेन सूत्रेण द्वयोर्मध्ये नुगागमो भवति। स्वरहीनं०। आनर्द। आनर्दतुः। आनर्दुः। सर्वाणि रूपाणि मूले सन्ति। अर्दात्। अर्दिता। अर्दिष्यति। स्वरादेः आर्दिष्यत्। आर्दीत्। इदि परमैश्वर्ये। पूर्ववत् तिबादयः। इदितोनुम् इति अनेन नुम्। इन्दति। इन्देत्। इन्दतु। एन्दत् इति जाते।

स्वरादेः। स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिबादौ परे। अइए। एऐऐ। ऐन्दत्। इन्द् णप् इति स्थिते।

स्वरादेः। स्वर आदिर्यस्य स स्वरादिः तस्य स्वरादेः (ष. ए.) स्वरादेर्धातोर्द्वितीयोऽडागमो भवति। अनेन द्वितीयोऽडागमः। एऐऐ। ऐन्दत्। ऐन्दताम्। ऐन्दन्। ऐन्दः। ऐन्दतम्। ऐन्दत। ऐन्दम्। ऐन्दाव। ऐन्दाम। अस्य धातोर्लिट्लकारे विशेषोऽस्ति। इन्द् णप् इति स्थिते सूत्रम्।

कासादिप्रत्ययादाम् कृसभूपरः। कास् आस् दय् अय् नाम्यादिगुरुमद्धात्वनेकस्वरधातुभ्यः प्रत्ययान्ताच्च णबादौ परे आम् प्रत्ययो भवति। स च कृसभूपरः प्रयोक्तव्यः। कासृ दीप्तौ। आस् उपवेशने। दय् दानगतिहिंसादानेषु। अय् गतौ। एते कासादयः।

कासादिप्रत्यादाम् कृसूभूपरः। कास् आदिर्यस्यासौ कासादिः प्रत्ययान्तो धातुः प्रत्ययशब्देनोच्यते। कासादिश्च प्रत्ययश्च कासादिप्रत्ययं तस्मात् कासादिप्रत्ययात् (पं० ए०) आम् (प्र० ए०) कृ च अस् च भूश्च कृसभुवः। कृसभुवः परे यस्मात्स कृसभूपरः (प्र० ए०) त्रिपदमिदं सूत्रम्। कास् आस् दय् अय् नाम्यादिगुरुमद्धात्वनेकस्वरधातुभ्यः प्रत्ययांताण्णादौ परे आम् प्रत्ययो भवति स च आम् कृसभूपरः प्रयोक्तव्यः। सूत्रस्य सुगमत्वात् व्याख्यानस्यानावश्यकत्वम्। तथापि सूत्रस्यास्य चन्द्रिकायां कृतं व्याख्यानमस्ति। कासादेर्धातोः कास् आस् चकास् जागृ दरिद्रा दय् अय् उष् एध् ईक्ष् ऊह् इत्यादेर्धातोः प्रत्ययान्ताच्च सपङ्कायः इत्यादेः प्रत्ययाद्धातोर्णबादौ विषये आम्प्रत्ययो भवति। स च आम् कृसभूधातुषु परेषु सत्सु प्रयोक्तव्यः। कासादेः प्रत्ययान्ताच्च णबादिस्थाने आम्प्रत्ययः। तस्माच्च परेषां कृसभूधातूनां मध्ये अन्यतमस्य धातोः परोक्षप्रयोगो भवतीत्यर्थः। तस्य च धातोर्णबादौ पूर्ववत् प्रक्रिया। आम्प्रत्ययः पित्संज्ञकश्च ज्ञेयः। सूत्रम्।

विद्दरिद्राकासृकाशृजागृउषृ एभ्यो वाम्। विद् ज्ञाने। दरिद्रा दुर्गतौ काशृ विकचने। जागृ निद्राक्षये। उष दाहे। एते विदायः। इन्दां क्र णप् इति स्थिते कृइत्येतस्य द्वित्वम्।

विद् दरिद्रा। विद् दरिद्रा काम् काशृ जागृ उष एभ्यो वाम् प्रत्ययो भवति। इन्द आम् कृ णपिति जाते। स्वरहीनं०। इन्दाम् कृ णपिति जाते द्विश्च। कृइत्यस्य द्वित्व। इन्दाम् कृ कृ णपिति जाते सूत्रम्।

रः। पूर्वसंबन्धिन ऋकारस्याकारो भवति। चुत्वम्।

रः। ऋ (ष० ए०) सांकेतिकं। अः (प्र० ए०)। द्विपदं सूत्रम्। द्वित्वे कृते सति पूर्वसंबन्धिन ऋकारस्य अकारादेशो भवति। अनेन ऋकारस्याकारः। तदा इन्दाम् क कृ णप् इतिजाते। कुहोश्चुः। अनेन सूत्रेण ककारस्य चकारः। तदा इन्दाम् च कृ णप् इति स्थिते सूत्रम्।

धातोर्नामिनः। धातोरन्त्यभूतस्य नामिनो वृद्धिर्भवति ञिति णिति च परे। इन्दांचकार इन्दांचक्रतुः। इन्दाचक्रुः। कादित्वान्नेट्। इन्दांचकर्थ इन्दांचक्रथुः इन्दांचक्र। इन्दांचकार-इन्दांचकर इन्दांचकृव इन्दांचकृम। इन्दामास इन्दामासतुः इन्दामासुः। इन्दामासिथ। इन्दांबभुव, इन्द्यात्, इन्दिता, इन्दिष्यति। स्वरादेः ०। ऐन्दिष्यत्, ऐन्दीत् ऐन्दिष्टाम् ऐन्दिषुः। ऐन्दीः ऐन्दिष्टम् ऐन्दिष्ट। ऐन्दिषम् ऐन्दिष्व ऐन्दिष्म। णिदि कुत्सायाम्। निन्दति।

धातोर्नामिनः। धातोः (ष० ए०) नामिनः (ष० ए०) द्विपदं सूत्रम्। धातोः अन्त्यभूतस्य नामिनः ञिति णिति च प्रत्यये परे वृद्धिर्भवति। अनेन वृद्धिस्तदा इन्दाम् च क् आर् णप् इति जाते। नश्चापदान्ते। स्वरहीनं०। तदा इन्दांचकार इति रूपं सिद्धं भवति। एवमन्यान्यपि रूपाणि सिध्यन्ति। किति णादौ गुणवृद्धी न भवतः। किं तु र इत्यस्य सूत्रस्य प्राप्तिः। इन्दांचकार। इन्दांचक्रतुः। इन्दांचक्रुः। कादेर्णादेः इति सूत्रे कृधातोरिड्निषेधात् इडागमो न भवति पित्त्वात् गुणो भवति। इन्दांचकर्थ। इन्दांचक्रथुः। इन्दांचक्र इन्दांचकार। णदुत्तमः। इति सूत्रेण वा णित् तेन वा वृद्धिर्भवति। इन्दांचकर। इत्यत्र गुणो भवत्येव वा। इन्दांचकृव इन्दांचकृम। यदा असृधातोरनुप्रयोगस्तदा इन्दाम् अस णप्

इति स्थिते द्वित्वसूत्रेण अकारस्य द्विर्भावः । आम्वोर्णादौ । सवर्णदीर्घः । स्वरहीनं० । इन्दामास । इन्दामासतुः इन्दामासुः । इन्दामासिथ । यदा भूधातोरनुप्रयोगस्तदा इन्दाम् भू णप् इति जाते । नश्चापदा० । पुनश्च बभूव इति रूपं यथा सिद्धं भवति तथैव रूपं कार्यम् । इन्दांबभूव । इन्द्यात् । इन्दिता । इन्दिष्यति । स्वरादेः । ऐन्दिष्यत् । ऐन्दीत् । णिदि कुत्सायां पूर्ववत् इदितो नुम् । निन्दति । यदायं धातुः प्रपूर्वः स्यात् तदा प्रनिन्दति इति स्थिते सूत्रम् ।

निसनिक्षनिन्दामुपसर्गाण्णत्वं वा वाच्यम् । प्रणिन्दति, प्रनिन्दति । निन्देत्, निन्दतु, अनिन्दत्, निनिन्द, निन्द्यात् निन्दिष्यति, अनिन्दिष्यत्, अनिन्दीत् । निक्ष् चुम्बने । प्रणिक्षति निक्षेत् निक्षतु अनिक्षत् निनिक्ष निक्ष्यात् निक्षिता निक्षिष्यति अनिक्षिष्यत् अनिक्षीत् । उख गतौ । ओखति ओखेत् ओखतु औखत् । द्वित्वे उपधागुणे च कृते ।

निसनिक्षनिन्दाम् । निसनिक्षनिन्दां धातूनामुपसर्गात् उपसर्गस्थनिमित्तात् णत्वं वा वाच्यम् । अनेन णत्वम् । प्रणिन्दति । प्रनिन्दति । निन्देत् । निन्दतु । अनिन्दत् अत्र उपधाया लघोरिति सूत्रस्य प्राप्तिरेव नास्ति । उपधायामिकाराभावात् । निनिन्द । निन्द्यात् । निन्दिता । निन्दिष्यति । अनिन्दिष्यत् । अनिन्दीत् । अस्य रूपाणि मूले सन्ति तथापि लिखितानि । निक्ष् चुम्बने । निक्षति । 'निसनिक्षनिदाम् । ' अनेन सूत्रेण णत्वम् । प्रणिक्षति । अन्यानि रूपाणि सुगमत्वान्न लिखितानि । उख गतौ । गुणः । ओखति । ओखेत् । ओखतु । औखत् । अत्र स्वरादेः इत्यनेन सूत्रेण द्वितीयोऽडागमो भवति । उख् णप् इति स्थिते । द्विश्च । गुणः । उ ओख् णप् इति जाते सूत्रम् ।

असवर्णे स्वरे० पूर्वेकारोकारयोरियुवौ वक्तव्यौ । उवोख । सवर्णे दीर्घः० ऊखतुः ऊखुः । उवोखिथ । उख्यात्, ओखिता, ओखिष्यति, ओखिष्यत्, औखीत् । अञ्चु गतिपूजनयोः । अञ्चति । नुगशाम् आनञ्च आनञ्चतुः आनञ्चुः ।

असवर्णे स्वरे० । असवर्णे स्वरे परे सति पूर्वयोः इकारोकारयोः इयुवौ यथासंख्येन वक्तव्यौ । अनेन सूत्रेण उकारस्य उव् जातः । स्वरहीनं० । उवोख । असवर्णस्वराभावान्नोऽव् । सवर्णदीर्घःसह । ऊखतुः । ऊखुः । उवोखिथ । उख्यात् ।

ओखिता । ओखिष्यति स्वरादेः । औखिष्यत् । औखीत् । अञ्चु गति पूजयोः । अञ्चति । अञ्चेत् । अञ्चतु । स्वरादेः । आञ्चत् । अ अञ्च् णप् इति जाते आम्वोर्णादौ । नुगशां । स्वरहीनं० । आनञ्च । आनञ्चतुः । आनञ्चुः । पूजायाम् ।

पूजायामञ्चेर्नलोपाभावो वाच्यः । अञ्च्यात् । गतौ तु अच्यात् । अञ्चिता, अञ्चिष्यति, आञ्चिष्यत्, आञ्चत् । आच्छि आयामे । आञ्छति, आनाञ्छ । आञ्छतेर्नुग्वेति केचित् । आञ्छ, आञ्छ्यात् आञ्छिता, आञ्छिष्यति, आञ्छिष्यत, आञ्छीत् । हुर्छा कौटिल्ये । य्वोर्विहसे इति दीर्घः । हूर्छति । कुहोश्चुः । वर्गचतुर्थो हस्य सवर्णः । झपानां जबचपाः । जुहूर्छ अहूर्छीत् । वज गतौ । वजति वजेत् वजतु अवजत् ।

पूजायामञ्चेर्धातोर्नकारस्य लोपाभावो वाच्यः । अञ्च्यात् । गतौ तु लोपः । इति सूत्रेण नकारस्य लोपो भवति । अच्यात् । अञ्चिता । अन्यानि सुगमानि अञ्चिष्यति । स्वरादेः । आञ्चिष्यत् । आञ्चीत् । आच्छि आयामे । इदितो नुम् । आञ्छति । आञ्छेत् । आञ्छतु । स्वरादेः । आञ्छत् । आ आञ्छ् णप् इति जाते । नुगशां । अनेन नुक् । स्वरहीनं० । आनाञ्छ । आनाञ्छतुः । आनाञ्छुः । आञ्छतेर्धातोर्नुगशामिति सूत्रेण विहितो नुग् वा भवतीति केचिदाचार्या वदन्ति । तदा द्विश्च । सवर्णदीर्घः । आञ्छ । आञ्छतुः । आञ्छुः । आञ्छ्यात् । आञ्छिता । आञ्छिष्यति । स्वरादेः । आञ्छिष्यत् । आञ्छीत् ॥ हुर्छा कौटिल्ये । पूर्ववत् तिवादयः । 'हुर्छ् अ तिप्' इति स्थिते । य्वोर्विहसे अनेन दीर्घः । स्वरहीनं० । हूर्च्छति । हूर्च्छेत् । हूर्च्छतु अहूर्च्छत् । 'हु हुर्छ् णप्' इति स्थिते कुहोश्चुः । वर्गचतुर्थो हस्य सवर्णः । अनेन हकारस्य झकारो भवति । झपानां जबचपाः । अनेन झकारस्य जकारः । य्वोर्विहसे । अनेन दीर्घः । स्वरहीनं० । जुहूर्च्छ । जुहूर्च्छतुः । जुहूर्च्छुः । हूर्च्छ्यात् । हूर्च्छिता । हूर्च्छिष्यति । अहूर्च्छिष्यत् । अहूर्च्छीत् ॥ वज गतौ । पूर्ववत् । वजति । वजेत् । वजतु । अवजत् । ववज् णप् इति जाते लोपः । पचां कित्ये चास्य । अनेन सूत्रेण णत्वपूर्वलोपे प्राप्ते सति सूत्रम् ।

शसददवादिगुणभूताकारणां नैत्वपूर्वलोपौ वक्तव्यौ । शसु हिंसायाम् । दद दाने । शशास शशसतुः । ददाद ददतुः ।

ववाज ववजतुः ववजुः। ववजिथ। अवाजीत् अवजीत्। व्रज गतौ। व्रजति, व्रजेत्, व्रजतु, अव्रजत्। वव्राज वव्रजतुः वव्रजुः। व्रज्यात्, व्रजिता, व्रजिष्यति, अव्रजिष्यत्।

शस्०। शस् दद् वादिगुणभूताकाराणां किति णबादौ परे एत्वपूर्वलोपौ न वक्तव्यौ। अनेनास्यैत्वपूर्वलोपनिषेधः। किंतु 'अत उपधायाः' अनेन सूत्रेण वृद्धिः। ववाज। ववजतुः। ववजुः। ववजिथ। वज्यात्। वजिता। वजिष्यति। अवजिष्यत्। अवाजीत्। हसादेः। अवजीत्। व्रज् गतौ। व्रजति। अन्यानि सुगमानि। लुङ् लकारे वृद्धिविकल्पे सूत्रम्।

वदिव्रज्योः सौ नित्यं वृद्धिः। अव्राजीत। अज् गतौ क्षेपणे च। अजति, अजेत्, अजतु, आजत्।

वदिव्रज्योः। वदिव्रज्योर्धात्वोः सौ परे नित्यं वृद्धिर्भवति। अनेनास्य वृद्धिविकल्पाभावः। अव्राजीत्। अज् गतौ क्षेपणे च। अजति। अजेत्। अजतु। स्वरादेः। आजत्।

अजेरार्धधातुके वी वक्तव्यः वसादौ वा। एतच्च विभक्तिचतुष्टयं सार्वधातुकं परमार्धधातुकसंज्ञं पाणिनीयानाम्। द्वित्वम् वृद्धिः। विवाय।

अजेरार्धधातुके। अजेर्धातोरार्धधातुके विषये वीवक्तव्यो वसादौ परे वा भवति। सार्वधातुकार्धधातुकयोर्लक्षणं मूले उक्तम्। अनेन वीरादेशः। वी णप् इति स्थिते द्वित्वं। ह्रस्वः। वि वी णपिति जाते धातोर्नामिनः। अनेन सूत्रेण वृद्धिर्भवति। स्वरहीनं०। विवाय। वि वी अतुस् इति स्थिते सूत्रम्।

नुधातोः। विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ भवतः स्वरे परे। अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ। विव्यतुः विव्युः।

नुधातोः। नुश्च धातुश्च नुधातुस्तस्य नुधातोः (ष. ए.) स्वादेर्नुरिति स्वादेरुत्पन्नस्य नु इति विकरणस्य तथा धातोरिति। इवर्णान्तोवर्णान्तधातोः संबन्धिन इवर्णस्य उवर्णस्य इयुवौ भवतः। इवर्णस्य इय् उवर्णस्य उव्। अत्रापि विशेषमाह। अनेकेत्यादि तु पुनः। अनेकस्वरः संयोगपूर्वरहितश्च यो धातुर्भवति तत्संबन्धिनोरिवर्णोवर्णयोर्यकारवकारौ एव भवतः। एवंभूतस्य नुविकरणसंबन्धिन

उवर्णस्यापि वत्त्वम् । तुशब्दात् क्वचिदेकस्वरस्यापि यकारः । यथावदंति क्वचिदनेकस्वरस्यापि इय् । यथा ईयतुः य्वोर्धातोः । य्वौ वा । इति सूत्रद्वयेन केवलस्य ईकारस्य च ऊकारस्य इयादिकार्यम् अत्र तु नुधातोरित्यनेन सूत्रेण सर्वत्र इवर्णस्य उवर्णस्य च इयादिकार्यं भवति । इति विशेषः । अनेन सूत्रेणानेकस्वरस्यासंयोगपूर्वस्यास्येकारस्य यकारो भवति । विव्यतुः । विव्युः । गुणः । विवयिथ ।

स्वरान्तान्नित्यानिटस्थपो वेट् । विवयिथ-विवेथ आजिथ विव्यथुः विव्य । विवाय-विवय विव्यिव-आजिव विव्यिम-आजिम । वीयात् ।

स्वरांतात्० । स्वरांतात् नित्यानिटो धातोः थपो वा इट् भवति । अनेनास्य वेट् भवति । गुणः । विवेथ । विव्यथुः । विव्य । विवाय । विवय । विव्यिव । विव्यिम । वीयात् । अज् ता इति स्थिते । अजेरार्धधातुके । अनेन वीरादेशः । तदा वी ता इति स्थिते सूत्रम् ।

नैकस्वरादनुदात्तात् । एकस्वराद्धातोर्धातुपाठेऽनुदात्त इत्येवं पठितादिडागमो न भवति ।

नैकस्वरादनुदात्तात् । न ( अ० ) एक एव स्वरो यस्य स नैकस्वरस्तस्मात् एकस्वरात् ( पं. ए. ) अनुदात्तात् ( पं. ए. ) त्रिपदं सूत्रम् । यो धातुः एकस्वरात्मकः धातुपाठेऽनुदात्त इति संज्ञकः कथितस्तस्मात् परेषां पूर्वोक्तानां सिसतासीस्यपाम् इडागमो न भवति । उदात्ताः सेट एष्टव्याः । तथाऽनुदात्ता अनिट एष्टव्याः । अनुदात्ता धातवो धातुपाठात् ज्ञेयाः । अत्रानिट्कारिकाऽस्ति । तस्याः श्लोकाः सन्ति ।

॥ अथानिट्कारिकाः ॥

अनिट्स्वरान्तो भवतीति दृश्यतामन्यांस्तु सेटः प्रवदन्ति तद्विदः ॥ अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रियावपि ॥ १ ॥ गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः ॥ इति स्वरान्ता निपुणैः समुच्चितास्ततो हसान्तानपि सन्निबोधत ॥ २ ॥ शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिस्तथैवच ॥ रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥ यमिर्यमान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः ॥

नमिश्चतुर्थी हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ॥ इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ॥ लिशिं च शान्तानिटः पुरागाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥ रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिः क्षुधिः शुध्यतिबुध्यती व्यधिः ॥ इमे तु धान्ता दश चानिटो मतास्ततः परं सिद्ध्यतिरेव नेतरे ॥ ७ ॥ शिषिं पिषिं शुष्यतिपुष्यती त्विषिं श्लिषिं विषिं तुष्यतिदुष्यती द्विषिम् ॥ इमान्दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान्कृषिकर्षती तथा ॥ ८ ॥ तपिं तिपिं चापिमथो वपिं स्वपिं लुपिं लिपिं तृप्यतिदृप्यती सृपिम् ॥ स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥ अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यतिस्विदीन् ॥ तुदिं नुदिं विन्दति विन्द इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥ १० ॥ पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ॥ त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥ ११ ॥

॥ इत्यनिट्कारिकाः ॥

वेता-अजिता वेष्यति-अजिष्यति आजिष्यत्-अवेष्यत् आजीत् । धातोर्नामिनः । सेः अवैषीत् । ष्टुत्वम् । अवैष्टाम् अवैषुः । क्षि क्षये । क्षयति, क्षयेत्, क्षयतु, अक्षयत् , चिक्षाय । नुधातोः । चिक्षियतुः ।

तथाचाकारान्ताः सर्वेऽप्यनिटो दरिद्रावर्जम् । भू सत्तायां रु शब्दे सु प्रसवणे क्ष्णु

तेजने । शीङ् स्वप्ने । श्रु श्रिश्रणे । णु शब्दे । टुक्षुशब्दे टु ओश्वीर् गतिवृद्धयोः । डीङ् विहायसा गतौ । श्रिञ् सेवायाम् । वृञ् संभक्तौ । वृञ् संवरणे । इत्येतद्वर्जम् अन्ये इवर्णोवर्णान्ताः धातवोऽनिटो ज्ञेयाः । टुओश्वीर् गतिवृद्धयोः श्रिञ् सेवायाम् एतौ द्वौ वर्ज्जयित्वा इकारान्ता सर्वेऽप्यनिटः । ईकारान्तेषु शीङ् स्वप्ने ' डीङ् विहायसा गतौ ' एतौ द्वौ वर्ज्जयित्वान्ये सर्वेऽप्यनिटः । ऊकारान्तेषु यु रु णु क्ष्णु टु स्नु ऊर्णुञ् एतान् सप्त धातून् वर्ज्जयित्वाऽन्ये सर्वेऽप्यनिटः । ऊकारान्ताः सर्वेऽपि सेटः । न कोऽपि अनिट् । ऋकारान्तेषु वृङ् वृञ् वरणे संभक्तौ जागृ निद्राक्षये एतान् त्रीन् धातून् वर्ज्जयित्वाऽन्ये सर्वेऽप्यनिटः । एकारान्ताः षडेवानिटः । ऐकारान्ताः सर्वेऽप्यनिटः । ओकारान्ताः पञ्चैवानिटः । औकारान्तो धातुः कोऽपि नास्ति । अथ व्यञ्जनान्ताः कथ्यन्ते । तथात्रानिट्त्वाधिकारात्कातंत्रसूत्राणि लिख्यन्ते । शकेः कात् नेट् । पचि वचि सिचि विचि मुचेश्चात् । प्रच्छेः छात् । युजि रुजि भुजि भञ्जि त्यजि भ्राजि यजि मस्जि सृजि निजि विजिर् ष्वंजेर्जात् अदि तुदि नुदि क्षुदि स्विदि स्वद्यति विन्दति छिदि भिदि हदि सदि पदि खिदेर्दात् । राधि रुधि क्रुधि क्षुधि बन्धि साधि शुध्यति बुध्यति युधि बधि व्यधेर्धात् । हनिमन्यतेर्नात् । आपि तपि तिपि स्वपि वपि क्षिपि छुपि लुपि लिपि सृपेः पात् । यभिरभिलभिभ्यो भेभ्यः । यमि रमि लमि नमि गमेर्मात् । रिशि रुशि क्रुशि लिशि विशि दिशि दृशि स्पृशि मृशि दंशेः शात् । त्विषि पुष्यति कृषि श्लिष्यति द्विषि पिषि विषि शिषि सिषि सुषि शुषि तुषि दुषेः षात् । वसि घसेः दहि दिहि दुहि मिहि मुहि रुहि लिहि नहि वहेर्हात् । च गदि गुदेः सने एभ्यो धातुभ्यः सिसतासीस्यतामिट् इति सूत्रेण इडागमो न भवति । अत्र सर्वत्र कात् । अस्य पदस्य ककारात् इत्यर्थे कार्यः । इति धातवोऽनिटः । एतेषामर्था धातुपाठादवगन्तव्याः । अनेन सूत्रेण च व्याख्यानेन वीरादेशस्य इड्निषेधो भवति । गुणः । वेता । अजिता । वेष्यति । अजिष्यति । स्वरादेः । आजिष्यत् । अवेष्यत् । आजीत् । आजिष्टाम् । आजिषुः । धातोर्नामिनः । अवैषीत् । ष्टुत्वं । अवैष्टां । अवैषुः ॥ क्षिक्षये । पूर्ववत् तिवादयः । गुणः । क्षयसि । क्षयेत् । क्षयतु । अक्षयत् । क्षि णप् इति स्थिते द्विश्च । क्षि क्षि णप् इति जाते । शसात् खपाः । अनेन सूत्रेण ककारः शेषः । कुहोश्चुः । चिक्षिणपिति जाते । धातोर्नामिनः । अनेन वृद्धिः । स्वरहीनं० । चिक्षाय । तुधातोः । चिक्षियतुः चिक्षियुः । क्षियात् इति जाते सूत्रम् ।

ये । अनपि यकारे पूर्वस्य दीर्घो भवति । क्षीयात्, क्षेता, क्षेष्यति, अक्षेष्यत्, धातोर्नामिनः । अक्षैषीत् अक्षैष्टाम् अक्षैषुः ।

कटे वर्षावरणयोः । कटति, कटेत्, कटतु, अकटत्, चकाट ।

ये। (स. ए.) एकपदं सूत्रम्। अनपि यकारे परे सति पूर्वस्य स्वरस्य दीर्घो भवति। अनेन दीर्घः। क्षीयात्। क्षेता। क्षेष्यति। अक्षेष्यत्। धातोर्नामिनः। अक्षैषीत्। अक्षैष्टाम्। अक्षैषुः। कटे वर्षावरणयोः। कटति। लिट्लकारे कुहोश्चुः। अत उपधायाः। अनेन वृद्धिः। चकाट। चकटतुः। चकटुः। कट्यात्। कटिता। कटिष्यति। अकटिष्यत्। पूर्वोक्तसूत्रैः। अकट्इसिईट्दिपिति जाते। सूत्रम्।

**ह्यन्तक्षणश्वसिजागृहसादिवर्जं सेटि सौ वृद्धिः। हसादय एकारेतः। अकटीत् अकटिष्टाम् अकटिषुः। गुपू रक्षणे।**

ह्यन्त०। ह्यन्तक्षणश्वसिजागृहसादिवर्जं सेटि सौ परे वृद्धिर्भवति। अत्र हसादय एकारेतो ज्ञातव्याः। अनेन वृद्धिनिषेधः। इट् ईटि। सवर्णेदीर्घः सह। अकटीत्। गुपू रक्षणे। ऊकार ऊदितो वा इति कार्यार्थः। सूत्रम्।

**आयः। गुपूधूपूविच्छिपणिपनिभ्यः स्वार्थे आयः प्रत्ययो भवति। अनपि वा। उपधाया गुणः।**

आयः। (प्र० ए०) एकपदं सूत्रम्। गुपूधूपूविच्छिपणिपनिभ्यो धातुभ्यः स्वार्थे आयः प्रत्ययो भवति। अनपि वा भवति। गुप् आय इति स्थिते। उपधाया लघोः। स्वर। गोपाय इति जाते सूत्रम्।

**स धातुः। स यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति। धातुत्वात्तिबादयः। गोपायति, गोपायेत्, गोपायतु, अगोपायत्। कासादिप्रत्ययादाम्। गोपायांचकार। गोपायामास। गोपायांबभूव। जुगोप।**

स धातुः। सः (प्र० ए०) धातुः (प्र० ए०) यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति। सुगमम्। धातुत्वात् तिबादयः। गोपाय तिप् इति जाते अप् कर्तरि। गोपाय अप् तिप् इति जाते अदे। स्वर०। गोपायति। गोपायेत्। गोपायतु। अगोपायत्। गोपाय णप् इति स्थिते कासादिप्रत्ययादाम्। अनेन सूत्रेण आम् प्रत्ययो भवति। तदा गोपाय आम् कृ णप् इति जाते। सवर्णेदीर्घः सह। गोपायाम् कृ णपिति जाते। द्विश्च। रः। कुहोश्चुः। धातोर्नामिनः। नश्चापदान्ते झसे। स्वरहीनं०। गोपायांचकार। गोपायामास। गोपायांबभूव। अनपि वा इत्युक्तत्वात् वा यप्रत्ययो भवति। आयप्रत्ययाभावे आम्प्रत्ययाभावो भवति। गुप् णपिति स्थिते। द्विश्च। कुहोश्चुः। अनेन गकारस्य जकारो भवति। उपधाया लघोः। अनेन गुणो भवति। स्वरहीनं०। जुगोप जुगुपतुः जुगुपुः। 'गोपाय यात्' इति स्थिते सूत्रम्।

यतः । यकारस्याकारस्य च लोपो भवत्यनपि । गोपाय्यात्-गुप्यात् । गोपायिता-गोपिता । ऊदितो वा । गोप्ता । गोपायिष्यति-गोपिष्यति-गोप्स्यति । अगोपायिष्यत्-अगोपिष्यत्-अगोप्स्यत् । अगोपायीत्-अगोपीत् । अनिटो नामिवतः । अगौप्सीत् । झसात् । आगौप्ताम् । एवं धूप् सन्तापे । धूपायति । धूपायांचकार । धूपायामास । धूपायांबभूव । दुधूप । दीर्घोपधत्वान्न गुणः । तप सन्तापे । तपति, तपेत्, तपतु, अतपत्, । ततापत-तेपतुः तेपुः । तेपिथ ।

यतः । य् च अत् च यत् तस्य यतः ( ष. ए. ) यकारस्य च अकारस्य अनपि विषये लोपो भवति । अनेनाकारस्य लोपः । गोपाय्यात् । आयाभावे सति गुप्यात् । अस्य धातोः ऊदितो वा अनेन सूत्रेणेड्विकल्पो भवति । अनपि आयप्रत्ययस्यापि विकल्पोऽस्ति । गोपायिता । गोपिता । ऊदितो वा । गोप्ता । अन्यानि रूपाणि मूले उक्तान्यतो न लिखितानि । अनिटो नामिवतः । अनेन वृद्धिर्भवति । अगौप्सीत् । समाप्तोऽयं धातुः । धूप् संतापे । आयः । अनेन सूत्रेणास्यापि आयः प्रत्ययः । दीर्घोपधत्वान्न गुणः । धूपायति । धूपायांचकार । धूपायामास । धूपायांबभूव । आयाभावे । दुधूप । अन्यानि रूपाणि सुगमानि । तप् संतापे । पूर्ववत् तिबादयः । तपति । तपेत् । तपतु । अतपत् । अत उपधायाः । अनेन वृद्धिः । ततापा । लोपः पचां किल्ये चास्य । अनेनेत्वपूर्वलोपौ भवतः । तेपतुः । तेपुः । तेपिथ । अत्वतो नित्यानिटः । इदं सूत्रमस्ति ।

अत्वतो नित्यानिटस्थपो वेट् । ततप्थ । तप्यात् । तप्ता । तप्स्यति । अतप्स्यत् । अताप्सीत् । क्रमु पादविक्षेपे ॥

अत्वतः । नित्यानिटो धातोः थपो वा इड् भवति । अनेनास्य वा इट् । ततप्थ । तप्यात् । तप्ता । तप्तारौ । तप्तारः । तप्स्यति । अतप्स्यत् । णित्ये । अनेन सूत्रेण सेर्णित्वात् अत उपधायाः अनेन सूत्रेण वृद्धिः । अताप्सीत् । झसात् । आताप्तां । अताप्सुः । क्रमु पादविक्षेपे ।

क्रमुभ्रमुत्रसित्रुटिलषभ्राशभ्लाशो वा यः प्रत्ययो वक्तव्यः । चतुर्षु । क्राम्यति ।

क्रमु भ्रमु त्रसि त्रुटि लष् भ्रा० । एभ्यो वा यः प्रत्ययो चतुर्षु लकारेषु परेषु सुगमोऽस्यार्थः । द्वितीयं सूत्रम ।

क्रमः पे चतुर्षु दीर्घता वक्तव्या। क्रामति, क्राम्येत्, क्रामेत् क्राम्यतु, क्रामतु, अक्राम्यत्, अक्रामत्, चक्राम, क्रम्यात्, क्रमिता, क्रमिष्यति, अक्रमिष्यत्, अक्रमीत्। यम उपरमे।

क्रमः। क्रमुधातोः परस्मैपदे चतुर्षु परेषु दीर्घता वक्तव्या। अनेन दीर्घः। प्रथमसूत्रेण यप्रत्ययः। द्वितीयेन दीर्घता भवति। क्राम्यति। यप्रत्ययाभावे। क्रामति। एवमन्यान्यपि रूपाणि ज्ञेयानि। लिट् लकारे। अत उपधायाः। अनेन सूत्रेण वृद्धिः। रः। कुहोश्चुः। चक्राम। चक्रमतुः। चक्रमुः। क्रम्यात्। क्रमिता। अन्यानि रूपाणिं मूले उक्तानि सन्ति। णित्पे। इति णित्त्वात् अत उ०। अनेन वृद्धिप्राप्तौ। ह्यन्तक्षण० इत्यनेन सूत्रेण वृद्धेरभावः। अक्रमीत्। अक्रमिष्टाम्। अक्रमिषुः। यम उपरमे।

गमां छः। गम्‌यम्‌इषूणां छो भवत्यपि। यच्छति, यच्छेत्, यच्छतु, अयच्छत्। ययाम येमतुः येमुः। येमिथ-ययन्थ। यम्यात्, यन्ता, यंस्यति, अयंस्यत्।

गमां छः। इदं सूत्रमस्ति। गमा (ष. ब.) छः (प्र. ए.) गम् यम् इषूणां धातूनां छकारादेशो भवति तिबादिषुचतुर्षु लकारेषु परेषु। यम् अप् तिपिति स्थिते। अनेन मकारस्य छकारः। कुतोयमादेशो मकारस्य भवति तत्राह। षष्ठीति। अनेन नियमसूत्रेण मकारस्यैवादेशो भवति। तदा यच्छ् अप् तिपिति जाते। स्वरहीनं०। छः। ससेचपाज्ञसानां। यच्छति। यच्छेत्। यच्छतु। अयच्छत्। अत उपधायाः। ययाम। य यम् अस् इति स्थिते। लोपः पचां किल्ये चास्य। अनेनैत्वपूर्वलोपौ भवतः। येमतुः येमुः। येमिथ। अत्वतः। अनेन वा इट्। इडभावे एत्वपूर्वलोपाभावः। सेटि थपीत्युक्तत्वात्। ययन्थ। यम्यात्। नश्चा०। यन्ता। यंस्यति अयंस्यत्। 'अयम् सि ईट् दिप्' इति स्थिते सूत्रम्।

आदन्तानां यमिरमिनमीनां सेरिट् सक् च पे वक्तव्यौ। अयंसीत् अयंसिष्टाम् अयंसिषुः। णमु प्रह्वत्वे शब्दे च। नमति, नमेत्, नमतु, अनमत्। ननाम नेमतुः नेमुः। नेमिथ-ननन्थ। नम्यात्, नन्ता, नंस्यति, अनंस्यत्। अनंसीत् अनंसिष्टाम् अनंसिषुः। गम्लृ गतौ। लृकारो लृदित्कार्यार्थः। गच्छति, गच्छेत्, गच्छतु, अगच्छत्, जगाम।

आदन्तानाम् । आदन्तानां यमिरमिनमीनां सेरिट्चैतेषां धातूनां सगामम एतौ द्वौ परस्मैपदे वक्तव्यौ । अनेनास्येट्सकौ भवतः । तदा अयम् सक् इट् सि ईट् दिपिति स्थिते । ककारः टकारश्चेतौ । इट ईटि । सवर्णे । दिसिमि । पकारः । स्वरहीनं० । वावसाने । ह्यन्त० अनेन वृद्धेरभावो भवति । न श्चापदान्ते । अनेन मकारस्यानुस्वारो भवति । अयंसीत् अयंसिष्टाम् । अयंसिषुः समाप्तोयम् । णमु प्रह्वत्वे शब्दे च पूर्ववत् तिबादयः । आदेः ष्णः स्नः । अनेन णकारस्य नकारो भवति । नमति । लिट् लकारे । अत उपधायाः । ननाम । लोपः । नेमतुः । नेमुः । नेमिथ । अत्वतः । ननन्थ । अन्येषां लकारणां रूपाणि मूले उक्तानि । लुङ् लकारे आदन्तानाम् । अनेनेट्सकौ भवतः । ह्यन्त० अनेन वृद्धेरभावः । अनंसीत् । अनंसिष्टां । अनंसिषुः । अयं धातुरनिट् । गम्लृ गतौ । लृकारो लृदित्कार्यार्थः । गम् अप् तिपिति स्थिते । गमां छः । अनेन मकारस्य छकारः । स्वर० । छः । खसे । गच्छति । गम् णपिति स्थिते । द्विश्च । पूर्व० । कुहोश्चुः । अत उपधायाः । जगाम । जगम् अतुस् इति स्थिते सूत्रम् । गमां स्वरे । गमां (ष. ब.) स्वरे (स. ए.) द्विपदं सूत्रम् ।

**गमां स्वरे । गम् हन् जन् खन् घस् एतेषामुपधाया लोपो भवति क्ङित्यङे स्वरे । जग्मतुः जग्मुः । जगमिथ जगन्थ । गम्यात्, गन्ता ।**

गम् हन् जन् खन् घस् एतेषां धातूनां किति च ङिति स्वरे परे उपधाया लोपो भवति अङे स्वरे । अनेनोपधाया लोपो भवति । स्वर०। जग्मतुः । जग्मुः । जगमिथ । अत्व० । नश्चा० । जगन्थ । अन्यानि मूले सन्ति । तथापि लिखामि । गन्ता । गम् स्यप् तिपिति स्थिते सूत्रम् ।

**हनृतः स्यपः । हन्तेर्ऋकारान्तात्स्यप इडागमो भवति । गमेश्च पे । गमिष्यति, अगमिष्यत् ।**

हनृतः स्यपः । हन् च ऋत् च हनृत् तस्मात् हनृतः (पं. ए.) स्यपः (ष. ए.) हन्तेर्ऋकारान्तात् धातोः स्यप इडागमो भवति गमेश्च परस्मैपदे । अनेनेट् । गमिष्यति । अगमिष्यत् । सूत्रम् ।

**लित्पुषादेर्ङः । लितो धातोः पुषादेर्द्युतादेश्च ङप्रत्ययो भवति दिबादौ परस्मैपदे । सेरपवादः । अङे इत्युक्तेर्नोपधालोपः । अगमत् अगमताम् अगमन् । इषु इच्छायाम् ।**

इच्छति, इच्छेत्, इच्छतु, ऐच्छत्। इयेष ईषतुः ईषुः। इयेषिथ। इष्यात्।

लित्पुषादेर्ङः। ल लकारः इत् यस्यासौ लित् पुष् आदिर्यस्यासौ पुषादिः। लिच्च पुषादिश्च लित्पुषादिः तस्मात् लित्पुषादेः (पं. ए.) ङः (प्र. ए.) द्विपदं सूत्रं लितो धातोः पुषादेर्द्युतादेश्च भूतार्थे ङप्रत्ययो भवति दिबादौ परे सति सेरपवादो भवति। गम् ङ दिपिति जाते। गमां स्वरे। अनेनोपधाया लोपे प्राप्ते ङ इत्युक्तत्वान्नोपधाया लोपः। ङकारो गुणप्रतिषेधार्थः। स्वर०। अगमत्। इषु इच्छायाम्। पूर्ववत् तिबादयः। गमां छः। अनेन षस्य छः। छः। खसे०। स्वर०। इच्छति लिट्लकारे इ इष् णपिति स्थिते उपधाया लघोः। अनेन गुणः। असवर्णे। अनेनेय्। स्वर०। इयेष। सवर्णे। ईषतुः ईषुः। इयेषिथ। इष्यात्। इष् ता इति स्थिते सूत्रम्।

इषुसहलुभरिषरुषामनपि तस्येड्वा वक्तव्यः। एषिता-एष्टा, एषिष्यति, ऐषिष्यत्। ऐषीत् ऐषिष्टाम् ऐषिषुः। ञिफला विशरणे। फलति, फलेत्, फलतु, अफलत्, पफाल। आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते।

इषुसह०। इषुश्च सहश्च लुभश्च रिषश्च रुष् च इषुसहलुभरिषरुषः तेषाम् इषुसहलुभरिषरुषां धातूनामनपि विषये तादिप्रत्ययस्येड् वा वक्तव्यः। अनेन वेट्। गुणः। एषिता। इडभावे गुणः। ष्टुभिः ष्टुः। एष्टा। एषिष्यति। स्वरादेः। अनेन द्वितीयोऽट्। ऐषिष्यत्। ऐषीत्। ञिफला विशरणे। पूर्ववत् तिबादयः। फलति। लिट्लकारे। अत उपधायाः। अनेन वृद्धिः। झपानां। अनेन फस्य पः। पफाल। पफल् अतुस् इति स्थिते। आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते सूत्रम्।

तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वक्तव्यौ। फेलतुः फेलुः। फेलिथ, फल्यात्, फलिता, फलिष्यति, अफलिष्यत्। लव्वकारोपधत्वेन वृद्धिविकल्पे प्राप्ते।

तॄफल०। तॄफलभजत्रपां धातूनां किति णादौ परे च सेटि थपि परे एत्वपूर्वलोपौ वक्तव्यौ। अनेनास्यैत्वपूर्वलोपौ। फेलतुः। फेलिथ। अन्यानि मूले सन्ति। लुङ्लकारे। हसादेः। अनेन वृद्धिविकल्पे प्राप्ते सूत्रमिदं।

लान्तस्याकारस्य सौ नित्यं वृद्धिर्वाच्या। अफालीत्। जि जये। जयति, जयेत् जयतु अजयत्।

लान्तस्या० । धातोरकारस्य सौ परे नित्यं वृद्धिर्वाच्या। अनेन नित्यवृद्धिः। अफालीत्। जि जये। गुणः। जयति। लिट्लकारे जि जि णपिति स्थिते सूत्रम्।

सपरोक्षयोर्जेर्गिः। सप्रत्यये परोक्षे च जि जय इति धातोर्गिरादेशो भवति। जिगाय जिग्यतुः जिग्युः। जिगयिथ-जिगेथ। जीयात्, जेता, जेष्यति, अजेष्यत्, अजैषीत्, अजैष्टाम्, अजैषुः। कृष् विलेखने। कर्षति, कर्षेत् कर्षतु, अकर्षत, चकर्ष। उपधाया लघोः। चकृषतुः चकृषुः। चकर्षिथ। कृष्यात्। गुणे कृते।

सपरोक्षयोर्जेर्गिः । सश्च परोक्षश्च सपरोक्षौ तयोः सपरोक्षयोः (स. द्वि.) जेः (ष. ए.) गिः (प्र. ए.) त्रिपदं सूत्रं सप्रत्यये च परोक्षे णवादौ परे सति जि जय इति धातोर्गिरादेशो भवति। अनेन गिरादेशः। द्विश्च। धातो०। कुहोश्चुः। अनेन गकारस्य जकारः। जिगाय। ज्वधातोः। अनेन यकारः। जिग्यतुः। ये। जीयात्। जेता। अनिटोऽनेन वृद्धिः। अजैषीत्। कृष् विलेखने। पूर्ववत्। उपधायाः। कर्षति। लिट्लकारे द्विश्चरः। कुहोश्चुः। उपधायाः। स्वर०। चकर्ष। चकृषतुः। चकर्षिथ। कृष्यात्। कृष् ता इति स्थिते। उपधायाः। कृअर्ष् ता इति जातम्। तत्र सूत्रम्।

रारो झसे दृशाम्। दृश्सृज्कृष्मृश्तृप्दृप्स्पृशां झसे परे अरो र भवति। रार इति तन्त्रोपात्तं तेन रा आरः र अरः। सकृदुच्चरितमनेकोपकारकं तन्त्रम्। स्रष्टम्। क्रष्टा।

रारोझसेदृशां। र (प्र. ए.) अरः (ष. ए.) झसे (स. ए.) दृशां (ष. ब.) दृवे। उभौ। दृशादीनां दृश् स्पृश् मृश् सृज् कृष् सृप् दृप् तृप् इत्यादीनां धातूनां संबन्धिनोऽर् इत्येतस्यावयवस्य झसे परे र इत्यादेशो भवति। सस्वर एवादेशो भवति। तत्र द्रष्टव्य इत्यादौ रस्यैव दर्शनात्। अरो रो भवति। अर् इति निर्देशात् दृशादीनां गुणोऽपि सूचितस्तेन पूर्वं गुणं विधाय पश्चात् रकारः कार्यः। इत्यभिप्रायः। रा र इति तंत्रोपात्तं तेन रा आरः र अरः सकृदुच्चरितमनेकोपकारकं

त्रम्। अनेन अरः रः जातः। तदा क् र् ष् ता इति जाते स्वरहीनं०। ष्टुभिः ष्टुः। क्रष्टा। तथाच सूत्रम्।

**कृषादीनां रो वा वक्तव्यः। कर्ष्टा। रारो झसे दृशाम्।**

कृषादीनां। कृष् स्पृश् मृष् तृप् दृप् एतेषां धातूनां रः अरो वा भवति। अनेन विकल्पः। कर्ष्टा। कृष् स्यप् इति स्थिते। गुणः। रारोझसे। स्वरहीनं०। तदा क्रष् स्यपिति जातं। तत्र सूत्रम्।

**षढोः कः से। धातोः षकारढकारयोः कत्वं भवति सकारे परे। क्विलात्षः सः कृतस्य। कषसंयोगे क्षः। क्रक्ष्यति-कर्क्ष्यति, अक्रक्ष्यत्-अकर्क्ष्यत, अक्राक्षीत्। अनिटो नामिवतः। अकार्क्षीत्।**

षढोः कः से। षश्च ढ् च षढौ तयोः षढोः (ष. द्वि.) कः (प्र. ए.) से (स. ए.) त्रिपदं सूत्रम्। धातुसंबन्धिनोः षकारढकारयोः कत्वं भवति सकारे परे स्यादावेवायं विधिः। तेन मधुलिट्सु इत्यादौ ककारो न भवेत्। अनेन षकारस्य ककारः। क्विला०। कषसंयोगे क्षः। स्वरहीनं। क्रक्ष्यति। विकल्पेन अरो रो न भवति। कर्क्ष्यति लृङ्लकारे। अक्रक्ष्यत्। अकर्क्ष्यत्। अकृष् सि ईट् दिप् इति स्थिते। अनिटो०। रारो झसे। स्वरहीनं०। अक्राष् सि ईट् दिपिति जातं। अक्राष् सि ईट् दिप् इति जाते। षढोः कः से। अनेन षस्य कः। क्विला०। कषसं०। स्वरहीनं०। अक्राक्षीत्। अक्राष्टाम्। अक्राक्षुः। रकाराभावे अकार्क्षीत्। अकार्ष्टाम्। अकार्क्षुः। सूत्रम्।

**कृषादीनां वा सिर्वक्तव्यः। कृष् स्पृश् मृष् तृप् दृप् एते कृषादयः। तत्पक्षे।**

कृषादीनां०। कृषादीनां धातूनां भूते सिः इति सूत्रेण विहितः सिप्रत्ययो वा भवति। सेरभावपक्षे। इदं सूत्रम्।

**हशषान्तात्सक्। हकारान्तात् शकारान्तात् षकारान्ताच्च नाम्युपधादविद्यमानेटो दिबादौ परे सक्प्रत्ययो भवति दृशं वर्जयित्वा। सेरपवादः। अकृक्षत् अकृक्षताम् अकृक्षन्। रुष् हिंसायाम्। उपधाया लघोः। रोषति, रोषेत्, रोषतु, अरोषत्। रुरोष रुरुषतुः रुरुषुः। रुरोषिथ। रुष्यात्, रोषिता,**

रोष्टा, रोषिष्यति, अरोषिष्यत्,अरोषीत् । उष् दाहे । ओषति, ओषेत्, ओषतु, औषत् ।

हशषान्तात्सक् । हश्च शश्च षश्च हशषाः ते अन्ते यस्य स हशषान्तस्तस्मात् हशषान्तात् ( पं. ए. ) सक् ( प्र. ए. ) हकारान्तात् दुह् लिह् इत्यादेः शकारान्तात् दृशिं वर्जयित्वा विशादेः षकारान्तात् कृषादेर्नाम्युपधात् अविद्यमानेटो धातोर्भूतेऽर्थे दिबादौ परे सेः स्थाने सक्प्रत्ययो भवति । ककारो गुणनिषेधार्थः । स्थाननियमार्थश्च । तदा अकृष् स दिपिति जाते । षढोः कः से । किला० । कषसंयो० । स्वरहीनं० । अकृक्षत् । अकृक्षताम् । अकृक्षन् । सक्प्रत्ययस्य सकारः सस्वर एव तिष्ठति । रुष् हिंसायाँ । पूर्ववत् तिबादयः । उपधाया लघोः । रोषति । लिट्लकारे । रुरोष । रुष्यात् । रोषिता । इषुसह० । अनेनेड्विकल्पः । ष्टुभिः ष्टुः । रोष्टा । अन्यानि मूले सन्ति । उष दाहे । पूर्ववत् । ओषति । स्वरादेः । औषत् । उष् णपिति स्थिते सूत्रम् ।

उषविद्जागृणामाम्वा वक्तव्यः । ऊषांचकार-उवोष,उवोषिथ, उष्यात्, ऊषिता, ऊषिष्यति, औषिष्यत्, औषीत् । मिह् सेचने । मेहति, मेहेत्, मेहतु, अमेहत् । मिमेह मिमिहतुः मिमिहुः । मिमेहिथ । मिह्यात् । होढः । तथोर्धः । ष्टुत्वम् ।

उषविद्जागृणामाम्वा वक्तव्यः । ओषांचकार । आमभावे उवोष । ऊषतुः । उवोषिथ । अन्यानि संति । मिह् सेचने । उपधायाः । मेहति । लिट् मिमेह । मिह्यात् मिह् ता इति स्थिते होढः तदा मिढ् ता इति जाते तथोर्धः । मिढ् धा इति जाते ष्टुभिः ष्टुः । मिढ् ढा इति जाते ।

ढि ढो लोपो दीर्घश्च । ढकारस्य ढकारे परे लोपो भवति पूर्वस्य च दीर्घः । मेढा, मेक्ष्यति, अमेक्ष्यत् । हशषान्तात् सक् । होढः । षढोः कः से । अमिक्षत् अमिक्षताम् अमिक्षन् । दह् भस्मीकरणे । दहति, दहेत्, दहतु, अदहत् । ददाह देहतुः देहुः । देहिथ-ददग्ध । दह्यात्, दग्धा । दादेर्घः। आदिजबानां झभान्तस्य झभाः स्ध्वोः । खसे चपा० । किलात्षः सः कृतस्य । कषसंयोगे क्षः । धक्ष्यति, अधक्ष्यत्, अधाक्षीत् । झसात् । अदाग्धाम् अधाक्षुः । ग्लै म्लै हर्ष-

क्षये । आयादेशः । ग्लायति ग्लायेत् ग्लायतु अग्लायत् ।

ढि ढो लोपो०।मी ढा इति जाते गुणः। वात्र ढिढोलोपोदीर्घश्च इति सूत्रप्राप्तेः प्रागुपधाया लघोः। अनेन गुणः कार्यः। मेढा। मेढारौ। मेढारः। मिह् स्यप् तिपिति स्थिते होढः। षढोः कः से। किला०। कषसंयोगे। उपधाया लघोः मेक्ष्यति। अमेक्ष्यत्। हशषांतात्सक्। मिह्सदिपिति जाते होढः। षढोः कः से। किलात्। कषसं०। स्वरहीनं। अमिक्षत्। दह् भस्मीकरणे। दहति। अत उपधायाः। ददाह। लोपः पचां। देहतुः। देहिथ। अत्वतो० अनेनेड्विकल्पः। तदा दह् थप् इति स्थिते। दादेर्घः। अनेन हस्य घः। तथोर्धः। अनेन थस्य धः। झबेजबाः। अनेन घस्य गः। ददग्ध। दह्यात्। दग्धा। इदमपि रूपं पूर्वोक्तसूत्रैः सिध्यति। दह् स्यप् तिपिति स्थिते। दादेर्घः। अनेन हस्य घः। 'आदिजबानां'। अनेन दस्य धः। खसे चपा झसानां एनेन घस्य कः। किलात्। कषसंयोगे। धक्ष्यति। अधक्ष्यत्। दह् सि ईट् दिप्' इति स्थिते दिबादौ। दादेर्घः। आदिजबानां। खसे। किलात्०। कषसं०। स्वरहीनं०। अत उपधायाः। अधाक्षीत्। झसात्। अदाग्धां अधाक्षुः। समाप्तोऽयं। ग्लै म्लै हर्षक्षये। पूर्ववत् तिबादयः। ऐ आय्। ग्लायति। लिट् लकारे ग्लै णप् इति स्थिते सूत्रम्।

सन्ध्यक्षराणामा। सन्ध्यक्षराणां धातूनामात्वं भवति अनपि विषये। णप्। द्विश्च ह्रस्वः।पूर्वस्य हसादिः शेषः।कुहोश्चुः।

संध्यक्षराणामा। संध्यक्षराणां ( ष. ब. ) आ ( प्र. ए. ) सांकेतिकं। द्विपदं सूत्रं संध्यक्षरान्तानां धातूनां अन्त्यस्वरस्यानपिविषये कर्त्तरि तिबादिचतुर्गणवर्जितस्थले आकारो भवति। अनेन ग्लैइत्यस्य ग्ला जातः तदा ग्ला णप् इति जाते द्विश्च ह्रस्वः। ग्ल ग्ला णप् इति स्थिते पूर्वस्य हसादिः। अनेन गकारोऽवशिष्टः। कुहोश्चुः। जग्ला णप् इति जाते सूत्रम्।

आतो णप् डौ। आकारान्ताद्धातोः परो णप् डौ भवति। टिलोपः। जग्लौ।

आतो णप् डौ। आतः ( पं. ए. ) णप् ( प्र. ए. ) डौ ( प्र. ए. ) सांके० त्रिपदं सूत्रं। आकारान्ताद्धातोः परो यः प्रथमपुरुषे च उत्तमपुरुषे णप् डौ भवति डकारष्टिलोपार्थः। डित्करणं विनापि रूपसिद्धो यत् डौ इति डित्करणं तत् आतोयुक् इति युगागमनिषेधार्थं। कृतेऽपि युगागमे टिलोपः स्यादेव। अनेन णप् डौ जातः। डित्वात् टिलोपः। स्वरहीनं०। जग्लौ। जग्ला अतुस् इति जाते सूत्रम्।

आतोऽनपि। धातोराकारस्य लोपो भवति अनपि किति

ङिति स्वरे सेटि थपि च । जग्लतुः जग्लुः । जग्लिथ-जग्लाथ जग्लथुः जग्ल । जग्लौ जग्लिव जग्लिम ।

आतोनपि । आतः ( ष. ए. ) न अप् अनप् तस्मिन् अनपि यत्राप् कर्त्तरि इत्यादि विकरणं न भवति तस्य विभक्तौ परतः तस्या एव किति ङिति च स्वरे परे इटि च धातोरेकारस्य लोपो भवति । अत्र णबादौ अनप् तत्रापि तं विना सर्वोऽपि प्रत्ययः कित् । तत्रानेनाकारस्य लोपो भवति । जग्लतुः । अन्यानि मूले सन्ति । ग्लायात् इति स्थिते सूत्रम् ।

संयोगादेरादन्तस्य किति यादावेकारो वा वक्तव्यः । ग्लायात् ग्लेयात्, ग्लाता, ग्लास्यति, अग्लास्यत् । अग्लासीत् अग्लासिष्टाम् अग्लासिषुः । गै रै कै शब्दे । गायति, गायेत्, गायतु, अगायत् । जगौ जगतुः जगुः ।

संयोगादेरिति । संयोगादेः आदन्तस्य धातोः किति यादौ परे एकारो वा वक्तव्यः । षष्ठीनिर्दि० । अनेन नियमसूत्रेण अन्तस्यैव भवति । ग्लायात् । ग्लेयात् । अग्लासि ईट् दिप् इति स्थिते । आदन्तानां । तदा अग्लास् इट् सि ईट् दिप् इति जाते इट ईटि । सवर्णे० । स्वरहीनं० । अग्लासीत् । गै रै कै हर्षक्षये । गायति अन्यानि रूपाणि मूले सन्ति । आशिषि लिङ्लकारे विशेषः । गायात् इति स्थिते सूत्रम् ।

दादेरे । अपित्दाधामागैहाकूपिबसोस्थानामाकारस्यैकारो भवति आशीर्यादादौ परस्मैपदे परे । गेयात्, गाता, गास्यति, अगास्यत् । अगासीत् अगासिष्टाम् अगासिषुः । ष्टै शब्दसंघातयोः । सत्वनिषेधः । ष्ट्यायति, ष्ट्यायेत्, ष्ट्यायतु, अष्ट्यायत् । सन्ध्यक्षराणामा । शसात्खपाः । षाट्टवर्गस्तवर्गज इति षकारे गते तकार एव । तष्ट्यौ ष्ट्यायात् ष्ट्येयात् ष्ट्याता ष्ट्यास्यति अष्ट्यास्यत् अष्ट्यासीत् । दैप् शोधने । दायति, दायेत्, दायतु, अदायत्, ददौ । पित्वादेकाराभावः । दायात्, दाता, दास्यति, अदास्यत् । अदासीत् अदासिष्टाम् अदासिषुः । पित्त्वात्सिलोपाभावः । इत्यादि । धेट् पाने । ट

ईवर्थः। धयति, धयेत्, धयतु, अधयत्, दधौ, धेयात्, धास्यति, अधास्यत्। वा सिलोपः। अधासीत् अधासिष्टाम् अधासिषुः। अधात् अधाताम्। स्याविदः।

दादेरे। दादेः (ष. ए.) ए (प्र. ए.) अपित् दा धा मा गे हाक् पिबति स्थानां आकारस्य एकारो भवति यादादेः परस्मैपदे परे। गेयात् अन्यानि रूपाणि पूर्ववत् साध्यानि वैयाकरणैः। ष्टचै शब्दसंघातयोः। नामधातुः। अनेनास्य सत्वनिषेधः। ऐ आय्। ष्टचायति। लिट्लकारे ष्टचै णप् इति स्थिते। संध्यक्षराणां० ष्टचा णप् इति जाते। द्विश्च। शसात्। पूर्वस्य। षाट्टवर्गस्तवर्गजः इति षकारे गते तकार एव शेषः। तष्टचा णप् इति जाते। आतो णप् डौ। स्वरहीनं०। तष्टचौ। अत्वतो नित्यानिटश्च धातोस्थपो वेट् भवति। तष्टिचथ। तष्टचाथ। संयोगादेः। ष्टचायात्। ष्टचेयात्। अन्यानि मूले सन्ति। तेषां साधनं सुगमम्। पूर्वधातुवत्। दैप् शोधने पकारो धातुभेदज्ञापनार्थः। पूर्ववत् तिबादयः। ऐ आय्। दायति। ददौ। पित्त्वात् दादेरे। अनेन एकारो न भवति। दायात्। आदन्तानाम्। अदासीत्। पित्त्वात् दादेः पे। अनेन सिलोपो न भवति। धेट् पाने। ट ईवर्थः। ए अय्। धयति। लिट्लकारे। संध्यक्षराणां०। द्विश्च। ह्रस्वः। झपानां। आतो णप् डौ। दधौ। दादेरे। धेयात्। अधासीत्। शाच्छा०। अनेन वा सिलोपः। अधात्। अधातां। अधा अन् इति जाते। स्याविदः। अधा उस् इति जाते सूत्रम्।

उस्यालोपः। उसि परे धातोराकारस्य लोपो भवति। अधुः। धेटः सेरङ्। धातोर्द्वित्वं वेति केचित्। आतोऽनपि। अदधत् अदधताम् अदधन्। दृशिर् प्रेक्षणे।

उस्या लोपः। उसि (स. ए.) आ (ष. ए.) सांके०। लोपः (प्र. ए.) उसि परे सति धातोराकारस्य लोपो भवति। अनेनाकारस्य लोपः। अधुः। धेटः सेः स्थाने अङ् धातोर्द्वित्वं वा भवति इति केचिदाचार्या वदन्ति। अनेनाङ्द्विर्त्वे भवतः। 'अ धा धा अङ् दिप्' इति जाते। ह्रस्वः। झपानां। आतो नपि। स्वरहीनं०। अदधत्। दृशिर् प्रेक्षणे। पूर्ववत् तिबादयः। इर् अनुबन्धः 'इरितो वा' इति सूत्रस्थविशेषार्थः। दृश् अप् तिप् इति सूत्रम्।

दृशादेः पश्यादिः। दृशादेर्धातोः पश्यादिरादेशो भवति चतुर्षु परेषु। दृश् ऋ सृ शद् सद् पा घ्रा ध्मा स्था म्ना दाण् एते दृशादयः। पश्य ऋच्छ धौ शीय सीद पिब जिघ्र

धम तिष्ठ मन यच्छ एते पश्यादयः । पश्यति, पश्येत्, पश्यतु, अपश्यत् । ददर्श, ददृशतुः, ददृशुः । सृजिदृशोस्थपो वेट् । ददर्शिथ । गुणः । रारो झसे दृशाम् । षत्वम् । दद्रष्ठ ददृशथुः ददृश । ददर्श ददृशिव ददृशिम । दृश्यात्, द्रष्टा, द्रक्ष्यति, अद्रक्ष्यत् । अत उपधायाः । अद्राक्षीत् । झसात् । ष्टुत्वम् । अद्राष्टाम् अद्राक्षुः । पक्षे । इरितो वा । दृशादेर्ङे गुणः । अदर्शत् अदर्शताम् अदर्शन् । ऋ गतौ । ऋच्छादेशः । ऋच्छति ऋच्छेत् ऋच्छतु आर्च्छत् । रः । पश्चात् ऋ अर् । वृद्धिः । आर आरतुः आरुः ।

दृशादेः पश्यादिः । दृश् आदिर्यस्यासौ दृशादिस्तस्य दृशादेः (ष. ए.) पश्य आदिर्यस्यासौ पश्यादिः (प्र. ए.) दृशादेर्धातोस्तिवादौ विभक्तिचतुष्टये परे पश्य इत्यादिः आदेशो भवति । अनेन पश्यादेशः । पश्य अप् तिप् इति जाते अदे स्वरहीनं० । पश्यति । लिट्लकारे । उपधायाः । अनेन गुणः । ददर्श । ददृशतुः । ददृशुः । ददर्शिथ । सृजिदृशोरिति सृजिदृशोर्धात्वोः थपो वा इट् भवति । अनेनास्य थपि वा इट् भवति । इडभावे । ददृश् थप् इति जाते । गुणः । उपधाया लघोः । रारोझसेदृशां । अनेन अरो रजातः । छशषराजादेः । ष्टुत्वं । दद्रष्ठ । रारोझसे । द्रष्टा । अत उपधायाः । अद्राक्षीत् । झसात् । अद्राष्टाम् । अस्य इरितो वानेन ङ-प्रत्ययो भवति । तदा अदृश् ङ दिप् इति जाते । दृशादेः । दृशादेर्धातोर्ङकारे परे गुणो भवति । अनेन गुणः । ङकारो ङित्कार्यार्थः स्वर० । अदर्शत् । ऋ गतौ । दृशादेः । अनेन ऋच्छादेशः । अदे । ऋच्छति । चतुर्णां लकाराणां रूपाणि सन्ति । सुगमत्वात् व्याख्यानं न कृतम् । ऋ 'णप्' इति स्थिते द्विश्च । रः । अ ऋ णप् इति जाते ऋ अर् । अर् णप् इति जाते । अत उपधायाः । अनेन वृद्धिः । आर । गुणोर्तिसवर्णे । आरतुः आरुः । सूत्रम् ।

अत्त्यर्तिव्ययतीनां थपो नित्यमिट् । आरिथ आरथुः आर । आर आरिव आरिम ।

अत्त्यर्ति० । अत्त्यर्तिव्ययतीनां धातूनां थपो नित्यमिट् भवति । अत्वतो० अस्य विकल्पस्यायमपवादः । आरिथ । ऋ यात् इति स्थिते । सूत्रम् ।

गुणोर्त्तिसंयोगाद्योः । अर्तेः संयोगादेर्ऋदन्तस्य च गुणो भ-

वति यकि यङि किति णादावाशीर्यादादौ च । अर्यात् अ-
र्ता । हनृतः स्यपः अरिष्यति आरिष्यत् ।

गुणोर्तिसंयोगाद्योः । अर्तिश्च संयोगादिश्च अर्तिसंयोगादी तयोः अर्तिसंयो-
गाद्योः । ऋ गतावित्यस्य धातोः संयोगादेर्ऋदन्तस्य च ऋकारस्य गुणो भवति
यकि यङि किति णादौ आशीर्यादादौ च । अनेनारतुः इति रूपं सिद्धं भवति गु-
णोऽनेन तदा अर्य्यात् । गुणः । अर्त्ता । हनृतः स्यपः । अनेनास्येट् । गुणः । अ-
रिष्यति । स्वरादेः । आरिष्यत् । सूत्रम् ।

सर्तिशास्त्यर्तिभ्यो ङो लुङि । सेरपवादः । लित्पुषादेर्ङः
आरत् आरताम् आरन् । अर्तेर्वा ङः । सेरपवादो लुङीति
केचित् । आर्षीत् । सृ गतौ । धावादेशः । धावति । शी-
घ्रगतावेव धावादेशः । सरति । ससार सस्रतुः सस्रुः । क्रादि-
त्वात् । ससर्थ सस्रथुः सस्र । ससार-ससर सस्रृव सस्रृम ।

सर्तिशास्त्यर्तिभ्यो ङो लुङि सेरपवादः । सर्तिशास्ति अर्ति एभ्यो धा-
तुभ्यो ङप्रत्ययो भवति सेरपवादः । अनेनास्य ङः । दृशादेः स्वरादेः । आरत् ।
अर्त्तेः । अर्त्तेर्धातोर्वा ङप्रत्ययो भवति । लुङि सेरपवादः । इति केचिदाचार्या वद-
न्ति । तेषां मते सेः । स्वरादेः । आर्षीत् इति रूपं सिद्धं भवति । सृगतौ । धावादे-
शः । धावति शीघ्रगतावेव धावादेशः । तदभावे । सरति । लिट् लकारे । ससार ।
थपि क्रादित्वान्नेट् । ससर्थ । सृ यात् इति स्थिते सूत्रम् ।

यादादौ । ऋकारस्य रिङादेशो भवति यादादौ परस्मैपदे
परे । ङकारो व्यवधानार्थः । तेन ये इति न दीर्घः । स्रि-
यात् सर्ता सरिष्यति असरिष्यत् । पुषादित्वात्ङः । असरत्
असरताम् असरन् । शद्लृ शातने ।

यादादौ । यादादौ ( स. ए. ) एकपदं सूत्रम् । आशीरर्थे यादादौ परे धातो-
र्ऋकारस्य रिङ् इत्यादेशः परस्मैपदे एव । अत्रापि ङकारो ये इति सूत्रेण विहित-
दीर्घनिषेधार्थः । स्रियात् । सर्त्ता । हनृतः स्यपः । सरिष्यति । असरिष्यत् । पुषादि०
अनेन ङः । दृशादेः । असरत् । शद्लृ शातने । शीयादेशः । सूत्रम् ।

शीयादेशे आत्मनेपदं वाच्यम् । शीयते शीयेत शीयताम्
अशीयत शशाद । लोपः पचाम् । शेदतुः शेदुः । शेदिथ-श-

शत्थ शद्यात् शत्ता शत्स्यति अशत्स्यत् । ऌदित्वात्ङः । अशदत् षदॢविशरणगत्यवसादनेषु । सत्वम् । सीदादेशः । सीदति । ससाद सेदतुः सेदुः । सेदिथ- ससत्थ सद्यात् सत्ता सत्स्यति असत्स्यत् असदत् । निपूर्वः । न्यषदत् । पा पाने पिबादेशः । पिबति पिबेत् पिबतु अपिबत् । पपौ पपतुः पपुः । पपिथ-पपाथ । दादेरे पेयात् पाता पास्यति अपास्यत् । दादेः पे । अपात् । घ्रा गन्धोपादाने । जिघ्रादेशः । जिघ्रति जिघ्रेत् जिघ्रतु अजिघ्रत् । जघ्रौ जघ्रतुः जघ्रुः । जघ्रिथ-जघ्राथ । घ्रायात्, घ्रेयात्, घ्राता, घ्रास्यति, अघ्रास्यत्, अघ्रासीत्, अघ्रात् । ध्मा शब्दाग्निसंयोगयोः । धमादेशः । धमति, धमेत्, धमतु, अधमत्, दध्मौ, ध्मायात्, ध्मेयात्, ध्माता, ध्मास्यति, अध्मास्यत्, अध्मासीत् । ष्ठा गतिनिवृत्तौ । आदेः ष्णः स्नः । सकारे जाते निमित्ताभावेन ठस्य थः । तिष्ठादेशः । तिष्ठति, तिष्ठेत्, तिष्ठतु, अतिष्ठत् । शसात्खपाः । तस्थौ तस्थतुः तस्थुः । स्थेयात्, स्थायात्, स्थाता, स्थास्यति, अस्थास्यत् । निपूर्वः । षत्वम् । न्यष्ठात् । म्ना अभ्यासे । मनादेशः । मनति, मनेत्, मनतु, अमनत् । मम्नौ मम्नतुः मम्नुः । मम्निथ-मम्नाथ । म्नायात् म्नेयात्, म्नाता, म्नास्यति, अम्नास्यत्, अम्नासीत् । दाण् दाने । यच्छादेशः । यच्छति, यच्छेत्, यच्छतु, अयच्छत् । ददौ ददतुः ददुः । दादेरे । देयात्, दाता, दास्यति, अदास्यत्, अदात् । ह्वृ कौटिल्ये । ह्वरति, ह्वरेत्, ह्वरतु, अह्वरत्, जह्वार । गुणोर्तिसंयोगाद्योः । जह्वरतुः जह्वरुः ।

शीयादेशे । शीयादेशे कृते सति आत्मनेपदं वाच्यम् । अनेनास्यात्मनेपदत्वं । शीयते । लिट्लकारे । अत उपधायाः । शशाद । लोपः पचां । शेदतुः । अ-

त्त्वतः० अनेन वा इट्। शेदिथ। खसे चपा झसानाम्। शशत्थ। शद्यात्। खसे चपा झपानां। शत्ता। अन्यानि मूले सन्ति लित्पुषादेर्ङः। अनेनास्य ऌदित्त्वात् ङः। अशदत्। शद्ऌ विशरणगत्यवसादनेषु। सत्वं। सीदादेशः। सीदति। ससाद। लोपः। सेदतुः। अत्त्वतः। सेदिथ। खसे चपा०। ससत्थ। खसे०। सत्ता। अन्यानि सन्ति। लुङ्लकारे लित्पुरुपादेर्ङः। असदत्। अयं धातुर्यदा निपूर्वो भवति तदा 'प्रादेश्च' अनेन षत्वं। न्यषदत्। पा पाने। पिबादेशः। पिबति। लिट्लकारे 'पा णप्' इति स्थिते। द्विश्च। ह्रस्वः। आतो णप् डौ। पपौ। आतोऽनपि। पपतुः। अत्वतो०। पपिथ। पपाथ। दादेरे। पेयात्। दादेः पे। अनेन सेर्लोपो भवति। अपात्। अपातां। अपुः। आतोऽनपि इत्यनेनाकारस्य लोपः। घ्रा गन्धोपादाने। जिघ्रादेशः। जिघ्रति। घ्रा णप् इति स्थिते। द्विश्च। ह्रस्वः। रः। झपानां। कुहोश्चुः। आतो णप् डौ। जघ्रौ। अत्वतः। जघ्रिथ। जघ्राथ। संयोगादेः। घ्रायात्। घ्रेयात्। आदन्तानाम्। अघ्रासीत्। शाच्छासा०। अनेन वा सेर्लोपः। अघ्रात्। ष्ठा गतिनिवृत्तौ। 'आदेः ष्णः स्नः' अनेन षस्य सः। 'निमित्ताभावे०' अनेन न्यायेन ठस्य थः। दृशादेः। तिष्ठादेशः। तिष्ठति। 'स्था णप्' इति स्थिते द्विश्च। ह्रस्वः। शसात् झपानां। सवर्णत्वात्। आतो णप्। तस्थौ। दादेरे। स्थेयात्। स्थायात्। लुङ्लकारे। निपूर्वोऽयं। दादेः पे। अनेन सेर्लोपो भवति। प्रादेश्च। न्यष्ठात्। म्ना अभ्यासे। मनादेशः। पूर्ववत् तिबादयः। अदे। मनति। पूर्वस्य। मम्नौ। अत्त्वतः। मम्निथ। मम्नाथ। संयोगादेः। म्नायात्। म्नेयात्। अन्यानि मूले सन्ति। लुङ्लकारे। आदन्तानाम्। अम्नासीत्। दाण् दाने। दृशादेः। अनेन यच्छादेशः। यच्छति। दा णप् इति स्थिते। द्विश्च। ह्रस्वः। आतो णप् डौ। ददौ। आतोऽनपि। ददतुः। अत्त्वतः। ददिथ। ददाथ। दादेरे। देयात्। लुङ्लकारे दादेःपे। अनेन सेर्लोपो भवति। अदात्॥ ह्वृ कौटिल्ये। कुटिलस्य भावः कौटिल्यं तस्मिन् कौटिल्ये। गुणः। ह्वरति। ह्वृ णप् इति स्थिते द्विश्च। रः। पूर्वस्य। कुहोश्चुः। धातोर्नामिनः। अनेन वृद्धिः। जह्वार। गुणोर्तिसंयोगाद्योः। अनेन किति णबादौ गुणः। जह्वरतुः। सूत्रम्।

ऋदन्तस्य थपो नेट्। जह्वर्थ जह्वरथुः जह्वर। जह्वार-जह्वर जह्वरिव जह्वरिम। ह्वर्यात्, ह्वर्ता। हनृतः स्यपः। ह्वरिष्यति, अह्वरिष्यत्। वृद्धिः। अह्वार्षीत् अह्वार्ष्टाम्। स्कन्दिर् गतिशोषणयोः। स्कन्दति, स्कन्देत्, स्कन्दतु, अस्कन्दत्। चस्कन्द चस्कदन्तुः चस्कन्दुः। चस्कन्दिथ।

ऋदन्तस्य । ऋदन्तस्य धातोः स्यप इट् न भवति । जह्वर्थ । ह्वर्यात् । ह्वर्ता । हनृतः । ह्वरिष्यति । अह्वरिष्यत् । णित्पे । अनेन णित्त्वात् वृद्धिः । अह्वार्षीत् । स्कन्दिर् गतिशोषणयोः । इर् अनुबन्धः इरितो वा इति सूत्रस्य विशेषणार्थः । स्कन्दति । लिट्लकारे । स्कन्द् णप् इति स्थिते द्विश्च । शसात् । पूर्वस्य । कुहोश्चुः । चस्कन्द । ऋसंयोगात् । अनेनाकित्त्वात् नोलोपः इति सूत्रेणानुस्वारस्य लोपो न भवति । चस्कन्दतुः । अत्वतः । अनेनास्य वेट् । चस्कन्दिथ । इडभावे चस्कन्द थप् इति स्थिते सूत्रम् ।

हसात्परस्य झसस्य सवर्णे झसे लोपो वाच्यः । चस्कन्थ । नो लोपः । स्कद्यात्, स्कन्ता, स्कन्त्स्यति, अस्कन्त्स्यत् ।

हसात् । हसात् परस्य सवर्णे झसे परे लोपो वाच्यः । अनेन दस्य लोपः । चस्कन्थ । नोलोपः । स्कद्यात् । हसात् । स्कन्ता । खसे चपा झसानाम् । स्कन्त्स्यति । अस्कन्त्स्यत् । सूत्रम् ।

सावनिटो नित्यं वृद्धिः । णित्त्वविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः । अस्कान्त्सीत् । इरितो वा । अस्कदत् । तॄ प्लवनतरणयोः । तरति, तरेत्, तरतु, अतरत् । कित्त्वाभावाद्गुणः । ऋसंयोगादेर्णादेरकित्त्वं वाच्यम् । तॄफलभजत्रपाम् । इत्येत्वपूर्वलोपौ । ततार तेरतुः तेरुः । तेरिथ ।

सावनिटः । सौ परे सति अनिटो धातोर्नित्यं वृद्धिर्भवति । अस्य धातोर्वृद्धिप्राप्तिरेव नास्ति । तत्राह । णित्त्वविधानसामर्थ्यात् । अनुपधाभूतस्यातोऽकारस्य वृद्धिः । खसेचपाझसानां । अस्कान्त्सीत् । इरितो वा । अनेनास्य वा ङप्रत्ययो भवति । नोलोपः । अस्कदत् । तॄ प्लुवनतरणयोः । गुणः । तरति । अन्यानि मूले सन्ति । लिट्लकारे । ततार । ऋसंयोगात् । अनेनाकित्त्वाद् गुणः । तॄफलभजत्रपाम् । अनेनास्यैत्वपूर्वलोपौ भवतः । तेरतुः । तॄ यादिति स्थिते सूत्रम् ।

ॠत इर् । ॠकारस्य इर भवति किति ङिति च परे । य्वोर्विहसे । तीर्यात् ।

ॠत इर् । ॠतः ( ष. ए.) इर् (प्र. ए.) ॠकारस्य किति ङिति च परे इर् भवति । य्वोर्विहसे । अनेन दीर्घः । तीर्यात् । ' तर् इट् ता ' इति स्थिते सूत्रम् ।

ईटो ग्रहाम् । ग्रहादीनामिट ईकारो भवति । तरीता-तरि-

ता, तरीष्यति-तरिष्यति, अतरीष्यत्-अतरिष्यत्। अतारी-त् अतारिष्टाम् अतारिषुः।

ईटो ग्रहाम्। ई (प्र. ए.) इटः (ष. ए.) ग्रहां। (ष. ब.) ग्रहादीनां धातूनामिट ईकारो भवति न तु णादौ वृङ् वृञ् ऋदन्तानां वा भवति। अनेनास्येट ईकारो भवति। तरीता। तरिता। अन्यानि मूले सन्ति। अतारीत्। अतारिष्टाम्। अतारिषुः। अत्रेट ईकारे प्राप्ते सूत्रम्।

वृद्धिहेतौ साविटो न दीर्घो वाच्यः। रञ्ज् रागे। उभयपदी।

वृद्धिहेतौ०। वृद्धिहेतौ सौ परे इटो दीर्घो न वाच्यः। अनेन लुङ्लकारे दीर्घाभावः। रञ्ज् रागे। उभयपदी। सूत्रम्।

अपि रञ्जदंशषञ्जष्वञ्जाम्। एषामनुस्वारस्य लोपो भवत्यपि परे। रजति, रजते, रजेत्, रजेत, रजतु, रजताम्, अरजत्, अरजत। ररञ्ज ररञ्जतुः ररञ्जुः। ररञ्जिथ-ररङ्क्थ ररञ्जथुः ररञ्ज। ररञ्जे, रज्यात्, रंक्षीष्ट, रङ्क्ता, रंक्ष्यति, रंक्ष्यते, अरंक्ष्यत्, अरंक्ष्यत, अरांक्षीत्। चोः कुः। खसे चपा०। षत्वम्। अराङ्क्ताम् अरांक्षुः। अरङ्क्त अरंक्षाताम् अरंक्षत। दंश दशने। दशति, दशेत्, दशतु, अदशत्। ददंश ददंशतुः ददंशुः। ददंशिथ-ददंष्ठ ददंशथुः। दश्यात्। ष्टुत्वम्। दंष्टा, दंक्ष्यति, अदंक्ष्यत्। णित्पे। णित्त्वाद्वृद्धिः। षढोः कः से। अदांक्षीत्। षञ्ज् सङ्गे। सजति, सजेत्, सजतु, असजत्, ससञ्ज, ससञ्जिथ-ससङ्क्थ, सज्यात्, सङ्क्ता, संक्ष्यति, असंक्ष्यत्। असांक्षीत् असांक्ताम् असांक्षुः। कित् रोगापनयने संशये च।

अपि रञ्जदंशषञ्जष्वञ्जाम्। अपि (स. ए.) रंजदंशषंजष्वंजां (ष. ब.) रंजदंशषंजष्वंज एषां धातूनामनुस्वारस्य लोपो भवति अपि परे। अनेनास्यानुस्वारस्य लोपो भवति। रजति। रजते। अन्यानि मूले लिखितानि सन्ति। लिट्लकारे ररञ्ज। अकित्त्वादनुस्वारस्य लोपो न भवति। ररञ्जतुः। अत्वतः। ररञ्जिथ।

ररञ्ज् थप् इति स्थिते चोः कुः । खसे चपा झसानां । ररङ्क्थ । आत्मनेपदे । ररञ्जे । नोलोपः । रज्यात् । चोः कुः । खसे चपा झसानां रंक्षीष्ट । अरांक्षीत् । झसात् । चोः कुः । खसे । अरांक्तां । अरांक्षुः । आत्मनेपदे । अरंक्त । अरंक्षातां अरंक्षत । दंशू । दशने । ' अपिरंजदंश० ' अनेनास्यापि लोपो भवत्यनुस्वारस्य । दशति । ददंश । ददंशतुः । अत्वतः । ददंशिथ । इडभावे । ददंश् थप् इति जाते । छशषराजादेः षः । अनेन षकारः । ष्टुभिः ष्टुः । ददंष्ठ । नो लोपः । दश्यात् । दंष्टा । षढोः कः से । दंक्ष्यति । णित्ये । अनेन वृद्धिः । षढोः कः से । अदांक्षीत् । षञ्ज संगे । आदेः ष्णः स्नः अनेन षस्य सः पूर्ववच्चिबादयः । सजति लिट्लकारे ससंज । अत्वतः । अनेनास्य वेट् ससंजिष्ठ । इडभावे । ससञ्ज् थप् इति जाते । चोः कुः । खसे चपा झसानां । ससंक्थ । नोलोपः । सज्यात् । संज् ता इति स्थिते । चोः कुः । खसे चपा झसानां । स्वरहीनं० । सक्ता । संज् स्यप् तिप् इति स्थिते चोः कुः । खसे षढोः कः से । किलात्० । कषसंयोगे । संक्ष्यति । असंक्ष्यत् । साविटः । असांक्षीत् । कसात् । असांक्तां असांक्षुः । कित् रोगापनयने संशये च ।

गुब्भ्यः । गुप् तिज् कित् मान् बन्ध् दान् शान् एभ्यः स्वार्थे सः प्रत्ययो भवति । धातोश्च द्वित्वम् । कुहोश्चुः । गुप्तिज्किद्भ्यः क्रमान्निन्दाक्षमारोगापनयनेषु सः । तेन गोपति तेजति केतति । स धातुः । गुबादिभ्यः सस्येण्नेष्यते ।

गुब्भ्यः । गुब्भ्यः । ( पं. ब. ) गुप् तिज् कित् मान् बन्ध् दान् शान् इत्यादिभ्यो धातुभ्यः स्वार्थे । धात्वर्थे एव । इगर्थं विनैव दशस्वपि नकारेषु कृति च सप्रत्ययो भवति तत्सन्नियोगे । द्विश्च । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे एव भवन्ति । गुप् तिज् किद्भ्यः क्रमात् निंदाक्षमारोगापनयनेषु सः प्रत्ययो भवति । तेन गोपति । तेजति । केतति । इत्यत्र पूर्वोक्तसूत्रेण सप्रत्ययो धातोः द्वित्वं च भवति । तदा कि कित् स इति जाते चोः कुः अनेन कस्य चः । चिकित् स इति जाते । ' सेसत्ता ' अनेनेटि प्राप्ते । गुबादिभ्यो धातुभ्यः सस्य इट् न इष्यते आचार्यैः । अनेन इट्निषेधः । उपधाया लघोः । अनेन गुणे प्राप्ते ।

नानिटि से । इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति । तिप् । चिकित्सति चिकित्सेत् चिकित्सतु अचिकित्सत् । चिकित्सांचकार चिकित्सामास चिचित्सांबभूव । चिकित्स्यात् चिकित्सिता चिकित्सिष्यति अचिकित्सिष्यत् अचिकित्सीत् अचिकित्सिष्टाम् । पत्लृ पतने । पतति, पतेत्, पत-

तु अपतत्। पपात पेततुः पेतुः। पत्यात् पतिता पतिष्यति अपतिष्यत्। लित्पुषादेर्ङः।

नानिटि से। ना (प्र. ए.) अनिटि (स ए.) से (स.ए.) इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति अनेन गुणाभावः। चिकित्स इति जाते 'सधातुः' अनेन धातुत्वात् तिबादयः। चिकित्स् तिप् इति स्थिते। अप् कर्त्तरि। अदे। चिकित्सति। अन्यानि मूले सन्ति। लिट् लकारे कासादिप्रत्ययादाम्। चिकित्सांचकार। अन्ये द्वे मूले स्तः। चिकित्स्यात्। लुङ् लकारे। अचिकित्सीत्। अचिकित्सिष्टाम्। पत्लृ पतने। पूर्ववत् तिबादयः। पतति। लिट् लकारे। अत उपधायाः। पपात। लोपः पचां कित्ये। पेततुः। पतिता। लुङ् लकारे 'लित् पुषादेर्ङः' अनेन ङः प्रत्ययो भवति। अपत् ङ दिप् इति जाते सूत्रम्।

पतेर्ङे पुगागमो वाच्यः। अपप्तत्। भ्रमु चलने।

पतेर्ङे। पतेर्धातोः ङप्रत्यये परे पुगागमो वाच्यः कित्त्वादन्ते स्वरहीनं०। अपप्तत्। अपप्तताम्। भ्रमु चलने। सूत्रम्।

शमां दीर्घः। शमादीनां दीर्घो भवति यकारे परे। शम् दम् श्रम् भ्रम् क्षम् क्रम् मद् एते शमादयः। भ्राम्यति भ्रमति, भ्राम्येत्-भ्रमेत्, भ्राम्यतु-भ्रमतु, अभ्राम्यत्-अभ्रमत्, बभ्राम।

शमां दीर्घः। शमां (ष. ब.) दीर्घः (प्र. ए.) द्विपदं सूत्रम्। शमादीनां धातूनां दीर्घो भवति। यकारे परे। शमादयो मूले उक्ताः। भ्रम तिप् इति स्थिते 'क्रमुभ्रम' अनेन यः प्रत्ययः। भ्रम् य तिप् इति जाते 'शमां दीर्घः।' अनेन दीर्घः। भ्राम्यति। यप्रत्ययाभावे दीर्घाभावः। भ्रमति। अन्यानि मूले सन्ति। लिट् लकारे। अत उपधायाः। अनेन वृद्धिः। झपानां। बभ्राम।

फणादीनामेत्वपूर्वलोपौ वा वाच्यौ।

फणतिर्भ्राजिराजी च भ्राशिभ्लाशी स्यमिस्वनी॥
भ्रमित्रसी जीर्यतिश्च दशैते तु फणादयः॥

भ्रेमतुः बभ्रमतुः भ्रेमुः बभ्रमुः। भ्रेमिथ-बभ्रमिथ, भ्रम्यात्, भ्रमिता, भ्रमिष्यति, अभ्रमिष्यत्, अभ्रमीत्। टुवम् उ-

द्गिरणे । टुइत्संज्ञकः । वमति, वमेत्, वमतु, अवमत् ववाम ।

फणादीनां०। फणादीनां एत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वा एत्वपूर्वलोपौ । भ्रेमतुः । बभ्रमतुः । भ्रेमिथ । बभ्रमिथ । फणादयः श्लोकेनोक्ताः । भ्रम्यात् । भ्रमिता । लुङ्लकारे अभ्रमीत् । टुवम् उद्गिरणे । टुइत्संज्ञकः । वमति । लिड्लकारे 'शसुददवादि०' अनेन निषेधे प्राप्ते सूत्रम् ।

वम एत्वपूर्वलोपौ वा वाच्यौ । वेमतुः-ववमतुः वेमुः-ववमुः । वम्यात्, वमिता, वमिष्यति, अवमिष्यत्, अवमीत् । फण गतौ । फणति, फणेत्, फणतु, अफणत् । पफाण फेणतुः फेणुः । फण्यात्, फणिता, फणिष्यति, अफणिष्यत्, अफाणीत् अफणीत् । स्वनस्यमू शब्दे । स्वनति, स्वनेत्, स्वनतु, अस्वनत् । सस्वान स्वेनतुः स्वेनुः । स्वन्यात्, स्वनिता, स्वनिष्यति, अस्वनिष्यत्, अस्वानीत्-अस्वनीत् । वस निवासे । वसति, वसेत्, वसतु, अवसत् । वस् णप् इति स्थिते । द्वित्वम् ।

वमः । वमधातोरेत्वपूर्वलोपौ वा वक्तव्यौ । अनेनास्य वा एत्वपूर्वलोपौ । ववाम । वेमतुः । ववमतुः । वमिता लुङ्लकारे अवमीत् । फण गतौ । फणति । लिड्लकारे । अत उपधायाः । झपानां । पफाण । फणादीनाम् । अनेन वा एत्वपूर्वलोपौ भवतः । फेणतुः । पफणतुः । पफणिथ । फेणिथ । फणिता । अफणीत् । स्वनस्यमू शब्दे । स्वनति । स्यमति । सस्वान । सस्याम । स्वनिता । स्यमिता । अस्वानीत् । अस्वनीत् । 'हसादेः' अनेन वा वृद्धिः । अस्यामीत् । अस्यमीत् । वस निवासे । वसति । वस् णप् इति स्थिते द्विश्च । ववस् णप् इति जाते सूत्रम् । णवादौ पूर्वस्य ।

णबादौ पूर्वस्य । णबादौ परे यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं भवति । यकारवकाररेफाणामिकारोकारऋकारा भवन्ति । सस्वरस्य संप्रसारणं दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः ।

णबादौ । (स. ए.) पूर्वस्य (ष. ए.) यजादीनां यज् वच् स्वप् वद् वेभ्

वप् वद् वसां श्वयतेर्ग्रहादीनां ग्रह् ज्या व्येञ् ह्वेञ् व्यध् वश् व्यच् प्रच्छ् व्रश्च भ्रस्जादीनां च धातूनां पूर्वस्य द्वित्वस्य णबादौ परे संप्रसारणं भवति । यकारवकाररेफाणाम् इकारोकारऋकारा भवन्ति । सस्वरस्याक्षरस्य संप्रसारणं भवति । ह्रस्वस्याक्षरस्य ह्रस्वः । दीर्घस्याक्षरस्य दीर्घः ।

गृहिज्यावयी व्यधिर्वष्टिर्विचतिर्वृश्चतिस्तथा ॥
पृच्छतिर्भृज्जतिश्चैव नवैते तु ग्रहादयः ॥

पूर्ववकारस्योत्वे । अत उपधायाः । उवास । उवस् अतुस् इति स्थिते ।

ग्रहादयः श्लोकेनोक्ताः सन्ति । अनेन पूर्वस्य वकारस्य संप्रसारणं जातं। ह्रस्वत्वात् ह्रस्वः । अनेन सूत्रेण पूर्वस्य वकारस्य उकारः । तदा उवस् णप् इति जाते । अत उपधायाः । स्वरहीनं० । उवास । वस् अतुस् इति स्थिते । णबादौ पूर्वस्य अनेन पूर्वस्य संप्रसारणं । उवस् अतुस् इति जाते । सूत्रम् ।

यजां यवराणां य्वृतः संप्रसारणं किति । यजादीनां संप्रसारणं भवति किति परे ।

यजां यवराणां य्वृतः संप्रसारणं किति। यजां ( ष. व. ) यवराणां ( ष. ब. ) इश्च उश्च ऋत् च य्वृतः ( प्र. ब. ) संप्रसारणं ( प्र. ए. ) किति (स. ए.) पंचपदं सूत्रम् ग्रहादीनां तु किति ङिति च परे संप्रसारणं भवति । यजादीनां तु केवले किति पर एव संप्रसारणं भवति । अत एव पृथक् सूत्रकरणम् यत्तु स्वपृव्येञोर्यङि संप्रसारणं तत्र प्रक्रियायां पृथक् सूत्रमस्ति । स्वपिस्वमिव्येञां यङि अथवा स्वपृव्येञ्ह्वयां ग्रहादिमध्ये यद् ग्रहणं तत् यङि प्रत्यये संप्रसारणार्थं नान्यत्र । यजादीनां धातूनां यकारवकारयोः किति परे संप्रसारणं भवति । यवराणामित्यत्र रकारग्रहणं ग्रहां क्ङिति । इति संप्रसारणसूत्रेवृत्त्यर्थंज्ञेयम् । यकारवकाररेफाणाम् इकारोकारऋकारा भवन्ति । सस्वरस्य संप्रसारणं भवति । ह्रस्वस्य ह्रस्वः । दीर्घस्य दीर्घः । अनेन द्वितीयस्य वकारस्य संप्रसारणं भवति ।

यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः ॥
वदसी श्वयतिर्वक्तिरेकादश यजादयः ॥

सवर्णे दीर्घः सह ।

यजादयस्तु मूले श्लोकेनोक्ताः । उउस् अतुस् इति स्थिते सूत्रम् ।

घसादेः षः । घसिशासिवसीनां सस्य षो भवति षत्वनिमित्ते

सति । ऊषतुः ऊषुः । उवसिथ-उवस्थ । संप्रसारणम् । षत्वम् । उष्यात् । वस्ता ।

घसादेः षः । घस् आदिर्यस्य सः घसादिः तस्य घसादेः ( ष० ए० ) षः ( प्र. ए. ) क्लिात्परस्य । घस्लृ अदने । शास् अनुशिष्टौ वस् निवासे इत्येतेषां धातूनां सकारस्य षकारो भवति । अत्र ' क्लिात् ' इति सूत्रस्य प्राप्तिरेव नास्ति तस्मात् सूत्रं कृतम् । अनेन सस्य षः । स्वरहीनं । ऊषतुः । ऊषुः । अत्वतः । उवसिथ । उवस्थ । यजां । घसादेः । उष्यात् । वस्ता । वस् स्यप् तिप् इति स्थिते सूत्रम् ।

सस्तोऽनपि । सकारस्य तकारो भवति अनपि सकारे परे । वत्स्यति अवत्स्यत् । वृद्धिः । अवात्सीत् । झसात् । प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायात् । अवात्ताम् अवात्सुः । वद व्यक्तायां वाचि । वदति, वदेत्, वदतु, अवदत् । उवाद ऊदतुः ऊदुः । उवदिथ । उद्यात्, वदिता, वदिष्यति, अवदिष्यत्, अवादीत् । टुओश्वीर् गतिवृद्ध्योः । टुकारौकारौ कार्यार्थौ । इर् इत्संज्ञकः । श्वयति, श्वयेत्, श्वयतु, अश्वयत् ।

सस्तोऽनपि । सस्तोऽनपि । सः ( ष. ए. ) तः ( प्र. ए. ) अनपि ( स ए. ) त्रिपदं सूत्रं । धातोः सकारस्यानपि विषये णबादिविभक्तिषट्कविषये सकारे परे तकारो भवति । अनेन सकारस्य तकारो भवति । वत्स्यति । अवत्स्यत् । सावनिटो नित्यं । अनेन वृद्धिः । अवात्सीत् । झसात् । सस्तोऽनपि । प्रत्ययलोपे० इति न्यायात् वृद्धिः । अवात्तां । अवात्सुः । वद व्यक्तायां वाचि । वदति । लिट् लकारे णबादौ । अनेन संप्रसारणं । अत उपधायाः । अनेन वृद्धिः । उवाद । यजां । ऊदतुः । ऊदुः । उवदिथ । संप्रसारणं । उद्यात् । वदिता लुङ्लकारे । अवादीत् । हसादेः । अवदीत् । टुओश्वीर् गतिवृद्ध्योः । टुकारौकारौ कार्यार्थौ । इर् इत्संज्ञकः । पूर्ववत् तिवादयः । गुणः । एअय् । श्वयति । लिट्लकारे सूत्रम् ।

श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम् । ततो द्वित्वम् । शुशाव शुशुवतुः शुशुवुः । शुशविथ । संप्रसारणाभावपक्षे

शिश्वाय शिश्वियतुः शिश्वियुः। शिश्वयिथ। संप्रसारणं ये। शूयात्,श्वयिता, श्वयिष्यति, अश्वयिष्यत्।

श्वयतेः। श्वयतेर्धातोर्णादौ परे प्रथमं संप्रसारणं वा वाच्यं। अनेनास्य पूर्वं संप्रसारणं ततो द्वित्वं। शुशु णप् इति जाते धातोर्नामिनः। अनेन वृद्धिः। शुशाव। शुशु अतुस् इति जाते। नुधातोः। अनेन वकारे प्राप्ते नानप्योवः। अनेन वक्ष्यमाणेन सूत्रेण तन्निषेधः। किंतु इय् एव भवति। शुशुवतुः। शुशविथ। संप्रसारणाभावपक्षे धातोर्नामिनः। शिश्वाय। नुधातोः। शिश्वियतुः। गुणः। शिश्वयिथ। संप्रसारणं ये। शूयात्। श्वयिता। श्वयिष्यति। अश्वयिष्यत्। अश्वि इसि इट् दिप् इति जाते। णित्वे। अनेन सेर्णित्त्वात् वृद्धेः प्राप्तौ। सूत्रम्।

श्वयतेः सौ वृद्ध्यभावो वाच्यः। अश्वयीत् अश्वयिष्टाम् अश्वयिषुः। इरितो वा।

श्वयतेः। श्वयतेर्धातोः सौ परे वृद्ध्यभावो वाच्यः। अनेन तन्निषेधः। गुणः। इट ईटि। इत्यादिसूत्रैः अश्वयीत् इति रूपं सिद्धं भवति। अस्येरितोवानेन वा ङप्रत्ययो भवति। तदा अश्वि ङ दिप् इति जाते सूत्रम्।

श्वयतेरिलोपो ङे वक्तव्यः। अश्वत्।

श्वयतेः। श्वयतेर्धातोर्ङप्रत्यये परे इकारस्य लोपो वक्तव्यः। अनेनेकारस्य लोपो भवति। अश्वत् अश्वतां अश्वन्। अन्यदपि सूत्रम्।

श्वयतेर्ङे द्वित्वं वा। अशिश्वियत् इत्यादि।

॥ इति भ्वादिषु परस्मैपदिप्रक्रिया ॥

श्वयतेः। श्वयतेर्धातोः ङप्रत्यये परे द्वित्वं वा भवति। पूर्वस्य। नुधातोः। अशिश्वियत्। अशिश्वियतां। अशिश्वियन्। इत्यादीनि रूपाणि ज्ञातव्यानि। इति भ्वादिगणस्य परस्मैपदिप्रक्रिया कथिता। अथात्मनेपदिप्रक्रिया कथ्यते।

अथ भ्वादिष्वात्मनेपदिप्रक्रिया। एध वृद्धौ। एधते, एधेत, एधताम्, ऐधत। कासादिप्रत्ययादाम्। एधांचक्रे। आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृञ आत्मनेपदं भ्वसोर्नात्मनेपदम्। एधामास एधांबभूव- विधानसामर्थ्यादस्तेर्भूभावो न। इट्। एधिषीष्ट एधिता एधिष्यते ऐधिष्यत ऐधिष्ट ऐधिषाताम्। ईक्ष दर्शनाङ्कनयोः।

ईक्षते, ईक्षेत, ईक्षताम्, ऐक्षत, ईक्षांचक्रे, ईक्षिषीष्ट, ईक्षिता, ईक्षिष्यते, ऐक्षिष्यत, ऐक्षिष्ट। दद दाने। ददते, ददेत, ददताम्, अददत, शशदद्वा० इति नैत्वपूर्वलोपौ। ददद ददाते ददिरे। ददिषीष्ट, ददिता, ददिष्यते, अददिष्यत, अददिष्ट। ष्वष्क गतौ। नामधातु० अनेन सत्वाभावः। ष्वष्कते, ष्वष्केत, ष्वष्कताम्, अष्वष्कत, षष्वष्के, ष्वष्किषीष्ट, ष्वष्किता, ष्वष्किष्यते, अष्वष्किष्यत, अष्वष्किष्ट अष्वष्किषाताम्। ऋज गतौ स्थैर्ये स्पर्शे च। उपधाया लघोः। अर्जते, अर्जेत, अर्जताम्, आर्जत। नुगशाम्। आम्वोर्णादौ। आनृजे, अर्जिषीष्ट, अर्जिता, अर्जिष्यते, आर्जिष्यत, आर्जिष्ट। ष्वञ्ज परिष्वञ्जने। सत्वम्। अपिरञ्जदंशषञ्जष्वञ्जाम्। स्वजते, स्वजेत, स्वजताम्, अस्वजत। सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे।

एध वृद्धौ। एध अयं धातुर्वृद्ध्यर्थे। एध इत्यत्राकारोऽनुदात्तस्ततोयं धातुरनुदात्तेत्। तेनात्मनेपदी। तदेव ग्रन्थकार आह। अकार आत्मनेपदार्थः। तत्तस्मात्कारणाद्विभक्तिचतुष्टयेपि पराणि ते आते अंते। तथा ईत ईयातां ईरन्। तां आतां अन्तां। तत् आतां अन्त इत्यादीनि वचनानि योज्यानि तत्र वर्त्तमानात्मनेपदे प्रक्रिया लिख्यते। अबादिप्रयोगः। अप्कर्त्तरीत्यादिकार्यं पूर्ववत्। सर्वत्राप्कर्त्त०। स्वर०। एधते एवं द्विवचने एध् आते इति स्थिते। अप्कर्त्तरि। आदाथ०। एधेते। बहुवचनेऽदे इत्यकारलोपः। स्वर० एधन्ते। एधसे। द्विवचने। आदाथइः इतीकारः अइए एधेथे। एधध्वे उत्तमपुरुषैकवचने अदे। एधे द्वित्वबहुत्वे ष्मोरा एधावहे। एधामहे। अथोदाह० धर्मादिति। अदः समीपवर्त्ति राज्यं धर्म्मात् एधते वर्द्धते। इति वर्त्तमानप्रक्रिया। विधिसंभावनयोः इत्यादीनि वचनानि योज्यानि। सर्वत्राऽप्कर्त्तरि। स्वर० अइए। एधेत एधेयातां एधेरन् इत्यादीनि रूपाणि। साधुः शोभनो मनुष्यो धर्म्मतो धर्मात् एधेत इति विधिः। आशीःप्रेरणयोः तां आतां अन्तां इत्यादयो नव प्रत्ययाः। अप्कर्त्तरि। आतां आथां इत्यत्र आदाथइः अइए। अन्तामित्यत्र अदे। स्वरहीनं। मध्यमपुरुषद्विवचने। आदाथइः। अइए। एकत्वद्वित्वयोरविशेषः। उत्तमपुरुषैकवचने एऐऐ। एधै। द्वित्वबहुत्वयोः सवर्णे। एधतां। एधेतां। इत्यादीनि उदाहरणानि ज्ञेयानि। तवायुरेधतां। अथानद्यतने एध्धातोस्तनादीनि नव वचनानि यो-

ज्यानि । सर्वत्राप्कर्त्तरि। दिबादावट् । अनेन प्राक्अडागमः। स्वरादेः । अनेन द्वितीयोऽडागमो भवति । अइए । एऐऐ । ऐधत । ऐधेतां । ऐधन्त । कासादिप्रत्ययादाम् । अनेनाम् । एधांचक्रे । आम्प्रत्ययो यस्माद्धातोर्विहितः स धातुश्चेत् आत्मनेपदी तर्हि अनुप्रयुक्तस्य कृधातोरात्मनेपदं भवति भ्वसोर्धात्वोरात्मनेपदं न भवति । अनेन व्याख्यानेन भ्वसोर्यदानुप्रयोगस्तदात्मनेपदिनोऽपि धातोः परस्मैपदं भवति । एधामास । एधांबभूव । अनुप्रयोगविधानसामर्थ्यादस्तेर्धातोर्भूभावो न भवति । एधिषीष्ट । अन्यानि मूले सन्ति। पूर्वोक्तैरव सूत्रैः सिध्यन्ति। लुङ्लकारे। एध् सि तन् इति जाते । सिसता । अनेनेट् । दिबादावट् । स्वरादेः । ऐधिस्तन्इति जाते । क्लिात्०। ष्टुभिःष्टुः । तनोनकारो०। ऐधिष्ट । ऐधिषातां। ऐधिषत । ईक्ष दर्शनाङ्कनयोः । ईक्षधातुर्दर्शनार्थे अंकनार्थे वा अंकनं परीक्षणं । अत्राप्यकार आत्मनेपदार्थः । तेन विभक्तिचतुष्टयेपि आत्मनेपदानि प्रयोज्यानि । सर्वत्र चतुर्लकारेप्कर्त्तरि । अनेनाप्प्रत्ययो भवति । एधतिवत् प्रक्रिया । लघूपधत्वाभावात् गुणो न भवति । ईक्षते । ईक्षेत । ईक्षतां । दिबादावट् । स्वरादेः । अइए । एऐऐ । ऐक्षत । कासादिप्र० । ईक्षांचक्रे । ईक्षामास । ईक्षांबभूव । ईक्षिषीष्ट । ईक्षिता । अन्यानि मूले लिखितानि तानिसुगमान्येवातो व्याख्यानं न कृतं। लुङ्लकारे। ईक्षिष्ट। ईक्षिषातां । ईक्षिषत । दद दाने । अत्राप्यकारआत्मनेपदार्थः । ददते । ददेत । ददतां । अददत । लोपः । अनेनैत्वपूर्वलोपे प्राप्ते शसददवादि०। अनेन तन्निषेधः । ददद। ददिषीष्ट । ददिता । लुङ् । अददिष्ट । अददिषातां । अददिषत । सुगमोऽयं धातुः । ष्वष्क गतौ । नामधातुः । अनेनसत्वाभावः । ष्वष्कते। पूर्वस्य हसादिः । षष्वष्के । षष्वष्काते। षष्वष्किरे । ष्वष्किषीष्ट । ष्वष्किता । लुङ्लकारे । अष्वष्किष्ट । अष्वष्किषातां । अष्वष्किषत । ऋजूगतौ स्थैर्ये स्पर्शे च अकार आत्मनेपदार्थः पूर्ववत् तिबादयः । उपधायाः । अनेन गुणः । अर्ज्जते । अर्ज्जेत । अर्ज्जतां । स्वरादेः । आर्ज्जत । ऋज् णप् इति स्थिते । द्विश्च । रः । नुगशां अनेन पूर्वस्य नुगागमो भवति । आम्वोर्णादौ । स्वरहीनं । आनृजे । आनृजाते । आनृजिरे । अर्ज्जिषीष्ट । अर्ज्जिता । स्वरादेः । आर्ज्जिष्ट । आर्ज्जिषातां । आर्ज्जिषत । ष्वंज परिष्वंजने । आदेः ष्णः स्नः । अनेन सत्वं । अपिरंज० । अनेनानुस्वारस्य लोपः । स्वजते । स्वजेत । स्वजतां । अस्वजत । द्विश्च । सस्वंजे । सस्वंजाते । सस्वंजिरे । सूत्रम् ।

स्वजतेर्णादौ वा कित्त्वम् । सस्वजे सस्वजाते सस्वजिरे । चोः कुः । खसे चपा । षत्वम् । कषसंयोगे क्षः । स्वंक्षीष्ट, स्वंक्ता, स्वंक्ष्यते, अस्वंक्ष्यत । झसात् । अस्वंक्त, अस्वंक्षाताम् अस्वंक्षत । अस्वंक्थाः । त्रपूष् लज्जायाम् । ऊ-

कारषकारौ कार्यार्थौ । त्रपते, त्रपेत, त्रपताम्, अत्रपत । तॄफलभजत्रपाम् । इत्येत्वपूर्वलोपौ । त्रेपे त्रेपाते त्रेपिरे । ऊदितो वा । त्रपिषीष्ट-त्रप्सीष्ट, त्रपिता, त्रप्ता, त्रपिष्यते-त्रप्स्यते, अत्रपिष्यत-अत्रप्स्यत । अत्रपिष्ट अत्रपिषाताम् अत्रपिषत । अत्रप्त । तिज् निशाने क्षमायां च । गुप्भ्यः । तितिक्षते, तितिक्षेत, तितिक्षताम्, अतितिक्षत । तितिक्षांचक्रे, तितिक्षांबभूव, तितिक्षामास, तितिक्षिषीष्ट, तितिक्षिता, तितिक्षिष्यते, अतितिक्षिष्यत-अतितिक्षिष्ट। गुप गोपनकुत्सनयोः। जुगुप्सते जुगुप्सेत,जुगुप्सताम्,अजुगुप्सत,जुगुप्सांचक्रे, जुगुप्सांबभूव, जुगुप्सामास, जुगुप्सिषीष्ट, जुगुप्सिता, जुगुप्सिष्यते, अजुगुप्सिष्यत, अजुगुप्सिष्ट । मान विचारणे । द्वित्वम् । ह्रस्वः ।

स्वजतेः । स्वजतेर्धातोर्णादौ वा कित्त्वं वाच्यं । कित्त्वान्नो लोपः । अनेनैवानुस्वारस्य लोपो भवति । सस्वजे । सस्वजाते । सस्वजिरे । स्वज् सीष्ट इति स्थिते चोः कुः । अनेन जकारस्य गकारः । खसे० । अनेन गस्य कः । क्विलात् । अनेन सस्य षः । कषसं० । स्वंक्षीष्ट । चोः कुः । खसे० । अनेन गस्य कः । स्वरहीनं । स्वंक्ता । स्वंक्ष्यते । अस्वंक्ष्यत । झसात् । अनेन सेर्लोपः । अस्वंक्त । त्रपूष् लज्जायां । ऊकारषकारौ कार्यार्थौ । पूर्ववत्त्वादयः । त्रपते । लिट्लकारे त्रत्रप् णपिति स्थिते तॄफलभजत्रपां । अनेनैत्वपूर्वलोपौ भवतः । त्रेपे । त्रेपाते । त्रेपिरे । अस्य धातोरूदितोवानेनेड्विकल्पो भवति । त्रपिषीष्ट । त्रप्सीष्ट । लुङ्लकारे । अत्रपिष्ट । इडभावे झसात्० अनेन सेर्लोपो भवति । तदा अत्रप्त । अत्रप्साता । अत्रप्सत । तिज् निशाने क्षमायां च । निशानं तीक्ष्णीकरणम् इति सिद्धांतकौमुद्यामुक्तं । गुप्भ्यः । अनेन स्वार्थे सप्रत्ययो भवति धातोर्द्वित्त्वंच । तितिज् स् अप् ते इति जाते । चोः कुः । अनेन जस्य गः । खसे चपा अनेन गस्य कः । क्विलात् । कषसं० । अदे । अनेनाकारस्य लोपो भवति । स्वरहीनं० । तितिक्षते । तितिक्षेत । तितिक्षतां । अतितिक्षत । लिट्लकारे कासादिप्रत्ययादाम् । अनेनाम्प्रत्ययो भवति । तितिक्षांचक्रे । आम्प्रत्ययो यस्मात् । अनेन व्याख्यानेन भ्वसोरनुप्रयोगे सति । आत्मनेपदं भवति । तेन तितिक्षांबभूव । तितिक्षामास । अन्यानि मूले सन्ति । तानि सुगमान्येव । लुङ्लकारे । अतितिक्षिष्ट । गुप गोपनकुत्सनयोः । गुप्भ्यः । अनेनास्य धातोरपि सप्रत्ययो भ-

वति । धातोर्द्वित्वं च । तदा । गुगुप् स इति जाते । कुहोश्चुः । अनेन गस्य जः । जुगुप् स इति जाते । 'स धातुः' अनेन धातुत्वात् तबादयः प्रत्यया भवन्ति । तदा जुगुप्सते इति जाते । अप् कर्त्तरि। अदे । जुगुप्सते । लिट्लकारे । जुगुप्सांचक्रे । जुगुप्सामास । जुगुप्सांबभूव । लुङ्लकारे अजुगुप्सिष्ट । अजुगुप्सिषातां । अजुगुप्सिषत । अन्येषां लकाराणां रूपाणि मूले सन्ति तस्मात् न लिखितानि । मान विचारणे । अकार इत् आत्मनेपदार्थः । गुब्म्यः अनेन सद्वित्वे भवतः । ह्रस्वः । 'म मान् स' इति जाते । सूत्रम् ।

यः से । पूर्वस्याकारस्येकारो भवति से परे ।

यः से । इ (प्र. ए.) । अः (ष. ए.) से (स. ए.) धातोः पूर्वस्य अकारस्य इकारो भवति सप्रत्यये परे । अनेनाकारस्य इकारः । तदा । मिमान् स इति जाते । सूत्रम् ।

मानादीनां पूर्वस्य दीर्घो वक्तव्यः । मीमांसते, मीमांसेत, मीमांसताम्, अमीमांसत, मीमांसांचक्रे, मीमांसामास, मीमांसांबभूव, मीमांसिषीष्ट, मीमांसिता, मीमांसिष्यते, अमीमांसिष्यत अमीमांसिष्ट । बध निन्दायाम् । आदिजबानाम्। बीभत्सते, बीभत्सेत, बीभत्सताम्, अबीभत्सत, बीभत्सांचक्रे, बीभत्सिषीष्ट, बीभत्सिता, बीभत्सिष्यते, अबीभत्सिष्यत, अबीभत्सिष्ट । पण व्यवहारे स्तुतौ च । पन च । आयः । पणायते, पणायेत, पणायताम्, अपणायत, पणायांचक्रे । आयाभावपक्षे । पेणे पेणाते पेणिरे । पणायिषीष्ट-पणिषीष्ट । पणायिता-पणिता पणायिष्यते-पणिष्यते अपणायिष्यत-अपणिष्यत अपणायिष्ट-अपणिष्ट । एवं पन च। कमु कान्तौ ।

मानादीनां । मान् बध् दान् शान् इत्येतेषां धातूनां पूर्वस्य सप्रत्यये परे दीर्घो वक्तव्यः । अनेन पूर्वस्येकारस्य दीर्घः । स धातुः । अप्कर्त्तरि । नश्चापदान्ते । मीमांसते । लिट् लकारे । मीमांसांचक्रे । लुङ्लकारे । अमीमांसिष्ट । इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । पिष्टपेषणैः किं प्रयोजनम् । बध निन्दायाम् । अकार उभयपदार्थः । गुब्म्यः । आदिजबानां । यः से । मानादीनां । स धातुः । अप्कर्त्तरि । अदे । खसेचपा० । बीभत्सते । लिट्लकारे । बीभत्सांचक्रे । अन्यानि

मूले सन्ति । लुङ्लकारे । अबीभत्सिष्ट । पण व्यवहारे स्तुतौ च । आयः । अनेनास्य आयः प्रत्ययो भवति । स धातुः । अप्कर्त्तरि । सवर्णेदीर्घः सह । पणायते । पणायेत । पणायताम् । अपणायत । पणायांचक्रे । आयप्रत्ययोऽनपि वा भवति । सूत्रोक्तत्वात् । आयाभावपक्षे । लोपः पचां अनेनास्यैत्वपूर्वलोपौ । पेणे । पेणाते । पेणिरे । पणाय इट् सीष्ट इति जाते । यतः । स्वरहीनं० । किलात् । पणायिषीष्ट । आयाभावपक्षे । पणिषीष्ट । पणायिता । पणिता । लुङ्लकारे । अपणायिष्ट । अपणिष्ट । एवं पनधातोरपि रूपाणि ज्ञेयानि । कमु कान्तौ । कान्तिरत्र इच्छा । उकार इत् आत्मनेपदार्थः ।

**कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः । अनपि तु वा वृद्धिः । स धातुः । अप्गुणौ । अयादेशः । कामयते, कामयेत, कामयताम्, अकामयत, कामयांचक्रे-चकमे, कामयिषीष्ट-कमिषीष्ट, कामयिता-कमिता, कामयिष्यते-कमिष्यते, अकामयिष्यत-अकमिष्यत, अकामित न् इति स्थिते ।**

**कमेः** । कमेर्धातोः स्वार्थे ञिः प्रत्ययो वक्तव्यः । अनपि तु वा वक्तव्यः । कम् ञि इति जाते । अत उपधायाः । अनेन वृद्धिः । स धातुः । ञकारो ञित्कार्यार्थः । अप्कर्त्तरि । गुणः । एअय् । कामयते । कामयेत । कामयताम् । अकामयत । कामयांचक्रे । ञेरभावपक्षे चकमे । कामयिषीष्ट । कमिषीष्ट । कामयिता । कमिता । अन्यानि मूले सन्ति । लुङ्लकारे । अकामि तन् इति स्थिते ।

**ञेरङ् द्विश्च । ञ्यन्ताद्धातोर्भूतेऽर्थे अङ्प्रत्ययो भवति दिबादौ परतः । सेरपवादः । धातोश्च द्वित्वम् ।**

**ञेरङ् द्विश्च** । इदं सूत्रम् । ञेः ( पं. ए. ) अङ् ( प्र. ए. ) द्विः (प्र. ए.) च ( प्र. ए. ) चतुःपदं सूत्रम् । ञिप्रत्ययान्ताद्धातोर्भूतमात्रेऽतीते काले सिविषये दिबादौ परे अङ्प्रत्ययो भवति । सेरपवादो धातोः द्वित्वं भवति । चकारात् श्रिद्रुस्रुभ्यो ञिप्रत्ययाभावेऽपि अङ् द्वित्वं च ।

**ञेः । इडागमवर्जिते अनपि विषये ञेर्लोपो भवति । ह्रस्वः ।**

**ञेः** । ञेः ( ष. ए. ) इडागमवर्जिते अनपि विषये ञिप्रत्ययस्य लोपो भवति । तदा । अ का काम इति स्थिते ह्रस्वः । कुहोश्चुः । तदा । अचकाम् तन् इति जाते सूत्रम् ।

अङि लघौ ह्रस्व उपधायाः। अङि सत्युपधाया ह्रस्वो भवति पूर्वसंबन्धिनोऽकारस्येकारो भवति लघुनि धात्वक्षरे परे।

अङि लघौ ह्रस्व उपधायाः॥ अङि। (स. ए.) लघौ। (स. ए.) ह्रस्वः (प्र. ए.) उपधायाः (ष. ए.) अङि प्रत्यये सति। धातोः लघौ परे पूर्वसंबन्धिनोऽकारस्य इकारो भवति। दीर्घादिर्धातोरुपधाया ह्रस्वोऽपि भवति। अनेन अकारस्य इकारः। उपधाया ह्रस्वः। तदा अचिकम् अङ् तन्। इति जाते। सूत्रम्।

लघोर्दीर्घः। अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि धात्वक्षरे परे। अचीकमत अचीकमेताम् अचीकमन्त। ञेरभावपक्षे।

लघोर्दीर्घः। लघोः। (ष. ए.) दीर्घः। (प्र. ए.) अङि सति। हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि धात्वक्षरे परे सति। अनेनेकारस्य दीर्घः इकारः तनो नकारः। स्वरहीनं० । अचीकमत। अचीकमेतां। अचीकमन्त। ञेरभावपक्षे सूत्रम्।

कमेरङ्द्वित्वे वाच्ये। ञ्यन्तत्वाभावान्न दीर्घेकारौ। अचकमत। अय गतौ। अयते, अयेत, अयताम्, आयत।

कमेः। कमेर्धातोरङ्प्रत्ययद्वित्वे वाच्ये। अनेनाङ्प्रत्ययः। द्वित्वं च भवति। ञ्यन्तत्वाभावात् न दीर्घेकारौ। अचकमत। अचकमेतां। अचकमन्त। इत्यादीनि रूपाणि ज्ञेयानि। अय गतौ। पूर्ववत् तेआदयः प्रत्यया भवन्ति। अयते। यदायं धातुः परापूर्वः स्यात्तदा वक्ष्यमाणेन सूत्रेण लत्वं भवति। सूत्रम्।

परापूर्वे अयतावुपसर्गरेफस्य लत्वं वाच्यम्। पलायते, पलायेत, पलायताम्, अपलायत, अयांचक्रे, अयामास, अयांबभूव, अयिषीष्ट, अयिता, अयिष्यते, आयिष्यत। आयिष्ट, आयिषाताम्, आयिषत। आयिढ्वं-आयिध्वम्। दय दानगतिहिंसादानेषु। दयते। अयतिवत्प्रक्रिया। घट चेष्टायाम्। घटते, घटेत, घटताम्, अघटत। कुहोश्चुः। जघटे, घटिषीष्ट, घटिता, घटिष्यते, अघटिष्यत, अघटिष्ट। ईह

चेष्टायाम् । ईहते, ईहेत, ईहताम्, ऐहत, ईहांचक्रे, ईहिषीष्ट ईहिता, ईहिष्यते, ऐहिष्यत, ऐहिष्ट । काशृङ् दीप्तौ । काशते, काशेत, काशताम्, अकाशत । विददरिद्रा० काशांचक्रे चकाशे, काशिषीष्ट, काशिता, काशिष्यते, अकाशिष्यत, अकाशिष्ट । कासृ शब्दकुत्सायाम् । कासते, कासेत, कासताम्, अकासत, कासांचक्रे, चकासे, कासिषीष्ट, कासिता, कासिष्यते, अकासिष्यत, अकासिष्ट । षिवृ सेवने । सत्वम् । सेवते, सेवेत, सेवताम्, असेवत, सिषेवे, सिषेवाते, सेविषीष्ट, सेविता, सेविष्यते, असेविष्यत, असेविष्ट । गाङ् गतौ । सवर्णदीर्घे कृते । आकारत्वादातोऽन्तो दनतः । गाते गाते गाते । गेत, गाताम्, अगात । जगे, जगाते, जगिरे । गासीष्ट, गाता, गास्यते, अगास्यत, अगास्त, अगासाताम् । रुङ् गतौ भाषणे च । गुणः । रवते, रवेत, रवताम्, अरवत अरवेताम् । अनेकस्वरत्वादसंयोगपूर्वत्वाच्चोकारस्य वत्वे प्राप्ते ।

अयतौ । अयतौ धातौ परे उपसर्गरेफस्य लत्वं वाच्यम् । अनेन रकारस्य लकारः । तदा पलायते इति रूपं सिद्धम् । लिट्लकारे कासादिप्रत्ययादाम् अनेनाम् प्रत्ययो भवति । अयांचक्रे । द्वे मूले स्तः । अयिषीष्ट । लुङ्लकारे । आयिष्ट । दय दानगतिहिंसादानेषु । अस्यापि धातोरयतिवत् रूपाणि ज्ञेयानि । घट चेष्टायाम् पूर्ववत् तथादयः । घटते । लिट्लकारे । कुहोश्चुः । अनेन घस्य झः । जघटे । जघटाते । जघटिरे । घटिषीष्ट । लुङ्लकारे । अघटिष्ट । ईह चेष्टायाम् । दीर्घोपधत्वात् न गुणः । ईहते । लुङ्लकारे स्वरादेः । ऐहत । लिट्लकारे । 'कासादि०' अनेनास्याम् । ईहांचक्रे । ईहिषीष्ट । लुङ्लकारे । ऐहिष्ट । काशृङ् दीप्तौ । उकारङकारौ इतौ । काशते । लिट्लकारे । 'विददरिद्रा' अनेनास्य वाम् प्रत्ययो भवति । काशांचक्रे । आमभावे । कुहोश्चुः । ह्रस्वः । चकाशे । काशिषीष्ट । लुङ्लकारे । अकाशिष्ट । कासृ शब्दकुत्सायां । ऋकार इत् । पूर्ववत् तथादयः । कासते । लिट्लकारे कासादिप्रत्ययादाम् । अनेन नित्ये प्राप्ते विददरिद्रा० अनेन वा भवति । कासांचक्रे । आमभावे चकासे । कासिषीष्ट । कासिता । लुङ्लकारे ।

अकासिष्ट। षिवु सेवने। 'आदेः ष्णः स्नः' अनेन सत्वं। ऋकार इत्। सेवते। लिट्लकारे। सिषेवे। सिषेवाते। सिषेविरे। सेविषीष्ट। लुङ्लकारे। असेविष्ट। गाङ् गतौ। ङकार आत्मनेपदार्थः। पूर्ववत् तआदयः। सवर्णे०। गाते। गाते। आकारान्तत्वात्। 'आतोन्तोदनतः' अनेन अन्तेइत्यस्य अते भवति। सवर्णे०। गाते। गासे। गाथे। इत्यादीनि। अइए। गेत। गातां। गातां। गातां। अगात अगातां। अगात। गा णप् इति स्थिते। द्विश्च। ह्रस्वः। कुहोश्चुः। आतोऽनपि। जगे। जगाते। जगिरे। गासीष्ट। गाता। गास्यति। लुङ्लकारे। अगास्त। अगासातां। अगासत। रुङ् गतौ भाषणे च। पूर्ववत् तआदयः। गुणः। रवते। लिट्लकारे नुधातोः। अनेनानेकस्वरासंयोगपूर्वत्वात् वकारे प्राप्ते। सूत्रम्।

**नानप्योर्वः। अनपि विषये धातोरुवर्णस्य वत्वं न भवति। तत उङ् नुधातोः। रुरुवे रुरुवाते रुरुविरे। रविषीष्ट, रविता, रविष्यते, अरविष्यत, अरविष्ट। देङ् पालने। दयते, दयेत, दयताम्, अदयत।**

नानप्योर्वः। न (प्र. ए.) अनपि (स. ए.) ओः (ष. ए.) वः (प्र. ए.) तिबादिचतुष्टयस्याप्रत्ययो भवति नान्यविभक्तिगणस्य। ततो विभक्तिचतुष्टयवर्जितो विभक्तिगणोऽनप् कथ्यते, ततोऽनप्संबन्धिनि स्वरे परे धातोरुवर्णस्य वत्वं न भवति। किंतु उवेव भवति। अनेनोव् भवति। रुरुवे। रुरुवाते। रुरुविरे। रविषीष्ट। रविता। लुङ्लकारे अरविष्ट। अरविषाताम्। अरविषत। देङ् पालने। ङकार आत्मनेपदार्थः। दयते। लिट्लकारे सूत्रम्।

**दयतेर्णादौ दिग्यादेशो द्वित्वाभावश्च वक्तव्यः। दिग्ये। संध्यक्षराणामा०। दासीष्ट, दाता, दास्यते, अदास्यत।**

दयतेः। दयतेर्धातोर्णादौ परे सति दिग्यादेशो भवति। द्वित्वाभावश्च वक्तव्यः। आतोऽनपि। दिग्ये। दिग्याते। दिग्यिरे। संध्यक्षराणामा०। दासीष्ट। दाता। दास्यते। अदास्यत। अदासि तन् इति स्थिते सूत्रम्।

**अपिद्दाधास्थामित्वं सेर्ङित्त्वमात्मनेपदे वाच्यम्। ङित्त्वान्न गुणः।**

अपिद्दाधास्थाम्। अपिद्दाधास्थां धातूनाम् इत्त्वं सेर्ङित्त्वं च आत्मनेपदे वाच्यम्। षष्ठीनिर्दि०। ङित्त्वात् गुणाभावो भवति। तदा अदि सि तन् इति जाते सूत्रम्।

लोपो ह्रस्वाज्झसे। ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे। अदित अदिषाताम् अदिषत। डीङ् विहायसा गतौ। डयते डयेत डयताम् अडयत। नुधातोः। डिड्ये, डयिषीष्ट, डयिता, डयिष्यते, अडयिष्यत, अडयिष्ट। दैङ् त्रैङ् पालने। दायते, दायेत, दायताम्, अदायत।

लोपो ह्रस्वाज्झसे। लोपः (प्र. ए.) ह्रस्वात् (पं. ए.) झसे (स. ए.) ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे। अनेन सेर्लोपो भवति। अदित। अदिषातां। अदिषत। डीङ् विहायसा गतौ। ङकारः सर्वत्रात्मनेपदार्थो ज्ञातव्यः। गुणः। डयते। डयेत। लिट्लकारे नुधातोरनेन इय् भवति। डिड्ये। डिड्याते। डिड्यिरे। गुणः। डयिषीष्ट। अन्यानि मूले सन्ति। लुङ्लकारे। अडयिष्ट। अडयिषाताम्। अडयिषत। दैङ् त्रैङ् पालने पूर्ववत् तथादयः। ऐआय्। दायते। त्रायते। लिट्लकारे सूत्रम्।

दैङो णादौ दिग्यादेशो द्वित्वाभावश्च। दिग्ये, दासीष्ट। अपिद्दाधास्थामि०। लोपो ह्रस्वाज्झसे। अदित। तत्रे। अत्रास्त। द्युतङ् द्योतने। उपधाया लघोः। द्योतते, द्योतेत, द्योतताम्, अद्योतत।

दैङः। दैङो धातोर्णादौ परे सति दिग्यादेशो द्वित्वाभावश्च भवति। आतोऽनपि। दिग्ये। दिग्याते। दिग्यिरे। संध्यक्षराणा०। दासीष्ट। लुङ्लकारे। अपिद्दाधा०। लोपो ह्रस्वा०। अदित। अदिषाताम्। अदिषत। त्रैङ्धातोर्लिट्लकारे संध्यक्षराणामा०। अनेनाकारः। द्विश्च। ह्रस्वः। पूर्वस्य। आतोऽनपि। अनेनाकारलोपः। तत्रे। तत्राते। तत्रिरे। अस्य धातोर्लुङ्लकारे संध्यक्षरा०। अत्रास्त। अत्रासातां। अत्रासत। द्युतङ् द्योतने। अकार उच्चारणार्थः। ङकार आत्मनेपदार्थः। 'उपधायाः' अनेन गुणो भवत्यस्य। द्योतते। अन्यानि मूले सन्ति। द्युत् ण इति स्थिते द्विश्च। द्यु द्युत् ण इति जाते सूत्रम्।

द्युतेः पूर्वस्य संप्रसारणं वक्तव्यं णादौ परे। दिद्युते, द्योतिषीष्ट, द्योतिता, द्योतिष्यते, अद्योतिष्यत, अद्योतिष्ट।

द्युतेः। द्युतेर्धातोः पूर्वस्य संप्रसारणं वक्तव्यं णवादौ परे सति। अनेनास्य

पूर्वस्य संप्रसारणं । स्वरहीनं । दिद्युते । दिद्युताते । दिद्युतिरे । द्योतिषीष्ट । द्योतिता । लुङ्लकारे । अद्योतिष्ट । सूत्रम् ।

द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम् । लित्पुषादेर्ङः । अद्युतत् । वृतुङ् वर्तने। वर्तते वर्तेते वर्तन्ते । वर्तेत, वर्ताताम्, अवर्तत, ववृते, वर्तिषीष्ट, वर्तिता, वर्तिष्यते, अवर्तिष्यत ।

द्युतादिभ्यः । द्युतादिभ्यो धातुभ्यो लुङि वा परस्मैपदं वाच्यम् अनेनास्य लुङि वा परस्मैपदं भवति । तदा 'लित्पुषादेर्ङः' अनेन ङः । ङित्त्वात् गुणाभावः । अद्युतत् । अद्युतताम् । अद्युतन् । वृतुङ् वर्तने । उकार उच्चारणार्थः । वर्त्तते । लिट्लकारे द्विश्च । रः । ववृते । वर्त्तिषीष्ट । वर्त्तिता । वर्त्तिष्यते । अवर्त्तिष्यत। सूत्रम् ।

वृतादिभ्यः स्यप्स्योर्वा पं पेऽनिट्त्वं च । वृतु वृधु शृधु स्यन्दू कृपू एते वृतादयः । वर्त्स्यति, अवर्त्स्यत्, अवर्तिष्ट। परस्मैपदपक्षे लित्पुषादेर्ङः । अवृतत् । वृधुङ् वृद्धौ । वर्धते, वर्धेत, वर्धताम्, अवर्धत, ववृधे, वर्धिषीष्ट, वर्धिता, वर्धिष्यते, अवर्धिष्यत, वर्त्स्यति, अवर्त्स्यत, अवर्धिष्ट, अवृधत् । शृधुङ् पर्दने । शर्धते, शर्धेत, शर्धताम्, अशर्धत, शशृधे, शर्धिषीष्ट, शर्धिता, शर्धिष्यते, अशर्धिष्यत, अशर्धिष्ट, शर्त्स्यति, अशर्त्स्यत्, अशृधत् । स्यन्दू प्रस्रवणे । स्यन्दते, स्यन्देत, स्यन्दताम्, अस्यन्दत, सस्यन्दे । ऊदितो वा । स्यन्दिषीष्ट, स्यन्त्सीष्ट, स्यन्दिता-स्यन्ता, स्यन्दिष्यते-स्यन्त्स्यते, स्यन्त्स्यति, अस्यन्दिष्यत, अस्यन्त्स्यत, अस्यन्त्स्यत्, अस्यन्दिष्ट, अस्यन्त । पक्षे अस्यदत् । कृपू सामर्थ्ये । गुणः ।

वृतादिभ्यः । वृतादिभ्यो धातुभ्यः स्यप्स्योः परतो वा पं परस्मैपदमअनिट्त्वं च वाच्यं । वृतादयस्तु मूले उक्ताः। गुणः । वर्त्स्यति अवर्त्स्यत् । लुङ्लकारे । अवर्तिष्ट ।

परस्मैपदपक्षे । लित्पुषादेर्ङः । अनेनास्य ङः । अवृतत् । वृधुङ् । उपधाया लघोः । वर्द्धते । लिट्लकारे ववृधे । वर्द्धिषीष्ट । अस्य धातोरपि पूर्वधातुवत् रूपाणि साध्यानि । शृधुङ् पर्दने । पर्दनं गुदरवः । शर्धते । अयमपि तद्वत् । न किंचिद्विशेषः । स्यन्दू प्रस्रवणे । ऊकार इड्विकल्पार्थः । स्यन्दते लिट्लकारे द्वित्वम् । पूर्वस्य । संस्यन्दे । सस्यन्दाते । सस्यन्दिरे । अस्य धातोरूदितो वा अनेनेड्विकल्पो भवति । स्यन्दिषीष्ट । इडभावपक्षे 'खसे चपा झसानां' अनेन दस्य तः । स्यन्त्सीष्ट । स्यन्दिता । स्यन्ता । स्यन्दिष्यते । इडभावपक्षे । खसे० । स्यन्त्स्यते । अस्यन्दिष्यत अस्यन्त्स्यत । अस्यन्दिष्ट । इडभावे अस्यन्त । परस्मैपदपक्षे लित्पुषादेर्ङः । नोलोपः । अनेन अनुस्वारस्य लोपो भवति । अस्यदत् । कृपू सामर्थ्ये । पूर्ववत् तथादयः । उपधायाः । सूत्रम् ।

कृपो रोलः । कृपो रेफस्य लो भवति ऋकारस्य लकारो भवति । कल्पते, कल्पेत, कल्पताम्, अकल्पत, चक्लृपे, कल्पिषीष्ट । इडभावपक्षे ।

कृपो रोलः । कृपः ( ष. ए. ) रः ( ष. ए. ) लः ( प्र. ए. ) कृपो धातो रेफस्य लकारो भवति ऋकारस्य लकारो भवति । अनेन रस्य लः । कल्पते । लिट्लकारे 'कृपो रोलः' अनेन ऋकारस्य लकारः । चक्लृपे । कल्पिषीष्ट । अस्यापि ऊदित्वादिड्विकल्पो भवति । तदा क्लृप्सीष्ट इति जाते । उपधाया लघोः । अनेन गुणे प्राप्ते सति तन्निषेधकृत् सूत्रम् ।

सिस्योः । उपधाया गुणो न भवति सिस्योरनिटोः परतः । क्लृप्सीष्ट, कल्पिता-कल्प्ता, कल्पिष्यते-कल्प्स्यते, कल्प्स्यति, अकल्पिष्यत-अकल्प्स्यत, अकल्प्स्यत्, अकल्पिष्ट । अक्लृप्त अक्लृप्सातााम् अक्लृप्सत । अक्लृपत् । व्यथ दुःखभयचलनयोः । व्यथते, व्यथेत, व्यथताम्, अव्यथत ।

सिस्योः । सिश्च सीश्च सिस्यौ तयोः सिस्योः (प द्वि.) । सिस्योरनिटोः परत उपधाया गुणो न भवति । अनेन गुणाभावः । कृपो रो लः । क्लृप्सीष्ट । कल्पिता । कल्प्ता । कल्पिष्यते । कल्प्स्यते । अकल्पिष्यत । अकल्प्स्यत । परस्मैपदपक्षे कल्प्स्यति । अकल्प्स्यत् । अकल्पिष्ट । लित्पुषादेर्ङः । कृपो रोलः । अक्लृपत् । अक्लृप्तां । अक्लृपन् । समाप्तोऽयं धातुः । व्यथ दुःखभयचलनयोः । अकार आत्मनेपदार्थः । व्यथते ।

व्यथतेर्णादौ पूर्वस्य संप्रसारणं वक्तव्यम् । विव्यथे, व्यथिषीष्ट, व्यथिता, व्यथिष्यते, अव्यथिष्यत, अव्यथिष्ट । रमु क्रीडायाम् । रमते, रमेत, रमताम्, अरमत ।

व्यथतेर्धातोर्णादौ परे पूर्वस्य संप्रसारणं वक्तव्यम् । इदं मूले सूत्रमस्ति अनेनास्य धातोः संप्रसारणं भवति । विव्यथे । विव्यथाते । विव्यथिरे । व्यथिषीष्ट । व्यथिता लुङ्लकारे । अव्यथिष्ट । रमु क्रीडायाम् । रमते । रमेत । रमतां । अरमत । सूत्रम् ।

व्याङ्पर्युपेभ्यो रमः पम् । विरमति, आरमति, परिरमति, उपरमति, रेमे, रंसीष्ट, रन्ता, रंस्यते अरंस्यत, अरंस्त, अरंसाताम् । अरंसत । विपूर्वः । आदन्तानाम् । इतीट्सकौ । व्यरंसीत् व्यरंसिष्टाम् । ञित्वरा संभ्रमे । ञिआवितौ । त्वरते, त्वरेत, त्वरताम्, अत्वरत, तत्वरे, त्वरिषीष्ट, त्वरिता, त्वरिष्यते, अत्वरिष्यत, अत्वरिष्ट, अत्वरिढ्वं-अत्वरिध्वम् । षह मर्षणे । सहते, सहेत, सहताम्, असहत, सेहे, सहिषीष्ट, सहिता । इषुसह० इति वेट् । होढः । तथोर्धः । ष्टुत्वम् । ढलोपः ।

व्याङ्पर्युपेभ्यः । वि आङ् परि उप एभ्य उपसर्गेभ्यो रमधातोः पं परस्मैपदं भवति । विरमति । आरमति । परिरमति । उपरमति । लिट्लकारे । लोपः पचाम् । अनेनैत्वपूर्वलोपौ भवतः । रेमे । रेमाते । रेमिरे । नश्चापदान्ते झले । अनेन मकारस्यानुस्वारो भवति । रंसीष्ट । रन्ता । लुङ्लकारे । अरंस्त । अरंसातां । अरंसत । यदायं धातुर्विपूर्वः स्यात् । तदात्मनेपदं भवति । आदन्तानाम् । अनेन परस्मैपदे सति इट्सकौ भवतः । व्यरम् स् इट् सि ईट् दिप् इति स्थिते । इट ईटि सवर्णे० । स्वरहीनं । नश्चापदान्ते । वावसाने । व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः । ञित्वरा संभ्रमे । ञिआवितौ । पूर्ववत् तआदयः । त्वरते । लिट्लकारे द्विश्च । पूर्वस्य हसादिः शेषः । तत्वरे । तत्वराते । तत्वरिरे । त्वरिषीष्ट । लुङ्लकारे अत्वरिष्ट । अत्वरिषातां । अत्वरिषत । षह मर्षणे । आदेः ष्णः स्नः । अनेन सत्वम् । सहते । लिट्लकारे । 'लोपः पचाम्' अनेनैत्वपूर्वलोपौ । सेहे । सेहाते । सेहिरे । सहिषीष्ट । सहिता । 'इषुसह०' अनेनास्य वा इट् भवति । इ-

ढभावपक्षे सह् ता इति स्थिते । 'होढः' अनेन हस्य ढः । तथोर्धः अनेन तस्य धः । ष्टुभिः ष्टुः । ढि ढो लोपो दीर्घश्च । तदा सा ढा इति जाते । सूत्रम् ।

सहिवहोरोदवर्णस्य । सहिवहोरवर्णस्यौकारादेशो भवति ढलोपनिमित्ते ढकारे परे । सोढा सहिष्यते असहिष्यत असहिष्ट ।

॥ इति भ्वादिष्वात्मनेपादिप्रक्रिया ॥

सहिवहोरोदवर्णस्य । सहिश्च वह च सहिवहौ तयोः सहिवहोः ( ष. द्वि. ) ओत् ( प्र. ए. ) अवर्णस्य ( ष. ए. ) सहिवहोर्धात्वोरवर्णस्य ओकारो भवति ढलोपनिमित्ते ढकारे परे । अनेन ओकारः । सोढा । सोढारौ । सोढारः । सहिष्यते । असहिष्यत । असहिष्ट । असहिषातां । असहिषत ॥

॥ इति भ्वादिगणस्यात्मनेपदिप्रक्रिया समाप्तिमगमत् ॥

---

॥अथोभयपदिप्रक्रिया॥ राजृ दीप्तौ । ऋकार ऋदित्कार्यार्थः।राजति,राजते,राजेत्,राजेत,राजतु,राजताम्,अराजत्,अराजत, रराज । फणादित्वादेत्वपूर्वलोपौ । रेजतुः-रराजतुः,रेजुः-रराजुः, रेजे, राज्यात्, राजिषीष्ट, राजिता, राजिता, राजिष्यति, राजिष्यते, अराजिष्यत्, अराजिष्यत, अराजीत्, अराजिष्ट । खन खनने । खनति, खनते, खनेत्, खनेत, खनतु, खनताम्, अखनत्, अखनत, चखान । गमां स्वरे । चख्नतुः चख्नुः । चख्ने, खन्यात् ।

॥ अथ भ्वादिगणस्योभयपदिप्रक्रिया कथ्यते ॥ राजृ दीप्तौ । उभयपदिनो धातोस्तिबादयस्तआदयश्च प्रत्यया भवन्ति । द्वयोः परयोः सतोरप् कर्तरि । अनेन अप् प्रत्ययो भवति । ऋकार ऋदित्कार्यार्थः । राजति । राजते । लिट्लकारे फणादीनां अनेनास्य वा णत्वपूर्वलोपौ । रराज । रेजतुः । रराजतुः । रेजिथ । रराजिथ । आत्मनेपदे । रेजे । णत्वपूर्वलोपाभावे । रराजे । राज्यात् । राजिषीष्ट । राजिता । राजिता । अन्यानि मूले सन्ति तानि सुगमानि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति । लुङ्लकारे । अराजीत् । अराजिष्टाम् । अराजिषुः । अराजिष्ट । अराजिषातां । अराजिषत । खन खनने । अकार उभयपदार्थः । खनति । खनते । लिट्लकारे अत उपधायाः । अनेन वृद्धिः । कुहोश्चुः । चखान । चखन् अतुस् इति

जाते 'गर्मांस्वरे' अनेनोपधाया लोपो भवति । स्वरहीनं० । चख्ने । खन्यात् । अत्रेदं सूत्रम् ।

**जनखनसनां क्ङिति ये आकारो वा वक्तव्यः । खायात्, खनिषीष्ट, खनिता, खनिता, खनिष्यति, खनिष्यते, अखनिष्यत्, अखनिष्यत, अखानीत्, अखनीत्, अखनिष्ट । हृञ् हरणे । हरति, हरते, हरेत्, हरेत, हरतु, हरताम्, अहरत । जहार जह्रतुः जह्रुः ।**

जनखनसनाम् । जन खन सन एतेषां धातूनां किति यकारे । परे आकारो वा वक्तव्यः । षष्ठीनिर्दि० । खायात् । खनिषीष्ट । खनिता । खनिता । लुङ्लकारे हसादेः । अनेनास्य वा वृद्धिः । अखानीत् । अखनीत् । अखनिष्ट । अखनिषाताम् । अखनिषत । हृञ् हरणे । अकार उभयपदार्थः । गुणः । हरति । हरते । लिट्लकारे धातोर्नामिनः । अनेन वृद्धिः । कुहोश्चुः । जहार । जह्रतुः ।

**ऋदन्तस्य थपो नेट् । जहर्थ । जह्रे । यादादौ । ह्रियात् ।**

ऋदन्तस्य । ऋदन्तस्य धातोस्थप इट् न भवति । गुणः । जहर्थ । जह्रे । यादादौ । अनेन ऋकारस्य रिङादेशः । ह्रियात् । हृसीष्ट इति जाते । गुणः । अनेन गुणे प्राप्ते । तन्निषेधकं सूत्रम् ।

**उः । ऋकारस्य गुणो न भवति सिस्योरनिटोः परतः । हृसीष्ट । हर्ता । हनृतः स्यपः । हरिष्यति, हरिष्यते, अहरिष्यत्, अहरिष्यत, अहार्षीत् । लोपो ह्रस्वाज्झसे । अहृत अहृषाताम् अहृषत । गुहू संवरणे ।**

उः । उः ( ष. ए. ) अनिटोः सिस्योः परत ऋकारस्य गुणो न भवति । अनेन गुणनिषेधः । हृसीष्ट । गुणः । हर्ता । हनृतः स्यपः । अनेन स्यपि इट् भवति । गुणः । हरिष्यति । हरिष्यते । लुङ्लकारे । वृद्धिः । अहार्षीत् । लोपो ह्रस्वाज्झसे । अनेन सेर्लोपो भवति । अहृत । अहृषाताम् । अहृषत । गुहू संवरणे । ऊकार इड्विकल्पार्थः । पूर्ववत् तिबादयस्तआदयश्च प्रत्यया भवन्ति ।

**गुहेरुपधाया ऊद्गुणहेतौ स्वरे । गूहति-गूहते, जुगूह, जुगुह-**

तुः, जुगूहिथ। जुगोढ, जुघुक्षे-जुगुहिषे, जुगुहिध्वे-जुगुहिड्ढ्वे, गूहिषीष्ट-घुक्षीष्ट, गूहिता-गोढा, गूहिष्यति-घोक्ष्यति।

गुहेः। इदं सूत्रमस्ति। गुहेर्धातोरुपधाया ऊत् स्याद् गुणहेतौ स्वरे परे। अनेनास्योपधाया ऊत्। गूहति। गूहते। अन्यानि मूले सन्ति तानि सुगमान्येवानेनैव क्रमेण साध्यानि। लिट्लकारे जुगूह। जुगुहतुः। जुगुहुः। गुहेः। जुगूहिथ। ऊदितो वा अनेनास्येड्विकल्पः। गुहेरिति सूत्रे 'स्वरादौ' इति वक्तव्यं तेन हलादौ गुणनिमित्ते प्रत्यये परे ऊत् न भवति किंतु गुणो भवति। जुगुह् थप् इति स्थिते गुणः। जुगोह्। थप् इति जाते। होढः। तथोर्धः। ढिढो लोपो०। जुगोढ। आत्मनेपदे जुगुहे। जुगुहाते। जुगुहिरे। ऊदितो वा जुगुहिषे। इडभावे जुगुह् से इति जाते हो ढः। आदिजबानां। जुघुढ् से इति जाते षढोः कः से। अनेन ढस्य कः। किलात्। कषसंयोगे क्षः। जुघुक्षे। जुगुहिषे। इडभावे। होढः झबे जबाः। जुगुढ्वे। गुह्यात्। गुहेः। सिसता। गूहिषीष्ट। इडभावे। होढः। आदिजबानां। षढोः कः से। किलात्। कष०। घुक्षीष्ट। गूहिता। इडभावे गुण 'उपधायालघोः' अनेन सूत्रेण भवति। होढः। तथोर्धः। ढिढो०। गोढा। आत्मनेपदे गूहिता। गोढा। गूहिष्यति। इडभावे। उपधायाः। हो ढः। आदिजबानां। षढोः कः से। किलात्, कषसं०। घोक्ष्यति। गूहिष्यते। घोक्ष्यते। अगूहिष्यत्। अघोक्ष्यत्। अगूहिष्यत, अघोक्ष्यत। लुङ्लकारे। अगूहीत्। इडभावे। 'हशपान्ता०' अनेन सक्प्रत्ययो भवति। अघुक्षत्। आत्मनेपदे। अगूहिष्ट। इडभावे। अगुह् सक् तन् इति स्थिते। होढः। आदिजबानां। अघुढ् स क् तन् इति जाते। सूत्रम्।

दुहदिहलिहगुहूभ्यः सको लुग्वा यकारतकारयोराति। अगूढ-अघुक्षत।

दुहदिहलिहगुहूभ्यः। दुह दिह लिह गुह् एभ्यो धातुभ्यः सको वा लुग् भवति वकारतकारयोराति आत्मने पदे थकारे परेऽपि भवति अनेन सको वा लुक्। तथोर्धः। ढिढोलोपो दीर्घश्च। अगूढ। लुगभावे। अघुढ् सक् तन् इति जाते षढोः कः से। किलात्०। कषसंयोगे क्षः। अघुक्षत। अघुक्ष् आताम् इत्यत्र। आदाथइः। अनेन आकारस्य इकारे प्राप्ते। सूत्रम्।

आति सकोऽकारलोपः स्वरे। अघुक्षाताम् अघुक्षत। अगूढाः-अघुक्षथाः, अघुक्षाथाम् अगूढ्वं-अघुक्षध्वम्। अघुक्षि-अगुह्वहि अघुक्षावहि अगुह्महि अघुक्षामहि। दान आर्जवे। गुहूभ्यः। यः

से । मानादीनां पूर्वस्य दीर्घो वक्तव्यः । दीदांसते, दीदांसेत्, दीदांसेत, दीदांसतु, दीदांसताम्, अदीदांसत्, अदीदांसत, दीदांसांचक्रे, दीदांसामास, दीदांसांबभूव, दीदांस्यात्, दीदांसिषीष्ट, दीदांसिता, दीदांसिष्यति, दीदांसिष्यते, अदीदांसिष्यत्, अदीदांसिष्यत, अदीदांसीत्, अदीदांसिष्ट । शान तेजने । शीशांसति, शीशांसते । दानवत् । भज सेवायाम् । भजति । भजते, भजेत्, भजेत, भजतु, भजताम्, अभजत्, अभजत, बभाज । तृफलभज० इत्येत्वपूर्वलोपौ । भेजतुः भेजुः । भेजिथ बभक्थ । भेजे भेजाते भेजिरे । भज्यात्, भक्षीष्ट, भक्ता, भक्ता, भक्ष्यति, भक्ष्यते, अभक्ष्यत्, अभक्ष्यत । अभाक्षीत् । अभाक्ताम् अभाक्षुः । अभक्त, अभक्षाताम्, अभक्षत । डुपचष् पाके । डुकारषकारौ कार्यार्थौ । पचति, पचते, पचेत्, पचेत, पचतु, पचताम्, अपचत्, अपचत । पपाच पेचतुः पेचुः । पेचे, पच्यात्, पक्षीष्ट, पक्ता, पक्ता, पक्ष्यति, पक्ष्यते, अपक्ष्यत्, अपक्ष्यत, अपाक्षीत् । अपक्त अपक्षाताम् अपक्षत । अञ्च गतौ याचने च । आञ्चीत् । व्यय गतौ । वव्यये, अव्ययीत् । श्रिञ् सेवायाम् । गुणः । श्रयति, श्रयते, शिश्राय, शिश्रियतुः, शिश्रिये, श्रीयात्, श्रयिषीष्ट, श्रयिता, श्रयिता, श्रयिष्यति, श्रयिष्यते, अश्रयिष्यत्, अश्रयिष्यत ।

घ्याति । घाति आत्मनेपदे सकः अकारस्य लोपो भवति स्वरे परे । अनेन अकारस्य लोपः । अघुक्षाताम् । अघुक्षत । अगूढाः । अघुक्षथाः । अघुक्षाथाम् । अगूढ्वम् । अघुक्षध्वम् । अघुक्षि । अगुह्वहि । अघुक्षावहि । अघुक्षामहि । दान आर्जवे । गुप्भ्यः । यः से । मानादीनां । स धातुः । नश्चापदान्ते । दीदांसति । दीदांसेत । अन्यानि मूले सन्ति । दीदांसांचकार । दीदांसांचक्रे । द्वे मूले स्तः । असप्यतः दीदांस्या-

त् । दीदांसिषीष्ट । अन्यानि मूले सन्ति । ते पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । शान तेजने । गुब्भ्यः । शीशांसति । शीशांसते । दानवत् । भज सेवायां । भजति । भजते । लिट्लकारे । अत उपधायाः । बभाज । 'तॄफलभज०' अनेनैत्वपूर्वलोपो भवतः । भेजतुः । भेजे । भेजाते । चोः कुः । खसे । पढोः कः से । क्लिलात् । कषसं० । भक्षीष्ट । भक्ता । लुङ्लकारे । सावनिटः । अभाक्षीत् । झसात् । अभाक्ताम् । अभक्त । अभक्षातां । डुपचष् पाके । 'डुकारषकारौ' कार्यार्थौ । पचति । पचते । लिट्लकारे लोपः पचाम् । अत उपधायाः । पपाच । पेचतुः । पेचे । पेचाते । पच्यात् । पच् सीष्ट इति स्थिते चोः कुः । क्लिलात् । कषसंयोगे क्षः । पक्षीष्ट । चोः कुः । पक्ता । लुङ्लकारे सावनिटः । अपाक्षीत् । झसात् । अपाक्ताम् । आत्मनेपदे । अपक्त । अपक्षातां । अञ्च गतौ याचने च । अञ्चति । अञ्चते । लिट्लकारे । आनञ्च । आनञ्चे । नोलोपः । अच्यात् । अङ्क्षीष्ट । अङ्क्ता । लुङ्लकारे । आञ्चीत् । आङ्क्त । श्रिञ् सेवायाम् । पूर्ववत् तिबादयस्तआदयः । अप् कर्तरि । गुणः । ए अय् । श्रयति । श्रयते । लिट्लकारे । द्विश्च । पूर्वस्य । 'धातोर्नामिनः' अनेन वृद्धिः । शिश्राय । नुधातोः । शिश्रियतुः । शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिता । अन्यानि मूले सन्ति । लुङ्लकारे सूत्रम् ।

स्नुश्रिद्रुवां सेरङ् धातोर्द्वित्वं च । अशिश्रियत् अशिश्रियत । त्विष् दीप्तौ । त्वेषति, त्वेषते, तित्वेष, तित्विषे, त्विष्यात्, त्विक्षीष्ट, त्वेष्टा, त्वेक्ष्यति, त्वेक्ष्यते, अत्वेक्ष्यत्, अत्वेक्ष्यत । हशषान्तात्सक् । अत्विक्षत ।

स्नुश्रिद्रुवां । स्नु श्रि द्रु एतेषां धातूनां सेरङ् प्रत्ययो भवति धातोर्द्वित्वं च भवति । अशिश्रियत् । अशिश्रियत । त्विष् दीप्तौ । उपधाया लघोः । अनेन गुणः । त्वेषति । त्वेषते । अन्यानि सुगमानि । लिट्लकारे । उपधायाः । पूर्वस्य । तित्वेष । तित्विषतुः । आत्मनेपदे । तित्विषे । तित्विषाते । त्विष्यात् । पढोः कः से । त्विक्षीष्ट । उपधायाः । ष्टुभिः ष्टुः । त्वेष्टा । अन्यानि मूले सन्ति । लुङ्लकारे । 'हशषान्तात्सक्' अनेन सक् प्रत्ययो भवति । पढोः कः से । क्लिलात् । कषसंयोगे क्षः । अत्विक्षत् । अत्विक्षतां । अत्विक्षन् । आत्मनेपदे । अत्विक्षत । अत्विक्ष आताम् इति जाते आदाथ इ । अनेन आकारस्य इकारे प्राप्ते सूत्रम् ।

सस्यात्मनेपदे स्वरे टिलोपो वाच्यः । अकारलोपे कृते आतोऽन्तोदनतः । अत्विक्षाताम् अत्विक्षत । यज देवपूजासंगतिकरणदानेषु । यजति, यजते, यजेत्, यजेत, यजतु,

यजताम्, अयजत, अयजत । णादौ पूर्वस्य । इयाज । यजां यवराणां प्वृतः संप्रसारणम् । ईजतुः ईजुः । इजयिथ-इयष्ठ । ईजे, इज्यात्, यक्षीष्ट, यष्टा, यष्टा, यक्ष्यति, यक्ष्यते, अयक्ष्यत्, अयक्ष्यत । अयाक्षीत् अयाष्टाम् अयाक्षुः । अयष्ट अयक्षाताम् अयक्षत । अयष्ठाः अयक्षाथाम् ।

सस्य । सस्य आत्मनेपदे स्वरे परे सति टेर्लोपो वाच्यः । अनेन अकारस्य लोपः । स्वरहीनं० । अत्विक्षातां । आतोन्तोऽदनतः । अत्विक्षत । समाप्तोऽयं धातुः । यज देवपूजासंगतिकरणदानेषु । यजति । यजते । अन्यानि सन्ति मूले । लिट्लकारे । यज् णप् इति स्थिते द्विश्च । 'णवादौ पूर्वस्य' अनेन संप्रसारणम् । अत उपधायाः । इयाज । य यज् अतुस् इति जाते । णबादौ पूर्वस्य । यजां यवराणां । सवर्णे । ईजतुः । ईजुः । इयजिथ । अत्वतोनित्यानिटः । अनेनास्य वा इट् भवति । इयज् थप् इति जाते । छशषराजादेः षः । अनेन जस्य षः । ष्टुभिः ष्टुः । इयष्ठ । आत्मनेपदे । द्वाभ्यां सूत्राभ्यां संप्रसारणं भवति । ईजे । ईजाते । ईजिरे । यजां । इज्यात् । छशषराजादेः षः । षढोः कः से । किलात् । क्षसंयोगे । यक्षीष्ट । छशषराजादेः षः । ष्टुभिः ष्टुः । यष्टा । अन्यानि लिखितानि सन्ति तस्मान्न लिखितानि मया । तानि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति । लुङ् लकारे । 'सावनिट' अनेन वृद्धिः । अयाक्षीत् । झसात् । अयाष्टां । अयाक्षुः । आत्मनेपदे । 'झसात्' अनेन सेर्लोपः । ष्टुभिःष्टुः । अयष्ट । अयक्षाताम् । अयक्षत । अयज् स् ध्वं इति जाते ।

ध्वे च सेर्लोपः । षत्वम् । झबे जबाः । ष्टुत्वम् । अयड्ढ्वम् । अयक्षि अयक्ष्वहि अयक्ष्महि । टुवप् बीजतन्तुसन्ताने । टुइत् वपति वपेत् । उवाप ऊपतुः ऊपुः । उवपिथ-उवपथ । ऊपे, उप्यात्, वप्सीष्ट, वप्ता, वप्स्यति, वप्स्यते, अवप्स्यत्, अवप्स्यत, अवाप्सीत्, अवप्त । वह प्रापणे । वहति, वहते । उवाह ऊहतुः ऊहुः । उवहिथ । होढः । तथोर्धः । ष्टुत्वम् । ढलोपः । सहिवहोरोदवर्णस्य । उवोढ, उह्यात्, वक्षीष्ट, वोढा, वक्ष्यति, वक्ष्यते, अवक्ष्यत्, अवक्ष्यत, अवाक्षीत्, अवोढाम्, अवोढ अवक्षाताम् अवक्षत । वेञ् तन्तुसन्ताने । वयति, वयते ।

ध्वे च सेर्लोपः। अनेन सेर्लोपः। छशषराजादेः षः। षोढः। अनेन षस्य ढः। ष्टुत्वम्। अयड्ढ्वम्। टु वप् बीजतन्तुसन्ताने। टुइत्। वपति। वपते। लिट्लकारे णबादौ। अनेन संप्रसारणम्। अत उपधायाः। उवाप। द्वे संप्रसारणे भवतः अत्र। सवर्णे। ऊपतुः। अस्त्वतः। उवपिथ। इडभावे। उवप्थ। ऊपे। ऊपाते। ऊपिरे। यजां। उप्यात्। वप्सीष्ट। वप्ता। अन्यानि मूले सन्ति। लुङ्लकारे। सार्वानिटः। अवाप्सीत्। झसात्। अवाप्ताम्। अवाप्सुः। आत्मनेपदे। अवप्त। अवप्साताम्। अवप्सत। वह प्रापणे। वहति। वहते। लिट्लकारे। णबादौ। पूर्वस्य। अत उपधायाः। उवाह। यजां। ऊहतुः। ऊहुः। उवहिथ। अत्वतः। उवह् थप् इति जाते होढः। अनेन हस्य ढः। तथोर्धः। अनेन थस्य धः। ष्टुत्वं। ढलोपः। सहिवहोरोदवर्णस्य। उवोढ। ऊहे। ऊहाते। ऊहिरे। यजां। उह्यात्। होढः। तथोर्धः। ष्टुत्वं। ढलोपः। सहिवहोरोदवर्णस्य। वोढा। वोढा। षढोः कः से। वक्ष्यति। वक्ष्यते। अन्यानि सन्ति मूले। लुङ्लकारे। सार्वानिटः। अवाक्षीत्। अवोढां। अवाक्षुः। अवोढ। अवक्षातां। अवक्षत। वेञ् तन्तुसंताने। ञकार उभयपदार्थः। वयति। वयते। लिट्लकारे। सूत्रम्।

**वेञो णादौ संप्रसारणभावो वाच्यः। संध्यक्षराणामा। ववौ। वादित्वान्नैत्वपूर्वलोपौ। ववतुः ववुः। ववे।**

वेञः। वेञो धातोर्णबादौ परे संप्रसारणाभावो वाच्यः। अनेनास्य संप्रसारणनिषेधो भवति। संध्यक्षराणामा। द्वित्वं। आतो णप् डौ। ववौ। लोपः पचां। अनेनैत्वपूर्वलोपौ प्राप्तौ। 'शसृददवादि' अनेन तन्निषेधः। आतोऽनपि। ववतुः। ववुः। आत्मनेपदे। ववे। ववाते। वविरे। सूत्रम्।

**वेञो वय् णादौ वा वक्तव्यः। उवाय।**

वेञः। वेञोधातोर्णबादौ परे वय् वाच्यः। वय् णप् इति स्थिते। द्वित्वं। णबादौ पूर्वस्य। अत उपधायाः। उवाय। वय् अतुस्। इति स्थिते। णबादौ सूत्रम्।

**ग्रहां क्ङिति च। ग्रहादीनां संप्रसारणं स्यात् किति ङिति च परे। इति संप्रसारणम्। यकारस्य संप्रसारणनिषेधः। ऊयतुः ऊयुः। उवयिथ ऊयथुः। ऊये ऊयाते ऊयिरे।**

ग्रहां। (ष. ब.) क्ङिति (स. ए.) च (प्र. ए.) त्रिपदं०। ग्रह उपादाने। ज्या वयोहानौ। वेञ् तन्तुसंताने। ह्वेञ् आह्वाने। व्यध् ताडने। वश् कान्ती-

वभिलाषे। व्यच् व्यक्तीकरणे। पृच्छञ्जीप्सायां। पृच्छायां भ्रस्ज् पाके। व्रश्च् छेदने। इत्येतेषां संबन्धिनां यकारवकाररेफाणां किति ङिति च परे संप्रसारणं भवति। यकारस्य इकारः वकारस्य उकारः रेफस्य ऋकारः लकारस्य लृकारः संप्रसारणं। अनेन द्वितीयं संप्रसारणं। यकारस्य संप्रसारणनिषेधो वाच्यः। अत्र। ऊयतुः ऊयुः। उवयिथ आत्मनेपदे। ऊये। ऊयाते। ऊयिरे। सूत्रम्।

वयो यस्य किति णादौ वो वा वक्तव्यः। ऊवतुः ऊवुः। ऊवे, ऊयात्, वासीष्ट, वाता, वाता, वास्यति, वास्यते, अवास्यत्, अवास्यत, अवासीत्। आदन्तानाम्। इति इट् सकौ। अवासिष्टाम्। अवास्त। व्येञ् संवरणे। व्ययति व्ययते।

वयः। वयो यस्य किति णादौ परे वकारो वा वक्तव्यः। तदा। उवाय। ऊवतुः। ऊवुः। आत्मनेपदे। ऊवे। ऊवाते ऊविरे। ग्रहां क्ङिति च। ऊयात्। संध्यक्षराणामा। वासीष्ट। वाता। वाता। अन्यानि मूले सन्ति। लुङ्लकारे। आदन्तानां। अवासीत्। अवासिष्टां। अवासिषुः। अवास्त। अवासाताम्। अवासत। व्येञ् संवरणे। व्ययति। व्ययते। लिट्लकारे। सूत्रम्।

व्येञो णादौ नात्वम्। विव्याय विव्यतुः विव्युः।

व्येञः। व्येञो धातोर्णवादौ परे संध्यक्षराणामा अनेन सूत्रेण आत्वं न भवति व्येञ् णप् इति स्थिते। द्विश्च। णबादौ पूर्वस्य। अनेन संप्रसारणं तदा। विव्ये णप् इति जाते। धातोर्नामिनः। विव्याय। विव्यतुः। विव्युः।

अत्त्यर्तिव्ययतीनां थपो नित्यमिट्। विव्ययिथ। विव्ये, वीयात्, व्यासीष्ट, व्याता, व्याता, व्यास्यति, व्यास्यते, अव्यास्यत् अव्यास्यत, अव्यासीत्, अव्यास्त। ह्वेञ् स्पर्धायाम्। ह्वयति, ह्वयते।

अत्त्यर्ति०। विव्ययिथ। विव्ये। वीयात्। संध्यक्षराणामा। व्यासीष्ट। व्याता। व्याता। अन्यानि मूले सन्ति। अव्यासीत्। अव्यास्त। ह्वेञ् स्पर्धायां। ह्वयति। ह्वयते। लिट्लकारे सूत्रम्।

अद्विरुक्तस्य ह्वयतेः संप्रसारणं वक्तव्यम्। जुहाव जुहुवतुः जुहुवुः। जुहविथ जुहोथ। जुहुवे जुहुवाते जुहुविरे। हूयात्

ह्वासीष्ट, ह्वाता, ह्वाता, ह्वास्यति, ह्वास्यते, अह्वास्यत्, अह्वास्यत ।

अद्विरुक्तस्य । अद्विरुक्तस्य ह्वयतेर्धातोः संप्रसारणं वक्तव्यम् । द्वित्वं । धातोर्नामिनः । जुहाव । जुहुवतुः । जुहुवुः । जुहविथ । जुहोथ । जुहुवे । जुहुवाते । जुहुविरे । संप्रसारणं । हूयात् । ह्वासीष्ट । अन्यानि मूले सन्ति । लुङ्लकारे । अह्वासीत् । सूत्रम् ॥

अस्यतिवक्तिख्यातिलिपिसिचिह्वयतीनां सेर्ङो वा वाच्यः । अह्वत अह्वेताम् अह्वन्त । अह्वास्त । अह्वासाताम् अह्वासत । ऋत जुगुप्सायां कृपायां च ।

अस्यति वक्तिख्याति० । अस्यति वक्ति ख्याति लिपि सिचि ह्वयति एतेषां धातूनां सेर्ङो वा वाच्यः । आतोनपि । अह्वत् । अह्वत । अह्वेतां । अह्वन्त । अह्वास्त । ऋत जुगुप्सायां कृपायां च । सूत्रम् ।

ऋतेरीयङ् स्वार्थेऽनपि तु वा । ऋतीयते, ऋतीयांचक्रे, आनर्त, ऋतीयिष्यते, आर्तीत, आर्तीयिष्ट ॥

॥ इति भ्वादिषूभयपदिप्रक्रिया ॥

इत्यब्विकरणा भ्वादये धातवः ॥ १ ॥ इति प्रथमगणः ॥

ऋतेः । ऋतेर्धातो रीयङ्प्रत्ययो भवति स्वार्थे । अनपि तु वा भवति । ऋतीयते । ऋतीयांचक्रे । ईयङभावे । आनर्त । ऋतीयिष्यते । आर्तीत् । आर्तीयिष्ट ॥ इति भ्वादिगणस्योभयपदिप्रक्रिया समाप्ता ॥ इत्यब्विकरणा भ्वादयो धातवः ॥

इदानीं लुग्विकरणाददादेर्गणात्कर्तरि तिबादयो वर्ण्यन्ते ॥

अद् भक्षणे । अप् ।

इदानीं लुग्विकरणा दादेर्गणात् कर्त्तरि तिबादयो योज्यन्ते । अद् भक्षणे । पूर्ववत् तिबादयः । अकर्तरि । सूत्रम् ।

अदादेर्लुक् । अदादेर्गणादुत्पन्नस्यापो लुग्भवति । खसे चपा झसानाम् । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । अद्यात् । अत्तु अत्तात् अत्ताम् अदन्तु ।

अदादेर्लुक्। अदादेः (पं. ए.) लुक् (प्र. ए.) द्विपदं० । अदादेर्धातुगणादुत्पन्नो योऽप्प्रत्ययः। तस्य लुग्भवति। अनेन सर्वत्राऽपो लुक्। तत्र वर्त्तमाने तिप् तस् अन्ति सिप् थस् इत्येतेषु खसे चपा० इति दस्य तकारः। अत्ति। अत्तः। अदन्ति। अद्यात्। अत्तु। अत्तात्। अत्तां। अदन्तु। अद् हि इति स्थिते सूत्रम्।

**झसाद्धिर्हेः। झसादुत्तरस्य हेर्धिर्भवति। अद्धि-अत्ताद्वा अत्तम् अत्त। अदानि अदाव अदाम।**

झसाद्धिर्हेः। (पं. ए.) धि (प्र. ए.) हिं। (ष. ए.) झसादुत्तरस्य हि इति वचनस्य धिरित्यादेशो भवति। तातङादेशे कृते तु न भवति। स्वर०। अद्धि अत्तात्। अत्तम्। अत्त। उत्तमपुरुषे सर्वत्र। स्वर०। अदानि। अदाव। अदाम। अनद्यतनेऽप्प्रत्ययलुकि कृते। दिबादावट्। स्वरादेः। इत्यडागमद्वये च कृते उभयत्रापि सव ०।

**अदादिस्योरडागमो वक्तव्यः। जघास। गमां स्वरे। खसे चपा०। घसादेः षः। क्षः। जक्षतुः जक्षुः। जघसिथ। पक्षे। आद आदतुः आदुः। आदिथ। अद्यात्, अत्ता, अत्स्यति, आत्स्यत्।**

अदादिस्योरिति। अदो धातोः परयोर्दिप् सिप् इत्येतयोः अमागमो भवति। अनेनामागमः टित्त्वादादौ। स्वर० वावसाने। आदत्। तकारादौ। खसे०। आत्तां। आदन्। आदः आत्तम् आत्त। आदम्। आद्व। आद्म। अद् णप् इति स्थिते सूत्रम्।

**सिसयोः। अनयोः परयोरद्धातोर्घस्लृआदेशो भवति।**

सिसयोः। सिसयोः परतः। अदधातोर्घस्लृ इत्यादेशो भवति। णबादौ वा भवति। लृकारः लृदित्कार्यार्थः। घस् णप् इति स्थिते। द्विश्च। कुहोश्चुः। झपानां जबचपाः। अत उपधायाः। जघास। जघस् अतुस् इति स्थिते। गमां स्वरे। अनेनोपधाया लोपः। खसे। अनेन घस्य कः। घसादेः षः। अनेन षत्वम्। कषसंयोगे। जक्षतुः जक्षुः। जघसिथ। पक्षे। आद। आदतुः। आदुः। अद्यात्। खसे०। अत्ता। अन्यानि सन्ति मूले। लुङ्लकारे। सिसयोः।

**लृदित्वादङ्। अघसत् अघसताम् अघसन्। प्सा भक्षणे।**

प्साति प्सातः प्सान्ति । प्सायात् प्सायाताम् प्सायुः । प्सातु-प्सातात् प्साताम् प्सान्तु । अप्सात् अप्साताम् ।

ऌदित्त्वादङ् । अघसत् । अघसताम् । अघसन् । प्सा भक्षणे । प्साति प्सातः प्सान्ति । अन्यानि मूले सन्ति । तानि सुगमान्येव । लुङ्लकारे । अप्सात् । अप्साताम् । अप्सा अन् इति स्थिते सूत्रम् ।

आदन्तविद्द्विषामन उस् वा वक्तव्यः । डस्यालोपः । अप्सुः । अप्सात् । पप्सौ पप्सतुः पप्सुः । पप्सिथ-पप्साथ । प्सेयात् प्सायात्, प्साता, प्सास्यति, अप्सास्यत् । आदन्तानाम् । इतीट्सकौ । अप्सासीत् अप्सासिष्टाम् । मा माने । माति, मायात्, मातु । अमात् अमाताम् अमुः । अमान् । ममौ । दादेरे । मेयात्, माता, मास्यति, अमास्यत्, अमासीत् । या प्रापणे । याति, यायात्, यातु । अयात् अयाताम् अयुः । अयान्, ययौ, यायात्, याता, यास्यति, अयास्यत्, अयासीत् । वा गतिगन्धनयोः । वाति । यातिवत् । रा दाने । तद्वत् । ला दानग्रहणयोः । लाति, ललौ तद्वत् । द्रा कुत्सायां गतौ च । द्राति, दद्रौ, द्रायात्, द्रेयात्, द्राता, द्रास्यति, अद्रास्यत्, अद्रासीत् । ख्या प्रकथने । ख्याति, ख्यायात्, ख्यातु, अख्यात, चख्यौ, ख्यायात्, ख्येयात्, ख्याता, ख्यास्यति, अख्यास्यत् । पुषादित्वात् ङः । आतोऽनपि । अख्यत्, । पा रक्षणे । पाति, पायात्, पातु, अपात्, पपौ, पाता, पास्यति, अपास्यत्, अपासीत् । भा दीप्तौ । भाति, बभौ, अभासीत् । ष्णा शौचे । स्नाति, सस्नौ, स्नायात्, स्नेयात्, अस्नासीत् । वश् कान्तौ । छशषराजादेः षः । इति षत्वम् । ष्टुत्वम् । वष्टि । ग्रहां क्ङिति च । उष्टः उशन्ति । षत्वम् । षढोः कः से । क्षः । वक्षि उष्ठः उष्ठ । वश्मि उ-

श्वः उश्मः । उश्यात् उश्याताम् उश्युः । वष्टु उष्टात्-उष्टाम् उशन्तु । झसाद्धिर्हेः । झबे जबाः । ष्टुत्वम् । उड्ढि उष्टात् उष्टम् उष्ट । वशानि वशाव वशाम ।

आदन्तविद्द्विषाम् । आदन्तः विद् द्विष् एतेषां धातूनाम् अन उस् वा वक्तव्यः । उस्यालोपः । अप्सुः । अप्सात् । द्विश्च । पूर्वस्य हसादिः । आतो णप् डौ । पप्सौ । पप्सतुः । अत्वतः । पप्सिथ । पप्साथ । संयोगादे० । प्सेयात् । प्सायात् । प्साता । लुङ्लकारे । आदन्तानां । अप्सासीत् । मा माने । माति । लिट्लकारे । ममौ । दादेरः । मेयात् । माता । आदन्तानां । अमासीत् । अमासिष्ट । अमासिष्टां अमासिषुः । समाप्तोऽयं ॥ या प्रापणे । याति । ययौ । अयासीत् । वा गतिगन्धनयोः । वाति । अयं धातुर्यातिवत् ज्ञेयः । न कश्चित् विशेषः । रा दाने । राति । अयमपि तद्वत् - ला दानग्रहणयोः । लाति । ललौ । अलासीत् । द्रा कुत्सायां गतौ च । द्राति । रः । दद्रौ । संयोगादेः । द्रायात् । द्रेयात् । अद्रासीत् । ख्या प्रकथने । ख्याति कुहोश्चुः । झपानां । चख्यौ । संयोगादेः । ख्यायात् । ख्येयात् । अस्य धातोर्लुङ्लकारे पुषादित्वात् लिप्पुषादेर्ङः । आतोऽनपि । अनेनाकारस्य लोपः । अख्यत् अख्यताम् अख्यन् । भा दीप्तौ । भाति । झपानां बभौ । अभासीत् । अभासिष्टाम् । अभासिषुः । सुगमत्वात् धातूनाम् एतेषां व्याख्यानं न कृतम् । वश कान्तौ । कान्तिरिच्छा । पूर्ववत् तिबादयः । 'अदादेर्लुक्' अनेन सर्वत्र अपो लुग् भवति । वश् तिप् इति जाते 'छशष' अनेन शस्य षः । 'ष्टुभिः ष्टुः' । अनेन तस्य टः । वष्टि । वश् तस् इति जाते ग्रहां क्ङिति च । अनेन संप्रसारणं । छशष० ष्टुत्वं । उष्टः । उशन्ति । वश् सिप् इति स्थिते । छशष० षढोः कः से । किलात्० । कषसंयोगे क्षः । वक्षि । उश्यात् । लोट्लकारे वष्टु । वश् हि इति जाते । संप्रसारणम् । झसाद्धिर्हेः । शस्य षत्वं । षो डः । उड्ढि । उष्टात् । वशानि वशाव वशाम । वश् दिप् इति स्थिते । षत्वं । वष् दिप् । इति जाते षो डः । सूत्रम् ।

दिस्योर्हसात् । हसादुत्तरयोर्दिप्सिपोर्लोपो भवति । षत्वम् । षो डः । वावसाने । अवट्-अवड् । संप्रसारणम् । अडागमः । उओ । ओओ औ । औष्टाम् औशन् । अवट्-अवड् औष्टम् औष्ट । अवशम् औश्व औश्म । उवाश ऊशिव ऊशिम । उश्यात् उश्यास्ताम् उश्यासुः । वशिता । वशिष्यति । अवशिष्यत् । अवाशीत् । हन् हिंसागत्योः । हन्ति ।

दिस्योर्हसात् । दिश्च सिश्च दिसी तयोः दिस्योः ( ष० द्वि० ) हसात् ( पं० ए० ) हसादुत्तरौ यौ दिप्सिपौ तयोर्लोपो भवति । अनेनास्य वशो धातोर्दिस्योर्लोपो भवति । वावसाने । अनेन डस्य टः । अवट् अवड् । वश् ताम् इति स्थिते । ग्रहां क्ङिति च । अनेन संप्रसारणं । षत्वं । ष्टुत्वं । अडागम इयं उष्टां ।ओ-औ औ । औष्टाम् । औशन् । अन्यानि मूले सन्ति । वश् णप् इति स्थिते द्वित्वे । णबादौ पूर्वस्य । अत उपधायाः । उवाश ग्रहां क्ङिति । अनेन द्वितीयं संप्रसारणम् । ऊशतुः । ऊशुः । उवशिथ । संप्रसारणं । उष्यात् । लुङ्लकारे । हसादेः अनेन वा वृद्धिः । अवाशीत् । अवशीत् । हन् हिंसागत्योः । पूर्वं तिवादयः । नश्चापदान्ते झसे । अनेन नस्यानुस्वारः । हंति । हन् तस् इति स्थिते सूत्रम् ।

लोपस्त्वनुदात्ततनाम् । अनुदात्तानां तनादीनां च अमस्य लोपो भवति किति ङिति झसे परे । तुशब्दात्क्वचिज्झसेऽपि क्यप्प्रत्ययादौ अमस्य लोपः ।

रमिर्यमिनसी हन्तिरनुदात्ता गमिर्मनिः ॥
तनुः क्षण् क्षिणू ऋणुकृणू वनुर्वमुस्तनादयः ॥

हतः । गमां स्वरे । हनो घ्ने । घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः । हन्यात् हन्याताम् हन्युः । हन्तु हतात् हताम् घ्नन्तु ।

लोपस्त्वनुदात्ततनां । लोपः ( प्र० ए० ) अनुदात्तश्च तनश्च अनुदात्ततनः । तेषामनुदात्ततनाम् ( ष० ब० ) अनुदात्तानां धातुपाठोक्तानामनिटां हन्-गम्-नम्-मन्यत्यादीनां तथा तनादीनां तन्-मन्-वन्-षण्-क्षिणु-क्षण्-घृणु-ऋणु इत्यादीनां धातूनां अमस्य लोपो भवति किति ङिति च झसे परे तुशब्दात्क्वचिदझसेऽपि क्यप्प्रत्ययादौ अमस्य लोपो भवति । अनेन नकारस्य लोपः । हतः । हन् अन्ति । अन्ति इति स्थिते । अप्कर्तरि । अदादेर्लुक् । अनेनापोलुग्भवति । हन् अन्ति इति जाते । गमां स्वरे । अनेनोपधाया लोपः । हन् अन्ति इति जाते हनो घ्ने । अनेन हस्य घः । स्वरहीनं । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । हन्यात् । हन्यातां । हन्युः । लोट्लकारे । हन्तु । तुह्योः । हतात् । हतां । गमां स्वरे । हनोघ्ने । स्वरहीनं० । घ्नन्तु । हन् हि इति स्थिते सूत्रम् ।

जह्येधिशाधि । हन्तेर्जहिशब्दोऽस्तेरेधिशब्दः शास्तेः शाधि-

शब्दो निपात्यते हिविषये। जहि-हतात् हतम् हत। ह-नानि हनाव हनाम। अहन् अहताम् अघ्नन्। अहन् अहतम् अहत। अहनम् अहन्व अहन्म। हनो घ्ने। वृद्धिः। जघान जघ्नतुः जघ्नुः।

जह्येधिशाधि। जहिश्च एधिश्च शाधिश्च जह्येधिशाधि (प्र० ए०) हिविषये हन इत्यस्य जहि, अस् इत्यस्य एधिः, शास् इत्यस्य शाधि एते आदेशा भवन्ति। हिसहितानामेतेषां धातूनां निपाता भवन्तीति ज्ञातव्यम्। अनेन हिसहितस्य हन्तेर्धातोरयमादेशः। जहि हतात् हतं हत। हनानि हनाव हनाम। हन् दिप् इति स्थिते। दिस्योर्हसात्। अनेन दिपो लोपो भवति। दिबादावट्। अनेनाडागमः। अहन्। लोपस्त्वनुदात्ततनाम्। अनेन नस्य लोपः। अहताम्। गमांस्वरे। हनोघ्ने। अघ्नन्। अहन्। अहतं अहत। अहनं अहन्व अहन्म। हन् णप् इति स्थिते। द्विश्च पूर्वस्य हसादिः कुहोश्चुः। हनोघ्ने अत उपधायाः अनेन वृद्धिः। जघान। हन् अतुस् इति स्थिते गमां स्वरे। हनो घ्ने जघ्नतुः जघ्नुः। हन् थप् इति स्थिते। द्विश्च। सूत्रम्।

द्विरुक्तस्य हन्तेस्थपि घत्वं वाच्यम्। जघनिथ जघन्थ ज-घ्नथुः जघ्न। जघान-जघन जघ्निव जघ्निम।

द्विरुक्तस्य। द्विरुक्तस्य हन्तेर्धातोस्थपि घत्वं वाच्यम्। अनेन घत्वम्। क्रादेः जघनिथ। अत्वतः। नश्चापदान्ते। जघन्थ। जघ्न। अन्यानि मूले सन्ति। हन् यात् इति स्थिते। सूत्रम्। हन्तेः। हन्तेर्धातोः स्याशीर्यादादौ परे सति वधादेशो वक्तव्यः। अनेन वधादेशः। यतः। वध्यात्। वध्यास्तां वध्यासुः। लुट् लकारे। नश्चापदान्ते। हन्ता। हन्तारौ। हन्तारः। हनृतः स्यपः। अनेन स्यपि इट् भवति। हनिष्यति। अहनिष्यत्। हन् दिप् इति स्थिते। भूते सिः। 'हन् सि दिप्' इति जाते।

हन्तेः स्याशीर्यादादौ वधादेशो वक्तव्यः। वध्यात् वध्या-स्ताम् वध्यासुः। हन्ता हन्तारौ हन्तारः। हनृतः स्यपः। हनिष्यति हनिष्यतः हनिष्यन्ति। अहनिष्यत् अहनिष्य-ताम् अहनिष्यन्।

हन्तेः। अनेन वधादेशः। तदा। वध् सि दिप् इति-जाते। यतः। सिस-

ता सीस्यपां । सेः । णित्पे । अनेन सेर्णित्त्वात् वृद्धौ माप्तायां । सूत्रम् ।

जनिवध्योर्न वृद्धिः । वधादेशे कृते इट् अवधीत् अवधिष्टाम् अवधिषुः । अवधीः अवधिष्टम् अवधिष्ट । यु मिश्रणे । गुणः ।

जनिवध्योः । जनिवध्योर्धात्वोर्वृद्धिर्न भवति अनेन वृद्धिनिषेधः । इट् ईटि । अवधीत् । अवधिष्टां । अवधिषुः । यु मिश्रणे । पूर्ववत्तिबादयः । अदादेर्लुक् । अनेन लुग् भवति । यु तिप् इति स्थिते । सूत्रम् ।

ओरौ । उकारस्याद्विरुक्तस्य औकारादेशो भवति पिति त्स्मि अबादौ विषये । यौति युतः । नु धातोः । युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयात् । यौतु-युतात् युताम् युवन्तु । युहि-युतात् युतम् युत । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अयवम् अयुव अयुम । धातोर्नामिनः । युवाव । नानप्योर्वः । युयुवतुः युयुवुः । युयविथ युयुवथुः । यूयात्, यविता, यविष्यति, अयविष्यत्, अयावीत् अयाविष्टाम् अयाविषुः । तु गतिवृद्धिहिंसासु ।

ओरौ । ओः ( ष. ए. ) औ ( प्र. ए. ) अद्विरुक्तस्य उकारस्य उकारादेशो भवति पिति त्स्मि परे । अबादौ विषये । अनेनोकारस्यौकारः । यौति । युतः । नुधातोः । युवन्ति । यूयात् । यौतु । युतात् । युतां । युवन्तु । युहि । युतात् । युतं । युत । यवानि । यवाव । यवाम । अयौत् । अयुताम् । अयुवन् । अयौः । अयुतम् । अयुत । अयवम् । अयुव । अयुम । यु णप् । इति स्थिते । द्वित्वं । धातोर्नामिनः । अनेन वृद्धिः । युयाव । यु अतुस् इति स्थिते । द्वित्वं । नुधातोः । नानप्योर्वः । युयुवतुः । युयुवुः । युयविथ । ये । यूयात् । गुणः । सिसतासीस्यपां । अव् । यविता । लुङ्लकारे । णित्पे । धातोर्नामिनः । अयावीत् अयाविष्टाम् अयाविषुः । तु गतिवृद्धिहिंसादिषु । पूर्ववत्तिबादयः । अदादेर्लुक् । ओरौ । तौति सूत्रम् ।

तरुनुस्तुभ्यो द्विरुक्तेभ्यो हसादीनां चतुर्णामीड्वा । तौति-

तवीति तुतः-तुवीतः तुवन्ति । तौषि-तवीषि तुथः-तुवीथः तुथ-तुवीथ। तौमि-तवीमि तुयात्-तुवीयात्, तौतु-तवीतु, तुतात् तुवीतात् तुताम्-तुवीताम् तुवन्तु । तुहि-तुवीहि। अतौत्-अतवीत्, तुताव, तोता, तोष्यति, अतोष्यत्, अतौषीत्। रु शब्दे । रौति-रवीति रुतः-रुवीतः रुवन्ति। रौषि-रवीषि। रुयात्-रुवीयात्, रौतु-रवीतु रुतात्-रुवीतात्। अरौत्-अरवीत् अरुताम् अरुविताम् अरुवन्। अरौः-अरवीः। रुराव रुरुवतुः रुरुवुः। रुरविथ। रूयात्, रोता, रोष्यति, अरोष्यत्, अरौषीत्। टु गतौ। भ्वादिकः। दवति, दुयात्, दवतु, अदवत्, दुदाव, दूयात्, दोता, दोष्यति, अदोष्यत्। अदौषीत् अदौष्टाम् अदौषुः । णु स्तुतौ आदेः ष्णः स्नः। नौति-नवीति नुतः-नुवीतः नुवन्ति। नुनाव, नूयात्, नोता, नोष्यति, अनोष्यत्, अनौषीत्। टुक्षु शब्दे । टुइत्। क्षौति क्षुतः क्षुवन्ति। क्षुयात्, क्षौतु, अक्षौत्। चुक्षाव चुक्षुवतुः चुक्षुवुः। क्षूयात्, क्षविता, क्षविष्यति, अक्षविष्यत्, अक्षावीत्। क्ष्णु तेजने। क्ष्णौति क्ष्णुतः क्ष्णुवन्ति। क्ष्णुयात्, क्ष्णौतु, अक्ष्णौत्, चुक्ष्णाव, क्ष्णूयात्, क्ष्णविता, क्ष्णविष्यति, अक्ष्णविष्यत्, अक्ष्णावीत्। ष्णु प्रस्रवणे। स्नौति, स्नुयात्, स्नौतु, अस्नौत्, सुस्नाव, स्नूयात्, स्नविता, स्नविष्यति, अस्नविष्यत्, अस्नावीत्। इण् गतौ। गुणः। एति इतः।

तुरुनुस्तुभ्यः। तु गतिवृद्धिहिंसासु। रु शब्दे। णुस्तु तौ। ष्टुञ्स्तुतौ। अद्विरुक्तेभ्य एभ्यो हसादीनां चतुर्णाम् मीड् वा भवति। गुणः। नु अव्। तवीति। तुतः। नुधातोः। तुवीतः। तुवन्ति। तुयात्। तुवीयात्। तुयातां। तुवीयाताम्। तुयुः। तुवीयुः। लोट् लकारे। तौतु। तवीतु। तुयात्। तुवीतात्। तुतां। तुवीतां। तुवन्तु। तुहि तुवीहि। तुतात्। तुवीतात्। तुवं। तुवीतं। तुत तुवीत। तवानि तवाव तवाम। लङ्लकारे अतौत्। अतवीत्। अतुवीतां। अतुवन्। अतौः। अ-

तवीः। अतुत्तं। अतुवीतं। अतुत्त अतुवीत। अतवं अतुव अतुवीव। अतुम अतुवीम। लिट् लकारे। द्विश्च। धातोर्नामिनः। अनेन वृद्धिः। तुताव। तुतु अतुस् इति जाते। नुधातोः। नानप्योर्वः। आभ्यामुव् भवति। तुतुवतुः। तुतुवुः। तुतविथ। ये। तूयात्। तोता। लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः अतौषीत्। अतौष्टाम्। अतौषुः अतौषीः। अतौष्टं। अतौष्ट। अतौषम्। अतौष्व। अतौष्म। रु शब्दे। पूर्ववत्तिबादयः। अदादेर्लुक्। अनेन तिबादिचतुर्षु लकारेषु अपो लुग् भवति। अस्य धातोरपि रूपाणि तुधातुवत् ज्ञेयानि। तुरुनुस्तुभ्यः अनेन सूत्रेण हसादीनां प्रत्ययानां वा ईड् भवत्यस्य। ओरौ अनेन अबादौ विषये। पित्तित्सिमपरे नकारस्य न कारः। रौति। रवीति। रुयात्। रुवीयात्। रौतु। रवीतु। अरौत् अरवीत्। लिट्कारे धातोर्नामिनः। अनेन प्रथमपुरुषस्यैकवचने वृद्धिः। रराव। नुधातोः। रुरुवतुः। गुणः। रुरविथ। ये अनेन पूर्वस्य दीर्घः। रूयात्। गुणः। रोता लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अरौषीत् अरौष्टाम्। अरौषुः। दु गतौ। अयं धातुर्भ्वादिकः। तेनाप् कर्त्तरि। अनेनाप्प्रत्ययो भवति। तस्यादादेर्लुक्। अनेन सूत्रेण लुग् न भवति। भ्वादित्वात्। गुणः। दवति। अन्यानि मूले सन्ति तानि सुगमान्येवातो व्याख्यानस्यानावश्यकत्वम्। लिट्लकारे। धातोर्नामिनः अनेन वृद्धिर्णित्प्रत्यये परे। दुदाव। नुधातोः। दुदुवतुः। गुणः। दुदविथ। ये। अनेन दीर्घः। दूयात्। गुणः। दोता। लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अदौषीत्। अदौष्टाम्। अदौषुः। णु स्तुतौ। आदेः ष्णः स्नः अनेन णस्य नः। अप् कर्त्तरि। अदादेर्लुक्। अनेन तस्यापो लुग् भवति। ओरौ। अनेनोकारस्यौकारः। तुरुनुस्तुभ्यः। अनेनास्य ईड् भवति वा तदा गुणः। अनेन गुण एव। अस्यापि धातोरूपाणि तुधातुवत् ज्ञातव्यानि। नौति। नवीति। लिट्लकारे। नुनाव। नुनुवतुः। नुनुवुः। ये। अनेन दीर्घः। नूयात्। गुणः। नोता। लुङ्लकारे। अनिटो नामिवतः। अनौषीत्। टुक्षु शब्दे। टु इत्। अप् कर्त्तरि। अदादेर्लुक्। ओरौ। क्षौति। क्षुतः। लिट्लकारे। द्विश्च। पूर्वस्य। कुहोश्चुः। धातोर्नामिनः। चुक्षाव। नु धातोः। चक्षुवतुः। ये अनेन पूर्वस्य दीर्घः। क्षूयात्। सिसता० गुणः। ओ अव्। क्षविता। अन्यानि मूले सन्ति। लुङ्लकारे। णित्ये। अनेन सेणित्वात् वृद्धिः। अक्षावीत्। क्ष्णु तेजने। अयमपि क्षुधातुवत् ज्ञातव्यः। क्ष्णौति। लिट्लकारे। द्विश्च। पूर्वस्य कुहोः। धातोर्नामिनः। अनेन वृद्धिः। चुक्ष्णाव नुधातोः। चुक्ष्णुवतुः। गुणः। चुक्ष्णविथ। ये। क्ष्णूयात्। गुणः। सिसता०। क्ष्णवियात्। लुङ्लकारे। धातोर्नामिनः। अनेन वृद्धिः। अक्ष्णावीत्। अक्ष्णाविष्टाम्। अक्ष्णाविषुः। ष्णु प्रस्रवणे। आदे ष्णः स्नः। अनेन षस्य सः। पूर्ववत्। तिबादयः। अदादेर्लुक्। ओरौ। अनेन उकारस्योकारः। स्नौति। लिट्लकारे सुस्नाव

नुधातोः। सुस्तुवतुः। गुणः। सुस्नविथ। ये स्नूयात्। गुणः। सिसता०। ओअव्। स्नविता। लुङ्लकारे। अस्नावीत्। इण् गतौ। णकार इण् इति सूत्रस्य विशेषणार्थः। पूर्ववत् तिबादयः। अदादेर्लुक्। गुणः। एति। इतः। इ अन्ति इति स्थिते सूत्रम्।

इणः क्डिति स्वरे यो वक्तव्यः। यन्ति। एषि इथः इथ। एमि इवः इमः। इयात् इयाताम् इयुः। एतु-इतात् इताम् यन्तु। इहि-इतात् इतम् इत। अयानि अयाव अयाम। अडागमद्वयम्। ऐत् ऐताम् आयन्। ऐः ऐतम् ऐत। आयम् ऐव ऐम। द्वित्वम्। वृद्धिः पूर्वस्य इयादेशः। इयाय।

इणः। इणो धातोः किति स्वरे परे सति यकारो वक्तव्यः। अनेनेकारस्य यकारः। स्वरहीनं। यन्ति। एषि। अस्मिन् रूपे। क्डिलात्। अनेन षत्वं भवति। इथः। इथ। एमि। इवः। इमः। इयात्। ऐत्। इहि। गुणः। अयानि। लङ्लकारे गुणः। अडागमद्वयं भवति। एऐऐ। पुनः।। एऐऐ। ऐत्। अइए। एऐऐ। ऐतां। अडागमद्वयं। सवर्णे। इए। आयन्। ऐः। ऐतं। ऐत। आयम्। इत्यत्र गुणो भवति। इ णप् इति स्थिते। द्विश्च। धातोर्नामिनः। असवर्णे अनेन पूर्वस्य इय्। स्वरहीनं इयाय। इ इ अतुस् इति जाते। नुधातोः। इय् अतुस्। इति जाते। सूत्रम्।

इणः किति णादौ पूर्वस्य दीर्घो वक्तव्यः। ईयतुः ईयुः। इययिथ-इयेथ ईयथुः ईय। इयाय-इयय ईयिव ईयिम। ये। ईयात् ईयास्ताम् ईयासुः। एता एष्यति ऐष्यत्। दादेः पे।

इणः। इणो धातोः किति णादौ परे पूर्वस्य दीर्घो वक्तव्यः। अनेन इकारस्य दीर्घः। ईयतुः। ईयुः। गुणः। असवर्णे। ए अय्। क्रादेर्णादेः। इययिथ। अस्वतोऽति। इयेथ। ईयथुः ईय। इयाय। णबुत्तमः। गुणः। इयय। ईयिव। ईयिम। ये अनेन पूर्वस्य दीर्घः। ईयात्। गुणः। एता। अन्यानि मूले सन्ति। लुङ्लकारे। अडागमद्वयम्। ऐष्यत्। इ सि दिप् इति जाते। दादेः पे। अनेन सेर्लोपो भवति। इ दिप् इति जाते सूत्रम्।

इणिकोः सिल्लोपे गा वक्तव्यः। अगात् अगाताम् अगुः।

इक् स्मरणे। इङिकावध्युपसर्गतो न व्यभिचरतः। अध्येति अधीतः अधियन्ति। अधीयात्, अध्येतु। अध्यैत् अध्यैताम् अध्यायन्। अधीयाय, अधीयात्, अध्येता, अध्येष्यति, अध्यैष्यत्, अध्यगात्। इणूवत्। विद् ज्ञाने। उपधाया लघोः। वेत्ति वित्तः विदन्ति। वेत्सि वित्थः वित्थ। वेद्मि विद्वः विद्मः।

इणिकोः। इणिकोर्धात्वोः सिलोपे कृते सति गा इत्यादेशो वक्तव्यः। गुरुत्वात्सर्वस्यादेशः। दिवादावट्। अगात्। अगाताम्। अगुः। अस्मिन्रूपे। आतोऽनपि। अनेनाकारस्य लोपो भवति। अगाः। अगातम्। अगात। अगाम्। अगाव। अगाम। इक् स्मरणे। ककार इणिकोरिति सूत्रस्य विशेषणार्थः। अधिपूर्वोऽयं नित्यम्। इङिकौ धातू। अध्युपसर्गतो न व्यभिचरतः। गुणः। इयं स्वरे। अध्येति। सवर्णे दीर्घः। अधीतः। अधियन्ति। इणूवदिग् इति वक्तव्यम्। अनेन इणो यानि कार्याणि भवन्ति तानि कार्याणि इकोऽपि भवन्ति। लिट्लकारे। अधीयाय। अधीयतुः। अध्येता। गुणः। अध्येष्यति। लुङ्लकारे। दादेः पे। इणिकोः। अध्यगात्। अध्यगाताम्। आतोऽनपि। अध्यगुः। विद् ज्ञाने। पूर्ववत् तिवादयः। अदादेर्लुक्। उपधाया लघोः। अनेन गुणः। 'खसे चपा झसानाम्' अनेन दस्य तः। वेत्ति। 'खसे चपाः' इदं सूत्रं खसे परे सर्वत्र प्राप्नोति। वित्तः विदन्ति। अन्यानि मूले सन्ति। सूत्रम्।

विदो नवानां त्यादीनां णबादिर्वा। विद उत्तरेषां तिवादीनां नवानां णबादिर्नवको वा भवति। वेद विदतुः विदुः। वेत्थ विदथुः विद। वेद विद्व विद्म। विद्यात्, वेत्तु-वित्तात् वित्ताम् विदन्तु। झसाद्धिर्हेः। विद्धि-वित्तात् वित्तम् वित्त। वेदानि वेदाव वेदाम। दिस्योर्हसात्। अवेत्-अवेद् अवित्ताम्। अन उस् वा। अविदन्-अविदुः।

विदो नवानां त्यादीनां णबादिर्वा। विदः (पं० ए०)। नवानां (ष. व.) त्यादीनां (ष. व.) णबादि (प्र. ए.) वा अव्ययम्। पञ्चपदं सूत्रं वर्त्तते। विदज्ञाने इत्यस्मात्परेषां तिबादीनां नवानां वचनानां णबादिन-

वकं वा भवति। अनेन तिबादीनां णबादयो भवन्ति। णप् अतुम् इत्यादीनि नव वचनानि वा भवन्ति तिबाद्यर्थे एव। तदा विद् णप् इति जाते द्वित्वे। अनेन द्वित्वे प्राप्ते यदादेश इति न्यायेन द्वित्वं न भवति। किंतु। अप् कर्त्तरि। अनेनाप् प्रत्ययो भवति। तस्यादादेर्लुक्। अनेन लुग् भवति। उपधाया लघोः। अनेन गुणः। वेद। विदतुः। विदुः। उपधायाः। खसे०। वेत्थ। अन्यान्यस्य लकारस्य मूले सन्ति। विद्यात्। विद्याताम्। लोट्लकारे। वेत्तु। मध्यमपुरुषस्यैकवचने। झसाद्धिर्हेः। अनेन हस्य धः। स्वरहीनं०। विद्धि। अन्यानि सन्ति। विद् दिप् इति स्थिते। उपधाया०। दिस्योर्हसात्। अनेन दिप्सिपोर्लोपः। दिबादावट्। वावसाने। अवेत्। अवेद्। खसे०। अवित्तां। आदन्त विद्विषाम् अनेन वा अन उस् भवति। अविदन्। अविदुः। अविद् सिप् इति जाते। दिस्योः। अनेन सिपो लोपः। 'अविद्' इति जाते उपधायाः। सूत्रम्।

**दः सः। दकारस्य वा सकारो भवति सिविषये। अवेः-अवेत् अवित्तम् अवित्त। अवेदम् अविद्व अविद्म। विवेद विविदतुः विविदुः। विवेदिथ। पक्षे।**

दः सः। दः (ष. ए.) सः (प्र. ए.) दकारस्य सिविषये वा सकारो भवति। अनेन दस्य सः। स्रोर्विसर्गः। अवेः। सस्याभावे। अवेत्। अन्यानि सन्ति। लिट्लकारे। उपधायाः। विवेद। विविदतुः। विवेदिथ। 'विद्दरिद्रा०' अनेनास्य वा आम्प्रत्ययः। आमि परे सति। 'उपधायाः' अनेन गुणे प्राप्ते सूत्रम्।

**आमि विदेर्न गुणः। विदांचकार विदामास विदांबभूव। विद्यात् विद्यास्ताम्। वेदिता, वेदिष्यति, अवेदिष्यत्, अवेदीत् अवेदिष्टाम् अवेदिषुः। अस् भुवि। अस्ति।**

आमि०। आमि परे सति विदेर्धातोर्गुणो न भवति। अनेन गुणनिषेधः। साधनं तु पूर्ववत्। विदांचकार। विदामास। विदांबभूव। विद्यात्। विद्यास्ताम्। वेदिता। अन्यानि मूले सन्ति। लुङ्लकारे। उपधाया लघोः। अनेन गुणः। अन्यत्तु पूर्ववत्। अवेदीत्। अवेदिष्टाम्। अवेदिषुः। अस् भुवि। भू सत्तायाम्। अर्थादयं धातुः सत्तायां वर्तते इत्यर्थः। पूर्ववत् तिबादयः। अदादेर्लुक्। अनेन लुक्। अस्ति। अस् तस् इति जाते। सूत्रम्।

**नमसोऽस्य। नम इत्येतस्य विकरणस्यास् भुवीति धातोश्चा-**

ष्टुत्वं । मार्ष्टा । मार्जिष्यति । 'मृज् स्यप् तिप्' इति स्थिते मृजेः । छशष० । षढोः कः से । किलात्० कषसंयोगे क्षः । मार्क्ष्यति । अमार्जिष्यत् । अमार्क्ष्यत् । अमार्जीत् । अमार्जिष्टाम् । अमार्जिषुः । इडभावे । अमार्क्षीत् । झसात्० । छशष० । ष्टुत्वं । अमार्ष्टा । अमार्क्षुः । अमार्क्षीः । अमार्ष्टं अमार्ष्ट । अमार्क्षं । अमार्क्ष्व । अमार्क्ष्म । समाप्तोऽयं धातुः । वच् परिभाषणे । पूर्ववत् । तिबादयः । अदादेर्लुक् । चोः कुः । अनेन चकारस्य ककारो भवति । वक्ति । वक्तः सूत्रम् ।

नहि वचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तीत्युच्चारणीयम् । वदन्ति । वक्षि वक्थः वक्थ । वच्मि वच्वः वच्मः । वच्यात्, वक्तु वक्तात् वक्ताम् । वग्धि-वक्तात् वक्तम् वक्त । अवक् अवग् अवक्ताम् अवचन् । अवक्-अवग् अवक्तम् अवक्त । अवचम् अवच्व अवच्म । णबादौ पूर्वस्य । उवाच । यजां यवराणां ग्रृतः संप्रसारणम् । ऊचतुः ऊचुः । उवचिथ उवक्थ । उच्यात्, वक्ता, वक्ष्यति, अवक्ष्यत् ।

न हि वचिरन्तिपरः प्रयोक्तव्यः किं तु वदन्तीत्युच्चारणीयम् । वदन्ति । 'वच् सिप्' इति स्थिते । चोः कुः । किलात्० । कषसं० । वक्षि । चोः कुः । वक्थः । वक्थ । अन्यानि मूले सन्ति । वच्यात् । वच्यातां । वच्युः । वक्तु । वक्तात् । नहि वचि० । वदन्तु । 'वच् हि' इति स्थिते झसाद्धिर्धिः । चोः कुः । झबे जबाः । वग्धि । लङ्लकारे । चोः कुः । दिस्योर्हसात् । अनेन सेर्लोपो भवति । वावसाने । अवक् । अवग् । अन्यानि मूले सन्ति । लिट्लकारे । द्वित्वं पूर्वस्य णबादौ पूर्वस्य । अनेन । पूर्वस्य संप्रसारणम् । अत उपधायाः । उवाच । 'यजां० । अनेन द्वितीयं संप्रसारणम् । सवर्णे० । ऊचतुः । ऊचुः । उवचिथ । अत्वतः । चोः कुः । उवक्थ । चोः कुः । वक्ता । चोः कुः । किलात्० । कषसंयोगे क्षः । वक्ष्यति अवक्ष्यत् । 'वच् सि दिप्' इति स्थिते । 'अस्यतिवक्ति' अनेन सेर्ङो भवति । 'वच् दिप्' इति जाते सूत्रम् ।

अस्यतिवक्तीति ङे वचेरुमागमो वक्तव्यः । उओ । अवोचत् अवोचताम् अवोचन् । रुदिर् अश्रुविमोचने ।

ङे । ङप्रत्यये परे सति वचेर्धातोः उमागमो भवति । मिदन्त्यात्० । उओ । दिबादावट् । अवोचत् । अवोचताम् । अवोचन् । रुदिर् अश्रुविमोचने । इर् अनु-

बन्धः। 'इरितो वा' इत्यस्य सूत्रस्य विशेषणार्थः। तिबादयः। अदादेर्लुक्। इत्येतत्सर्वं पूर्ववत्। उपधाया लघोः। अनेन गुणः। सूत्रम्।

रुदादेश्चतुर्णां ह्वसादेः। रुदादेः परेषां तिबादिचतुर्णां मध्ये ह्कारवसादेः प्रत्ययस्येट् भवति।

रोदितिः स्वपितिश्चैव श्वसितिःप्राणितिस्तथा।
जक्षितिश्चैव विज्ञेयो रुदादिपञ्चको गणः॥

रोदिति रुदितः रुदन्ति। रोदिषि रुदिथः रुदिथ। रोदिमि रुदिवः रुदिमः। रुद्यात्, रोदितु-रुदितात् रुदिताम् रुदन्तु। रुदिहि-रुदितात् रुदितम् रुदित। रोदानि रोदाव रोदाम।

रुदादेश्चतुर्णां ह्वसादेः। रुदादेः (पं ए.) चतुर्णां (ष. ब.) ह् च वस् च ह्वसौ तौ आदी यस्य स ह्वसादिः तस्य ह्वसादेः (ष० ए०) त्रिपदं सूत्रम्। रुदादेः परस्य चतुर्णां तिबादीनां संबन्धिनो हकारादेर्वस्प्रत्याहारादेश्च प्रत्ययस्य इडागमो भवति। टित्वादादौ। अनेन स्वरादिरहिते प्रत्यये परे इडागमो भवति। रुदादयस्तु मूले श्लोकेनोक्ताः। रोदिति। रुदितः। रुदन्ति। अन्यानि मूले सन्ति। रुद्यात्। रुद्यातां। रोदितु। रुदिहि। लङ्लकारे। सूत्रम्।

रुदादेर्दिस्योरीडटौ च वक्तव्यौ। अरोदीत्, अरोदत्, रुरोद, रुरुदतु., रुद्यात्, रोदिता, रोदिष्यति, अरोदिष्यत्, अरोदीत्। इरितो वा। अरुदत्। ञिष्वप् शये। ञिइत्। स्वपिति स्वप्यात् स्वपितु-स्वपितात्। अस्वपीत् अस्वपत् संप्रसारणम्। सुष्वाप सुषुपतुः सुषुपुः। सुष्वपिथ-सुष्वप्थ। सुप्यात्, स्वप्ता, स्वप्स्यति, अस्वप्स्यत्। अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सुः। श्वस् प्राणने। श्वसिति, श्वस्यात् श्वसितु, अश्वसीत्। अश्वसत् अश्वसताम् अश्वसन्। शश्वास शश्वसतुः शश्वसुः। श्वस्यात्, श्वसिता, श्वसिष्यति, अश्वसिष्यत्। ह्यन्तक्षणेति वृद्ध्यभावः। अश्वसीत्। अन प्राणने।

रुदादेः । रुदादेर्धातोः परयोर्दिप्सिपोरीडटौ च वक्तव्यौ । इडपवादोऽयम् । अरोदीत् । अरोदत् । उपधायाः । रुरोद । रुरुदतुः रुरोदिथ । रुद्यात् । रुद्यास्तां । रुद्यासुः । रोदिता । अन्यानि मूले सन्ति । अरोदीत् । इरितो वा । अनेनास्य वाङ्प्रत्ययो भवति । अरुदत् । अरुदताम् । अरुदन् । अत्र ङित्त्वात् गुणाभावः । ञिष्वप् शयने । पूर्ववत् सर्वं भवति । ञि इत् । आदेः ष्णः स्नः । अनेन सत्वम् । 'रुदादेश्चतुर्णाम्' अनेनास्यापि इट् । स्वपिति । लङ्लकारे । रुदादेर्दिस्योः । अस्वपीत् । अस्वपत् । लिट्लकारे द्विश्च । णबादौ पूर्वस्य । अनेन संप्रसारणं । क्ङिलात्० । अत उपधायाः । सुष्वाप । यजा० । अनेन द्वितीयं संप्रसारणम् । सुषुपतुः । अत्वतः । सुष्वपिथ । सुष्वप्थ । संप्रसारणं । सुप्यात् । सुप्यास्ताम् । स्वप्ता । लुङ्लकारे सावनिटः अनेन नित्यं वृद्धिः । अस्वाप्सीत् । झसात् । अनेन सलोपः । अस्वाप्ताम् । अस्वाप्सुः । श्वस् प्राणने । अयमपि । पूर्ववत् । श्वसिति । लङ्लकारे दिप्सिपोरीडटौ भवतः । अश्वसीत् अश्वसत् । लिट्लकारे द्विश्च । पूर्वस्य । अत उपधायाः । अनेन वृद्धिः । शश्वास । शश्वसतुः । शश्वसिथ । अत्वतः शश्वस्थ । श्वस्यात् । श्वसिता । अन्येषां रूपाणि मूले सन्ति । लुङ्लकारे 'ह्यन्तक्षण० ।' अनेन वृद्ध्यभावः । अश्वसीत् । अश्वसिष्टाम् । अश्वसिषुः । अन प्राणने । पूर्ववत्सर्वम् । अनिति । यदायं धातुः प्रपूर्वस्तदा सूत्रम् ।

**अनिति । प्रपूर्वः । उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम् । प्राणिति । अन्यात्, अनितु, आनीत्, आनत् । आन आनतुः आनुः । अन्यात्, अनिष्यति, आनिष्यत्, आनीत् आनिष्टाम् आनिषुः । जक्ष भक्षहसनयोः । जक्षिति जक्षितः ।**

अनिति । उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम् । अनेन नकारस्यास्य णकारो भवति । सवर्णे० । प्राणिति । लङ्लकारे । रुदादेः । स्वरादेः । आनीत् । आनत् । लिट्लकारे । द्विश्च । सवर्णे० । आन । आनतुः । आनुः । अन्यात् । अन्यास्तां । अन्यासुः । अनिता । अन्यानि मूले सन्ति । लुङ्लकारे स्वरादेः परः । अनेन द्वितीयोऽडागमो भवति । आनीत् । आनिष्टाम् । आनिषुः । जक्ष भक्षहसनयोः । पूर्ववत् सर्वं भवति । जक्षिति । जक्षितः । 'जक्ष् अन्ति' इति स्थिते सूत्रम् ।

**जक्षादेरन्तोऽदन उस् । जक्षजागृदरिद्राशास्चकासृभ्यः परस्य अन्त अत् अन उस् भवति । जक्षति, जक्षिषि, ज-**

क्ष्यात्, जक्षितु, अजक्षीत्, अजक्षत्, जजक्ष, जक्ष्यात्, जक्षिता, जक्षिष्यति, अजक्षिष्यत्, अजक्षीत्। जागृ निद्राक्षये। जागर्ति जागृतः जाग्रति। जागर्षि। जागृयात्, जागर्तु-जागृतात् जागृताम् जाग्रतु। जागृहि-जागृतात् जागृतम् जागृत। जागराणि जागराव जागराम। गुणः। दिस्योर्हसात्। स्रोर्विसर्गः। अजागः अजागृताम्।

जक्षादेरन्तोदन उस्। जक्षादेः। ( पं. ए. ) अन्तः। ( ष. ए. ) अत् ( प्र. ए. ) अनः ( प. ए. ) उस् ( प्र. ए. ) पंचपदं सूत्रम्। जक्षजागृदरिद्राशास्चकास्भ्यः परस्य अन्तः अत् भवति। अन उस् भवति। जक्षादयः केनचिदाचार्येण गणिताः श्लोकेन। जक्षि जागृ दरिद्राति चकास्तिः शास्तिरेव च॥ दीधीङ् वेवीङ् च विज्ञेयो जक्षादिः सप्तको गणः॥ अनेन अन्ति इत्यस्य अतिः। जक्षति। जक्ष्यात्। जक्षितु। जक्षितात्। जक्षिताम्। जक्षादेः। जक्षतु। जक्षिहि। रुदादेर्दिस्योः। अजक्षीत्। अजक्षत्। अजक्षितां। अजक्षुः। लिट्लकारे द्विश्च। पूर्वस्य हसादिः शेषः। जजक्ष जजक्षतुः। जजक्षुः। जजक्षिथ। जक्ष्यात्। जक्ष्यास्तां, जक्षिता। लुङ्लकारे। अजक्षीत्। अजक्षिष्टाम्। अजक्षिषुः। जागृ निद्राक्षये। पूर्ववत् तिबादयः। अदादेर्लुक्। गुणः। अनेन गुणो भवति। जागर्ति। जागृतः। ऋरं। जक्षादेः। जाग्रति। जागर्षि। अत्र 'किलात्०' अनेन षत्वं। जागृथः जागृथ। जागर्मि। जागृवः। जागृमः। जागृयात्। जागृयातां। जागृयुः। जागर्तु। अन्यानि मूले सन्ति। 'जागृ' दिप् इति स्थिते गुणः। दिस्योर्हसात्। अनेन दिपो लोपो भवति। स्रोर्विसर्गः। दिबादावट्। अजागः। अजागृताम्। 'जागृ अन्' इति स्थिते जक्षादेः। अनेन अन उस्। सूत्रम्।

उसिजागर्तेर्धातोर्गुणो वक्तव्यः। अजागरुः। अजागः अजागृतम् अजागृत। अजागरम् अजागृव अजागृम। जजागार।

उसि। उसि परे सति जागर्तेर्धातोर्गुणो वक्तव्यः। अनेन गुणः। अजागरुः। अजागः। अजागृतम्। अजागृत। अन्यानि सन्ति मूले। लिट्लकारे। द्विश्च। सस्वरादिः। ह्रस्वः। धातोर्नामिनः अनेन वृद्धिः। जजागार। सूत्रम्।

जागर्तेः किति गुणो वक्तव्यः। जजागरतुः जजागरुः। जजागरिथ जजागरथुः जजागर। जजागार-जजागर जजा-

गरिव जजागरिम । विद् इति पक्षे आम् । जागरांचकार, जागरामास, जागरांबभूव, जागर्यात्, जागरिता, जागरिष्यति, अजागरिष्यत् । ह्यन्तक्षणेति न वृद्धिः । अजागरीत् । दरिद्रा दुर्गतौ । दरिद्राति ।

जागर्तेः । जागर्तेर्धातोः क्किति प्रत्यये परे गुणो वक्तव्यः । अनेन गुणः । जजागरतुः । अन्यानि मूले सन्ति । ' विद् दरिद्रा ' अनेन सूत्रेणास्य वा आम् प्रत्ययो भवति । गुणः । जागरांचकार । अन्ये द्वे मूले स्तः । ' जागर्तेः ' अनेन गुणः । जागर्यात् । जागर्यास्तां । जागर्यासुः । गुणः । जागरिता । अन्यानि मूले सन्ति । लुङ्लकारे ' ह्यन्तक्षण ' अनेनास्य वृद्धेरभावः । किंतु गुणः । अजागरीत् अजागरिष्टाम् । अजागरिषुः । दरिद्रा दुर्गतौ । पूर्ववत् तिबादयः । अदादेर्लुक् । दरिद्राति । दरिद्रा तस् इति जाते सूत्रम् ।

दरिद्रातेरिदालोपश्च ङिति । दरिद्रातेराकारस्य लोपो भवति ङिति स्वरे परे इकारश्च ङिति हसे परे । दरिद्रितः दरिद्रति । दरिद्रासि दरिद्रिथः दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः । दरिद्रियात् । दरिद्रातु-दरिद्रितात् दरिद्रिताम् दरिद्रतु । दरिद्राहि-दरिद्रितात् दरिद्रितम् दरिद्रित । दरिद्राणि दरिद्राव दरिद्राम । अदरिद्रात् अदरिद्रिताम् अदरिद्रुः । अदरिद्राः अदरिद्रितम् अदरिद्रित । अदरिद्राम् अदरिद्रिव अदरिद्रिम ।

दरिद्रातेरिदालोपश्च ङिति । दरिद्रातेः ( प. ए. ) इत् ( प्र. ए. ) आलोपः ( प्र. ए. ) । च अव्ययम् । ङिति ( स. ए. ) पंचपदं सूत्रम् । दरिद्रातेर्धातोराकारस्य ङिति स्वरे परे लोपो भवति । च ङिति हसे परे आकारस्य लोपो भवति । अनेनात्र आकारस्य इकारः । दरिद्रितः । अत्र ' दरिद्रातेः ' अनेन आकारस्य लोपः । जक्षादेः । दरिद्रति । अन्यानि मूले सन्ति । अनेनैव प्रकारेण साध्यानि । दरिद्रियात् । दरिद्रातु । अदरिद्रात् । लिट्लकारे द्विश्च । संस्वरादिः । आतो णप डौ । ददरिद्रौ । ' ददरिद्रा अतुस् ' इति जाते सूत्रम् ।

णप्‌वुण्सयुटो हित्वा अन्यस्मादरिद्रातेरनप्याल्लोपो लुङि वा। ददरिद्रौ ददरिद्रतुः ददरिद्रुः। ददरिद्रिथ ददरिद्रथुः। पक्षे। दरिद्रांचकार, दरिद्रात्, दरिद्रिता, दरिद्रिष्यति, अदरिद्रिष्यत्, अदरिद्रीत्, अदरिद्रिष्टाम् अदरिद्रिषुः। पक्षे। अदरिद्रासीत् अदरिद्रासिष्टाम् अदरिद्रासिषुः। शास् अनुशिष्टौ। शास्ति।

णप् वुण् सयुटः। णप् वुण् सयुटः हित्वा अन्यस्मात् दरिद्रातेर्धातोरनपि आकारस्य लोपो भवति लुङ्लकारे वा आकारस्य लोपो भवति। अनेनाकारस्य लोपः। ददरिद्रतुः। ददरिद्रिथ। 'विद् दरिद्रा' अनेन सूत्रेणास्य धातोर्वा आम्प्रत्ययो भवति। णप्। अनेनाकारस्य लोपः। अन्यत् साधनं तु पूर्ववत् ज्ञेयम्। दरिद्रांचकार। दरिद्रामास। दरिद्रांबभूव। णप् वुण् अनेनाकारस्य लोपः। दरिद्र्यात्। दरिद्र्यास्तां। दरिद्र्यासुः। अयं धातुः। सेट्। अतः 'सिसता' अनेनेड् भवति। 'णप् वुण्' अनेनाकारस्य लोपः। दरिद्रिता। दरिद्रिष्यति। अदरिद्रिष्यत्। लुङ्लकारे। अदरिद्रीत्। अदरिद्रिष्टाम्। अदरिद्रिषुः। 'लुङि वा' इत्युक्तत्वात्। वा आकारलोपः। तत्पक्षे। 'आदन्तानां' अनेनेट्सकौ भवतः। अदरिद्रासीत्।। अदरिद्रासिष्टाम्। अदरिद्रासिषुः। समाप्तोऽयं धातुः। शास् अनुशिष्टौ। पूर्ववत् तिबादयः। अदादेर्लुक्। अनेनापो लुग् भवति। शास्ति। शास् तस् इति स्थिते सूत्रम्।

शासेरिः। शास्तेराकारस्येकारादेशो भवति किति ङिति हसे ङे च परे। घसादेः षः। शिष्टः शासति। शास्सि शिष्ठः शिष्ठ। शास्मि शिष्वः शिष्मः। शिष्यात्। शास्तु शिष्टात् शिष्टाम् शासतु। जह्येधिशाधि०। शाधि-शिष्टात् शिष्टम् शिष्ट। शासानि शासाव शासाम।

शासेरिः। शासेः (ष. ए.) इः। (प्र. ए.) शास्तेर्धातोराकारस्य इकारो भवति किति ङिति हसे ङे च परे। अनेन आकारस्य इकारः। घसादेः षः। अनेन सूत्रेण सस्य षः। शिष्टः। शासति अस्मिन् रूपे 'जक्षादेः' अनेन अन्तोऽत् अन उस्। अन्यानि मूले सन्ति। लोट्लकारस्य मध्यमपुरुषैकवचने। 'जह्येधिशा-

धि ' अनेन हिसहितस्य शाधिनिपातो भवति । शाधि । अस्यान्यानि सन्ति मू० । लङ्लकारे ' शास् दिप् ' इति जाते । सूत्रम् ।

**दिपि सस्य तः सिपि वा ।** दिपि परे सस्य तकारो भवति सिपि तु वा भवति । अशात् अशिष्टाम् अशासुः । अशात्-अशाः अशिष्टम् अशिष्ट । अशासम् अशिष्व अशिष्म । शशास शशासतुः शशासुः । शिष्यात्, शासिता, शासिष्यति, अशासिष्यत् । लिट्पुपादेर्ङः । शासेरिः । अशिषत् । चकासृ दीप्तौ । ऋइत् । चकास्ति चकास्तः चकासति । चकास्यात् । चकास्तु-चकास्तात् चकास्ताम् चकासतु । झसाद्धिर्हेः ।

दिपि सस्य तः सिपि वा । दिपि ( स. ए. ) सस्य ( ष. ए. ) तः ( प्र. ए. ) सिपि । ( स. ए. ) वा ( अव्ययम् )। सकारान्तस्य धातोः सकारस्य दिपि परे तकारो भवति सिपि तु विकल्पेन भवति सस्य तः । अनेन सकारस्य तकारः । दिस्योर्हसात् । अनेन दिपो लोपः । दिवादावट् । अशात् । सिपि परे द्वे रूपे भवतः । वाग्रहणात् । अशात् । अशाः । अन्यानि सन्ति । लिट्लकारे द्विश्च । पूर्वस्य । ह्रस्वः । शशास । शशासतुः । शशासिथ । शासिता । शासिष्यति । लुङ्लकारे लिट्पुपादेर्ङः । अनेन ङप्रत्ययो भवति । शासेरिः । अनेनाकारस्येकारो भवति । घसादेः षः । अनेन सस्य षः । दिवादावट् । अशिषत् । अशिषताम् । अशिषुः । चकासृ दीप्तौ । ऋकार इत् । प्रत्ययलुकादि सर्वं पूर्ववत् । चकास्ति । प्रथमपुरुषस्य बहुवचने जक्षादेः अनेन सूत्रेण अन्तः अत् अन उस् भवति । चकासति । चकास्यात् । चकास्तु । अस्य लकारस्य मध्यमपुरुषस्यैकवचने झसाद्धिर्हेः । अनेन हेर्धिः । ' चकास् धि ' इति जाते सूत्रम् ।

**धौ सलोपो वाच्यः ।** चकाधि । चकास्तात् चकास्तम् चकास्त । अचकात् अचकास्ताम् अचकासुः । अचकात् अचकाः । कासादिप्रत्ययादाम् । चकासांचकार, चकास्यात्, चकासिता, चकासिष्यति, अचकासिष्यत् । अचकासीत् अचकासिष्टाम् अचकासिषुः । इत्यदादिषु परस्मैपदिप्रक्रिया ॥

धौ० । धिप्रत्यये परे सति सकारस्य लोपो भवति ।' अनेन सकारस्य लोपः । चकाधि । लङ्लकारे । 'चकास् दिप्' इति स्थिते दिपि 'सस्य तः' अनेन सस्य तः । दिस्योर्हसात् । दिबादावट् । अचकात् । अस्य प्रथमपुरुषस्य बहुवचने जक्षादेः । अनेन अन उस् । अचकासुः । अन्यानि मूले सन्ति । कासादिप्रत्ययादाम् । अनेनास्य धातोराम्प्रत्ययो भवति । चकासांचकार । चकासामास । चकासांबभूव । चकास्यात् । चकास्यास्तां । चकास्यासुः । 'सिसता' अनेनेट् । चकासिता । अन्यानि मूले सन्ति । लुङ्लकारे । अचकासीत् ॥ इत्यदादिगणे परस्मैपदिप्रक्रिया कथिता ॥

अथात्मनेपदिप्रक्रिया । चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । स्कोराद्योश्च । ष्टुत्वम् । चष्टे चक्षाते । आतोऽन्तोदनतः । चक्षते । षढोः कः से । चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे । चक्षीत, चष्टाम्, अचष्ट अचक्षाताम् अचक्षत ।

अथात्मनेपदिप्रक्रिया कथ्यते । चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । तथादयः प्रत्यया भवन्ति । अप् कर्त्तरि । अदादेर्लुक् । अनेनापो लुग्भवति तदाचक्षते इति जाते । स्कोराद्योश्च । अनेन ककारस्य लोपः । ष्टुभिः ष्टुः । चष्टे । चक्षाते । आतोन्तोदनतः । अनेन अन्तः अत् । चक्षते । चक्ष् से इति जाते स्कोराद्योश्च अनेन कस्य लोपः । षढोः कः से । अनेन षस्य कः । किलात् । कषसंयोगे क्षः । चक्षे । चक्ष् ध्वे इति जाते स्कोराद्योश्च । षोडः । चड्ढ्वे । अन्यानि सुगमानि । चक्षीत । चक्षीयाताम् । चक्षीरन् । चष्टां । चक्षातां । चक्षतां । स्कोराद्योश्च । ष्टुत्वं । चष्टाः । अन्यानि तु सुगमान्येव तथापि लिखामि । चक्षाथाम् । चड्ढ्वं । चक्षै । चक्षावहै । चक्षामहै । अचष्ट । अचक्षाताम् । अचक्षत । अचष्ठाः । अचक्षाथाम् । अचड्ढ्वं । अचक्षि । अचक्ष्वहि । अचक्ष्महि । 'चक्ष् णप्' इति स्थिते सूत्रम् ।

चक्षिङोऽनपि ख्याञ् क्शाञौ णादौ वा वक्तव्यौ । चख्यौ चख्यतुः चख्युः । चक्शौ चक्शतुः चक्शुः । चचक्षे, ख्यायात्, ख्येयात्, क्शायात्, क्शेयात्, ख्यासीष्ट, क्शासीष्ट, ख्याता २, क्शाता २, ख्यास्यति, ख्यास्यते, क्शास्यति,

**क्शास्यते, अख्यास्यत, अख्यास्यत, अक्शास्यत्, अक्शास्यत । पुषादित्वान्ङः । अख्यत् ।**

**चक्षिङः ।** चक्षिङ्धातोरनपि विषये ख्याञ्क्शाञौ वक्तव्यौ णादौ वा वक्तव्यौ । गुरुत्वात्सर्वस्यादेशः । ञकार उभयपदार्थः । ख्या णप् इति जाते द्विश्च । पूर्वस्य हसादिः । कुहोश्चुः । झपानां । आतो णप् डौ । चख्यौ । आतोनपि । चख्यतुः । चख्युः । अत्वतः । चख्यिथ । चख्याथ । चख्ये । चख्याते । चख्यिरे । क्शाञादेशे कृते । द्विश्च । पूर्वस्य । ह्रस्वः । कुहोश्चुः । आतोणब्डौ । चक्शौ । आतोनपि । चक्शतुः । अत्वतः । चक्शिथ । चक्शाथ । चक्शे । चक्शाते । चक्शिरे । एतयोः प्रत्यययोर्विकल्पः । तदा चक्ष् णप् इति स्थिते द्विश्च । पूर्वस्य । चचक्षे । चचक्षाते । चचक्षिरे । संयोगादेरादन्तस्य । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् । अन्यानि मूले सन्ति । सर्वत्र विकल्पेन ख्याञ्क्शाञौ भवतः । अत एकस्मिंल्लकारे द्विधा रूपाणि भवन्ति । लुङ्लकारे । लित्पुषादेङः । दिवादावट् । धातोऽनपि । अख्यत् । अख्यताम् । अख्यन् । आत्मनेपदे सूत्रम् ।

**अस्यतिवक्तिख्यातीनामात्मनेपदे सेङ्वा वाच्यः । अख्यत । अक्शासीत अक्शास्ताम् । ईड स्तुतौ । खसे चपा झसानाम् । ईट्टे ईडाते ईडते ।**

**अस्यति०।** अस्यतिवक्तिख्यातीनां धातूनामात्मनेपदे सेङ्वा वाच्यः । अनेन सेङः । आतोऽनपि । अख्यत । अख्येताम् । अख्यन्त । क्शाञादेशे सति । लुङ्लकारे । आदन्तानां । अनेनेट्सकौ भवतः अक्शासीत् । अक्शासिष्टाम् । अक्शासिषुः । अक्शास्त । अक्शासातां । अक्शासत । अक्शास्थाः । अक्शासाथाम् । अक्शास्ध्वं । ईड् स्तुतौ । पूर्ववत् तिवादयः । अदादेर्लुक् । इड् ते इति जाते । खसे चपा झसानां । अनेन डकारस्य टकारः । ष्टुभिः ष्टुः । ईट्टे । ईडाते । आतोन्तादनतः । ईडते । इड् से इति स्थिते सूत्रम् ।

**ईडीशोः सध्वयोरिड्वक्तव्यः । ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे । ईडीत, ईट्टाम्, ऐट्ट ।**

**ईडीशोः ।** ईडीशोर्धात्वोः सध्वयोः प्रत्यययोरिड् वक्तव्यः। अनेनेट् । क्रिलास० । ईडिषे । ईडाथे । ईड् ध्वे इति जाते पूर्वोक्तेनैव सूत्रेण इट् । ईडिध्वं । अन्यानि मूले सन्ति । लिङ्लकारे । ईडित । ईडीयाताम् । ईडीरन् । इत्यादीनि रूपाणि ज्ञातव्यानि । लोट्लकारे । ईट्टां ईडाताम् ईडतां । ईडीशोः अनेनेट् क्रिलान्० । ईडिष्व ईडाथां ईडिध्वं । लघूपधत्वाभावान्न गुणः । ईडै ईडावहै ईडामहै । लङ्लकारे । ईड्

तन् इति जाते। खसे चपा०। ष्टुभिः ष्टुः। दिबादावट्। स्वरादेः परः। अइए। एऐऐ। ऐट्ट। ऐडाताम्। ऐडत। ऐट्ठाः। ऐडाथां। ऐड्ढ्वमिति जाते। ईडीशोः अनेनेटि प्राप्ते सति सूत्रम्।

**लङो ध्वस्य नेट्। ऐड्ढ्वम्, ईडांचक्रे, ईडिषीष्ट, ईडिता, ईडिष्यते, ऐडिष्यत, ऐडिष्ट। ईश् ऐश्वर्ये। ईष्टे, ईशिषे। ईशीत, ईष्टाम्, ऐष्ट, ईशांचक्रे, ईशिषीष्ट, ईशिता, ईशिष्यते, ऐशिष्यत, ऐशिष्ट। आस् उपवेशने। आस्ते, आसीत, आस्ताम्, आस्त। कासादित्वादाम्। आसांचक्रे, आसिषीष्ट, आसिता, आसिष्यते, आसिष्यत, आसिष्ट। वस् आच्छादने। वस्ते वसीत अवसीष्ट। षूङ् प्राणिगर्भविमोचने। आदेः ष्णः स्नः। सूते, सुवीत, सूताम्।**

लङः। लङ्लकारस्य ध्वप्रत्ययस्य इट् न भवति, अनेन तन्निषेधः। ष्टुभिः ष्टुः। ऐड्ढ्वम्। कासादिप्रत्ययादाम्। अनेन आम् प्रत्ययः। अन्यत् साधनं तु पूर्ववत्। ईडांचक्रे। अन्यानि सुगमानि। ईडिष्ट। अन्यानि मूले सन्ति। अन्येषां। लुङ्लकारे। भूतेसिः सिसता०। किलात्०। ष्टुभिः ष्टुः। द्वौ अमागमौ। अइए। एऐऐ। ऐडिष्ट। ऐडिषातां ऐडिषत। अन्यानि सुगमानि। ईश् ऐश्वर्ये 'छशष' अनेन शकारस्य षकारः। ष्टुभिः ष्टुः। इष्टे ईशाते ईशते॥ 'ईडीशोः' अनेनेट् किलात्०। ईशिषे। ईशाथे ईशिध्वे। ईशे। ईश्वहे ईश्महे। ईशीत ईशीयातां। ईशीरन्। लोट्लकारे। ईष्टां ईशातां ईशतां। 'ईडीशोः' अनेनेट् किलात्। ईशिष्व ईशाथां ईशिध्वं।दीर्घोपधत्वान्न गुणः। ईशै ईशावहै। ईशामहै। लङ्लकारे। अमागमद्वयं भवति। अन्यत् साधनं तु पूर्ववत्। ऐष्ट। ऐशातां। ऐशत। ऐष्ठाः। ऐशाथां। लङो ध्वस्य। अनेन सूत्रेण इड्निषेधः। छशष०। ष्टुभिः ष्टुः। ऐड्ढ्वं। लिङ्लकारे। कासादिप्रत्ययादाम्। ईशांचक्रे। ईशामास। ईशांबभूव। सिसता०। ईशिषीष्ट। अत्र किलादनेन षत्वं। लुङ्लकारे। अमागमद्वयं। ऐशिष्ट। ऐशिषातां। ऐशिषत। सुगमोऽयं धातुः। आस् उपवेशने। अप्कर्तरि। अदादेर्लुक्। आस्ते। आसाते। आसते। अत्र आतोन्तोदनतः। अनेन अन्तः अत्। आसीत। आसीयाताम्। आसीरन्। आस्ताम्। आसाताम्। आतोन्तोऽदनतः। आसतां। आस्त आसातां आसत। कासादिप्रत्ययादाम्। आसांचक्रे। आसामास। आसांबभूव। 'सिसता' अनेनेट्। आसिषीष्ट। अन्येषां सन्ति मूले रूपाणि। तानि सुगमान्येव। अतो व्याख्यानं न कृतम्। लुङ्लकारे द्वौ अटौ। सवर्णे। आसिष्ट। आसिषाताम्। आसिषत। वस्

आच्छादने । अप् कर्त्तरि । अदादेर्लुक् । इत्यादि सर्वं पूर्ववत् । तआदयः प्रत्यया भवन्ति । वस्ते । वसाते । वसते । वसीत । वसीयाताम् । वसीरन् । वस्तां । वसातां । वसतां । आतोन्तोदनतः । अनेन अन्तः अत् । पूर्वरूपम् । वस्तां । वसातां । वसतां । अन्यानि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य हसादिः । लोपः पचां किःये चास्य । अनेन सूत्रेण णत्वपूर्वलोपौ प्राप्तौ । वादित्वान्न भवतो णत्वपूर्वलोपौ । ववसे । ववसाते । ववसिरे । क्रादेर्णादेः । अनेनेट् । क्लिात्० । ववसिषे । अन्यानि सुगमानि । 'सिसता' अनेनेट् । क्लिात्० । वसिषीष्ट । वसिता । वसिष्यति । अवसिष्यत् । लुङ्लकारे । अवसिष्ट । अवसिषातां । अवसिषत । अत्र । आतोन्तोदनतः । अनेन अन्तः अत् भवति । अन्यानि सुगमानि । षूङ् प्राणिगर्भविमोचने । पूर्ववत् सर्वम् । आदेः ष्णः स्नः । अनेन षस्य सः । सूते । नुधातोः । अनेन उव् । सुवाते । आतोन्तोदनतः । सुवते । क्लिात्० । सुषे । सुवाथे । सूध्वे । सुवे । सूवहे । सूमहे । नुधातोः । सुवीत । सुवीयातां । सुवीरन् । सूतां । नुधातोः । सुवातां । आतोन्तो० । सुवतां । क्लिात् । सूष्व । सुवाथां । सूध्वम् । 'सू ऐप्' इति जाते । गुणः । अनेन गुणे प्राप्ते तन्निषेधकृत् सूत्रम् ।

सूतेः पिति गुणाभावो वाच्यः । सुवै सुवावहै सुवामहै । असूत, सुषुवे, स्वरति० । इति वेट् । सविषीष्ट-सोषीष्ट, सविता-सोता, साविष्यते-सोष्यते, असाविष्यत-असोष्यत, असविष्ट-असोष्ट । शीङ् स्वप्ने ।

सूतेः । सूतेर्धातोः पिति प्रत्यये परे गुणस्य अभावो वाच्यः । किं तु नुधातोः । अनेन उव् भवति । सुवै । सुवावहै । सुवामहै । लङ्लकारे । असूत । असुवातां । आतोन्तो० । असुवत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे द्विश्च । सस्वरादिः । क्लिात्० । नुधातोः । सुषुवे । सुषुवाते । सुषुविरे । इत्यादीनि । स्वरति सूयति । अनेनास्य धातोरिड्विकल्पः । सिसता । गुणः । ओ अव् । सविषीष्ट । इडभावे गुणः । सोषीष्ट । अन्येषां लकाराणां द्वेरूपे मूले स्तः । लुङ्लकारे । सिसता० । अनेनेट् । पूर्वं भूते सिः । अनेन सिप्रत्ययः । क्लिात्० । ष्टुत्वम् । दिवादावट् । असविष्ट । असविषातां । असविषत । इडभावे । असोष्ट । असोषाताम् । असोषत । इत्यादीनि रूपाणि ज्ञातव्यानि । शीङ् स्वप्ने । ङकार आत्मनेपदार्थः । सूत्रम् ।

शीङः सर्वत्र गुणो भवत्यपि विषये । शेते शयाते ।

शीङः । शीङो धातोः सर्वत्र अपिविषये गुणो भवति । अनेनास्य धातोः स-

यत्र गुणो भवति। शेते। ए अय्। शयाते। गुणे कृते। 'शे अन्त' इति जाते आतोन्तोदनतः। शे अते। इति जाते सूत्रम्।

शीङोऽतो रुट्। शीङः परस्यादित्येतस्य रुडागमो भवति। शेरते, शयीत। शेताम् शयाताम् शेरताम्। अशेत अशयाताम् अशेरत। शिष्ये शिष्याते। शयिषीष्ट, शयिता, शयिष्यते, अशयिष्यत, अशयिष्ट। इङ् अध्ययने। अधिपूर्वः। अधीते अधीयाते अधीयते। अधीयीत। अधीताम् अधीयाताम् अधीयताम्। अध्यैत। इयादेशे कृते पश्चादडागमद्वयम्। अध्यैयाताम् अध्यैयत।

शीङोऽतोरुट्। शीङः (पं. ए.) अतः (ष. ए.) रुट् (प्र. ए.) शीङ् धातोः परस्य अत् इत्येतस्य रुडागमो भवति। टित्त्वादादौ। टकारष्टित्कार्यार्थः। उकार उच्चारणार्थः। शेरते। शेषे। शयाथे। शेध्वे। इत्यादीनि रूपाणि ज्ञातव्यानि। तानि सुगमान्येव। शयीत। शयीयातां। शयीरन्। शेतां। शयातां। शीङोतोरुट्। अनेनरुट्। शेरतां। अशेत। अशयातां। रुडागमः। अशेरत। अन्यानि सुगमानि। लिट्लकारे द्विश्च सस्वरादिः। ह्रस्वः। नुधातोः। अनेन यकारः। शिश्ये। शिश्याते। शिश्यिरे। अन्यानि सुगमानि। गुणः। ए अय्। शयिषीष्ट। अत्र किलात्०। अनेन सकारस्य षकारो भवति। लुङ्लकारे। अशयिष्ट। अशयिषाताम्। अशयिषत। इत्यादीनि रूपाणि ज्ञातव्यानि। इङ् अध्ययने। अयं धातुर्नित्यमधिपूर्वः। ङकार आत्मनेपदार्थः। सवर्णेदीर्घः सह। अधीते। अधि इ आते इति जाते 'नुधातोः' अनेन इय्। सवर्णे। अधीयाते। अधीयते। अधीषे। किलात्०। अनेन षकारः। अधीयाथे। अधीध्वे। अधीये। अधीवहे। अधीमहे। अधीयीत। अधीयीयातां। अधीयीरन्। लोट्लकारे। अधीतां। अधीयाताम् अधीयताम्। लुङ्लकारे। अधि इ तन् इति जाते। दिबादावट्। स्वरादेः। अनेन द्वितीयोऽडागमः। अइए। एऐऐ। इयंस्वरे। अध्यैत। इयादेशे कृते पश्चादडागमद्वयम्। अध्यैयातां। अध्यैयत। अध्यैथाः। अन्यानि सुगमानि। पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। लिट्लकारे। अधि इ णप् इति स्थिते। सूत्रम्।

इङो णादौ गा वक्तव्यः। अधिजगे, अध्यैषीष्ट, अध्येता, अध्येष्यते, अध्यैष्यत।

ईङः। ईङो धातोर्णादौ परे गा इत्यादेशो वक्तव्यः। गुरुत्वात्सर्वादेशः।

अधि गा णप् इति जाते द्वित्वं। ह्रस्वः। कुहोश्चुः। आतोऽनपि। अनेन आकारस्य लोपो भवति। अधिजगे। अधिजगाते। अधिजगिरे। इत्यादीनि। अध्येषीष्ट। अध्येता। अध्येष्यते। अडागमद्वयम्। अध्यैष्यत। अध्यैष्येताम्। अध्यैष्यन्त। इत्यादीनि। सूत्रम्।

इङो वा गी सौ लङि च तत्परस्य प्रत्ययस्य ङित्त्वं वाच्यम्। ङित्त्वाद्गुणो न। अध्यगीष्यत अध्यगीष्येताम् अध्यगीष्यन्त। अध्यैष्यत। अध्यगीष्ट अध्यगीषाताम् अध्यगीषत। अध्यैष्ट अध्यैषाताम् अध्यैषत। इत्यदादिष्वात्मनेपदिप्रक्रिया॥

इङो०॥ इङ्धातोर्वा गी इत्यादेशो भवति सौ परे च लङि विषये। तस्मात्परस्य प्रत्ययस्य ङित्त्वं वाच्यम्। अनेन गी इत्यादेशः। ङित्त्वाद्गुणाभावो भवति। अध्यगीष्यत। अध्यगीष्येताम् अध्यगीष्यन्त। लुङ्लकारे। 'इङोवा' अनेन गीरादेशः। भूते सिः। क्रिलात्०। ष्टुत्वम्। अध्यगीष्ट। अध्यगीषातां। अध्यगीषत। अन्यानि सुगमानि। गीरादेशाभावे। अडागमद्वयम्। गुणः। एऐऐ। इ यं स्वरे। अध्यैष्ट। अध्यैषातां। अध्यैषत। इत्यादीनि रूपाणि ज्ञातव्यानि। इत्यात्मनेपदिप्रक्रिया समाप्तिं प्राप्ता॥

## ॥ अथोभयपदिप्रक्रिया प्रदर्श्यते ॥

द्विष् अप्रीतौ। अकार उभयपदार्थः। द्वेष्टि, द्विष्टे, द्विष्यात्, द्विषीत, द्वेष्टु, द्विष्टात्, द्विष्टाम्, अद्वेट्-अद्वेड् अद्विष्टाम् अद्विषुः, अद्विषन्, अद्विष्ट, दिद्वेष, दिद्विषे, द्विष्यात्, द्विक्षीष्ट, द्वेष्टा, द्वेक्ष्यति, द्वेक्ष्यते, अद्वेक्ष्यत्, अद्वेक्ष्यत। हशूषान्तात्सक्। अद्विक्षत् अद्विक्षताम्।

अथोभयपदिप्रक्रिया प्रदर्श्यते। द्विष् अप्रीतौ। अकार उभयपदार्थः। तिबादयस्तआदयश्च प्रत्यया भवन्ति। अप् कर्त्तरि। अनेन चतुर्षु लकारेषु अप्प्रत्ययो भवति। अदादेर्लुक्। अनेन तस्य लुग् भवति। 'द्विष् तिप्' इति जाते गुणः। ष्टुभिः ष्टुः। द्वेष्टि। द्विष्टः। द्विषन्ति। 'द्विष् सिप्' इति स्थिते गुणः। षढोः कः से। अनेन षस्य कः। क्रिलात्०। कपसंयोगे०। द्वेक्षि। द्विष्ठः। द्विष्ठ। द्वेष्मि। द्विष्वः। द्विष्मः। द्विष्टे। द्विषाते। द्विषते। द्विष्यात्। द्विष्यातां। द्विष्युः। द्विषीत। द्विषीयातां। द्विषीरन्। द्वेष्टु। द्विष्टात्। द्विष्टां। द्विषन्तु।

'द्विष् हि' इति जाते झसाद्धिर्हेः। षोडः। ष्टुत्वम्। द्विड्ढि। द्विष्टात्। द्वेषाणि। द्वेषाव। द्वेषाम। द्विष्टां। द्विषातां। द्विषताम्। इत्यादीनि। द्विष् दिप् इति जाते। गुणः। षोडः। दिस्योर्हसात्। वावसाने। दिबादावट्। अनेन पूर्वमडागमः। अद्वेट्। अद्वेड्। अद्विष्टां। आदन्तविदद्विषाम्। अनेन वा अन उस् भवति। अद्विषुः। अद्विषन्। अन्यानि सुगमानि। आत्मनेपदे। अद्विष्ट। अद्विषाताम्। अद्विषत। 'द्विष् णप्' इति स्थिते। द्विश्च। पूर्वस्य। उपधाया लघोः। अनेन गुणः। दिद्वेष दिद्विषतुः। दिद्विषुः। दिद्वेषिथ। दिद्विषे। दिद्विषाते। दिद्विषिरे। द्विष्यात्। दिस्योः। अनेन गुणनिषेधः। षढोः कः से। किलात्०। कषसंयोगे०। द्विक्षीष्ट। द्वेष्टा। उपधाया लघोः। अनेन गुणः। द्वेष्टा। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे। हशषान्तात् सक्। अनेन सक्प्रत्ययो भवति॥ किस्वाद्गुणाभावः। षढोः कः से। किलात्०। कषसं०। अद्विक्षत्। अद्विक्षताम्। अद्विक्षन्। आत्मनेपदेऽपि सक्प्रत्ययो भवति। अद्विक्षत।

सस्यात्मनेपदे स्वरे टिलोपो वाच्यः। अद्विक्षाताम् अद्विक्षत। दुह् प्रपूरणे। दादेर्घः। दोग्धि दुग्धः दुहन्ति। धोक्षि दुग्धः दुग्ध। दोह्मि दुह्वः दुह्मः। दुग्धे, दुह्यात्, दुहीत, दोग्धु।

आत्मनेपदे स्वरे टिलोपो वाच्यः। अनेन टेर्लोपः। अद्विक्षाताम्। अद्विक्षत। अद्विक्षथाः। अद्विक्षाथाम्। अन्यानि सुगमानि। दुह् प्रपूरणे। अकार उभयपदार्थः। 'दुह् तिप्' इति जाते दादेर्घः। अनेन हस्य घः। उपधाया लघोः। अनेन सर्वत्र गुणनिमित्ते प्रत्यये परे गुणो भवति। 'दोह् तिप्' इति जाते तथोर्धः। झबेजबाः। दोग्धि। दुग्धः। दुहन्ति। दुह सिप्। इति जाते दादेर्घः। आदिजबानाम्। उपधायाः। ससेचपा०। किलात्। कषसंयोगे क्षः। धोक्षि। अन्यानि मूले सन्ति। दुग्धे। दुहाते। दुहते। अत्र आत्तोन्तोदनतः। अनेन अन्तः अत्। दुह्यात्। दुह्याताम्। दुह्युः। दुहीत। दुहीयाताम्। दुहीरन्। दोग्धु। दुग्धात्। दुग्धाम्। दुहन्तु। सूत्रम्।

हकारस्य क्वचिज्झस्भावो वाच्यः। दुग्धि दुग्धाम्। अधोक् अधोग् अदुग्धाम् अदुहन्। अदुग्ध, दुदोह, दुदुहे, दुह्यात्, धुक्षीष्ट, दोग्धा, दोग्धा, धोक्ष्यति, धोक्ष्यते, अधोक्ष्यत्, अधोक्ष्यत, अधुक्षत्, अधुक्षत।

हकारस्य क्वचित् स्थाने झस्भावो वाच्यः। अनेन हकारो झसूवत्

ज्ञातव्यः । दादेर्घः । अनेन घत्वम् । झसाद्धिर्हैः । झबे जबाः । दुग्धि । दुग्धात् । दुग्धं । दुग्ध । उपधायाः । दोहानि । दोहाव । दोहाम । दुग्धां । दुहातां । दुहतां । दुहस्व । इति जाते दादेर्घः । आदिजबानां । खसे चपा झसानाम् । किलात्० । कषसंयोगे० । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । 'दुह् दिप्' इति जाते दादेर्घः । गुणः । दिस्योर्हसात् । आदिजबानां । वावसाने । दिवादावट् । अधोक् । अधोग् । अदुग्धां । अदुहन् । अधोक् । अधोग् । अदुग्धं । अदुग्ध । गुणः । अदोहं । अदुह्व । अदुह्म । अदुग्ध । अदुहाताम् । अदुहत । अदुग्धाः । इत्यादीनि रूपाणि ज्ञेयानि । लिट्लकारे द्विश्च । पूर्वस्य । उपधाया लघोः । दुदोह । दुदुहतुः । दुदुहुः । उपधाया लघोः । दुदोहिथ । इत्यादीनि आत्मनेपदे । दुदुहे । दुदुहाते । दुदुहिरे । इत्यादीनि रूपाणि ज्ञातव्यानि वैयाकरणैः । दुह्यात् । दुह्यास्तां । दुह्यासुः । दुह् सीष्ट इति स्थिते । दिस्योः अनेन गुणनिषेधः । दादेर्घः । आदिजबानां । खसे चपा० । किलात्० । कषसंयोगे । धुक्षीष्ट । दुह् ता इति स्थिते । घत्वम् । गुणः । तथोर्धः । झबेजबाः । दोग्धा । दोग्धा । दुह् स्यप् तिप् इति जाते घत्वं । गुणः । आदिजबानां । खसेचपा० । षत्वम् । कषसंयोगे क्षः । धोक्ष्यति । धोक्ष्यते । अधोक्ष्यत् । अधोक्ष्यत । लुङ्लकारे । हशषान्तात् सक् अनेन सक् प्रत्ययो भवति । सिविषये किस्वाद्गुणाभावः । घत्वं । घत्वं । कत्वं । किलात्० । कषसंयोगे क्षः । अधुक्षत् । अधुक्षताम् । अधुक्षन् । आत्मनेपदे । अधुक्षत । सूत्रम् ।

दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति । अदुग्ध अधुक्षाताम् अधुक्षत । अदुग्धाः-अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षावहि-अदुह्वहि अधुक्षामहि । दिह् उपचये । देग्धि । तद्वत् । लिह आस्वादने । होढः । लेढि । तद्वत् । ष्टुञ् स्तुतौ । आदेः ष्णः स्नः । ओरौ । स्तौति-स्तुवीति स्तुतः-स्तुवीतः स्तुवन्ति । स्तुते-स्तुवीते स्तुयात्-स्तुवीयात् । स्तौतु-स्तुवीतु स्तुतात्- स्तुवीतात् स्तुताम्-स्तुवीताम् स्तुवन्तु । स्तुहि-स्तुतात् स्तुवीहि स्तुवीतात् । अस्तौत्, अस्तवीत् अस्तुताम् अस्तुवीताम् अस्तुवन् । अस्तुत अस्तुवीत । तुष्टाव । तुष्टुवतुः तुष्टुवुः । क्रादित्वान्नेट् । तुष्टोथ । तुष्टुवथुः तुष्टुव । तुष्टाव तुष्टव तु-

**ष्टुम । तुष्टुवे, स्तूयात, स्तोषीष्ट, स्तोता, स्तोता, स्तोष्यति, स्तोष्यते, अस्तोष्यत, अस्तोष्यत ।**

दुहदिहलिहगुहभ्यः । अनेन सको लुक् । 'अदुह् तन्' इति जाते घत्वम् । तयोर्धः । झवे जवाः । अदुग्ध । सस्यात्मने० । अनेन टिलोपः । अधुक्षातां । अधुक्षत । थकारे परेऽपि सको लुग् भवति । विकल्पेनैव लुकि सति । 'अदुह् थास्' इति जाते । वत्वं । तयोर्धः । झवे जवाः । अदुग्धाः । अधुक्षथाः । अधुक्षाथां । ध्वे परेऽपि सको लुक् । अदुग्ध्वं । अधुक्षध्वं । अधुक्षि । अधुक्षावहि । अधुक्षामहि । समाप्तोऽयं धातुः । दिह उपचये । अयंधातुः पूर्ववत् ॥ लिह आस्वादने । आस्वादनमीषद्भक्षणम् । पूर्ववत् प्रत्यया भवन्ति । अदादेर्लुक् । लिह् तिप् इति जाते होढः । तयोर्धः । ष्टुत्वं । उपधायाः । ढिढोलोपः । दीर्घश्च । लेढि । लीढः । लिहन्ति । आत्मनेपदे लीढे । लिहाते । लिहते । लिक्षात् । लिहीत । लोट्लकारे । लेढु । लीढात् । लीढां । लिहन्तु । 'लिह् हि' इति स्थिते । अत्र झसपरत्वाभावात् 'होढः' अनेन ढत्वं न भवति । परं । क्वचिदपदान्तेऽपि पदान्तताश्रयणीया । अनेन पदान्तत्वमाश्रित्य होढः । अनेन ढकारो भवति । अथवा हौ हकारोऽपि झसवत् । इति सरस्वतीकण्ठाभरणे उक्तत्वात् ढत्वं भवति । झसाद्धिर्धिः । ष्टुत्वम् । ढिढो लोपः । लीढि । लीढात् । लीढं । लीढ । लेहानि । लेहाव । लेहाम । लीढां । लिहातां । लिहताम् । लङ्लकारे । होढः । दिबादावट् । उपधाया लघोः । दिस्योर्हसात् । वावसाने । अलेट् । अलेड् । अलीढां । अलिहन्त । इत्यादीनि । अलीढ । अलिहाथां । आतोन्तोदनतः । अलिहत । लिट्लकारे । द्विश्च । पूर्वस्य । उपधाया लघोः । लिलेह । लिलिहतुः । लिलिहुः । लिलिहे । लिलिहाते । लिलिहिरे । लिह्यात् । लिह्यास्तां । लिह्यासुः । लिह् सीष्ट इति स्थिते । सिस्योः । अनेन गुणाभावः । होढः । षढोः कः से । किलात्० । कष० । लिक्षीष्ट लिक्षीयास्तां । लिक्षीरन् । लिह् ता इति स्थिते । होढः । उपधाया लघोः । तयोर्धः । ष्टुत्वं । ढिढोलोपः । लेढा । आत्मनेपदेऽपि । लेढा । लेढारौ । लेढारः । लट्लकारे । लिह् स्यप् तिप् इति स्थिते । ढत्वं । गुणः । कत्वं । षत्वं । कषसंयोगे० । लेक्ष्यति । लेक्ष्यते । अलेक्ष्यत् । अलेक्ष्यत । लुङ्लकारे । हशषान्तात्सक् । क्त्वाद् गुणाभावः । अन्यत् साधनं पूर्ववत् । अलिक्षत् अलिक्षताम् अलिक्षन् । आत्मनेपदे । अलिक्षत । दुहदिहलिह० अनेन सको लुक् । अन्यत्साधनं पूर्ववत् । अलीढ । सस्यात्मने० । अलिक्षातां । अलिक्षत । साध्योऽयं धातुर्दुह्धातुवत् । ष्टुञ् स्तुतौ । ञकार उभयपदार्थः । आदेः ष्णः स्नः । उरौ तुरुतुस्तुभ्यः । अनेन ईट् । यत्र ईट् भवति तत्र गुणः । स्तौति । उ अव् । स्तवीति । स्तुतः । स्तुवीतः । उधातोः । स्तुवन्ति । इत्यादीनि । स्तुते । स्तुवीते ।

स्तुवाते । स्तुवते । स्तुयात् । स्तुवीयात् । स्तुयाताम् । स्तुवयीताम् । स्तुयुः । स्तुवीयुः । लोट्लकारे । स्तौतु । स्तवीतु । स्तुवात् । स्तुवीतात् । स्तुवन्तु । इत्यादीनि रूपाणि ज्ञातव्यानि । स्तुतां । स्तुवीतां । स्तुवातां । स्तुवतां । लङ् लकारे । अस्तौत् । अस्तवीत् । अस्तुतां । अस्तवीतां । नुधातोः । अस्तुवन् । अस्तुत । अस्तुवीत । अस्तुवातां । आतोन्तो० । अस्तुवत । इत्यादीनि । लिट्लकारे द्विश्च । शसात्खपाः । अनेन तकारः शेषः । षत्वम् । धातोर्नामिनः । अनेन वृद्धिः । तुष्टाव । नुधातोः । तुष्टुवतुः । तष्टुवुः । क्रादित्वात् । अस्य धातोः स्यपि इडागमो न भवति । गुणः । तुष्टोथ । अन्यानि मूले सन्ति । तुष्टुवे । तुष्टुवाते । तुष्टुविरे । अन्यानि सुगमानि । ये । अनेन पूर्वस्य दीर्घः । स्तूयात् । गुणः । षत्वं । स्तोषीष्ट । स्तोता । स्तोता । लुङ्लकारे । सूत्रम् ।

**स्तुसुधूञां पे सेरिट् वक्तव्यः । अस्तावीत् अस्तोष्ट । ब्रूञ् व्यक्तायां वाचि ।**

स्तुसुधूञाम् । स्तुसुधूञां धातूनां परस्मैपदे सिप्रत्ययस्य इट् वक्तव्यः । धातोर्नामिनः । अनेन वृद्धिः । अस्तावीत् । अस्ताविष्टां । अस्ताविषुः । इत्यादीनि । अस्तोष्ट । अस्तोषातां । अस्तोषत । ब्रूञ् व्यक्तायां वाचि । ञकारः सर्वत्र उभयपदार्थः । अप्प्रत्ययो भवति । तस्य लुग् भवति । सूत्रम् ।

**अबादावीप्पिति त्स्मि । ब्रुव ईकारः प्रत्ययो भवति तकारसकारमकारादौ पिति परे अबादौ विषये । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः ।**

अबादावीप्पिति त्स्मि । अबादौ ( स. ए. ) ईप् ( प्र. ए. ) पिति ( स.ए.) त् च स् च म् च त्स्म् तस्मिन् त्स्मि ( स. ए. ) चतुःपदं सूत्रम् । यद्वा द् च त् च स् च म् च् । त्स्म् । तस्मिन् । त्स्मि । खसेचपा० । अनेन दस्य तः । तेन दकारे परेऽपि ईप् प्रत्ययः । ब्रूञ्धातोस्तकारसकारमकारादौ पिति परे ईप् प्रत्ययो भवति । अबादौ विषये । अत्राप् विषये । इत्येव वक्तव्ये । आदिशब्दश्चिन्त्यः । यद्वा अप् आदिः प्रथमो यस्य सः अबादिः । अब्लुक् इत्यर्थः । तस्मिन्नबादौ अपा लुकि कृते सति इत्यर्थः । अनेनेकारः प्रत्ययो भवति । गुणः । ओ अव् । ब्रवीति । ब्रूतः । नुधातोः । ब्रुवन्ति । षत्वं । ब्रवीषि । ब्रूथः । सूत्रम् ।

**आहश्च पञ्चानाम् । ब्रुव उत्तरेषां तिवादीनां पञ्चानां णवादयः पञ्चादेशा भवन्ति । ब्रुव आहश्चादेशो भवति । आह आहतुः आहुः ।**

आहस्थपञ्चानां। आहः (प्र. ए.) च (अव्ययम्) पञ्चानां (ष ब.) ब्रूञ्धातोरुत्तरेषां तिबादीनां पञ्चानां णबादयः पञ्चादेशा भवन्ति। ब्रुवो धातोराहश्च आदेशो भवति। यदादेशः। अनेन न द्वित्वम्। आह। आहतुः। आहुः। आह् थप्। इति जाते सूत्रम्।

तस्थे। आहो हकारस्य तकारादेशो भवति थे परे आत्थ आहथुः ब्रूथ। ब्रवीमि। ब्रूवः ब्रूमः। ब्रूयात्, ब्रवीत, ब्रवीतु, ब्रूताम् अब्रवीत्, अब्रूत।

तस्थे। आहादेशस्य हकारस्य तकारादेशो भवति थकारे परे। अनेन हस्य तः। आत्थ। आहथुः। ब्रूथ। गुणः। ब्रवीमि। ब्रूवः। ब्रूमः। ब्रूते। ब्रुवाते। आतोऽन्तो०। ब्रुवते। इत्यादीनि। ब्रूयात्। नुधातोः। ब्रुवीत। ब्रवीतु। ब्रूतात्। ब्रूतां। नुधातोः। ब्रुवन्तु। ब्रूतां ब्रुवातां ब्रुवतां। दिबादावट्। अब्रवीत्। अब्रूताम्। अब्रुवन्। अब्रूत। अब्रुवातां। अब्रुवत। इत्यादीनि रूपाणि पूर्वसूत्रैरेव सिध्यन्ति। सूत्रम्।

ब्रुवो वचिः। ब्रुवो वचिरादेशो भवति अनपि विषये। इकार इत्। उवाच, ऊचे, अवोचत्, अवोचत। शेषस्य पूर्ववत्प्रक्रिया। ऊर्णुञ् आच्छादने।

ब्रुवो वचिः। ब्रुवो धातोर्वचिरादेशो भवति। अनपि विषये। इकार इत्। अनेन वचादेशः। वच् णप्। इति जाते। द्विश्च। पूर्वस्य। णबादौ पूर्वस्य अनेन संप्रसारणं। अत उपधायाः। अनेन वृद्धिः। उवाच। ग्रहां क्ङिति च। अनेन द्वितीयं संप्रसारणम्। ऊचतुः। ऊचुः। अस्वतो०। उवचिथ। उवक्थ। अन्यानि सुगमानि। ऊचे। ऊचाते। ऊचिरे। इत्यादीनि। अन्यानि 'वच् परिभाषणे' इति धातुवत् रूपाणि ज्ञातव्यानि। लुङ्लकारे। 'अस्यति' अनेन सेर्ङे भवति। ङे वचेः अनेन रुमागमः। अवोचत्। अवोचताम्। अवोचन्। आत्मनेपदे। अवोचत। अवोचेताम्। अवोचन्त। इत्यादीनि रूपाणि भवन्ति तानि सुगमानि ज्ञातव्यानि विद्वद्भिः। ऊर्णुञ् आच्छादने। पूर्ववत् प्रत्ययो भवति। अदादेर्लुक् अनेन लुक् भवति। ञकार इत्। ऊर्णु तिप् इति जाते सूत्रम्।

ऊर्णोतेर्वा वृद्धिः। हसादौ पिति। ऊर्णौति-ऊर्णोति।

ऊर्णोतेः। ऊर्णोतेर्धातोर्वा वृद्धिर्भवति हसादौ पिति प्रत्यये परे। अनेन वा वृद्धिः। ऊर्णौति। ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। अत्र नुधातोः। अनेनोव्। ऊर्णौषि। ऊर्णोषि। अत्र षत्वम्। अन्यानि सुगमानि। ऊर्णुते। नुधातोः। ऊर्णुवाते।

ऊर्णुवते । ऊर्णुयात् । ऊर्णुवीत । ऊर्णोतु । ऊर्णौतु । ऊर्णुतात् । ऊर्णुतां । लङ्लकारे सूत्रम् ।

**ऊर्णोतेर्गुणो दिस्योः । वृद्धेरपवादः । और्णोत् और्णोः ॥**

ऊर्णोतेः । ऊर्णोतेर्धातोर्दिस्योः परतो गुणो भवति वृद्धेरपवादः । अनेन दिस्योर्गुणो भवति । अडागमद्वयं च । और्णोत् । और्णुताम् । और्णुवन् । और्णोः । और्णुत । और्णुवातां । और्णवत । इत्यादीनि ज्ञातव्यानि । लिट्लकारे । अनेकस्वरत्वादाम्प्रत्यये प्राप्ते सूत्रम् ।

**ऊर्णोतेराम्न ।**

ऊर्णोतेः । ऊर्णोतेर्धातोराम्प्रत्ययो न भवति । अनेनास्याम् प्रत्ययो न । द्विश्च । अस्य धातोर्द्वित्वविधायकं सूत्रम् ।

**स्वरादेः परः । स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति ।**

स्वरादेः परः । स्वरादेः ( ष. ए. ) परः । ( प्र. ए. ) स्वरादेर्धातोरद्विरुक्तः सस्वरो द्वितीयोऽवयवो द्विर्भवति । रकारस्य द्वित्वे प्राप्ते सूत्रम् ।

**स्वरात्पराः संयोगादयो नदरा द्विर्न । ऊर्णुनाव ऊर्णुनुवतुः ।**

स्वरात्पराः । स्वरात्पराः संयोगादयो नकारदकाररकारा द्विर्न भवन्ति । अनेन रकारस्य न द्वित्वम् । किंतु णकारस्यैव भवति । धातोर्नामिनः । अनेन वृद्धिः । रकारस्तु पूर्वस्य णत्वे निमित्तं नेतरस्य । ऊर्णुनाव । नुधातोः । अनेनोव् । ऊर्णुनुवतुः । ऊर्णुनुवुः । ऊर्णुनु इट् थप् इति जाते सूत्रम् ।

**ऊर्णोतेरिडादिः प्रत्ययो वा ङित् । ऊर्णुनुविथ-ऊर्णुनविथ । उर्णुयात्, ऊर्णुविषीष्ट-ऊर्णविषीष्ट, ऊर्णुविता-ऊर्णविता ।**

ऊर्णोतेः । ऊर्णोतेर्धातोरिडादिः प्रत्ययो वा ङिद् भवति । ङित्त्वाद् वा गुणाभावः । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुनुवथुः । ऊर्णुनुव । अन्यानि सुगमानि । आत्मनेपदे । ऊर्णुनुवे । ऊर्णुनुवाते । ऊर्णुनुविरे । ये । अनेन पूर्वस्य दीर्घः । ऊर्णूयात् । ऊर्णूयास्तां । ऊर्णूयासुः । ङित्त्वात् । ऊर्णुविषीष्ट । विकल्पेन गुणः । ऊर्णविषीष्ट । अन्येषां रूपाणि ज्ञातव्यानि । विस्तरभयान्न लिख्यन्ते । लुङ्लकारे सूत्रम् ।

**ऊर्णोतेर्वा वृद्धिः सौ परे । पक्षे गुणः । और्णावीत्-और्णवीत्-**

और्णविष्ट और्णवीत् और्णुविष्ट॥ इत्यदादिषूभयपदिप्रक्रिया ॥

॥ इत्युभयपदिनो लुग्विकरणा अदादयो धातवः॥

॥ इति धातूनां द्वितीयो गणः ॥ २ ॥

ऊर्णोतेः । ऊर्णोतेर्धातोर्वा वृद्धिर्भवति सिमत्यये परे । अनेनास्य वा वृद्धिः । द्वौ अडागमौ भवतः स्वरादित्वात् । और्णावीत् । पक्षे गुणो भवति । ङित्त्वात् वा उव् भवति । और्णुवीत् । और्णुविष्टाम् । और्णुविषुः । यदा गुणो भवति । तदा और्णवीत् । और्णविष्टाम् और्णविषुः । आत्मनेपदे । और्णाविष्ट । और्णाविषाताम् । और्णाविषत । और्णविष्ट । और्णुविष्ट । और्णुविषातां । और्णुविषत । इत्युभयपदिप्रक्रिया समाप्ता । इति लुग्विकरणा अदादयो धातवः कथिताः । इति द्वितीयो गणः ॥

---

अथ लुग्विकरणस्यापि जुहोत्यादिगणस्य विशेषः । हु दानादनयोः ॥ ह्वादेर्द्विश्च । हु इत्यादेर्गणादुत्पन्नस्यापो लुग्भवति। तस्मिन् लुकि सति धातोर्द्विर्वचनम् । कुहोश्चुः । गुणः । जुहोति जुहुतः ।

अधुना लुग्विकरणा ह्वादयो धातवः कथ्यन्ते । लुग्विकरणस्यापि जुहोत्यादिगणस्य विशेषः । तिबादयः प्रत्यया भवन्ति । हु दानादनयोः । अयं धातुः प्रायोऽग्नितर्पणेऽर्थे होमार्थे वर्तते । उदात्तेत् । तेन परस्मैपदी हु अप् तिप् । इति जाते सूत्रम् । ह्वादेर्द्विश्च । ह्वादेः ( पं० ए० ) द्विः । ( प्र. ए. ) च ( प्र. ए. ) आद्ये नामिनो रः । द्वितीये विसर्जनीयस्य सः । स्तोश्चुभिः श्चुः । त्रिपदं सूत्रम् । हु इत्यादेर्गणात् धातुपाठोक्तादुत्तरस्य अप्प्रत्ययस्य लुग् भवति । तस्मिंश्च लुकि कृते सति धातोर्द्विर्वचनं द्वित्वं भवति । अनेन अपो लुग् धातोर्द्वित्वे सूत्रम् । सस्वर आदिर्द्विरद्विः । सस्वरः ( प्र. ए. ) । आदिः ( प्र. ए. ) द्विः ( प्र. ए. )। अद्विः ( प्र. ए. ) चतुःपदं सूत्रं । हसादौ अनेकस्वरे धातौ एकस्वरे वा संयोगादौ व्यञ्जनान्ते च धातौ सस्वर आदिरवयवोऽद्विरुक्तो द्विर्भवति । इदं द्वित्वविधायकं सूत्रम् । हु हु तिप् । कुहोश्चुः । झपानां जबचपाः । जु हु तिप् इति जाते । गुणः । जुहोति । जुहुतः । ' जुहु अन्ति ' इति जाते सूत्रम् ।

द्वेः । द्विरुक्तादुत्तरस्यान्त इत्येतस्याद्भवति । जुह्वति । जुहोषि जुहुथः जुहुथ । जुहोमि जुहुवः जुहुमः । जुहुयात् जुहुयाताम् । जुहोतु जुहुतात् जुहुताम् जुह्वतु ।

द्विरुक्तात् । द्विरुक्तात् कृतद्वित्वाद्धातोरुत्तरस्य अन्तः अत् भवति । अनेन अन्तः अत् । नुधातोः । जुह्वति । अन्यानि मूले सन्ति । जुहुयात् । जुहुयाताम् । जुहुयुः । जुहोतु । जुहुतात् । जुहुताम् । जुह्वतु । 'जुहुहि' इति जाते सूत्रम् ।

हेर्धिः । जुहोतेरुत्तरस्य हेर्धिर्भवति । अद्व्युसीत्युक्तेर्गुणः ।

हेर्धिः । हेः (ष. ए.) धिः (प्र. ए.) जुहोतिधातोरुत्तरस्य हिप्रत्ययस्य धिर्भवति । अनेन हेर्धिः । जुहुधि । अन्यानि सुगमानि । अजुहोत् । अजुहुताम् । अजुहु अन् इति जाते सूत्रम् ।

अन उस् । अजुहवुः । अजुहोः । अजुहुतम् अजुहुत । अजुहवम् अजुहुव अजुहुम । जुहाव जुहुवतुः जुहुवुः । जुहुविथ-जुहोथ ।

अन उस् । अनः (ष० ए०) । उस् (प्र. ए.) । द्विरुक्ताद्धातोरन उस् भवति । अद्व्युसीत्युक्तत्वात् गुणो भवति । अजुहवुः । अन्यानि मूले सन्ति । 'हु णप्' इति स्थिते । द्विश्च । सस्वरादिः । कुहोश्चुः । झपानां । धातोर्नामिनः । जुहाव । जुहुवतुः । अत्वतो० । जुहविथ । जुहोथ । सूत्रम् ।

भीहुभृह्रीणामाम्वा वक्तव्यः स लुग्वत् । लुकि सति धातोर्द्वित्वम् । जुहवांचकार, हूयात्, होता, होष्यति, अहोष्यत् । अहौषीत् अहौष्टाम् अहौषुः । ञिभी भये । ञि इत् । बिभेति बिभीतः ।

भीहुभृह्रीणामाम् वा० । भीहुभृह्रीणां धातूनां आम् वा वक्तव्यः स आम् लुग्वत् । लुकि सति धातोर्द्वित्वं भवति । जुहवांचकार । जुहवामास । जुहवांबभूव । एतानि सुगमानि । ये । हूयात् । होता । अत्र गुणो भवति । अन्येषां लकाराणां मध्यमपुरुषस्यैकवचनान्तानि मूले सन्ति । लुङ्लकारे । अनिटो नामिवतः । अनेन वृद्धिः । अहौषीत् । अहौष्टाम् । अहौषुः । अहौषीः । अहौष्टाम् । अहौष्ट । इत्यादीनि । ञिभी भये । ञिइत् । पूर्ववत् तिबादयः । अपूकर्त्तरि । ह्वादेर्द्विश्च । ह्रस्वः । झपानां । गुणः । बिभेति । बिभीतः । सूत्रम् ।

ङिति हसे भिय इकारो वा वक्तव्यः । सार्वधातुके । बिभितः बिभ्यति । बिभीयात्-बिभियात् । बिभेतु बिभितात्-बिभीतात् बिभीताम् बिभिताम् । अबिभेत् अबिभिताम् अ-

बिभीताम् अबिभयुः। बिभाय। पक्षे आम्। बिभयांचकार, भीयात्, भेता, भेष्यति, अभेष्यत्, अभैषीत्। ह्री लज्जायाम्। जिह्रेति जिह्रीतः जिह्रियति। जिह्रीयात्, जिह्रेतु। अजिह्रेत् अजिह्रीताम् अजिह्रयुः। जिह्राय जिह्रियतुः जिह्रियुः। जिह्रयांचकार, ह्रीयात्, ह्रेता, ह्रेष्यति, अह्रेष्यत्, अह्रैषीत्। पॄ पालनपूरणयोः।

ङिति ह्रसे परे भियो धातोरिकारो वा वक्तव्यः सार्वधातुके। सुगममिदं सूत्रम्। बिभितः। नुधातोः। बिभ्यति। अत्र रूपे द्विरुक्तात्। अनेन अन्तः अत्। बिभेषि। अत्र षत्वम्। बिभीथः। बिभिथः। बिभीथ। बिभिथ। इत्यादीनि रूपाणि ज्ञातव्यानि। बिभीयात्। बिभियात्। बिभीयातां। बिभियातां। बिभीयुः बिभियुः। इत्यादीनि। लोट्लकारे। बिभेतु। बिभीतात्। बिभितात्। बिभीतां। बिभितां। बिभ्यतु। इत्यादीनि। अबिभेत्। अबिभीतां। अबिभितां। अबिभयुः। इत्यादीनि। लिट्लकारे। द्विश्च। सस्वरादिः। ह्रस्वः। झपानां। धातोर्नामिनः। बिभाय। बिभ्यतुः। बिभ्युः। इत्यादीनि। भीह्रभृह्रीणां०। अनेनास्याम्प्रत्ययः। बिभयांचकार। बिभयामास। बिभयांबभूव। भीयात्। गुणः। भेता। लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अभैषीत्। अभैष्टां। अभैषुः। इत्यादीनि। ह्री लज्जायां। पूर्ववत् तिबादयः। अप्कर्त्तरि। ह्वादेर्द्विश्च। सस्वरादिः। कुहोश्चुः। झपानां जबचपाः। गुणः। जिह्रेति। जिह्रीतः। नुधातोः। द्विरुक्तात्। जिह्रियति। इत्यादीनि। लिट्लकारे। द्विश्च सस्वरादिः। कुहोश्चुः। झपानां। धातोर्नामिनः। जिह्राय। नुधातोः। जिह्रियतुः। जिह्रियुः। इत्यादीनि। भीह्रु० अनेनाम्। जिह्रयांचकार। जिह्रयामास। जिह्रयांबभूव। ह्रीयात्। गुणः। ह्रेता। अन्यानि सुगमानि। लुङ्लकारे। अनिटः। अह्रैषीत्। अह्रैष्टाम्। अह्रैषुः। इत्यादीनि। सुगमोऽयं धातुः। पृपालनपूरणयोः। पूर्ववत् तिबादयः। अप् कर्त्तरि। ह्वादेर्द्विश्च। पृ पृ तिप् इति जाते सूत्रम्

ऋप्रोरिः पूर्वस्य। ऋप्रोः पूर्वस्य ऋकारस्य इकारो भवति लुकि सति। गुणः। पिपर्त्ति।

ऋप्रोरिः पूर्वस्य। ऋप्रोः (ष० द्वि०) इः (प्र. ए.) पूर्वस्य (ष. ए.) ऋ गतौ पृ पालनपूरणयोः। इत्येतयोः धात्वोस्तिबादौ। अपो लुकि कृते। पूर्वस्य ऋकारस्य इकारो भवति। लुकि सति। रः। अस्य सूत्रस्यापवादोऽयम्। पिपृ तिपृ इति जाते। गुणः। राद्यपोद्विः। पिपर्ति। पिपृतस् इति जाते सूत्रम्।

पोरुर् । पवर्गादुत्तरस्य ऋकारस्य उर् भवति किति ङिति च परे । य्वोर्विहसे । पिपूर्तः पिपुरति । पिपूर्यात् । पिपर्तु-पिपूर्तात् पिपूर्ताम् पिपुरतु । पिपूर्हि । अपिपः ।

पोरुर् । पोः ( पं. ए. ) उर् ( प्र. ए. ) पवर्गात् उत्तरस्य ऋकारस्य किति ङिति प्रत्यये परे उर् भवति । 'य्वोर्विहसे' अनेन दीर्घः । पिपूर्तः । पोरुर् । पिपुरति । पिपर्षि । पिपूर्थः । पिपूर्थ । पिपर्मि । पिपूर्वः । पिपूर्मः । पिपूर्यात् । पिपूर्याताम् । पिपूर्युः । इत्यादीनि । एतानि रूपाणि पूर्वोक्तैरेव सूत्रैः सिद्ध्यन्ति । लोट्लकारे । पिपर्तु । पिपूर्तात् । पिपूर्ताम् । पिपुरतु । पिपूर्हि । पिपूर्तात् । पिपूर्तम् । पिपूर्त । गुणः । पिपराणि । पिपराव । पिपराम । लङ्लकारे । 'अपिपृ दिप्' इति जाते । गुणः । अपिपर् दिप् इति जाते । दिस्योर्हसात् । ओर्विसर्गः । अपिपः । सूत्रम् ।

ऋप्रोर्दिस्योरडागमो वा वक्तव्य इति केचित् । अपिपरत् अपिपूर्ताम् अपिपरुः। अपिपः-अपिपरः अपिपूर्तम् अपिपूर्त । अपिपरम् अपिपूर्व अपिपूर्म । पपार ।

ऋप्रोः । ऋप्रोर्धात्वोः दिस्योः प्रत्यययोः अमागमो वा वक्तव्यः इति केचिदाचार्या वदन्ति । तन्मते । अपिपरत् । अपिपूर्ताम् । अपिपरुः । अपिपः । ऋप्रोः । अपिपरः । अन्यानि मूले सन्ति । लिट्लकारे । 'पृ णप्' इति स्थिते । द्वित्वं । 'सस्वरादिः । रः । धातोर्नामिनः । पपार ।

ऋसंयोगादेर्णादेरकित्त्वं वाच्यम् । कित्त्वाभावाद्गुणः । पपरतुः पपरुः । पपरिथ-पूर्यात् । ईटो ग्रहाम्० । परीता-परिता, परीष्यति-परिष्यति, अपरीष्यत्-अपरिष्यत्, अपारीत् । वृद्धिहेतौ साविटो न दीर्घः । अपारिष्टाम् अपारिषुः । ह्रस्वोऽपि पिपर्तिरस्ति । पिपर्ति पिपृतः पिप्रति । पिपृयात्, पिपर्तु, अपिपः । अपिपरत्, अपिपृताम् अपिपरुः । अपिपः अपिपरः । पपार पप्रतुः पप्रुः । ऋप्रोरिङ् । प्रियात्, पर्ता । हनृतः स्यपः । परिष्यति, अपरिष्यत्, अपार्षीत् । ओहाक् त्यागे । ओकावितौ । जहाति ।

ऋसंयोगादेरिति। अनेनास्य किस्वाभावात् गुणो भवति। पपरतुः। पपरुः। पपरिथ। पपरथुः। पपर। पपार। पपर। पपरिव। पपरिम। पृ यात् इति स्थिते। पोरुड्। य्वोर्विहसे। पूर्यात्। पूर्यास्ताम्। पूर्यासुः। इत्यादीनि। 'पृ ता' इति स्थिते। गुणः। सिसता०। ईटो ग्रहां। परीता। परिता। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे णित्पे। अनेन सेर्णित्वात्। धातोर्नामिनः। अनेन वृद्धिः। अपारीत्। अपारिष्टां। अस्मिन् रूपे। ईटो ग्रहां। अनेन दीर्घे प्राप्ते। वृद्धिहेतौ सौ। अनेन तन्निषेधः। अपारिषुः। इत्यादीनि। ह्रस्वोऽपि पिपर्तिरस्ति। पूर्ववत् तिबादयः। ह्वादेर्द्विश्च। ऋमोरिः पूर्वस्य। गुणः। पिपर्ति। पिपृतः। पिप्रति। पिपर्षि। पिपृथः। पिपृथ। पिपर्मि। पिपृवः। पिपृमः। पिपृयात्। पिपर्तु। पिपृतात्। पिपृतां। पिपरतु। पिपृहि। पिपृतात्। पिपृतं। पिपृत। अपिपः। ऋमोः। अपिपरत्। अपिपृतां। अपिपरुः। अपिपः। अपिपरः। अन्यानि सुगमानि। लिट्लकारे। द्विश्च। सस्वरादिः। रः। धातोर्नामिनः। पपार। ऋरं। पप्रतुः पप्रुः। पपर्थ। पादादौ। अनेन ऋकारस्य रिङ्। प्रियात्। गुणः। राद्यपोद्विः। पर्त्ता। पर्त्तारौ। पर्त्तारः। हनृतः स्यपः। अनेन स्यप इडागमो भवति। गुणः। परिष्यति। इत्यादीनि रूपाणि। अपरिष्यत्। लुङ्लकारे। णित्पे। अनेन णित्वात्। सावनिटः। अनेन नित्यं वृद्धिर्भवति। षत्वं। दिबादावट्। अनेन अडागमः। अपार्षीत्। अपार्ष्टाम्। अपार्षुः। इत्यादीनि रूपाणि सुगमानि। ओहाक् त्यागे। ओकावितौ। पूर्ववत् प्रत्ययः। ह्वादेर्द्विश्च। अनेनापो लुग् धातोर्द्वित्वं च भवति। तदा हा हा तिप् इति जाते। ह्रस्वः। कुहोश्चुः। झपानां। जहाति इति सिद्धम्। 'जहा तस्' इति जाते। सूत्रम्।

**द्वेस्तौ। लोपोऽनुवर्तते इकारश्च। द्विरुक्तस्य धातोराकारस्य लोपो भवति ङिति स्वरे इकारश्च ङिति हसे परे। जहीतः।**

द्वेस्तौ। लोपोऽनुवर्त्तते इकारश्च। द्वेः (ष० ए०) तौ (प्र० द्वि०) लोपः इकारश्च अनुवर्त्तते। सूत्रं तु द्विपदमस्ति। कस्मात्सूत्रादनुवर्त्तते इति शङ्कायां वृत्तिकारो विशेषेण व्याचष्टे। नात इति सूत्रादाकारस्य लोपोऽनुवर्त्तते। तथा य्वोर्हसे इति सूत्रात् ईकारोऽनुवर्त्तते। द्विरुक्तस्य धातोराकारस्य ङिति स्वरे परे लोपो भवति। ङिति हसे परे आकारस्य ईकारो भवति। अनेन आकारस्य ईकारः। जहीतः। सूत्रम्।

**जहातेराकारस्य क्ङिति हसे ईर्वा वाच्यः। जहितः जहति।**

जहातेः। जहातेर्धातोराकारस्य ङिति हसे परे वा इकारो भवति। अनेन दा

आकारस्य इकारः । जहितः । जहा अन्ति इति जाते । द्विरुक्तात् । द्वेस्तौ । अनेन आकारस्य लोपो भवति । जहति । जहासि । जहीथः । जहिथः । जहीथ । जहिथ । जहामि । जहीवः । जहिवः । जहीमः । जहिमः । इत्यादीनि रूपाणि ज्ञेयानि । 'जहा यात्' इति जाते सूत्रम् ।

जहातेर्यादावालोपो वाच्यः । जह्यात् । जहातु-जहीतात् जहितात् जहीताम् जहिताम् जहतु ।

जहातेः । जहातेर्धातोर्यादादौ परे आकारस्य लोपो भवति । अनेन आकारस्य लोपः । जह्यात् । शेषाणि सुगमानि । आशीःप्रेरणयोः । जहातु । जहीतात् । जहितात् । जहीतां । जहितां । द्वेस्तौ । द्विरुक्तात् । जहतु । जहा हि इति स्थिते सूत्रम् ।

ईर्वा हौ । जहातेर्हौ परे ईकारः सिद्ध एव । पक्षे आकारेकारौ भवतः । जहीहि-जहिहि-जहाहि-अजहात् । अजहिताम् अजहीताम् अजहुः । जहौ जहतुः जहुः । जहिथ-जहाथ । दादेरे । हेयात्, हाता, हास्यति, अहास्यत्, अहासीत् । ऋ गतौ । ऋप्रोरिः पूर्वस्य ।

ईर्वाहौ । ईः । (प्र. ए.) । (वा अव्ययम्) हौ (स. ए.) । जहातेर्धातोर्हौ परे ईकारः सिद्ध एव पक्षे आकारेकारौ भवतः । सुगमम् । अनेन सूत्रेण त्रीणि रूपाणि भवन्ति । जहीहि । जहिहि । जहाहि । अत्र भट्टिः 'जहिहि जहीहि जहाहि रामभार्याम्' इत्युदाजहार । अन्यानि सुगमानि । लुङ्लकारे । अजहात् अजहीताम् अजहिताम् । द्वेस्तौ । अनेनाकारस्य लोपो भवति । अजहुः । अन्यानि सुगमानि । परोक्षे । द्वित्वं । ह्रस्वः । कुहोश्चुः । झपानां । आतो णप् डौ । जहौ । आतोऽनपि । अनेन आकारस्य लोपो भवति । तदा जहतुः । जहुः अल्वतो० । जहिथ । जहाथ । अन्यानि सुगमानि । लिङ्लकारे 'हा यात्' । इति जाते दादेरे । अनेन आकारस्यैकारः । हेयात् । हेयास्तां । हेयासुः । हा ता । लुङ्लकारे । आदन्तानां । अनेनेदसकौ भवतः । सेः । अनेनेट् । अहासीत् । अहासिष्टाम् । अहासिषुः । अन्यानि सुगमानि । ऋगतौ । तिवादयः । अप् कर्त्तरि । अनेन चतुर्षु अप् । ह्वादेर्द्विश्च । ऋ ऋ तिप् इति जाते । ऋप्रोरिः पूर्वस्य । गुणः ।

असवर्णे स्वरे पूर्वस्य इयादेशो भवति । इयर्ति इयृतः इय्रति । इयृयात् । इयर्तु-इयृतात् इयृताम् इय्रतु । इयृहि-इयृ-

तात् इयृतम् इयृत । इयराणि इयराव इयराम । ऐयः-ऐयरत् ऐयृताम् ऐयरुः । ऐयः-ऐयरः ऐयृतम् ऐयृत । ऐयरम् ऐयृव ऐयृम । रः । वृद्धिः । आर आरतुः आरुः । गुणोर्तिसंयोगाद्योः । अर्यात्, अर्ता, अरिष्यति, आरिष्यत् । ऋदृशोः पुषादित्वात् ङप्रत्ययः । सेरपवादः । गुणः । आरत् ॥ ॥ इति जुहोत्यादिषु परस्मैपदिप्रक्रिया ॥ ७ ॥

असवर्णे । अनेनेय् । इयर्ति । इयृतः । अत्र ङित्त्वाद्गुणो न भवति । द्विरुक्तात् । अनेन अन्तः अत् । अरम् । इयति । अन्यानि यथासंभवं ज्ञेयानि । इयृयात् । लोट्लकारे । इयर्तु । अन्यानि मूले सन्ति । इयृ दिप् इति जाते गुणः । द्वौ अडागमौ । ऐयः । दिस्योः । ऐयरत् । अन्यानि सन्ति मूले । लिट्लकारे । द्विश्च । रः । धातोर्नामिनः । अनेन वृद्धिः । सवर्णे । आर । गुणोऽर्ति० अनेन गुणः । आरतुः । आरुः । आरिथ । अन्यानि । सुगमानि । 'ऋ यात्' इति जाते गुणोर्ति०। अनेन गुणो भवति । अर्यात् । अर्यास्ता । अर्यासुः । इत्यादीनि । 'ऋ ता' इति स्थिते गुणः । अर्ता । अर्तारौ । अर्तारः । हनृतः स्यपः । गुणः । अरिष्यति । स्वरादित्वादडागमद्वयम् । आरिष्यत् । ऋदृशोर्धात्वोः पुषादित्वात् ङप्रत्ययो भवति । सेरपवादः । दृशादेः । अनेन गुणः । अडागमद्वयम् । आरत् । आरताम् । आरन् । अन्यानि सुगमानि । इति परस्मैपदिप्रक्रिया समाप्ता ।

## ॥ अथात्मनेपदिनः ॥

ओहाङ् गतौ ॥ भृञां लुकि । डुभृञ् धारणपोषणयोः ओहाङ् गतौ माङ् माने इत्येतेषां पूर्वस्याकारस्य इकारो भवति लुकि सति । द्विस्तौ । जिहीते जिहाते जिहते । जिहीत जिहीताम् । अजिहीत, जहे, हासीष्ट, हाता, हास्यते, अहास्यत । अहास्त अहासाताम् अहासत । माङ् माने । मिमीते मिमाते मिमते । मिमीते, मिमीताम्, अमिमीत, ममे, मासीष्ट, माता, मास्यते, अमास्यत, अमास्त ॥ ॥ इति जुहोत्यादिष्वात्मनेपदिप्रक्रिया ॥ ८ ॥

अथात्मनेपदिप्रक्रिया कथ्यते । ओहाङ्गतौ । ओकार इत् ।

ङ्कार आत्मनेपदार्थः । तेआदयः प्रत्यया भवन्ति ह्वादेर्द्वित्वं । हा हा ते इति जाते । ह्रस्वः । कुहोश्चुः । सूत्रम् । भृञां लुकि । भृञां ( प. ए. ) लुकि ( स० ए० ) डुभृञ् धारणपोषणयोः । ओहाङ् गतौ । माङ् माने । इत्येतेषां धातूनां पूर्वस्याकारस्य इकारो भवति । द्वेस्तौ । जिहीते । आकारलोपः । जिहाते । आतोन्तो० । जिहते । जिहीषे । जिहाथे । जिहीध्वे । जिहे । जिहीवहे । जिहीमहे । द्वेस्तौ । अनेनाकारस्य लोपः । जिहीत । जिहीयातां । जिहीरन् । अन्यानि सुगमानि । लोट्लकारे । जिहीतां । आकारलोपः । जिहातां । जिहतां । जिहीष्व । अन्यानि सुगमानि । लङ्लकारे । अजिहीत । अजिहातां । अजिहत । अन्यानि सुगमानि । लिट्लकारे । द्वित्वं । ह्रस्वः । कुहोश्चुः । झपानां । आतोनपि । अनेन आकारस्य लोपः । जहे । जहाते । जहिरे । हासीष्ट । अन्येषां रूपाणि सुगमानि मूलात् ज्ञातव्यानि । लुङ्लकारे । भूते सिः । अनेन सिप्रत्ययो भवति । दिवादावट् । अहास्त । अहासाताम् । अहासत । आतोन्तो० । अनेनान्तः अत् । माङ् माने । पूर्वसूत्रैरेवापं धातुः सिध्यति । ह्वादेर्द्वित्वं । अनेन चतुर्थं धातोर्द्वित्वं । मिमीते मिमाते । आतो० । मिमते । अन्यानि सुगमानि । मिमीत । मिमीयातां । मिमीरन् । मिमीतां । अमिमीत । अमिमातां । आतो० । अमिमत । लिट्लकारे । ममे । ममाते । ममिरे । अन्यानि सुगमानि । मासीष्ट । माता । लुङ्लकारे । भूते सिः । अमास्त । अमासातां । अमासत । अन्यानि सुगमानि तानि ज्ञातव्यानि विद्वद्भिः । इत्यात्मनेपदिप्रक्रिया समाप्ता ।

## ॥ अथोभयपदिनः ॥

डुभृञ् धारणपोषणयोः । डुञावितौ । बिभर्ति बिभृतः बिभ्रति । बिभृते, बिभृयात्, बिभ्रीत, बिभर्तु, बिभृताम् । अबिभः, अबिभृताम्, अबिभरुः । अबिभृत । बभार बभ्रतुः बभ्रुः । बभर्थ । बभ्रे, बिभरांचकार, बिभरांचक्रे, बिभरामास, बिभरांबभूव । यादादौ । भ्रियात्, भृषीष्ट, भर्ता । हनृतः स्यपः । भरिष्यति, भरिष्यते, अभरिष्यत् अभरिष्यत, अभार्षीत्, । उः । अभृत । डु दाञ् दाने । ददाति ॥

डुभृञ् धारणपोषणयोः । डुञावितौ स्तः । तिवादयस्तआदयश्च प्रत्यया भवन्त्यस्य धातोः । ह्वादेर्द्वित्वं । अनेनापो लोपो धातोर्द्वित्वं च भवति । 'भृ भृ तिप्'

इति जाते रः । झपानां । भृञां लुकि । गुणः । बिभर्ति । बिभृतः । द्विरुक्तात् । ऋरं । बिभ्रति । अन्यानि एतैरेव सूत्रैः सिध्यन्ति । बिभृते । बिभ्राते । बिभ्रते । बिभृयात् । बिभृयातां । बिभृयुः । बिभ्रीत । बिभ्रीयातां । बिभ्रीरन् । बिभर्तु । बिभृतां । अबिभः । अबिभृतां । अन उस् । गुणः । अबिभरुः । अन्यानि सुगमानि। अबिभृत । अबिभ्रातां । अबिभ्रत । लिट्लकारे । द्विश्च । अनेन द्वित्वं । रः । झपानां । धातोर्नामिनः । अनेन वृद्धिः । बभार । ऋरं । बभ्रतुः । बभ्रुः । क्रादित्वान्नेट् । गुणः । बभर्थ । अन्यानि सुगमानि । आत्मनेपदे । बभ्रे । बभ्राते । बभ्रिरे । भीहु० । अनेनाम्प्रत्ययः । स लुग्वत् । अन्यत्साधनं तु पूर्ववत् । बिभरांचकार । बिभरांचक्रे । बिभरामास । बिभरांबभूव । एतानि रूपाणि सुगमानि । यादादौ । भ्रियात् । उः । अनेन गुणाभावः । षत्वं । भृषीष्ट । गुणः । भर्ता । भर्ता । हनृतः स्यपः । अनेनेट् प्रत्ययो भवति । गुणः । षत्वं । भरिष्यति । भरिष्यते । दिबादावट् । अभरिष्यत् । अभरिष्यत । एतानि रूपाणि सुगमानि । लुङ्लकारे णित्त्वात्सेर्वृद्धिः । दिबादावट् । षत्वम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः । अन्यानि सुगमानि । आत्मनेपदे लोपो ह्रस्वाज्झसे । अनेन सेर्लोपो भवति । अभृत । षत्वं । अभृषातां । अभृषत । आतोन्तोदनतः । डुदाञ् दाने । हुञो इतौ । पूर्ववत् प्रत्यया भवन्ति । ह्वादेर्द्विश्च । ह्रस्वः । ददाति । ददा तस् । इति जाते । सूत्रम् ।

दादेः । द्विरुक्तस्य दाधोराकारस्य लोपो भवति ङिते परे । दत्तः ददति । दत्ते ददाते ददते । दद्यात् ददीत । ददातु दत्ताद्वा दत्ताम् ददतु ।

दादेः । दाधातुरादिर्यस्य सः दादिः तस्य दादेः ( ष. ए. ) एकपदं सूत्रम् । द्विरुक्तस्य दादेर्धातोराकारस्य लोपो भवति ङिति विभक्तौ । स्वरे हसे च परे । द्वेस्ताविल्यस्यापवादः । अनेन पिद्वर्जे षट्स्वपि वचनेषु आकारलोपः । तकारथकारेषु खसेचपा० । अनेन दकारस्य तकारः । दत्तः । ददति । ददासि । दत्थः । दत्थ । ददामि । दद्वः । दद्मः । दत्ते । ददाते । ददते । दत्से । ददाथे । दध्वे । ददे । दद्वहे। दद्महे । एतानि सर्वाणि रूपाणि । एतैरेव सूत्रैः सिध्यन्ति । दद्यात् । दद्याताम् । दद्युः । अन्यानि सुगमानि । ददीत । ददीयाताम् । ददीरन् । ददातु । दत्तात् । दत्ताम् । ददतु । ' ददाहि ' इति जाते । सूत्रम् ।

दां हौ । दाधोराकारस्यैकारो भवति पूर्वस्य च लोपो भवति हौ परे । देहि दत्ताम् । अददात् अदत्ताम् अददुः । अदत्त । ददौ, ददे, देयात्, दासीष्ट, दाता, दास्यति, दास्यते,

**अदास्यत्, अदास्यत । दादेः पे । अदात् अदाताम् अदुः ।**

**दां हौ ।** दां ( ष. ब. ) हौ ( स. ए. ) द्विपदं सूत्रम् । दादीनां । दा धा इति धातूनां द्विवचनस्य द्वित्वस्य लोपो भवति । आकारस्य च एकारो भवति । देहि । द्वितीये तु । तातङादेशः । आकारलोपः । दत्तात् । दत्तं । दत्त । उत्तमपुरुषे सवर्णे । ददामि । ददाव । ददाम । दत्तां । ददातां । आतोन्तो० । ददताम् । अन्यानि सुगमानि । अददात् । अदत्तां । अत उस् । अददुः । अददाः । अदत्तम् । अदत्त । सवर्णे० । अददाम् । अदद्व । अदद्म । अदत्त । अददातां । अददत । अदत्थाः । अन्यानि । सुगमानि लिट्लकारे । द्विश्च । ह्रस्वः । आतो णप् मौ । ददौ । आतोऽनपि । ददतुः । ददुः । अत्वतो० । ददिथ । ददाथ । अन्यानि सुगमानि । आत्मनेपदे । ददे । ददाते । ददिरे । 'दा यात्' इति जाते । दादेरे । अनेनाकारस्यैकारः । ठः । देयात् । देयास्ताम् । देयासुः । दासीष्ट । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे । 'अदासि दिप्' इति जाते । दादेः पे । अनेन सेर्लोपः । अदात् । अदातां । 'अ दा सि अन्' इति जाते । स्याविदः । दादेः पे । अदुः । अदाः । अदातं । अदात । अदाम् । अदाव । अदाम । 'अदासि तन्' इति जाते । सूत्रम् ।

**दाधास्थामित्त्वं सेर्ङित्त्वम् । ङित्वान्न गुणः । लोपो ह्रस्वाज्झसे । अदित अदिषाताम् अदिषत । डुधाञ् धारणपोषणयोः । दधाति । दादेः ।**

**दाधास्थाम् ।** दाधास्थाधातूनाम् इत्वं भवति । सेर्ङित्त्वं । च । आत्मनेपदे ङित्त्वात् गुणाभावः । लोपो ह्रस्वाज्झसे । अनेन सेर्लोपः । अदित । अदिषाताम् । आतोन्तो० । अदिषत । डुधाञ् धारणपोषणयोः । डुञावितौ । पूर्ववत् प्रत्यया भवन्ति । ह्वादेर्द्विश्च । अनेनापो लोपः । धातोर्द्वित्वं । ह्रस्वः । झपानां जबचपाः । दधाति । 'दधा तस्' इति जाते । दादेः । अनेनाकारस्य लोपः । 'दध् तस्' इति जाते । सूत्रम् ।

**पूर्वस्य ङिति झसे धः । झभान्तस्य दधातेः पूर्वदकारस्य धकारो भवति ङिति झसे परे । धत्तः दधति । धत्ते, दध्यात्, दधीत, दधातु, धेहि, धत्ताम्, अदधात्, अदधाः, अधत्त, दधौ, दधे, धेयात्, धासीष्ट, धाता, धास्यति, धास्यते, अधास्यत्, अधास्यत । दादेः पे । अधात्, अधित । णिजिर्**

शौचपोषणयोः। इरितः। आदेः ष्णः सः।

**पूर्वस्य ङिति झसे घः।** पूर्वस्य ( ष. ए. ) ङिति ( स. ए. ) झसे (स.ए.) घः ( प्र. ए. ) झभान्तस्य धातोः पूर्वस्य दकारस्य धकारो भवति। ञिति झसे प्रत्यये परे। अनेन दकारस्य धकारः। 'ध् ध् तस्' इति जाते। अत्र 'तथोर्धः' अनेन तकारस्य धकारे प्राप्ते। दधातिं विनेत्युक्तत्वात् न भवति। खसेचपा०। धत्तः। दधाति। दधासि। धत्थः। धत्थ दधामि। दध्वः। दध्मः। धत्ते दधाते। आतोन्तो०। दधते। धत्से। दधाथे। धद्ध्वे। दधे। दध्वहे। दध्महे। दादेः। दध्यात्। दध्यातां। दध्युः। दधीत। दधीयातां। दधीरन्। दधातु। धत्तात्। धत्ताम्। द्विरुक्तात्। दधतु। दां हौ। धेहि। धत्तात्। धत्तं। धत्त। सवर्णे०। दधानि। दधाव। दधाम। धत्तां। दधातां। दधतां। धत्स्व। दधाथां। धद्ध्वं। एऐऐ। दधै। दधावहे। दधामहे। अदधात्। अधत्ताम्। अन उस्। अदधुः। अधत्त। अदधाताम्। अदधत। अन्यानि सुगमानि। लिट्लकारे। द्विश्च। सस्वरादिः। झपानां। आतो णप् डौ। दधौ। आतोऽनपि। अनेनाकारस्य लोपः। दधतुः। दधुः। दधिथ। दधाथ। आत्मनेपदे। आतोऽनपि। दधे। दधाते। दधिरे। दादेरः। धेयात्। धेयास्तां। धेयासुः। धासीष्ट। धाता। लुङ्लकारे। दादेः पे। अनेन सेर्लोपः। अधात्। अधातां स्याविदः। अधुः। आत्मनेपदे। 'दाधास्थाम्' अनेन इत्वम्। सेर्ङित्त्वम्। ङित्त्वात् लोपो ह्रस्वाज्झसे। अनेन सेर्लोपः। अधित। अधिषाताम्। आतोन्तो०। अधिषत। अधिथाः। अधिषाथाम्। अधिध्वम्। अधिषि। अधिष्वहि। अधिष्महि। णिजिर् शौचपोषणयोः। इरित्। आदेःष्णः स्नः। अनेन णकारस्य नकारः। पूर्ववत् प्रत्ययाः। ह्वादेर्द्विश्च 'निनिज् तिप्' इति जाते। सूत्रम्।

निजां गुणः। निज्विज्विषां पूर्वस्य गुणो भवति लुकि सति। नेनेक्ति नेनिक्तः नेनिजति। नेनेक्षि नेनिक्थः नेनिक्थ। नेनेज्मि नेनिज्वः नेनिज्मः। नेनिक्ते, नेनिज्यात्, नेनिजति। नेनेक्तु-नेनिक्तात्, नेनिक्ताम् नेनिजतु। नेनिग्धि-नेनिक्तात्, नेनिक्तं नेनिक्त।

**निजां गुणः।** निजां ( ष. ब. )। गुणः ( प्र० ए० ) निज्विज्विषां धातूनां पूर्वस्य गुणो भवति। लुकि कृते सति। अनेन चतुर्षु लकारेषु पूर्वस्य गुणो भवति। 'ने निज् तिप्' इति जाते। 'उपधाया लघोः' अनेन गुणः। नेनेज् तिप् इति जाते। खसेचपा०। नेनेक्ति। नेनिक्तः। नेनिजति। नेनेज् सिप् इति जाते

खसेचपा० । क्लिलात्० । कष० नेनेक्षि । नेनिक्थः । नेनिक्थ । अन्यानि रूपाणि सन्ति मूले । नेनिक्ते । नेनिजाते । आतोन्तो० । नेनिजते । नेनिज्यात् । नेनिज्यास्तां । नेनिज्युः । नेनिजीत । नेनेक्तु । नेनिक्तात् । नेनिक्तां । द्विरुक्तात् । नेनिजतु । नेनिज् हि इति जाते । झसाद्धिर्धिः । अनेन हेर्धिः । चोः कुः । झबेजबाः । नेनिग्धि । नेनिक्तात् । नेनिक्तं । नेनिक्त । नेनिज् आ तिप् इति स्थिते । उपधाया लघोः । अनेन गुणे प्राप्ते । सूत्रम् ।

द्वेः स्वरेऽपि नोपधागुणः । द्विरुक्तस्य धातोरपि विषये पिति स्वरे उपधाया गुणो न भवति । नेनिजानि नेनिजाव नेनिजाम । नेनिक्ताम् । अनेनेक्-अनेनेग् अनेनिक्ताम् अनेनिजुः । अनेनिक्त । निनेज निनिजे निज्यात् । सिस्योः। निक्षीष्ट, नेक्ता, नेक्ता, नेक्ष्यति, नेक्ष्यते, अनेक्ष्यत्, अनेक्ष्यत, अनिजत् अनिजताम् । अनिटो नामिवतः । अनैक्षीत् अनैक्ताम् अनैक्षुः। विजिर् पृथग्भावे । वेवेक्ति। नेनेक्तिवत् । विष्लृ व्याप्तौ । वेवेष्टि, वेविष्टे, वेविष्यात्, वेविषीत, वेवेष्टु, वेविष्टाम्, अवेवेट्-अवेवेड्,विवेष, विविषे, विष्यात्, विक्षीष्ट, वेष्टा, वेक्ष्यति, वेक्ष्यते, अवेक्ष्यत्, अवेक्ष्यत। लित्पुषादेर्ङः। अविषत्। ङो वेति केचित्। हशषान्तात्सक्। अविक्षत् अविक्षत ॥ इति जुहोत्यादिषूभयपदिप्रक्रिया ॥१॥ इति लुग्विकरणा ह्वादयः ॥ इति तृतीयगणः ॥ ३ ॥

द्वेः स्वरेऽपि नोपधागुणः । द्वेः ( ष. ए. ) स्वरे ( स. ए. ) अपि ( स. ए. ) न (अव्ययम्) उपधायाः ( ष. ए. ) गुणः ( प्र. ए. ) द्विरुक्तस्य धातोरपि विषये पिति स्वरे परे उपधाया गुणो न भवति । अनेन गुणनिषेधोऽत्र । नेनिजानि । नेनिजाव । नेनिजाम । नेनिक्तां । नेनिजातां । नेनिजताम् । नेनिज् स्व इति जाते । चोः कुः । खसे चपा०। षत्वं । कषसंयोगे क्षः । नेनिक्ष्व । अन्यानि सुगमानि । लङ्लकारे प्रथमपुरुषस्यैकवचने । नेनेज् दिप् इति जाते चोः कुः । दिस्योर्हसात् । अनेन सेर्लोपो भवति , वावसाने । दिवादावट् । अनेनेक् अनेनेग् । अनेनिक्ता । अनेनिजुः । अनेनेक् । अनेनेग् । अनेनिक्तं । अनेनिक्त । अनेनिजम् । अनेनिक्त । अनेनिजातां । आतोन्तो० । अनेनिजत् । अनेनिक्थाः । अनेनिजाथां ।

अनेनिगुध्वं। लिट्लकारे। द्विश्च। अनेन द्वित्वं। पूर्वस्य, 'उपधाया लघोः' अनेन गुणो भवति। निनेज। निनिजतुः। निनिजुः। उपधायाः। निनेजिथ। अन्यानि सुगमानि। निनिजे। निनिजाते। निनिजिरे। षत्वं। निनिजिषे। निनिजाथे। निनिजिध्वे। निज्यात्। निज्यास्तां। निज्यासुः। सिस्योः। अनेनात्र गुणाभावो भवति। निज् सीष्ट। इति जाते। चोः कुः। खसे०। षत्वं। कषसंयोगे क्षः। निक्षीष्ट। निक्षीयास्तां। निक्षीरन्। इत्यादीनि। उपधाया लघोः। चोः कुः। नेक्ता। नेक्तारौ। नेक्तारः। नेज् स्यप् तिप् इति जाते। कुत्वं। षत्वं। कषसंयोगे०। नेक्ष्यति। नेक्ष्यते। अनेक्ष्यत्। अनेक्ष्यत। लुङ्लकारे। 'अनिज् सि ईट् दिप्' इति जाते। अनिटो ना०। अनेन वृद्धिः। कुत्वं। षत्वं। कषसंयोगे०। अनैक्षीत्। अनैक्तां। अनैक्षुः। इत्यादीनि। आत्मनेपदे वृद्धिर्न भवति। अनिक्त। अत्र झसात्। अनेन सेर्लोपो भवति। अनिक्षातां। आतोन्तो०। अनिक्षत। अनिक्थाः। अनिक्षाथां। अनिगुध्वं। अस्य धातोरिरितो वा। अनेन ङप्रत्ययो भवति। ङित्त्वाद्गुणाभावः। अनिजत्। अनिजतां। अनिजन्। इत्यादीनि। विजिर् पृथग्भावे। पूर्ववत् तिबादयस्ते आदयश्च प्रत्यया भवन्ति। अप् कर्तरि। ह्वादेर्द्विश्च। चोः कुः। खसे चपा झसानां। निजां गुणः। उपधाया लघोः। वेवेक्ति। वेविक्तः। द्विरुक्तात्। वेविजति। अयं धातुर्नेनेक्तिवत् ज्ञातव्यो न कश्चित्विशेषः। विष्लृ व्याप्तौ। लृकार इत्। पूर्ववत् प्रत्यया भवन्ति। ह्वादेर्द्विश्च। निजां गुणः। अनेन पूर्वस्य गुणः। उपधाया लघोः। अनेन द्वितीयस्य गुणो भवति। ष्टुत्वं। वेवेष्टि। वेविष्टः। द्विरुक्तात्। वेविषति। षढोः कः से। अनेन षस्य कः वेवेक्षि। इत्यादीनि। वेविष्टे। वेविष्यात्। वेविषीत। वेवेष्टु। वेविष्टात्। वेविष्टां। वेविषतु। वेविष् हि इति जाते। झसा०। षोडः। वेविड्ढि। अन्यानि सुगमानि। वेविष्ट। वेविषातां। वेविषत। अवेवेष् दिप्। इति जाते षोडः। दिस्योर्हसात्। अनेन दिप्सिपोर्लोपः। वावसाने। अवेवेट्। अवेवेड्। अवेविष्टाम। अवेविषुः। अन्यानि सुगमानि। अवेविष्ट। अवेविषातां। अवेविषत। एतानि सर्वाणि रूपाणि। एतैरेव सूत्रैः सिध्यन्ति। ततस्तेषां व्याख्यानस्यानावश्यकत्वम्। लिट्लकारे द्विश्च। पूर्वस्य। उपधायाः। विवेष। विविषतुः। विविषुः। विवेषिथ। इत्यादीनि। आत्मनेपदे विविषे। विविषाते। विविषिरे। विविषिषे। विष्यात्। विष् सीष्ट इति स्थिते। षढोः कः से। षत्वं। कषसं०। सिस्योः। अनेन गुणाभावः। विक्षीष्ट। ष्टुत्वं। वेष्टा। वेष्टा। षढोः कः से। किलात्०। कषसंयोगे०। उपधायाः। वेक्ष्यति। वेक्ष्यते। अवेक्ष्यत्। अवेक्ष्यत। एतेषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे। लिरपुषादेर्ङः। अनेन ङप्रत्ययो भवति। ङित्त्वात् गुणाभावः। दिवादावद्। अविषत्। अविषताम्। अ-

विषन्। क्सप्रत्ययो वा भवति । इति केचिदाचार्या वदन्ति । तत्पक्षे हशषान्तात्सक् । किस्त्वाद्गुणाभावः । कत्वं । षत्वं । कषसं० । अविक्षत् । अविक्षतां । अविक्षन् । आत्मनेपदेऽपि । 'हशषान्तात्' अनेन सक्प्रत्ययो भवति । अविक्षत । आतिसकोकारलोपः स्वरे । अनेनाकारस्यलोपः अविक्षातां । आतोन्तो० । अविक्षत । इत्युभयपदिप्रक्रिया समाप्ता । इति लुग्विकरणा ह्वादयो धातवः कथिताः ॥ समाप्तोऽयं ह्वादिगणः ।

## ॥ अथ दिवादयः ॥

**दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ।**

**अथ दिवादिगणः कथ्यते ।** तत्रादौ परस्मैपदिप्रक्रिया कथ्यते । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । दिव्धातुरेष्वर्थेषु वर्त्तते । तत्र क्रीडा खेलनम् । विजिगीषा जेतुमिच्छा । कान्तिरभिलाषः । शेषाः प्रतीतार्थाः । प्रसिद्धिस्तु क्रीडार्थस्यैव द्युत्यर्थस्य च । उकार उदित्कार्यार्थः । उदितः क्तो वेट् इति इड्विकल्पार्थः । परतोऽन्यत् । अनेन परस्मैपदं भवत्यस्य । तिबादयः । प्रत्यया भवन्ति । तदा ' दिव् तिप् ' इति जाते सूत्रम् ।

**दिवादेर्यः । दिवादेर्गणाद्यः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । य्वोर्विहसे । दीव्यति, दीव्येत्, दीव्यतु, अदीव्यत् । दिदेव दिदिवतुः दिदिवुः । दिदेविथ । दीव्यात्, देविता, देविष्यति, अदेविष्यत्,अदेवीत्। षिवु तन्तुसन्ताने। सीव्यति, सीव्येत्, सीव्यतु, असीव्यत्, सीषेव, सीव्यात्, सेविता, सेविष्यति, असेविष्यत्, असेवीत् । नृती गात्रविक्षेपे । ईकारेत् । नृत्यति, नृत्येत्, नृत्यतु, अनृत्यत् । ननर्त ननृततुः ननृतुः । नृत्यात्, नर्तिता, नर्तिष्यति, अनर्तिष्यत् ।**

**दिवादेर्यः ।** दिवादेः ( पं. ए. ) यः ( प्र. ए. ) द्विपदं सूत्रम् । दिवादेर्गणात् चतुर्षु तिबादिषु दिप्पर्यन्तेषु प्रत्ययेषु परेषु यः प्रत्ययो भवति । सस्वरो यः प्रत्ययो भवति । अयमपोऽपवादः । अनेन यः प्रत्ययो भवति । य्वोर्विहसे । अनेन दीर्घो भवति । दीव्यति । दीव्यतः । दीव्यन्ति । अदे । अनेनाकारस्य लोपः । दीव्यसि । दीव्यथः । दीव्यथ । दीव्यामि । व्योरा । दीव्यावः । दीव्यामः । ननु 'अप्

कर्तरि'। इति सामान्येनोक्तत्वात् दिवादेरपि अप्प्रत्ययः क्रियतां तत्राह। अपोऽपवादः। दिवादेरारभ्य क्र्यादिगणो यावत् तावत् अप्प्रत्ययो न भवति इत्यर्थः। यादादौ तु भवतिवत् या इत्यादीनि सूत्राणि योज्यानि। दीव्येत्। दीव्येतां। युस इट्। अ इए। दीव्येयुः। दीव्येः। दीव्येतम्। दीव्येत। यामियं। दीव्येयं। दीव्येव। दीव्येम। तुबादौ यप्रत्यये कृते सति भवतिवत्कार्यं भवति। दीव्यतु। दीव्यतात्। दीव्यतां। दीव्यन्तु। अस्मिन्। अदे। अनेनाकारस्य लोपो भवति। अतः। दीव्य। दीव्यतात्। दीव्यतं। दीव्यत। सवर्णे०। दीव्यानि। दीव्याव। दीव्याम। दिबादावट्। अन्यत् तु भवतिवत्। अदीव्यत्। अदीव्यताम्। अदे। अदीव्यन्। अन्यानि सुगमानि। लिट्लकारे। द्विश्च। पूर्वस्य। उपधायाः। दिदेव। दिदिवतुः। दिदिवुः। गुणः। दिदेविथ। शेषाणि सुगमानि। य्वोर्विहसे। दीव्यात्। दीव्यास्तां। उपधाया लघोः। सिसता० अनेनेट्। देविता। अन्येषां लकाराणां रूपाणि सुगमानि। लुङ्लकारे द्वौ इटौ। अडागमः। गुणः। अदेवीत्। अदेविष्टाम्। अदेविषुः। षिवु तंतुसंताने। उकारः। आदेः ष्णः स्नः। तिवादयः। दिवादेर्यः। य्वोर्विहसे। अनेन दीर्घः। सीव्यति। सीव्येत्। सीव्यतु। असीव्यत्। एतेषां रूपाणि सुगमान्यतो व्याख्यानं न कृतम्। लिट्लकारे। द्वित्वं। पूर्वस्य। उपधायाः। क्लात्०। सिषेव। सिषिवतुः। सिषिवुः। गुणः। सिषेविथ। य्वोर्विहसे। सीव्यात्। सीव्यास्तां। सीव्यासुः। उपधायाः। सिसता० अनेनेट्। सेविता। सेविष्यति। अत्र षत्वम्। लुङ्लकारे। द्वौ इटौ। इट ईटि। गुणः। अडागमः। असेवीत्। असेविष्टाम्। असेविषुः। इत्यादीनि रूपाणि ज्ञातव्यानि। नृती गात्रविक्षेपे। पूर्ववत् तिवादयो भवन्ति। दिवादेर्यः। अनेन यप्रत्ययो भवति। ईकार इत्। नृत्यति नृत्यतः नृत्यन्ति। नृत्येत्। नृत्यतु। अनृत्यत्। लिट्लकारे द्वित्वं। पूर्वस्य रः। उपधाया लघोः। ननर्त। किन्त्वात्र गुणः। ननृततुः। ननृतुः। ननर्तिथ। अन्यानि सुगमानि। नृत्यात्। सिसता० अनेनेट् प्रत्ययो भवति 'गुणः' अनेन गुणो भवति। नर्तिता। अन्यानि सुगमानि। नर्तिष्यति। षत्वं भवति। अनर्तिष्यत्। सूत्रम्।

नृवृतृदृछृदृचृतृकृतां सस्यासेरिट् वा वक्तव्यः। नर्त्स्यति, अनर्त्स्यत्, अनर्तीत्। जृइर् वयोहानौ। ऋत इर्। य्वोर्विहसे। जीर्यति, जीर्येत्, जीर्यतु, अजीर्यत्, जजार। गुणः। जजरतुः जजरुः। जीर्यात्। ईटो ग्रहाम्। जरीता-जरिता, जरिष्यति-जरीष्यति, अजरिष्यत्-अजरीष्यत्। इरितो वा। अजारत् अजरीत्। शो तनूकरणे।

नृत्तृद्० । नृतवृदच्छृदचृतकृतां धातूनां असेः स्य इड् वा वक्तव्यः । अनेनास्य से परे वा इड् भवति । उपधाया लघोः । अनेन गुणो भवति । राद्यपोद्विः। नर्त्स्यति । अनर्त्स्यत् । रूपाणि सुगमानि सन्ति । लुङ्लकारे । 'अनृत् सि दिप्' इति जाते सिसता०। सेः । इट ईटि । गुणः । अनर्तीत् । अनर्तिष्टां। अनर्तिषुः। अन्यानि सुगमानि । जृइर् । वयोहानौ । इर् इत् 'इरितो वा' इति सूत्रस्यविशेषणार्थः । दिवादेर्यः । जृ य तिप् इति जाते । ऋत इर् । अनेन ऋकारस्य इर् । य्वोर्विहसे । अनेन दीर्घः । जीर्यति । जीर्यतः । अदे । जीर्यन्ति । जीर्येत् । जीर्यतु । जीर्यतात् । जीर्यताम् । अदे । जीर्यन्तु । जीर्य । अन्यानि सुकराणि । दिवादावट् । अजीर्यत् । अजीर्यताम् । अजीर्यन् । लिट्लकारे । द्वित्वं । सस्वरादिः । रः । धातोर्नामिनः । अनेन वृद्धिः । जजार । ऋसंयोगात् । अनेनाकित्त्वाद्गुणो भवति । गुणः । जजरतुः । जजरुः । जजरिथ । जृयात् । इति स्थिते । ऋत इर् । अनेनेर् । य्वोर्विहसे । अनेन दीर्घः । जीर्यात् । जृ ता इति जाते । सिसता० अनेनेट् । गुणो भवति । जरिता । ईटो ग्रहाम् अनेन वा दीर्घः । जरीता । एवमन्येषामपि लकाराणां रूपाणि ज्ञेयानि अस्य धातोः । इरितो वा अनेन ङप्रत्ययो भवति । दृशादेः । अनेन गुणः । अजरत् । अजरताम्। अजरन् । ङप्रत्ययाभावे । सिप्रत्ययो भवति । सेर्णित्त्वाद् वृद्धिः । अन्यत् साधनं तु पूर्ववत् । दिवादावट् । अजारीत् । अजारिष्टाम्। अजारिषुः । अन्यानि सुगमानि । शो तनूकरणे । तिवादयो भवन्ति । दिवादेर्यः । शो य तिप् इति जाते । सूत्रम् ।

**य्योः** । यप्रत्यये परे धातोरोकारस्य लोपो भवति । श्यति, श्येत्, श्यतु, अश्यत्, शशौ, शायात्, शाता, शास्यति, अशास्यत् । वा सिलोपः । अशात्, अशासीत् । छो छेदने । छ्यति, छ्येत्, छ्यतु, अछ्यत्, चच्छौ, छायात्, छाता, छास्यति, अच्छास्यत्, अच्छात्, अच्छासीत् । षोऽन्तकर्मणि । स्यति, स्येत्, स्यतु, अस्यत्, ससौ, सेयात्, साता, सास्यति, असास्यत्, असात्, असासीत्। दो अवखण्डने । द्यति, द्येत्, द्यतु, अद्यत्, ददौ, देयात्, दाता, दास्यति, अदास्यत्, अदात् । राध् साध् संसिद्धौ । राध्यति, राध्येत्, राध्यतु, अराध्यत्, रराध ।

य्योः । यि ( स. ए. ) ओः ( ष. ए. ) यप्रत्यये परे सति धातोरोकारस्य

लोपो भवति। अनेन ओकारस्य लोपः। स्वरहीनं०। श्यति। श्यतः। अदे। श्यन्ति। श्येत्। श्येतां। श्येयुः। श्यतु। श्यतात्। श्यतां। श्यन्तु। अश्यत्। अश्यतां। अश्यन्। सर्वाणि रूपाणि सुगमानि। लिट्लकारे। संध्यक्षराणां०। द्विश्च। आतो णप् डौ। शशौ। आतोऽनपि। अनेनान्यत्राकारस्य लोपो भवति। शशतुः। शशुः। अत्वतः। शशिथ। शशाथ। संध्यक्षराणां०। शायात्। शाता। अन्येषां सुगमानि। लुङ्लकारे। अशासि दिप् इति जाते। शाच्छासा० अनेन वा सेर्लोपः। दिवादावट्। अशात्। अशातां। अशुः इत्यादीनि। सेर्लोपाभावपक्षे। 'आदन्तानाम्' अनेनेट्सकौ। अशासीत्। अशासिष्टाम्। अशासिषुः। द्वयोरूपयोः षत्वं भवति। छो छेदने। प्रत्ययादयश्च पूर्ववत् भवन्ति। य्योः। अनेन यकारे परे ओकारस्य लोपः। छ्यति। छ्येत्। छ्यतु। दिवादावट्। अछ्यत्। चतुर्णां लकाराणां रूपाणि सुगमानि सन्ति। लिट्लकारे छो णप् इति स्थिते। संध्यक्ष०। द्वित्वं। ह्रस्वः। आतो णप् डौ। झपानां। चच्छौ। आतोऽनपि। अनेनान्यत्राकारलोपः। चच्छतुः। चच्छुः। चच्छिथ। चच्छाथ। संध्यक्षराणां०। छायात्। छायास्तां। छायासुः। छाता। अन्यानि सुगमानि। लुङ्लकारे। शाच्छासा० अनेन वा सेर्लोपो भवति। तदा। अच्छात्। अच्छातां। अच्छुः। इत्यादीनि। यदा सेर्लोपो न भवति तदा आदन्तानां० अनेनेट्सकौ भवतः। दिवादावट्। अच्छासीत्। अच्छासिष्टाम्। षत्वं। ष्टुत्वं। अच्छासिषुः। षो अन्तकर्मणि। आदेः ष्णः स्नः। य्योः। स्यति। लिट्। ससौ। लुङ्। वा सिलोपः। असात्। असासीत्। दो अवखण्डने। तिबादयः। दिवादेर्यः। य्योः। द्यति। द्यतः। अदे। द्यन्ति। द्येत्। द्यतु। द्यतात्। द्यताम्। अदे। अनेन अकारस्य लोपः। द्यन्तु। द्य। अन्यानि सुगमानि। अद्यत्। अद्यताम्। अद्यन्। अद्यः। लिट्लकारे 'दो णप्' इति जाते। संध्यक्षराणां०। द्वित्वं। ह्रस्वः। आतो णप् डौ। अनेन आकारस्य लोपो भवति। ददौ। आतोऽनपि। ददतुः। ददुः। ददिथ। ददाथ। इत्यादीनि। संध्यक्षराणां। दायात्। इति जाते। दादेरेः। अनेन आकारस्य एकारः। देयात्। दाता। लुङ्लकारे। दादेः पे। अनेन सेर्लोपो भवति। अदात्। अदातां। अदुः। इत्यादीनि। राध् साध् संसिद्धौ। तिबादयः। दिवादेर्यः। स्वरहीनं। राध्यति। राध्यतः। राध्यन्ति। राध्येत्। राध्येतां। राध्येयुः। राध्यतु। राध्यतात्। राध्यतां। अदे०। राध्यन्तु। अराध्यत्। अराध्यतां। अराध्यन्। लिट्लकारे। राध् णप् इति जाते। द्विश्च। ह्रस्वः। रराध। सूत्रम्।

राधतेर्हिंसायां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वा।

रेधतुः रराधतुः। राध्यात्, राद्धा, रात्स्यति, अरात्स्यत्, अ-

रात्सीत्, अराद्धाम् । इष् सर्पणे । इष्यति, इष्येत्, इष्यतु, ऐष्यत्, इयेष, इष्यात्, एषिता, एषिष्यति, ऐषिष्यत्, ऐषीत् । व्यध् ताडने । ग्रहां क्ङिति च । विध्यति, विध्येत्, विध्यतु, अविध्यत्, विव्याध, व्यद्धा, व्यत्स्यति, अव्यत्स्यत् । अव्यात्सीत्, अव्याद्धाम्, अव्यात्सुः । पुष् । पुष्टौ । पुष्यति, पुष्येत्, पुष्यतु, अपुष्यत्, पुपोष, पुष्यात्, पोष्टा, पोक्ष्यति, अपोक्ष्यत्, अपुषत् । श्लिष् आलिङ्गने । श्लिष्यति, श्लिष्येत्, श्लिष्यतु, अश्लिष्यत्, शिश्लेष, श्लिष्यात्, श्लेष्टा, श्लेक्ष्यति, अश्लेक्ष्यत् । इशषान्तात्सक् ।

राधतेः । राधतेर्धातोर्हिंसायां । किति णादौ परे सेटि थपि परे च एत्वपूर्वलोपौ भवतः । अनेनास्य धातोर्वा एत्वपूर्वलोपौ भवतः । रेधतुः । रराधतुः । इत्यादीनि रूपाणि भवन्ति । इति ज्ञातव्यम् । थपि रराधिथ । रराद्ध । रेधिथ । राध्यात् । राध्यास्तां । राध्यासुः । 'राध् ता' इति जाते । तथोर्धः । अनेन तकारस्य धकारः । झबे जबाः । राद्धा । राद्धारौ । राद्धारः । राध् स्यप् तिप् इति जाते । खसे चपा झसानां । अनेन धस्य तः । रात्स्यति । दिवादावद् । अरात्स्यत् लुङ्लकारे । अराध् सि ईट् दिप् इति जाते । खसे० । स्वरहीनं । वावसाने । अरात्सीत् । झसात् । अनेन सेर्लोपो भवति । अराद्धाम् । अरात्सुः । इत्यादीनि रूपाणि ज्ञातव्यानि । साध् धातोरपि रूपाणि राध्धातुवत् ज्ञातव्यानि । अस्यैत्वपूर्वलोपौ न भवतः । साध्यति । लिट्लकारे द्वित्वादिकं सर्वं भवति । ससाध । ससाधतुः । ससाधुः । ससाधिथ । तथोर्धः । अनेन थकारस्य धत्वं । झबेजबाः । ससाद्ध । इत्यादीनि रूपाणि भवन्ति । लुङ्लकारे । अरात्सीत् । अराद्धाम् । अरात्सुः । इष् सर्पणे । तिबादयो भवन्ति । दिवादेर्यः । अनेन यप्रत्ययो भवति । इष्यति । इष्यतः । इष्यन्ति । इत्यादीनि । इष्येत् । इष्येताम् । इष्येयुः । इष्यतु । इष्यतात् । इष्यताम् । अदे । इष्यन्तु । स्वरादित्वात् । द्वावड्डागमौ । अइए । एऐऐ । ऐष्यत् । ऐष्यताम् । ऐष्यन् । लिट्लकारे । द्विश्च । सस्वरादिः । उपधायाः । अनेन गुणः । असवर्णे । इयेष । सवर्णे० । ईषतुः । ईषुः । गुणः । इयेषिथ । इत्यादीनि । इष्यात् । उपधाया लघोः । अनेन गुणो भवति । सिसता० अनेनेट् । एषिता । एषितारौ । एषितारः । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ भवतः । इट ईटि । अनेन सेर्लोपो भवति । द्वावड्डागमौ भवतः । ऐषीत् । ऐषिष्टां । ऐषिषुः । इत्यादी-

नि भवन्ति । व्यध् ताडने । तिबादयः । दिवादेर्यः । अनेन यप्रत्ययो भवति । ग्रहां क्विति च । अनेन संप्रसारणं भवति । यकारस्य सस्वरस्य इकारः । विध्यति । विध्यतः । अदे । विध्यन्ति । इत्यादीनि । विध्येत् । विध्यतु । अविध्यत् । अविध्यताम् । अविध्यन् । 'व्यध् णप्' इति स्थिते । द्विश्च । सस्वरादिः । व्य व्यध् णप् इति जाते । 'णबादौ पूर्वस्य' अनेन संप्रसारणम् । पूर्वस्य । अत उपधायाः । विव्याध । 'व्य व्यध् अतुस्' इति जाते । णादौ पूर्वस्य । ग्रहां क्विति च । विविधतुः । विविधुः । विव्यधिथ । अत्यतः । तथोर्धः । झबे जबाः । विव्यद्ध । संप्रसारणं । विध्यात् । विध्यास्ताम् । विध्यासुः । तथोर्धः । झबे जबाः । व्यद्धा । व्यद्धारौ । व्यद्धारः । खसे चपा । व्यत्स्यति । अव्यत्स्यत् । लुङ्लकारे । अ व्यध् सि दिप् इति जाते । सेः । अनेन ईट् । खसे चपा झसानां । सेर्णित्त्वात् । वृद्धिः । अव्यात्सीत् । झसात् । अनेन सेर्लोपो भवति । तथोर्धः । अव्याद्धाम् । अव्यात्सुः । अव्यात्सीः । अव्याद्धम् । अव्याद्ध । अव्यात्सम् । अव्यात्स्व । अव्यात्स्म । पुष् पुष्टौ । तिबादयः । दिवादेर्यः । पुष्यति । अन्यानि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य, 'उपधाया लघोः' अनेन गुणः । पुपोष । पुपुषतुः । पुपुषुः । पुपोषिथ । पुष्यात् । उपधायाः । ष्टुत्वं । पोष्टा । 'पोष् स्यप् तिप्' इति जाते । षढोः कः से । किलात्० । कष० । पोक्ष्यति । अपोक्ष्यत् । लुङ्लकारे । लित्पुषादेर्ङः । ङित्त्वात् गुणाभावः । दिवादावट् । अपुषत् अपुषतां अपुषन् । श्लिष् आलिङ्गने । तिबादयः । दिवादेर्यः । श्लिष्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । उपधाया लघोः । शिश्लेष । शिश्लिषतुः । शिश्लिषुः । शिश्लेषिथ । इत्यादीनि । श्लिष्यात् । श्लिष् ता इति स्थिते । गुणः । ष्टुत्वम् । श्लेष्टा । श्लिष् स्यप् तिप् । इति जाते । गुणः । षढोः । षत्वं । कष० । श्लेक्ष्यति । अश्लेक्ष्यत् । अश्लेक्ष्यतां । अश्लेक्ष्यन् । लुङ्लकारे । इशषान्तात्सक् । अनेन सक्प्रत्ययः । दिवादावट् । षढोः कः से । किलात्० । कष० । अश्लिक्षत् । अश्लिक्षताम् । अश्लिक्षन् । सूत्रम् ।

श्लिषेरालिङ्गने सक् । ङापवादः । अश्लिक्षत्कन्यां चैत्रः । अनालिङ्गने समश्लिषत् जतु काष्ठम् । तृप् प्रीणने । तृप्यति, तृप्येत, तृप्यतु, अतृप्यत, ततर्प, तृप्यात् । रधादित्वादिड्विकल्पेन । तर्पिता-त्रप्ता-तर्प्ता । रारो झसे दृशाम् । तर्पिष्यति-त्रप्स्यति-तर्प्स्यति अतर्पिष्यत्-अत्रप्स्यत्-अतर्प्स्यत् ।

श्लिषेः । श्लिषेर्धातोरालिङ्गनेऽर्थे सक्प्रत्ययो भवति । अनालिङ्गने 'लित्पुषा-

देर्ङः ' अनेन ङप्रत्ययः । ङित्त्वात् गुणाभावः । दिवादावट् । अश्लिषत् । अश्लिषताम् । अश्लिषन् । आलिङ्गने । अश्लिक्षत् कन्यां चैत्रः । इत्युदाहरणम् । अनालिङ्गने तु । समश्लिषत् जतु काष्ठम् । इत्युदाहरणम् । तृप् प्रीणने । तिवादयः । दिवादेर्यः । तृप्यति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्वित्वं । पूर्वस्य हसादिः । रः । उपधाया लघोः । ततर्प । ततृपतुः । ततृपुः । ततर्पिथ । इत्यादीनि । तृप्यात् । अस्य धातोरधादित्वात् इट् विकल्पेन भवति । गुणः । तर्पिता । तर्पितारौ । तर्पितारः । इडभावे । गुणः । ' त् अर् प् ता ' । इति जाते । रा रो झसे दृशां । अनेन अरो रो वा भवति । त्रप्ता । तर्पिता । तर्पिष्यति । तर्पिष्यतः । तर्पिष्यन्ति । इडभावे गुणः । रारोझसे० । त्रप्स्यति । विकल्पेन । तर्प्स्यति । रूपाणि सुगमानि । अतर्पीत् । अत्रप्स्यत् । अतर्प्स्यत् । रूपाणि सुगमानि । लुङ्लकारे सूत्रम् ।

**स्पृशमृशकृशतृपां सिर्वा वक्तव्यः । रधादित्वाद्वेट् । अतर्पीत् अत्राप्सीत् अतार्प्सीत् । पुषादित्वात् ङः । अतृपत् । एवं दृप् हर्षविमोहनयोः । दृप्यति । मुह वैचित्त्ये । मुह्यति, मुमोह, मुह्यात् । द्रुहादीनां घत्वढत्वे वा । मोढा मोग्धा मोहिता । रधादित्वाद्वेट् । मोक्ष्यति-मोहिष्यति, अमोक्ष्यत्-अमोहिष्यत् । पुषादित्वात् ङः । अमुहत्, अमोहीत्, अमौक्षीत्, अमुक्षत् । णश् अदर्शने । नश्यति, ननाश । फणादित्वादेत्वपूर्वलोपौ । नेशतुः नेशुः । नश्यात् ।**

स्पृश० । अतृप् सि दिप् इति जाते । सिसता० । सेः । इट ईटि । गुणः । वावसाने । अतर्पीत् । अतर्पिष्टाम् । अतर्पिषुः । इडभावपक्षे । उपधाया लघोः । सेः । रारोझसे । अत उपधाया० । अत्राप्सीत् । अत्राप्तां । अत्राप्सुः । शेषाणि सुगमानि । अतार्प्सीत् । अतार्प्तां । अतार्प्सुः । पुषादित्वात्० अस्य धातोर्ङप्रत्ययो भवति । ङित्त्वात् गुणाभावः । अतृपत् । अतृपतां अतृपन् अन्यानि सुगमानि । एवं दृप् हर्षविमोहनयोः । तिवादयः । दिवादेर्यः । दृप्यति । अयं धातुः तृप्यतिवत् । मुह वैचित्त्ये । पूर्ववत् तिवादयः । दिवादेर्यः । मुह्यति । मुह्यतः । मुह्यन्ति । मुह्येत् । मुह्येतां । मुह्येयुः । मुह्यतु । मुह्यतात् । मुह्यताम् । मुह्यन्तु । अमुह्यत् । अमुह्यताम् । अमुह्यन् । मुह णप् इति स्थिते द्वित्वं । पूर्वस्य उपधाया लघोः । मुमोह । मुमुहतुः । मुमुहुः । गुणः । मुमोहिथ । इत्यादीनि मुह्यात् । मुह् ता इति स्थिते । मुहादीनां घत्वढत्वे वा । अनेन वा हस्य ढः । उपधाया लघोः । तथोर्धः । ष्टुत्वं । ढि ढो लोपः । मोढा । मोढारौ । मोढारः । घत्वे कृते सति । मुह् ता इति जाते । उप-

धाया लघोः। तथोर्धः। झबे जबाः। मोग्धा। मोग्धारौ । मोग्धारः। रधादित्वा-द्वा इड् भवति। गुणः। मोहिता। मुह् स्यप् तिप् इति जाते। उपधाया लघोः। षढोः कः से। क्लिलात्०। कषसंयोगे०। मोक्ष्यति। इटि कृते सति । मोहिष्यति। अमोक्ष्यत्। अमोहिष्यत्। लुङ्लकारे। अमोहीत् । अमोहिष्टाम्। अमोहिषुः। इड-भावपक्षे। अनिटो नामिवतः। अनेन वृद्धिः। अमौक्षीत् । अमौढां। अमौक्षुः। ह-शषान्तात्०। किन्त्वात् गुणाभावः। षढोः कः से। क्लिलात्०। कष०। अमुक्षत्। अमुक्षताम्। अमुक्षन्। पुषादित्वात् ङप्रत्ययो भवत्यस्य । ङित्त्वात् गुणाभावः। दिबादावट्। अमुहत्। अमुहताम्। अमुहन् । णश् अदर्शने । आदेः ष्णः स्नः। अनेन णकारस्य नकारः। तिबादयः। दिवादेर्यः। नश्यति । चतुर्णां लकाराणां रूपाणि सुगमानि। लिट्लकारे द्विश्च। पूर्वस्य हसादि०। अत उपधायाः। ननाश। लोपः पचां०। अनेनैत्वपूर्वलोपौ भवतः। नेशतुः। नेशुः। नेशिथ। अत्त्वत०। छ-शष०। ष्टुत्वं। ननष्ठ। इत्यादीनि। नश्यात्। नश् ता इति स्थिते। छशष०। सूत्रम्।

**मस्जिनशोर्झसे नुम् वक्तव्यः। छशषराजादेः षः। नंष्टा।**

**मस्जिनशोः।** मस्जिनशोर्धात्वोर्झसे परे नुम् वक्तव्यः। अनेन नुम्। मिद-न्त्यात्। नश्चापदान्ते। ष्टुत्वं। नंष्टा। नंष्टारौ। नंष्टारः। प्रनंष्टा। इति जाते। उ-पसर्ग०। अनेन णकारे प्राप्ते। सूत्रम्।

**नशेः षान्तस्य। नशेः षान्तस्य णत्वं न स्यात्। प्र-नंष्टा-नशिता, नंक्ष्यति-नशिष्यति, अनशिष्यत्-अनंक्ष्यत्। पुषादित्वात् ङः।**

**नशेः षान्तस्य।** षान्तस्य नशेर्धातोर्णत्वं न भवति। अनेन तन्निषेधः। प्रनंष्टा। रधादित्वाद् वेट्। नशिता। नश् स्यप् तिप् इति जाते। छशष०। मस्जि०। कत्वं। षत्वं। कष०। नंक्ष्यति। इटि कृते सति। षत्वं। नशिष्यति। दिबादाव-ट्। अनंक्ष्यत्। अनशिष्यत्। लुङ्लकारे पुषादित्वाद् ङप्रत्ययो भवति। सूत्रम्।

**ङे नशेरत एत्वं वा वाच्यम्। अनेशत्। अनशत्। शम् दम् उपशमे।**

**ङे।** ङप्रत्यये परे नशेर्धातोरत एत्वं वा वाच्यम्। अनेन अकारस्य एकारः। अनेशत्। वाग्रहणात्। अनशत्। अनशतां। अनशन्। इत्यादीनि। शम् दम् उपशमे। तिबादयः। दिबादे०। सूत्रम्।

**शमां दीर्घः। शमादीनां दीर्घो भवति ये परे अबादौ विषये**

च । शाम्यति, शाम्येत्, शाम्यतु, अशाम्यत् । शशाम शेमतुः शेमुः । शम्यात्, शमिता, शमिष्यति, अशमिष्यत् । लिट्पुषादेर्ङः । अशमत् । अशमीदिति केचित् । दम् श्रम् तम् भ्रम् क्षम् क्रम् मद् एते शमादयः । रूपं तद्वत् । ञि मिदा स्नेहने । आञी इतौ ।

शमाम् । ( ष ब. ) दीर्घः ( प्र. ए. ) शमादीनां धातूनां यप्रत्यये परे अबादौ विषये दीर्घो भवति । अनेन दीर्घः । शाम्यति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वं । पूर्वस्य । अत उपधायाः । शशाम । 'शशाम वृष्ट्यापि विना दवाग्निः' इत्युदाहरणम् । लोपः पचां० । शेमतुः । शेमुः । शेमिथ । शशंथ । इत्यादीनि । शम्यात् । सिसता० । शमिता । षत्वं । शमिष्यति । दिबादावट् । अशमिष्यत् । लिट्पुषादेर्ङः । अशमत् । अशमतां । अशमन् । इत्यादीनि । केचिदाचार्या अस्य अशमीत् इति रूपमिच्छन्ति । साधनं तु पूर्ववत् । दम्धातोरपि रूपाणि शम्धातुवत् । शम् दम् श्रम् तम् । भ्रम् । क्षम् । क्रम् । मद् एते शमादयो ज्ञातव्याः । तेषां रूपाणि पूर्वधातुवत् । न कश्चित् विशेषः । ञिमिदा स्नेहने । आञी इतौ । तिबादयः । दिवादेर्यः । मिद् य तिप् इति जाते । सूत्रम् ।

मिदेर्ये गुणो वक्तव्यः । मेद्यति मेद्येत् मेद्यतु अमेद्यत् । मिमेद मिमिदतुः मिमिदुः । मिद्यात्, मेदिता, मेदिष्यति, अमेदिष्यत्, अमिदत् । असु क्षेपणे । अस्यति, आस, असिता, असिष्यति ।

मिदे०। मिदेर्धातोर्यप्रत्यये परे गुणो भवति । मेद्यति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वं । पूर्वस्य । उपधाया लघोः । मिमेद । मिमिदतुः । मिमिदुः । मिमेदिथ । इत्यादीनि रूपाणि भवन्ति । मिद्यात् । उपधाया लघोः । मेदिता । अन्यानि सुगमानि । लुङ्लकारे लिट्पुषादेर्ङः । दिवादावट् । अमिदत् । अमिदताम् । अमिदन् इत्यादीनि भवन्ति रूपाणि । असु क्षेपणे । तिबादयः । दिवादेर्यः । अस्यति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वं । सस्वरादिर्द्विः० । अत उप० । सवर्णे० । आस । आसतुः । आसुः । आसिथ । इत्यादीनि । अस्यात् । सिसता०। असिता । अन्यानि सुगमानि । अन्येषामपि लुङ्लकारे । लिट्पुषादेर्ङः । द्वावडागमौ । आस् ङ दिप् इति जाते । सूत्रम् ।

अस्यतेर्ङे थुग्वक्तव्यः। आस्थत्। इति दिवादिषु परस्मैपदिप्रक्रिया॥

अस्यतेः। अस्यतेर्धातोर्ङप्रत्यये परे थुग् वक्तव्यः। उकार उच्चा०। ककारः कित्। आस्थत् आस्थताम् आस्थन्। इत्यादीनि। इति परस्मैपदिप्रक्रिया समाप्तिमगमत्॥

अथात्मनेपदिनः। जनी प्रादुर्भावे। ईकारेत्।

अथात्मनेपदिप्रक्रिया कथ्यते। जनी प्रादुर्भावे। ईकार इत्। तआदयः प्रत्ययाः सर्वत्र भवन्ति। दिवादेर्यः 'जन् य तिप्' इति जाते सूत्रम्।

जाजनीज्ञोः। जनी प्रादुर्भावे। ज्ञा अवबोधने। अनयोर्जादेशो भवति चतुर्षु परेषु। जायते, जायेत, जायताम्, अजायत। गमां स्वरे। श्चुत्वम्। जञोर्ज्ञः। जज्ञे, जनिषीष्ट, जनिता, जनिष्यते, अजनिष्यत-अजनिष्ट।

जाजनीज्ञोः। जा (प्र० ए०) जनीज्ञोः (ष. द्वि.)। जनी प्रादुर्भावे। ज्ञा अवबोधने। अनयोर्धात्वोर्जा इत्यादेशो भवति चतुर्षु लकारेषु परेषु। अनेन जा इत्यादेशः। जायते। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्वित्वं। सस्वरादिः। ह्रस्वः। गमां स्वरे। अनेनोपधाया लोपो भवति। श्चुत्वं। जञोर्ज्ञः। जज्ञे। जज्ञाते। जज्ञिरे। इत्यादीनि। सिसता०। षत्वं। जनिषीष्ट। जनिता। लुङ्लकारे। भूते सिः। सिसता०। षत्वं। ष्टुत्वं। अजनिष्ट। सूत्रम्।

पदादेस्तनि कर्तर्यपि सेरिण् वक्तव्यः दीपादिभ्यो वा। पद् दीप् जन् बुध् पूरि तायि प्यायि एते पदादयः।

पदादेः। पदादेर्धातोस्तनि परे सति कर्तरि अपि सेरिण् वक्तव्यः। दीपादिभ्यो धातुभ्यो वा भवति। पद् दीप् बुध् पूरि तायि प्यायि एते पदादयो ज्ञातव्याः। सूत्रम्।

लोपः। इणसंयोगे तनो लोपो भवति। जनिवध्योर्न वृद्धिः। अजनि अजनिषाताम्। दीपी दीप्तौ। दीप्यते, दीप्येत, दीप्यताम्, अदीप्यत, दिदीपे, दीपिषीष्ट, दीपिता, दीपिष्यते, अदीपिष्यत, अदीपिष्ट, अदीपि। पूरी आप्या-

यने । पूर्यते, पूर्येत, पूर्यताम्, अपूर्यत, पुपूरे, पूरिषीष्ट, पूरिता, पूरिष्यते, अपूरिष्यत, अपूरि, अपूरिष्ट । पद् गतौ । पद्यते, पद्येत, पद्यताम्, अपद्यत, पेदे, पत्सीष्ट, पत्ता, पत्स्यते, अपत्स्यत । अपादि, अपत्साताम्, अपत्सत । बुध् अवगमने । बुध्यते, बुध्येत, बुध्यताम्, अबुध्यत, बुबुधे, आदिजबानाम् । सिस्योः । खसे चपा झसानाम् । भुत्सीष्ट, बोद्धा, भोत्स्यते । अबुद्ध अभुत्साताम् अभुत्सत । अबोधि । तायङ् पालनसन्तत्योः । तायते, तताये, तायिषीष्ट, तायिता, तायिष्यते, अतायिष्यत, अतायिष्ट, अतायि । ओप्यायिङ् वृद्धौ । प्यायते, पप्याये, प्यायिषीष्ट, प्यायिता, प्यायिष्यते, अप्यायिष्यत, अप्यायिष्ट, अप्यायि, अप्यायिषाताम् । इमौ द्वौ भ्वादिकौ ॥ ॥ इति दिवादिष्वात्मनेपदिप्रक्रिया ॥

लोपः । इण् संयोगे सति तन्प्रत्ययस्य लोपो भवति । णित्वात् वृद्धौ भाषायां । जनिवध्योः । अनेन वृद्धेर्निषेधः । अजनि । अजनिषाताम् । आतोन्तो० । अजनिषत । इत्यादीनि । दीपी दीप्तौ । ईकार इत् । दिवादेर्यः । दीप्यते । चतुर्णां सुगमानि । लिट्लकारे । द्वित्वं । पूर्वस्य ह्रस्वः । दिदीपे । दिदीपाते । दिदीपिरे । इत्यादीनि । सिसता० । दीपिषीष्ट । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । भूते सिः । सिसता । षत्वं । ष्टुत्वं । दिवादावट् । अदीपिष्ट । पदादेः । अनेन सेरिण् वा भवति । यदा सेरिण् तदा लोपः । अदीपि । अदीपिषातां । आतोन्तो० । अदीपिषत । इत्यादीनि । पूरी आप्यायने । ईकार इत् । तआदयः । दिवादेर्यः । पूर्यते । चतुर्णां सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य ह्रस्वः । पुपूरे । पुपूराते । पुपूरिरे । सिसता० । षत्वं । पूरिषीष्ट । अन्येषां सुगमानि । लुङ्लकारे । वा सेरिण् भवति । अन्यत्साधनं तु पूर्ववत् । अपूरि । अपूरिष्ट । अपूरिषाता । अपूरिषत । ष्टुत्वं । अपूरिष्ठाः । इत्यादीनि ॥ पद् गतौ । तआदयः । दिवादेर्यः । पद्यते । इत्यादीनि । लिट्लकारे । द्वित्वं । पूर्वस्य । लोपः पचां । पेदे । पेदाते । पेदिरे । पद् सीष्ट इति जाते । खसे० । पत्सीष्ट । पत्ता । इत्यादीनि । लुङ्लकारे । अ पद् सि दिप् इति जाते । ' पदादेः ' अनेन सेरिण् । णित्वाद् वृद्धिः । लोपः । अपादि । अप-

त्साताम् । अपत्सत इत्यादीनि । बुध अवबोधने । तआदयः । दिवादेर्यः । बुध्यते । अन्येषां सुगमानि । लिट्लकारे । द्वित्वं । पूर्वस्य । बुबुधे । बुबुधाते । बुबुधिरे । इत्यादीनि । बुध् सीष्ट इति स्थिते । आदिजबानां । सिस्योः । अनेन गुणाभावः । खसे चपा० । भुत्सीष्ट । उपधायाः । तथोर्धः । बोद्धा । बोद्धारौ । बोद्धारः । आदिजवानाम् । भोत्स्यते । अभोत्स्यत् । लुङ्लकारे । पदादेः । गुणः । लोपः । अबोधि । अबुद्ध । अभुत्साताम् । अभुत्सत । इत्यादीनि । तायङ् पालनसंतत्योः । ङकार आत्मनेपदार्थः । तआदयः । अप् कर्तरि । अनेन अप्प्रत्ययो भवति । भ्वादित्वात् । तायते । लिट्लकारे । द्वित्वं । पूर्वस्य । ह्रस्वः । तताये । ततायाते । ततायिरे । इत्यादीनि भवन्ति । 'सिसता०' अनेनेट् । षत्वं । तायिषीष्ट । तायिता । लुङ्लकारे । वा सेरिण् भवति । अन्यत्साधनं तु पूर्ववत् । अतायिष्ट । अतायि । अतायिषाताम् । अतायिषत इत्यादीनि रूपाणि भवन्ति । ओप्यायिङ् । वृद्धौ । ङकार आत्मनेपदार्थः । ओकारेकारौ इतौ स्तः । तआदयः । अप् कर्तरि । प्यायते । अन्येषां लकाराणां रूपाणि सुगमानि । तस्माद् व्याख्यानं न कृतम् । लिट्लकारे । द्विश्च । पूर्वस्य ह्रस्वः । पप्याये । पप्यायाते । पप्यायिरे । इत्यादीनि । सिसता० अनेनेट् । प्यायिषीष्ट । प्यायिता । लुङ्लकारे वा सेरिण् भवति । अन्यत्साधनं तु पूर्ववत् । अप्यायिष्ट । अप्यायि । अप्यायिषाताम् । अप्यायिषत । अप्यायिष्ठाः । अप्यायिषाथाम् । अप्यायिध्वम् अप्यायिषि । अप्यायिष्वहि, अप्यायिष्महि । इमौ द्वौ धातू भ्वादिकौ । इत्यात्मनेपदिप्रक्रिया कथिता ।

अथोभयपदिनः । णह् बन्धने । नह्यति, नह्यते, नह्येत्, नह्येत, नह्यतु, नह्यताम्, अनह्यत्, अनह्यत । ननाह नेहतुः नेहुः । नेहिथ-ननद्ध । नेहे, नह्यात्, नत्सीष्ट । नहो धः । नद्धा, नत्स्यति-नत्स्यते, अनत्स्यत्-अनत्स्यत । अनात्सीत्, अनाद्धाम्, अनात्सुः । अनद्ध अनत्साताम् अनत्सत ॥ इति दिवादिषूभयपदिप्रक्रिया॥ इति यविकरणा दिवादयो धातवः ॥ इति चतुर्थगणः ॥

अथोभयपदिप्रक्रिया कथ्यते । णह् बन्धने । अकार उभयपदार्थः । आदेः ष्णः स्नः । अनेन णकारस्य नकारः । तिबादयस्तआदयश्च प्रत्यया भवन्ति । दिवादेर्यः । अनेन यप्रत्ययः । नह्यति । नह्यते । चतुर्णां लकाराणां रूपाणि सुगमानि । अतः पिष्टपेषणं न कृतम् । लिट्लकारे । द्विश्च । पूर्वस्य । अत उपधायाः ।

मनाह । लोपः पचाम् । अनेनैत्वपूर्वलोपौ । नेहतुः । नेहुः । नेहिथ । अत्वतो० । ननह् थप् इति जाते । नहो धः । तथोर्धः । झबे जबा । ननद्ध । नेहे । नेहाते । नेहिरे । नह्यात् । नह् सीष्ट इति स्थिते । नहो धः । खसे चपा० । नत्सीष्ट । नह् ता । नहो धः । तथोर्धः । झबे जबाः । नद्धा । नहो धः । खसे० । नत्स्यति । नत्स्यते । इत्यादीनि । लुङ्लकारे । अत उपधायाः । अनात्सीत् । 'झसात्' अनेन सेर्लोपो भवति । अनाद्धाम । अनात्सुः । इत्यादीनि । आत्मनेपदे । अनद्ध । अनत्साताम् । अनत्सत । इत्यादीनि । इत्युभयपदिप्रक्रिया समाप्ता । इति यविकरणा दिवादयो धातवः कथिताः ।

॥ अथ स्वादयः ॥ तत्रादावुभयपदिनः । षुञ् अभिषवे । ञ उभयपदार्थः । आदेः ष्णः स्नः ।

अथ स्वादयो धातवः कथ्यन्ते । तत्रादौ उभयपदिनः सन्ति । षुञ् अभिषवे । ञकार उभयपदार्थः । आदेः ष्णः स्नः । तिबादयस्तआदयश्च प्रत्ययाः सर्वत्र भवन्ति इति ज्ञातव्यम् । सूत्रम् ।

स्वादेर्नुः । स्वादेर्गणान्नुः प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः ।

स्वादेर्नुः । स्वादेः ( पं. ए. ) नुः । ( प्र. ए. ) द्विपदं सूत्रम् । स्वादेर्गणात् । चतुर्षु तिबादिषु परेषु नुप्रत्ययो भवति सु नु तिप् इति जाते । सूत्रम् ।

नूपः । विकरणस्य नुप्रत्ययस्य उप्प्रत्ययस्य च गुणो भवति पिति परे । सुनोति सुनुतः । नु धातोः । सुन्वन्ति । सुनोषि सुनुथः सुनुथ । सुनोमि ।

नूपः । नुश्च उप् च । नूप् । तस्य । नूपः ( ष० ए० ) । स्वादेरुत्पन्नस्य नुप्रत्ययस्य । तनादेरुत्पन्नस्य । नुपूप्रत्ययस्य पिति प्रत्यये परे गुणो भवति । अनेन गुणः । सुनोति । सुनुतः । नुधातोः । सुन्वन्ति । षत्वं । सुनोषि । सुनुथः । सुनुथ । नूपः । अनेन गुणः । सुनोमि । सुनुवस् इति जाते । सूत्रम् ।

उर्वमोर्वा लोपः । असंयोगादुत्तरस्य प्रत्ययसंबन्धिन उकारस्य वा लोपो भवति वमोः परयोः । सुनुवः-सुन्वः सुनुमः-सुन्मः । सुनुते सुन्वाते सुन्वते । सुनुयात्, सुन्वीत, सुनोतु-सुनुतात् । सुनुताम्, सुन्वन्तु ।

ओर्वमोर्वा लोपः । ओः ( ष. ए.) वमोः ( स. द्वि. ) वा अव्ययम् । लोपः । ( प्र. ए. ) चतुःपदं सूत्रम् । असंयोगादुत्तरस्य प्रत्ययसंबन्धिन उकारस्य वमोः परयोः सतोर्लोपो भवति । अनेन उकारस्य वा लोपः । सुनुवः । सुन्वः । सुनुमः । सुन्मः । सुते । सुन्वाते । आतोन्तो० । सुन्वते । षत्वं । सुनुषे । सुन्वाथे सुनुध्वे । सुन्वे । उर्वमोर्वा लोपः । सुनुवहे । सुन्वहे । सुनुमहे । सुन्महे । सुनुयात् । सुनुयाताम् । सुनुयुः । नुयातोः । सुन्वीत । सुन्वीयातां । सुन्वीरन् । अन्यानि सुगमानि । लोट्लकारे । नूपः । अनेन पिति प्रत्यये परे गुणः । सुनोतु । तुह्योः । सुनुतात् । सुनुतां सुन्वन्तु । ' सुनु हि ' इति स्थिते सूत्रम् ।

ओर्वा हेः । प्रत्ययसंबन्धिन उकारादुत्तरस्य हेर्लुग्भवति वा-ग्रहणात्संयोगान्न । तेन तक्ष्णुहि त्वक्ष्णुहीत्यत्र न । सुनु, सुनुतात्, सुनवानि, सुनुताम्, असुनोत्, असुनुत । सुषाव सुषुवतुः । सुषविथ-सुषोथ । सुषुवे, सूयात्, सोषीष्ट, सोता, सोष्यति, सोष्यते, असोष्यत्, असोष्यत ।

ओर्वाहे । ओः (पं. ए.) वा । अव्ययम् (प्र. ए.) हेः(ष.ए.) प्रत्ययसंबन्धिन उकारादुत्तरस्य हिप्रत्ययस्य वा लुग् भवति । अस्मिन् सूत्रे वाग्रहणात् संयोगात् न लुग् भवति । हेः । तेन । तक्ष्णुहि त्वक्ष्णुहि इत्यत्र न लुग् । सुनुतात् सुनुतं सुनुत । नूपः । सुनवानि । सुनवाव । सुनवाम । सुनुतां । सुन्वाताम् । सुन्वताम् । सुनुष्व । सुन्वाथाम् । सुनुध्वम् । सुनवै । सुनवावहै । सुनवामहै । दिवादावट् । नूपः । असुनोत् । असुनुताम् । असुन्वन् । असुनोः । असुनुतम् । असुनुत । असुनवम् । असुनुव । नुर्वमोः । असुन्व । असुनुम । असुन्म । असुनुत असुन्वाताम् । आतोन्तो० । असुन्वत । असुनुथाः । असुन्वाथाम् । असुनुध्वम् । असुन्वि । असुनुवहि । असुन्वहि । असुनुमहि । असुन्महि । लिट्लकारे । द्विश्च । सस्वरादिः । क्लिात्० । धातोर्नामिनः । सुषाव । नुयातोः । नानप्योर्वः । सुषुवतुः । सुषुवुः । अत्वतः । गुणः सुषविथ । सुषोथ । आत्मनेपदे । सुषुवे । सुषुवाते । सुषुविरे । ये । सूयात् । गुणः । षत्वं । सोषीष्ट । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । अ सु सि दिप् । इति जाते । सेः । सूत्रम् ।

स्तुसुधूञ्भ्यां पे सेरिड्वा वक्तव्यः । असावीत् असौषीत् दुसु-स्तुनुधातूनामिड्वेति केचित् । असविष्ट असोष्ट । चिञ् च-यने । चिनोति, चिनुते, चिनुयात्, चिन्वीत, चिनोतु, चि-

नुताम्, अचिनोत्, अचिनुत ।

स्तुसुधूञ्भ्याम् । स्तुसुधूञां । धातूनां परस्मैपदे । सेः । इट् वा वक्तव्यः । सेर्णित्त्वात् । धातोर्नामिनः । अनेन वृद्धिः । असावीत् । असाविष्टाम् । असाविषुः । इडभावे । अनिटो० । असौषीत् । असौष्टाम् । असौषुः । इत्यादीनि । आत्मनेपदे । दुसुस्तुनुधातूनां इट् वा भवति । इति केचिदाचार्या वदन्ति । अनेनात्मनेपदेऽपि । सेरिट् । गुणः । असविष्ट । असविषाताम् । असविषत । इडभावे । असोष्ट । असोषाताम् । असोषत । चिञ् चयने । स्वादेर्नुः । नूपः । चिनोति । चिनुतः । चिन्वन्ति । चिनुते । चिन्वाते । चिन्वते । चिनुयात् । चिन्वीत । चिनोतु । चिनुतात् । चिनुताम् । चिन्वन्तु । ओर्वाहेः । चिनु । अन्यानि सुगमानि । चिनुताम् । अचिनोत् अचिनुत । एतेषां रूपाणि सुगमानि । लिट्लकारे । चि णप् इति स्थिते । सूत्रम् ।

चिनोतेः सणादौ कित्वं वा वाच्यम् । चिकाय चिक्यतुः चिक्युः । चिचाय । चिक्ये-चिच्ये । चीयात्, चेषीष्ट, चेता २ चेष्यति चेष्यते, अचेष्यत्-अचेष्यत, अचैषीत्, अचेष्ट । स्तृञ् आच्छादने । स्तृणोति स्तृणुते । तस्तार । गुणोर्ति-संयोगाद्योः । तस्तरतुः तस्तरुः । तस्तर्थ । तस्तरे, स्तर्यात् ।

चिनोतेः । चिनोतेर्धातोः । सप्रत्यये णादौ च परे कित्वं वा वाच्यम् । अनेन चकारस्य ककारः । द्वित्वम् । सस्वरादिः । कुहोश्चुः । धातोर्नामिनः । चिकाय । नुधातोः । चिक्यतुः । चिक्युः । चिकयिथ । चिकेथ । चिचाय । चिच्यतुः । चिच्युः आत्मनेपदे । कित्वे कृते सति । चिक्ये । चिक्याते । चिक्यिरे । कित्वाभावे । चिच्ये । रूपाणि सुगमानि । येः । चीयात् । गुणः षत्वं । चेषीष्ट । चेता । चेता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । अनिटो नामिवतः । अचैषीत् । अचैष्टाम् अचैषुः । आत्मनेपदे गुणः । अचेष्ट । अचेषाताम् । अचेषत । स्तृञ् आच्छादने । स्वादेर्नुः । पूर्नोणोऽनन्ते । नूपः । स्तृणोति स्तृणुते । चतुर्णां लकाराणां रूपाणि सुगमानि । स्तृणप् इति जाते द्विश्च । सस्वरादि० । शसात् खपाः । धातोर्नामिनः । तस्तार । गुणोर्ति० । अनेन गुणः । तस्तरतुः । तस्तरुः । ऋदन्तस्य गुणः । तस्तर्थ । आत्मनेपदे । तस्तरे । तस्तराते । तस्तरिरे । इत्यादीनि । गुणोऽर्ति० । अनेन यादौ गुणो भवति । स्तर्यात् । अन्यानि सुगमानि । उः । अनेन गुणनिषेधः । क्लिात् । अनेन षत्वं । स्तृषीष्ट । संयोगादेः । अनेन अस्य वेट् सीष्टादौ । गुणः । स्तरिषीष्ट । गुणः । स्तर्ता । स्तर्ता । हनृतः स्यपः । स्तरिष्यति । स्तरिष्यते । अन्या-

निसुगमानि । लुङ्लकारे । वृद्धिः । अस्तार्षीत् । आत्मनेपदे ।

संयोगादि ऋदन्तवृङ्वृञां सीस्योरात्मनेपदे इड्वा वक्तव्यः । स्तरिषीष्ट । उः । स्तृषीष्ट,स्तर्ता २, स्तरिष्यति-स्तरिष्यते, अस्तरिष्यत्, अस्तरिष्यत, अस्तार्षीत्, अस्तरिष्ट, अस्तृत । वृञ् वरणे । वृणोति, वृणुते । ववार वव्रतुः वव्रुः ।

संयोगादि । अनेन वेट् । अस्तरिष्ट । इडभावे । अस्तृत । लोपो० । अनेन सेर्लोपः । अस्तृषाताम् । अस्तृषत । इत्यादीनि । वृञ् वरणे । ञकार उभयपदार्थः ॥ स्वादेर्नुः । पूर्नोणोनंते । नूपः । वृणोति । वृणुते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । धातोर्नामिनः । ववार । ऋरं० । वव्रतुः । वव्रुः । ववर् थप् इति जाते । सूत्रम् ।

वृणोतेस्थपो नित्यमिट् । ववरिथ वव्रथुः वव्र । ववार-ववर ववृववृम । वव्रे,ववृढ्वे । व्रियात्,वरिषीष्ट । ईटो ग्रहाम् ०।वरिषीष्ट, वरिता-वरीता,वरिष्यति-वरीष्यति, वरिष्यते-वरीष्यते, अवरिष्यत्-अवरीष्यत्, अवरिष्यत-अवरीष्यत, अवारीत्, अवरिष्ट-अवरीष्ट, अवृत । धूञ् कम्पने । धूनोति, धुनुते, धुनुयात्, धुन्वीत, धूनोतु, धुनुताम्, अधूनोत्, अधुनुत, दुधाव, दुधुवे, धूयात्, धविषीष्ट-धोषीष्ट ।

वृणोतेः । वृणोतेर्धातोः स्थपो नित्यं भवति इट् । ववरिथ । क्रादित्वान्नेट् ॥ ववृव । इत्यादीनि । वव्रे । वव्राते । वव्रिरे । यादादौ । व्रियात् । संयोगादेः । वृषीष्ट । ईटो ग्रहाम् । अनेन इकारस्य ईकारः । वरिषीष्ट । वरीषीष्ट । इत्यादीनि । वरिता । वरीता । इत्यादीनि । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ । वृद्धिः । अवारीत् । अवारिष्टां । अवारिषुः । आत्मनेपदे गुणः । अवरिष्ट । अवरीष्ट । इत्यादीनि रूपाणि भवन्ति । तेषां साधनमपि सुगमम् । धूञ् कम्पने । ञकार उभयपदार्थः । पूर्ववत्प्रत्यया भवन्ति । स्वादेर्नुः । नूपः । अनेन चतुर्षु पिति गुणो भवति । धूनोति । आत्मनेपदे । धूनुते । चतुर्णां पूर्ववद्रूपाणि । लिट्लकारे । द्वित्वादिकं सर्वं भवति । धातोर्नामिनः । झपानां अनेन धस्य दः । ह्रस्वः । दुधाव । दुधुवतुः । दुधुवुः । दुधविथ । इत्यादीनि । दुधुवे । दुधुवाते । दुधुविरे । धूयात् ।

स्वरतिसूतिसूयतिधूञूदधादीनां वा । धविता-धोता, धविष्यति-धोष्यति, अधविष्यत्-अधोष्यत, अधावीत्, अधविष्ट-अधोष्ट ॥ इति स्वादिषूभयपदिप्रक्रिया ॥

स्वरति० । अनेनास्य वेट् । गुणः । धविषीष्ट । इडभावे धोषीष्ट । अन्यानि रूपाणि सुगमानि । धविता । धोता । अन्येषां रूपाणि सुगमानि । सर्वत्रेड्विकल्पः । लुङ्लकारे । अधावीत् । अधाविष्टां । अधाविषुः । साधनं सुगमम् । इडभावे । अनिटो० । अधौषीत् । अधौष्टां । अधौषुः । आत्मनेपदे । अधविष्ट । अधोष्ट । इत्यादीनि रूपाणि भवन्ति । एतादृशानि रूपाणि शतशः साधितानि । अतो व्याख्यानं न कृतम् । इत्युभयपदिप्रक्रिया कथिता ।

॥ अथ परस्मैपदिनः ॥ हि गतौ वृद्धौ च हिनोति ।

अथाधुना परस्मैपदिप्रक्रिया कथ्यते । हि गतौ वृद्धौ । तिबादयो भवन्ति । स्वादेर्नुः । नूपः । हिनोति हिनुतः हिन्वन्ति इत्यादीनि रूपाणि भवन्ति । लिट्लकारे । द्वित्वादिकं । सूत्रम् ।

द्विरुक्तस्य हिनोतेः कुत्वं वाच्यम् । जिघाय, हीयात्, हेता, हेष्यति, अहेष्यत्, अहैषीत् । शक्लृ शक्तौ । शक्नोति, शशाक । लोपः पचां कित्ये चास्य । शेकतुः शेकुः । शक्यात्, शक्ता, शक्ष्यति, अशक्ष्यत्, अशकत् । धिवि प्रीतौ । इदित इति नुम् ।

द्विरुक्तस्य । द्विरुक्तस्य हिनोतेर्धातोः कुत्वं वाच्यम् । अनेन हस्य घः । धातोर्नाम्निनः । झपानां । जिघाय । जिघ्यतुः । जिघ्युः । जिघयिथ । जिघेथ । इत्यादीनि । ये । हीयात् । गुणः । हेता । हेष्यति । अहेष्यत् । शेषाणि रूपाणि सुगमानि । लुङ्लकारे । अनिटो नामिवतः । अनेन वृद्धिः । अहैषीत् । अहैष्टाम् । अहैषुः । इत्यादीनि । शक्लृ शक्तौ । लृकारो लृदित्कार्यार्थः । तिबादयः । स्वादेर्नुः । नूपः । शक्नोति । शक्नुतः । नुधातोः । शक्नुवन्ति । लोट्लकारे मध्यमपुरुषस्यैकवचने । शक्नुहि । अन्यानि सुगमानि । लिट्लकारे द्वित्वादिकं सर्वं भवति । अत उपधायाः । शशाक । लोपः पचां । शेकतुः शेकुः । अन्यानि सुगमानि । शक्यात् । शक्ता । किलात्० । कपसयोगे शक्ष्यति अशक्ष्यत् । रूपाणि सुगमानि । लुङ्लकारे लिदुपादेः । अनेन ङप्रत्ययो भवति० । अशकत् । अशकताम् । अशकन् । इत्यादीनि भवन्ति । धिवि प्रीतौ । इकार इत् । इदितोनुम्० । तिबादयः । स्वादेर्नुः । धिन् व् नु तिप् । इति जाते । सूत्रम् ।

धिन्विकृण्व्योर्नो लोपो वाच्यः । चतुर्षु ।

धिन्विकृण्व्यो० । अनयोर्नकारस्य लोपो वाच्यः । चतुर्षु परेषु । अनेन नकारस्य लोपः । सूत्रम् ।

यवयोर्वसे हकारे च लोपः । धिनोति, धिनुयात्, धिनोतु, अधिनोत्, दिधिन्व, धिन्व्यात्, धिन्विता, धिन्विष्यति, अधिन्विष्यत्, अधिन्वीत् । कृवि हिंसायाम् । कृणोति, चकृण्व । धिनोतिवत् । श्रु श्रवणे ।

यवयोः० । यकारवकारयोर्वसे हकारे च लोपो भवति । नृपः। धिनोति । धिनुतः । धिन्वन्ति । इत्यादीनि । लिट्लकारे । द्वित्वं। पूर्वस्य । झ र्नां । दिधिन्व । दिधिन्वतुः । दिधिन्वुः । दिधिन्विथ । इत्यादीनि भवन्ति । सिसता० अनेनेट् । धिन्विता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ । अन्यत्साधनं तु पूर्ववत् । अधिन्वीत् । अधिन्विष्टाम् । अधिन्विषुः । इत्यादीनि । कृवि हिंसायाम् । सर्वसाधनं तु पूर्ववत् । णत्वं । कृणोति । अयं धातुर्धिनोतिवत् ज्ञातव्यः । श्रु श्रवणे। सिबादयः । स्वादेर्नुः । सूत्रम् ।

श्रुवः शृ । श्रुवः शृ भवति चतुर्षु परेषु । शृणोति, शुश्राव, शुश्रोथ, श्रूयात्, श्रोता, श्रोष्यति, अश्रोष्यत्, अश्रौषीत् ॥ इति स्वादिषु परस्मैपदिप्रक्रिया ॥

श्रुवः । शृवः । ( ष० ए० ) शृ ( प्र. ए. ) सांकेतिकं । द्विपदं सूत्रम् । श्रुवो धातोः शृ इत्यादेशो भवति चतुर्षु परेषु। अनेन श्रुवः शृ । णत्वं। शृणोति । शृणुतः । शृण्वन्ति । इत्यादीनि भवन्ति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे द्वित्वादिकं पूर्वस्य धातोर्नामिनः । अनेन वृद्धिः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । इत्यादीनि भवन्ति । ये । श्रूयात् । गुणः । श्रोता । श्रोष्यति अत्र षत्वं भवति । अश्रोष्यत् । रूपाणि सुगमानि । लुङ्लकारे । अनिटो नामिनतः । अनेन वृद्धिः । अन्यत्साधनं तु सुगमम्। अश्रौषीत् । अश्रौषिष्टाम्। अश्रौषीः इत्यादीनि रूपाणि भवन्ति इति परस्मैपदिप्रक्रिया समाप्ता ।

॥ अथात्मनेपदिनः ॥ ॥ अशूङ् व्याप्तौ । ऊङान्तितौ । अश्नुते, अश्नुवीत, अश्नुताम्, आश्नुत । नुगशाम् । आश्वोर्णादौ । आनशे । ऊदितो वा । अशिषीष्ट-अक्षीष्ट अ-

शिता-अष्टा, अशिष्यते-अक्ष्यते, आशिष्यत-आक्ष्यत । आशिष्ट-आष्ट आक्षाताम् आक्षत ॥ ॥ इतिस्वादिष्वात्मनेपदिप्रक्रिया ॥ इति नुविकरणाः स्वादयः ॥

अथात्मनेपदिप्रक्रिया कथ्यते । अशूङ् व्याप्तौ ऊकारेतौ स्तः । तिबादयः । स्वादेर्नुः । अश्नुते । अश्नुवाते । आतोन्तो० । अश्नुवते । इत्यादीनि । अश्नुवीत । अश्नुवीयातां । अश्नुवीरन् । अश्नुताम् । अश्नुवाताम् । अश्नुवताम् । स्वरादित्वाइ द्वावडागमौ भवतः । आश्नुत । अन्यानि सुगमानि । लिट्लकारे । द्वित्वादिकं सर्वम् । नुगशां०। आम्वोर्णादौ । आनशे । आनशाते । आनशिरे । इत्यादीनि - ऊदितो वा अनेनास्य धातोरिड्विकल्पो भवति । अशिषीष्ट । इडभावे छशष० । अनेन षत्वम् । षढोः कः से । षत्वम् । कषसंयोगे० । अक्षीष्ट । रूपाणि सुगमानि । अन्यानि मूलात् ज्ञेयानि । लुङ्लकारे । द्वावडागमौ स्वरादित्वात् । आशिष्ट । आशिषाताम् । आशिषत । इडभावे झसात्०। छशष० । ष्टुत्वं । आष्ट । आक्षातां । आक्षत । इत्यादीनि । इत्यात्मनेपदिप्रक्रिया समाप्तिमगमत् । इति नुविकरणाः स्वादयो धातवः कथिताः ।

अथ रुधादयः । तत्रादावुभयपदिनः । रुधिरावरणे । इरित् ।

अथ रुधादयो धातवः कथ्यन्ते । तत्रादावुभयपदिनो धातवः सन्ति । रुधिर् आवरणे । इरित् । उभयपदित्वात् । तिबादयस्तआदयश्च प्रत्यया भवन्ति । सूत्रम् ।

रुधादेर्नम् । रुधादेर्गणान्नम् प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । मकारः स्थाननियमार्थः । णत्वम् । तथोर्धः । रुणद्धि । नमसोऽस्य ।

रुधादेर्नम् । रुध् आदिर्यस्य स रुधादिः तस्य रुधादेः ( पं० ए० ) नम् ( प्र० ए० ) रुधादेर्गणान्नप्रत्ययो भवति चतुर्षु लकारेषु परेषु । अपोऽपवादः । प्रत्यये मकारःस्थाननियमार्थः । पुर्नो णोनंते अनेन णत्वं च । तथोर्धः । अनेन तकारस्य धकार । झबेजबाः । रुणद्धि । रुध् तस् इति जाते । नमसोऽस्य । अनेन अकारस्य लोपः । तथोर्धः ।

हसात् झसस्य सवर्णे झसे लोपो वाच्यः । रुन्धः रुन्धति । रुणत्सि रुन्धः रुन्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । रुन्धे रुन्धाते रुन्धते । रुन्ध्यात्, रुन्धीत, रुणद्धु, रुन्धाम्, अरु-

णत्-अरुणद्, अरुन्ध। रुरोध, रुरुधतुः रुरुधुः। रुरोधिथ। रुरुधे रुरुधाते। रुध्यात्, रुत्सीष्ट, रोद्धा २, रोत्स्यति, रोत्स्यते, अरोत्स्यत्, अरोत्स्यत। अनिटो नामिवतः। अरौत्सीत्। सिस्योः। अरुद्ध अरुत्सातां अरुत्सत। इरितो वा। अरुधत्। उच्छृदिर् दीप्तिदेवनयोः। उइरावितौ। छृणत्ति-छृन्तः छृन्दन्ति। छृन्ते, छृन्द्यात्, छृन्दीत, छृणत्तु, छृन्ताम्, अच्छृणत्, अच्छृणद्। दः सः। दकारस्य वा सकारो भवति सिपि विषये। अच्छृणः अच्छृणत्तं अच्छृणत। चच्छर्द, चच्छृदे, छृद्यात्, छृत्सीष्ट-छर्दिषीष्ट, छर्दिता, छर्दिष्यति छर्त्स्यति, छर्दिष्यते-छर्त्स्यते,अच्छर्दिष्यत्-अच्छर्त्स्यत्, अच्छर्दिष्यत-अच्छर्त्स्यत। इरितो वा। अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट। उ तृदिर् हिंसानादरयोः। तृणत्ति तृन्तः तृन्दति। तृन्ते, तृन्द्यात्, तृन्दीत, तृणत्तु, तृन्ताम्, अतृणत्, अतृन्त, ततर्द, ततृदे, तृद्यात्, तृत्सीष्ट-तर्दिषीष्ट, तर्दिष्यति-तर्त्स्यति, तर्दिष्यते- तर्त्स्यते, अतर्दिष्यत्-अतर्त्स्यत्, अतर्दिष्यत-अतर्त्स्यत, अतृदत्, अतर्दीत् ॥ नृततृदच्छृदचृतकृद्भ्योऽसेः सादेरिड्वा। अतर्दिष्ट ॥ इति रुधादिषूभयपदिप्रक्रिया ॥

हसात्०। अनेन धकारस्य लोपो भवति।नश्चा०। रुन्धः। रुन्धन्ति। ससे० रुणत्सि। रुन्धः। रुन्ध। अन्यानि मूले संति। रुंधे। रुंधाते। रुंधते। इत्यादीनि रूपाणि भवंति। रुंध्यात्। रुंध्यातां। रुंध्युः। सुगमानि। रुंधीत। रुंधीयातां। रुंधीरन्। रुणद्धु। रुंधात्। रुंधां। रुंधंतु। झसाद्धिर्हेः। हसात्। रुंधि। रुंधात्। रुंधं। रुंध। रुणधानि। रुणधाव। रुणधाम। रुंधां। रुंधातां। रुंधतां। इत्यादीनि। अरुणत्। अरुंधां। अरुंधन्। अरुणः। अरुंध। अरुंधातां। अरुंधत। अरुंधाः। अरुंधातां। अरुंध्वं। अरुणधं। अरुंध्व। अरुंध्म। इत्यादीनि रूपाणि पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। तानि यथासंभवं साध्यानि। लिट्लकारे। द्वित्वादिकं सर्वं भवति। उपधाया लघोः। रुरोध। रुरुधतुः। रुरुधुः। रुरोधिथ। इत्यादीनि। आत्मनेपदे।

रुरुधे । रुरुधाते । रुरुधिरे । अन्यानि सुगमानि । रुध्यात् । रुत्सीष्ट । तथोर्धः । गुणः । रोद्धा । रोद्धा । खसे०। रोत्स्यति । रोत्स्यते । लुङ्लकारे । अनिटः । अनेन वृद्धिः । खसे०। अरौत्सीत् । अरौद्धां । अरौत्सुः । इत्यादीनि । आत्मनेपदे । झसात् । अनेन सेर्लोपो भवति । अरुद्ध अरुत्सातां अरुत्सत । इत्यादीनि रूपाणि सुगमानि । अस्य धातोरिरितोवा अनेन ङप्रत्ययो भवति । इरित्त्वात् । ङित्वात् । गुणाभावः । अरुधत् । अरुधतां । अरुधन् । सुगमानि । उच्छृदिर् दीप्तिदेवनयोः। उइराविती । पूर्ववत् प्रत्ययाः । रुधादेर्नम् । अनेनचतुर्षुनम्प्रत्ययो भवति । छृणत्ति । अत्र खसे चपा झसानां । अनेन दस्य तः । नश्चापदांते झसे । अनेन नस्यानुस्वारो भवति । छृंत्तः । छृंदंति । इत्यादीनि रूपाणि पूर्वसदृशानि संति । पूर्वोक्तैरेव सूत्रैः सिध्यंति । छृंते । छृंदाते । छृंदते । चतुर्णा लकाराणां रूपाणि पूर्वसदृशानि। लिट्लकारे । द्वित्वादिकं सर्वं भवति । पूर्वस्य रः । उपधायाः । अनेन । गुणः । झपानां ।.चच्छर्द । चच्छृदतुः । चच्छृदुः । चच्छर्दिथ । आत्मनेपदे । चच्छृदे । चच्छृदाते । चच्छृदिरे । इत्यादीनि रूपाणि भवन्ति । छृद्यात् । सिस्योः । अनेन गुणनिषेधः । खसे० । छृत्सीष्ट । नृत् वृद् छृद् अनेन वक्ष्यमाणेन वेट् । उपधाया लघोः अनेन गुणः । छर्दिता । अन्येषां रूपाणि सुगमानि । छर्दिष्यति । नृत्तृद्० अनेन वा इट् । खसे० । छर्त्स्यति । इत्यादीनि । लुङ् । द्वाविटौ सेर्लोपः । गुणः । अडागमः । अच्छर्दीत् । अच्छर्दिष्टाम् । अच्छर्दिषुः । अन्यानि सुगमानि । आत्मनेपदे साधनं पूर्ववत् । अच्छर्दिष्ट । अच्छर्दिषातां । अच्छर्दिषत । इत्यादीनि । अस्य धातोरिरितो वा । अनेन ङप्रत्ययो भवति । ङित्वाद्गुणाभावः । अछृदत् । अछृदतां । अछृदन् । अछृदः । अछृदतं । अछृदत । अछृदं । अछृदाव । अछृदाम । साधनमेतादृशं शतशः कृतम् । उ तृदिर् हिंसानादरयोः । उइराविती । पूर्ववत् प्रत्यया भवन्ति । रुधादेर्नम् । अनेन चतुर्षु नम्प्रत्ययो भवति । णत्वं । तृणत्ति । अस्मिन्रूपे खसे० अनेन दस्य तः । ङिति प्रत्यये परे ' नमसोस्य ' अनेन नमोऽकारस्य लोपो भवति । नश्चा० । अनेन झसे परे नकारस्यानुस्वारो भवति । हसात्० अनेन वा तकारस्य लोपो भवति । छृंत्तः । छृंतः । एतादृशमपि रूपं स्यात् । तृंदंति । तृंते । तृंदाते । तृंदते । इत्यादीनि चतुर्णां रूपाणि सुगमानि । पूर्वोक्तैरेव सूत्रैः सिध्यन्ति। लिट्लकारे । द्विश्च । पूर्वस्य रः । उपधाया लघोः । अनेन गुणः । ततर्द । कित्त्वात् गुणाभावः किति णबादौ । अन्यत्साधनं पूर्ववत् । ततृदतुः । ततृदुः । गुणो भवति थपि । ततर्दिथ । इत्यादीनि । आत्मनेपदे साधनं पूर्ववत् । ततृदे । ततृदाते ततृदिरे । अन्यानि सुगमानि । तृद्यात् । खसे० । नृत्तृद्० अनेन वा इड्निषेधः। सिस्योः । अनेन गुणनिषेधः । तृत्सीष्ट । इटि कृते गुणो भवति । तर्दिषीष्ट । अन्यानि रूपाणि सुगमानि । अन्यानि रूपाण्यन्येषां लकाराणां मूलात् ज्ञेयानि । सिव-

ञितसादिप्रत्यये इड्विकल्पः । लुङ्लकारे । सि सता० । से० । आभ्यां द्वाविटौ। सेर्लोपो भवति । उपधायाः । अनेन गुणः । दिबादावट् । वावसाने। अतर्दीत् । अतर्दिष्टाम् । अतर्दिषुः । इरितो वा अनेन वा ङप्रत्ययो भवति । ङित्त्वाद्गुणाभावः । अतृदत् । आत्मनेपदे । सिसता०। अनेनेट् । गुणः । षत्वं । ष्टुत्वं । राधपोद्धिः । अनेन द्वित्वं । अतर्दिष्ट ।अतर्दिषाताम् । अतर्दिषत । इत्युभयपदिप्रक्रिया समाप्ता ।

अथ परस्मैपदिनः । शिष्लृ विशेषणे । शिनष्टि शिंष्टः शिंषन्ति। शिंष्यात्, शिनष्टु, अशिनट्, शिशेष, शिष्यात्, शेष्टा, शेक्ष्यति, अशेक्ष्यत्, अशिषत् । हिसि हिंसायाम् । इदितः ।

अथ परस्मैपदिनः प्रक्रिया कथ्यते । तिबादयः प्रत्यया भवन्ति । रुधादेर्नम् । अनेन नम्प्रत्ययो भवति । शिष्लृ विशेषणे । लकारो लित्कार्यार्थः । पूर्ववत्सर्वं कार्यं भवति । शि नष् तिप् इति जाते । ष्टुत्वं शिनष्टि । नश्चापदांते झले । शिंष्टः । शिंषंति । षढोः कः से । षत्वं । शिनक्षि । शिंष्ठः । शिंष्ठ । शिनष्मि । शिंष्वः । शिंष्मः । शिंष्यात् । शिंष्यातां । शिंष्युः । शिनष्टु । शिंष्टात् । शिंष्टां । शिंषन्तु । झसाद्धिर्हेः । ष्टुत्वं । षोडः । शिण्ढि । अन्यानि सुगमानि । लङ्लकारे षोडः । अनेन षकारस्य डकारः । वावसाने । दिबादावट् । अशिनट् । अशिनड् । अशिंष्टां । अशिंषन् । अन्यानि सुगमानि । लिट्लकारे । द्वित्वं पूर्वस्य । उपधाया लघोः । शिशेष । शिशिषतुः । शिशिषुः । शिशेषिथ । अन्यानि सुगमानि । शिष्यात् । उपधाया लघोः । ष्टुत्वं । शेष्टा । गुणः । षढोः कः से । कषसंयोगे क्षः । शेक्ष्यति । दिबादावट् । अशेक्ष्यत् । लुङ्लकारे । लित्पुषादेर्ङः । अनेन ङप्रत्ययः । ङित्त्वाद्गुणाभावः । दिबादावट् । अशिषत् । अशिषतां । अशिषन् । हिसि हिंसायाम् । तिबादयः ॥ इदितोनुम्० । पश्चात् । रुधादेर्नम् । अनेन नम्प्रत्ययो भवति । 'हिनुस् तिप्' इति जाते सूत्रम् ।

नमः । नमः प्रत्ययात्परस्य नस्य लोपो भवति । हिनस्ति । हिंस्तः हिंसन्ति । हिंस्यात्, हिनस्तु । धौ सलोपो वा सस्य द इति केचित् । हिन्धि हिन्द्धि, अहिनत् अहिनद् ।

नमः । नमः । (पं०ए०) एकपदं सूत्रम्। नमः प्रत्ययात्परस्य नकारस्य लोपो भवति । अनेन नकारस्य लोपः । स्वरहीनं० । हिनस्ति । नमसोऽस्य । नश्चापदान्ते अनेन नमो नकारस्यानुस्वारः । हिंस्तः । हिंसन्ति । अनेनैव प्रकारेणान्यानि रूपाणि साध्यानि । हिंस्यात् । हिनस्तु । हिंस्तात् । हिंस्तां । हिंसन्तु । झसाद्धिर्हेः

तदा हिंस् धि । इति जाते सूत्रम् । धौ । धौ परे सति । सकारस्य लोपो भवति । वा सकारस्य दकारो भवति । यदा सकारस्य लोपः । तदा । हिंधि । यदा सकारस्य दकारस्तदा । हिंद्धि । अन्यानि सुगमानि । लङ्लकारे । दिवादावट् । अहिंस् दिप् इति जाते ।

**दिपि सस्य दः सिपि वा । अहिनत्, अहिनः, जिहिंस, हिंस्यात्, हिंसिता, हिंसिष्यति, अहिंसिष्यत्, अहिंसीत् । भञ्जो आमर्दने । ओइत् । भनक्ति, भङ्क्तः, बभञ्ज, भञ्ज्यात्, भङ्क्ता, भंक्ष्यति, अभंक्ष्यत् ।**

**दिपि सस्य दः** । अनेन सकारस्य दकारः । दिस्योर्हसात् । वावसाने । अहिनत् । अहिनद् । अहिंस्तां । अहिंसन् । अहिनत् । अहिनः । अहिंस्तं । अहिंस्त । अहिनसं । अहिंस्व । अहिंस्म । लिट्लकारे । द्वित्वादिकं । कुहोश्चुः । जिहिंस । जिहिंसतुः । जिहिंसुः । हिंस्यात् । हिंसिता । सिसता अनेन इडागमो भवति । हिंसिष्यति । दिवादावट् । अहिंसिष्यत् । लुङ्लकारे । द्वाविटो । सेर्लोपः । दिवादावट् । अहिंसीत् । अहिंसिष्टां । अहिंसिषुः । इत्यादीनि । भञ्जो आमर्दने । ओकार इत् । तिबादयः । रुधादेर्नम् । भनज् तिप् इति जाते । नमः । चोः कुः । खसे चपा० । भनक्ति । नमसोऽस्य । अनेन ङिरपकारस्य लोपः । नश्चापदान्ते० । भंक्तः । भंजंति । क्लिात्० । कप० । भनक्षि । भंज्यात् । भंज्यातां । भंज्युः । भनक्तु । भंक्तात् । भंक्तां । भंजंतु । भंग्धि । भंक्तात् । भंक्तं । भंक्त । भनजानि । भनजाव । भनजाम । चोः कुः । दिस्योर्हसात् । दिवादावट् । वावसाने । अभनक् । अभनग् । अभंक्तां । अभंजन् । अभनक् । अभनग् । अभंक्तं । अभंक्त । अभनजं । अभंज्व । अभंज्म । लिट्लकारे । द्वित्वादिकं झपानां । बभंज । बभंजतुः । बभंजुः । बभंजिथ । अत्त्वतः । चोः कुः । खसे चपा० । बभंक्थ । इत्यादीनि । भज्यात् । अत्र नोलोपः अनेन नकारस्य लोपः । भंज् ता इति जाते । चोः कुः । खसेचपा० । भंक्ता । भंक्तारौ । भंक्तारः 'भंज् स्यप् तिप्' इति जाते । चोः कुः । खसे० । क्लिात्० । कप० । भंक्ष्यति । दिवादावट् । अभंक्ष्यत् । लुङ्लकारे । भूते सिः । सेः । दिवादावट् । अभंज् सि ईट् दिप् इति जाते । सूत्रम् ।

**सावनिटो नित्यं वृद्धिः । अनिटो धातोर्नित्यंवृद्धिर्भवति परस्मैपदे सौ परे । अभांक्षीत् अभाङ्क्ताम् अभांक्षुः । अञ्जू व्यक्तिमृक्षणकान्तिगतिषु । अनक्ति, अञ्ज्यात्, अ-**

नक्तु, आनक् आनग्, आनञ्ज, अज्यात्। अञ्जिता, अङ्क्ता, अञ्जिष्यति, अंक्ष्यति, आञ्जिष्यत, आंक्ष्यत्।

सावनिटो नित्यं वृद्धिः। सौ (स० ए०) अनिटः। (ष० ए०) नित्यं (प्र० ए०) वृद्धिः। (प्र० ए०) अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे सुगममिदं सूत्रम्। चोः कुः। खसे०। किलात्०। कष०। अभांक्षीत्। झसात्०। अभांक्तां। अभांक्षुः। अन्यानि सुगमानि। अंजू व्यक्तिमृक्षणकांतिगतिषु। ऊकार इड्विकल्पार्थः। तिबादयः। रुधादेर्नम्। चोः कुः। खसे०। अनक्ति। नमसोऽस्य। अङ्क्तः। अञ्जन्ति। अंज्यात्। अंज्यातां। अंज्युः। अनक्तु। अंक्तात्। अंक्तां। अंजंतु। अंग्धि। दिबादावट्। स्वरादेः परः। सवर्णे दीर्घः। चोः कुः। दिस्योर्ईसात्। वावसाने। आनक्। आनग्। नमः। आंक्तां। नश्चापदांते। आंजन्। अन्यानि सुगमानि। लिट्लकारे। द्वित्वादिकं। नुगशां०। आम्वोर्णादौ। आनंज। आनंजतुः। आनंजुः। आनंजिथ। अज्यात्। ऊदितो वा अनेन सूत्रेण इड्विकल्पो भवति। अंजिता। इडभावे। चोः कुः। खसे०। अंक्ता। अंजिष्यति। इडभावे। कुत्वं। खसे०। षत्वं। कष०। अंक्ष्यति। दिबादावट्। स्वरादेः। आंजिष्यात्। इडभावे आंक्ष्यत्। लुङ्लकारे। इड्विकल्पे प्राप्ते सूत्रम्।

अञ्जेः सौ नित्यमिड्वाच्यः। आञ्जीत्। इति रुधादिषु परस्मैपदिप्रक्रिया॥

अंजेः। अंजेर्धातोः सौ नित्यं इड् वाच्यः। अन्यत् साधनं तु पूर्ववत्। आञ्जीत्। आंजिष्टाम्। आञ्जिषुः। इत्यादीनि। इति परस्मैपदिप्रक्रिया कथिता।

अथात्मनेपदिनः। ञिइन्धि दीप्तौ। ञिई इतौ। इन्धे, इन्धीत, इन्धाम्, ऐन्ध, इन्धाञ्चक्रे, इन्धिषीष्ट, इन्धिता, इन्धिष्यते, ऐन्धिष्यत, ऐन्धिष्ट। इति रुधादिष्वात्मनेपादिप्रक्रिया॥ इति नम्विकरणा रुधादयः॥

अथात्मनेपदिप्रक्रिया कथ्यते। ञिइन्धि दीप्तौ। ञिई इतौ। तबादयः। रुधादेर्नम्। नमः। तथोर्धः। नमसोस्य। नश्चापदान्ते। हसात्। इन्धे। इन्धाते। इन्धते। इन्धीत। इन्धीयाताम्। इन्धीरन्। इन्धाम्। इन्धाताम्। इन्धताम्। दिबादावट्। स्वरादेः परः। अइए। एऐऐ। अन्यत् साधनं तु पूर्ववत्। ऐंध। ऐंधातां। ऐंधत। ऐंधाः। ऐंधाथां। ऐंध्वम्। कासादिप्रत्ययादाम्। अनेनाम्। अन्यत्साधनं तु पूर्ववत्। इन्धांचक्रे। इन्धामास। इन्धांबभूव। रूपाणि सुगमानि। सि-

सता० । अनेनेट् । इन्धिषीष्ट । इन्धिता । इन्धिष्यते । द्वावमागमौ । अइए । एऐऐ ऐन्धिष्यत । लुङ्लकारे । ऐन्धिष्ट । ऐन्धिषातां । ऐन्धिषत । इत्यात्मनेपदिर्मक्रिया समाप्तिमगमत् । इति नम्विकरणा रुधादयो धातवः कथिताः ।

॥ अथ तनादयः ॥ सर्वे उभयपदिनः । तनु विस्तारे। तनादेरुप् । तनादेर्गणादुप् प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । नूपः । तनोति, तनुते, तनुयात्, तन्वीत, तनोतु, तनुताम्, अतनोत्, अतनुत । ततान तेनतुः तेनुः । तेने, तन्यात्, तनिषीष्ट, तनिता २, तनिष्यति, तनिष्यते, अतनिष्यत, अतनिष्यत, अतानीत्-अतनीत्, अतनिष्ट ।

अथ तनादयो धातवः कथ्यन्ते । तनादयः सर्वे उभयपदिनः सन्ति । तनु विस्तारे तिबादयः तआदयश्च प्रत्यया भवन्ति । सूत्रम् । तनादेरुप् । तनादेः (पं० ए०) उप् (प्र. ए.) तनादेर्गणात् चतुर्षु लकारेषु परेषु उप्प्रत्ययो भवति । अपोऽपवादः । अनेन उप् । तनु तिप् । इति जाते । नूपः । अनेन गुणः । तनोति । तनुतः । नुधातोः । तन्वन्ति । तनोषि । तनुथः । तनुथ । तनोमि । ओर्वमोर्वा लोपः । तनुवः । तन्वः । तनुमः । तन्मः । तनुते । तन्वाते । आतोन्तोदनतः । तन्वते । इत्यादीनि । तनुयात् । नुधातोः । तन्वीत । तनोतु । हौ परे । ओर्वाहेः । तनु । तनुतां । तन्वातां । तन्वतां । तनुष्व । अन्यानि सुगमानि । दिबादावट् । अतनोत् । अतनुताम् । अतन्वन् । आत्मनेपदे । अतनुत । इत्यादीनि रूपाणि ज्ञातव्यानि । लिट्लकारे । द्विश्च । पूर्वस्य । अत उपधायाः । ततान । लोपः पचां । तेनतुः । तेनुः । अत्त्वतः । तेनिथ । ततन्थ । इत्यादीनि । आत्मनेपदे । तेने । तेनाते । तेनिरे । अन्यानि सुगमानि । तन्यात् । सिसता० । षत्वं । तनिषीष्ट । तनिता । तनिता । लुङ्लकारे । णित्पे । अनेन णित्त्वात् वृद्धिः । अन्यत्साधनं सुगमम् । अतानीत् । अतानिष्टाम् । अतानिषुः । आत्मनेपदे । अतनिष्ट । सूत्रम् ।

तनादेरकरोतेस्तन्थासोर्वा सिलोपो वाच्यः । लोपस्त्वनुदात्ततनाम् । अतत अतथाः अतनिष्ठाः । क्षणु क्षिणु हिंसायाम् । क्षणोति क्षणुते क्षणुयात् क्षण्वीत क्षणोतु क्षणुताम् अक्षणोत् अक्षणुत । चक्षाण, चक्षणे, क्षण्यात्, क्षणिषीष्ट, क्षणिता २, क्षणिष्यति, क्षणिष्यते, अक्षणिष्यत,

अक्षणिष्यत । ह्म्यन्तक्षणोति० न वृद्धिः । अक्षणीत् । अ-क्षणिष्ट-अक्षत । अक्षथाः । अक्षणिष्ठाः ।

तनादेः । अकरोतेस्तनादेस्तन्थासोः परयोः सेर्लोपो वाच्यः । अनेन वा सेर्लोपः । लोपस्त्वनुदात्त० । अनेन नकारस्य लोपः । अतत । अतनिषाताम् । अतनिषत । सेर्लोपः । नकारस्य लोपः । अतथाः । अतनिष्ठाः । अन्यानि सुगमानि । क्षणु । क्षिणु । हिंसायां । पूर्ववत् प्रत्यया भवन्ति । तनादेरुप् । नूपः । णत्वं । क्षणोति । क्षणुतः । क्षण्वंति । क्षणुते । क्षणुयात् । क्षण्वीत । क्षणोतु । क्षणुतां । अक्षणोत् । अक्षणुत । लिट्लकारे । द्विश्च । पूर्वस्य । कुहोश्चुः । अत उपधायाः । चक्षाण । चक्षणतुः । चक्षणुः । चक्षणे । चक्षणाते । चक्षणिरे । क्षण्यात् । सिसता० । षत्वं । क्षणिषीष्ट । क्षणिता । क्षणिता । अन्येषां मूलात् ज्ञेयानि । लुङ्लकारे । द्राविटौ । सेर्णित्त्वात् अत उपधायाः । अनेन वृद्धौ प्राप्तायां ह्म्यन्तक्षण० । अनेन तन्निषेधः । अक्षणीत् अन्यानि सुगमानि । आत्मनेपदे । अक्षणिष्ट । तनादेः । अनेन वा सेर्लोपः । लोपस्त्वनुदात्त० । अक्षत । अक्षणिषातां । अक्षणिषत । अक्षणिष्ठाः । वा सेर्लोपः । अक्षथाः । इत्यादीनि । क्षिणुधातोरूपाणि कथ्यन्ते । प्रत्ययादयः पूर्ववत् । तनादेरुप् । सूत्रम् ।

तनादेरुपधाया गुणो वा पिति । क्षिणोति क्षेणोति अक्षेणीत् अक्षित-अक्षणिष्ट । षणु दाने । सेने सायात् सन्यात् असात-असनिष्ठ असाथाः-असनिष्ठाः । डुकृञ् करणे । डुञावितौ । गुणः । नूपः । करोति ।

तनादेः । तनादेर्धातोरुपधाया गुणो वा भवति पिति प्रत्यये परे । क्षिणोति । क्षेणोति । क्षिणुते । क्षिणुयात् । क्षिण्वी । क्षिणोतु । क्षेणोतु । क्षिणुताम् । अक्षिणोत् । अक्षेणोत् । अक्षिणुत । अन्यानि रूपाणि सुगमानि । लिट्लकारे उपधाया लघोः । चिक्षेण । चिक्षिणतुः । चिक्षिणुः । चिक्षिणे । चिक्षिणाते । चिक्षिणिरे इत्यादीनि । क्षिण्यात् । सिसता० । क्षेणिषीष्ट । क्षेणिता । क्षेणिता । लुङ्लकारे । अक्षेणीत् । आत्मनेपदे । अक्षेणिष्ट । अक्षेत । इत्यादीनि । षणु दाने । पूर्ववत् प्रत्ययाः । तनादेरुप् । आदेः ष्णः स्नः । नूपः । सनोति । सनुतः । सनुते । सनुयात् । सन्वीत । सनोतु । ह्रौ परे । सनु । सनुतां । असनोत् । असनुत । रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । वृद्धिः । ससान । लोपः पचां० । सेनतुः । सेनुः । सेने । सेनाते । सेनिरे । सन् यान् इति स्थिते । जनसनखनां अनेन वा आकारो भवति । सायात् । सन्यात् । सिसता० । सनिषीष्ट । सनिता । सनिता ।

लुङ्लकारे । असानीत् । असनिष्ट । असत । असनिष्ठाः । असथाः । इत्यादीनि । डुकृञ् करणे । डुञावितौ । तनादेरुप् । गुणः । नूपः । करोति । कृ उप् तस् इति जाते । गुणः । सूत्रम् ।

ङित्यदुः । करोतेरकारस्य उकारो भवति ङिति विभक्तौ परतः । कुरुतः कुर्वन्ति । करोषि कुरुथः कुरुथ । करोमि ।

ङित्यदुः । ङिति ( स. ए. ) अत् ( ष० ए० ) उः ( प्र० ए० ) करोतेर्धातोरकारस्य उकारो भवति ङिति विभक्तौ परतः । कुरुतः । कुर्वंति । करोषि । कुरुथः । कुरुथ । करोमि । कुरुवस् इति जाते । नुर्वमोर्वा । अनेन लोपविकल्पे प्राप्ते । सूत्रम् ।

कृञो नित्यं वमोरुलोपो वाच्यः । कुर्वः कुर्मः । कुरुते ।

कृञः । कृञो धातोर्नित्यं वकार मकारयोरुकारस्य लोपो वाच्यः । अनेन नित्यं लोपः । य्वोर्विहसे अनेन दीर्घे प्राप्ते । सूत्रम् ।

कुर्छुरोर्न दीर्घः ।

कुर्छुरोः । कुर्छुरोः दीर्घो न भवति । अनेन कुरुते । दीर्घाभावः । कुर्वः । कुर्मः । कुरु यात् । इति जाते । सूत्रम् ।

कृञो ये । कृञ उत्तरस्य उप्प्रत्ययस्य लोपो भवति ये परे । कुर्यात् कुर्वीत करोतु करवाणि कुरुताम् करवै अकरोत् अकुरुत । चकार चक्रतुः चक्रुः । चकर्थ, चक्रे, क्रियात्, कृषीष्ट, कर्ता, करिष्यति, अकरिष्यत्, अकार्षीत्, अकृत अकृषाताम् अकृषत ।

कृञो ये । कृञः । ( पं. ए. ) ये । ( स. ए. ) कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति । अनेन उकारस्य लोपः । कुर्यात् । कुर्वीत । करोतु । कुरुतात् । कुरुतां । कुर्वंतु । ओर्वाहि० । कुरु । णत्वं । करवाणि । कुरुतां । कुर्वातां । कुर्वतां ॥ करवै । अकरोत् । अकुरुत । रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । रः कुहोश्चुः । धातोर्नामिनः । चकार । ऋरं । चक्रतुः । चक्रुः । क्रादित्वान्नेट् । चकर्थ । चक्रे । चक्राते । चक्रिरे । ऋतोरिङ् । क्रियात् । षत्वं । कृषीष्ट । गुणः कर्ता । कर्त्ता । हनृतःस्यपः । गुणः । करिष्यति । करिष्यते । दिवादावट् । अकरिष्यत् अकरिष्यत । लुङ्लकारे । धातोर्नामिनः अनेन वृद्धिः । अकार्षीत् । अकार्ष्टां । अकार्षुः । तनादेः । अकृत । अकृषातां । अकृषत । सूत्रम् ।

सम्पर्युपेभ्यः करोतेर्भूषणेऽर्थे सुट्। संस्करोति।

सम्पर्युपेभ्यः। संपर्युपेभ्य उपसर्गेभ्यः करोतेर्धातोर्भूषणेऽर्थे सुट् भवति। संस्करोति। इत्यादीनि। सूत्रम्।

अड्द्वित्वव्यवधानेऽपि सुट् स्यात्। समस्करोत् सञ्चस्कार।

अड्द्वित्व०। अड्द्वित्वव्यवधाने सत्यपि सुट् स्यात्। समस्करोत्। संचस्कार। टित्त्वादादौ भवति सुट्। सूत्रम्।

ससुट् कृञो णादौ नित्यमिड्वाच्यः। सञ्चस्करिथ। एवमुपस्कुरुते। मनु अवबोधने। मनुते मेने मन्ता। वनु याचने। परस्मैपद्ययमित्येके। वनुते। इति तनाद्युभयपदिप्रक्रिया। इत्युब्विकरणास्तनादयः।

ससुट्कृञः। सुटा सह वर्त्तमानः ससुट्। ससुट् चासौ कृञ् च ससुट्कृञ्। तस्य ससुट्कृञः। ससुट्करोतेर्धातोर्णादौ परे सति नित्यमिड् वाच्यः। संचस्करिथ। एवमुपस्कुरुते। मनु अवबोधने। पूर्ववत् प्रत्यया भवंति। तनादेरुप्। अयं धातुरात्मनेपदी। मनुते। मन्वाते। मन्वते। मन्वीत। मनुतां। दिबादावट्। अमनुत। रूपाणि सुगमानि। लिट्लकारे। द्वित्वादिकं। लोपःपचां। मेने। मेनाते। मेनिरे। इत्यादीनि। नश्चापदान्ते। मंसीष्ट। मंता। मंस्यते। दिबादावट्। अमंस्यत। लुङ्लकारे। अमंस्त। अमंसातां। अमंसत। इत्यादीनि। वनु याचने। अयमप्यात्मनेपदी। तआदयः प्रत्यया भवंति। तनादेरुप्। वनुते। वन्वीत। वनुतां। अवनुत। लिट्लकारे। वादित्वान्नेत्वपूर्वलोपौ भवतः। ववने। ववनाते। ववनिरे। वंसीष्ट। वंता। वंस्यते। अवंस्यत। लुङ्लकारे। अवंस्त। अवंसातां। अवंसत। सर्वत्र नश्चापदांते झसे। अनेन अनुस्वारः। अयं धातुः परस्मैपदी। इति एके आचार्या वदंति। तन्मते। वनोति। इत्यादीनि रूपाणि भवंति। इत्युब्विकरणास्तनादयो धातवः कथिताः।

अथ तुदादयः। तत्रादावुभयपदिनः। तुद व्यथने। अकार उभयपदार्थः।

अथतुदादयोधातवः कथ्यंते। तत्रादावुभयपदिनो धातवः सन्ति। तुद व्यथने। अकार उभयपदार्थः। तिबादयस्तआदयश्च प्रत्यया भवन्ति। सूत्रम्।

तुदादेरः। तुदादेर्गणादः प्रत्ययो भवति चतुर्षु परेषु। अपोऽपवादः। ङित्त्वान्न गुणः। तुदाति. तुदते. तुदेत. तुदेत.

तुदतु, तुदताम्, अतुदत्, अतुदत, तुतोद, तुतुदे, तुद्यात्, तुत्सीष्ट, तोत्ता, तोत्स्यति, तोत्स्यते, अतोत्स्यत्, अतोत्स्यत। अतौत्सीत् अतौत्ताम् अतौत्सुः। अतुत्त अतुत्साताम् अतुत्सत। भ्रस्जो पाके। ओइत्।

तुदादेरः। तुदादेः। (पं० ए०) अः (प्र० ए०) तुदादेर्गणात् अः प्रत्ययो भवति चतुर्षु परेषु। अपोऽपवादः। ङित्त्वान्न गुणः। तुदति। आत्मनेपदे। तुदते। रूपाणि सुगमानि। तुदेत्। तुदेत। तुदतु। तुदतां। अतुदत्। अतुदत। रूपाणि भूधातुवत्। किंतु गुणाभावः। लिट्लकारे। द्वित्वादिकं। उपधाया लघोः अनेन गुणो भवति। तुतोद। तुतुदतुः। तुतुदुः। तुतोदिथ। इत्यादीनि। आत्मनेपदे। तुतुदे। तुद्यात्। खसे०। तुत्सीष्ट। अन्येषां मूलतो ज्ञेयानि। लुङ्लकारे। अनिटो नामिवतः। अनेन वृद्धिः। अतौत्सीत्। झसात्। अनेन सेर्लोपः। अतौत्तां। अतौत्सुः। इत्यादीनि। आत्मनेपदे। झसात्। अनेन झसे परे सेर्लोपः। सिस्योः। अनेन गुणनिषेधः। अतुत्त। अतुत्सातां। अतुत्सत इत्यादीनि भवन्ति। भ्रस्जो पाके। ओकार इत्। तिबादयो भवन्ति। तुदादेरः। अनेन अप्रत्ययो भवति। सूत्रम्।

अन्यत्र सो जः। झसूपरत्वाभावे सस्य जो भवति। ग्रहां क्ङिति च।

अन्यत्र सोजः। अन्यत्र। (स. ए.) सः (ष० ए०) जः (प्र० ए०) झसूपरत्वाभावे सति सकारस्य जकारो भवति। अनेन सस्य जकारः। सूत्रम्।

अप्रत्ययो ङिद्वत्। भृज्जति, भृज्जते, बभ्रज्ज। ऋसंयोगात्०। इति कित्त्वाभावान्न संप्रसारणम्। बभ्रज्जतुः बभ्रज्जुः। बभ्रज्जिथ-बभ्रष्ठ बभ्रज्जे।

अप्रत्ययो ङिद्वद् ज्ञातव्यः। ङित्त्वात्संप्रसारणं। 'ग्रहां क्ङिति च'। अनेन भवति। भृज्जति। भृज्जते। चतुर्णां लकाराणां रूपाणि सुगमानि लिट्लकारे। द्विश्च। पूर्वस्य हसादिः। झपानां। 'अन्यत्र सो जः।' अनेन सस्य जः। बभ्रज्ज। कित्त्वाभावात् संप्रसारणं न भवति। बभ्रज्जतुः। बभ्रज्जुः बभ्रज्जिथ। बभ्रष्ठ। आत्मनेपदे। बभ्रज्जे। बभ्रज्जाते। बभ्रज्जिरे। इत्यादीनि। सूत्रम्।

भृज्जतेः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः। बभर्ज, बभर्जे, भृज्यात्-भर्ज्यात्, भ्रक्षीष्ट-भर्क्षीष्ट, भ्रष्टा-भर्ष्टा,

भ्रक्ष्यति-भर्क्ष्यति, अभ्रक्ष्यत्-अभर्क्ष्यत्, अभ्राक्षीत्-अभार्क्षीत्, अभ्रष्ट-अभर्ष्ट । दिश अतिसर्जने । दिक्षीष्ट, अदिक्षत्, अदिक्षत । क्षिप प्रेरणे । क्षिप्सीष्ट, अक्षिप्त । कृष् विलेखने । कृक्षीष्ट, क्रष्टा-कर्ष्टा, अकार्क्षीत्-अक्राक्षीत् । अकृक्षत-अकृष्ट अकृक्षाताम् अकृक्षत । मिल संगमे । मिमिले, अमेलिष्ट । मुच्लृ मोक्षणे ।

भ्रस्जतेः । भ्रस्जतेर्धातोः सकाररेफौ लुप्त्वा रमागमोऽनपि वा वाच्यः । सुगममिदं सूत्रम् । मिदन्त्यात्स्वरात्परो भवति । तत्पक्षे । बभर्ज्ज । बभर्ज्जतुः । बभर्ज्जुः । आत्मनेपदे । बभर्ज्जे । इत्यादीनि । अन्यत्र सोजः । संप्रसारणं । भृज्ज्यात् । भ्रस्जतेः । भर्ज्ज्यात् । भ्रस्ज् सीष्ट । इति स्थिते । स्कोराद्योश्च । अनेन सस्य लोपः । चोः कुः । खसे० । षत्वं । कषसंयोगे० । भ्रक्षीष्ट । भ्रस्जतेः । तदा भर्क्षीष्ट । अन्येषां मूलाद् ज्ञातव्यानि सर्वाणि रूपाणि । अनेनैव प्रकारेण सिध्यन्ति । लुङ्लकारे । अनिटो नामिवतः । अनेन वृद्धिः । अन्यत्साधनं तु पूर्ववत् । अभ्राक्षीत् । झसात् अनेन सेर्लोपो भवति । अभ्राष्टाम् । अभ्राक्षुः । रमागमे कृते । अभार्क्षीत् । आत्मने पदे । स्कोराद्योश्च । छशष० अनेन षकारः । अभ्रष्ट । अभ्रक्षाताम् । अभ्रक्षत । रमागमे कृते । अभर्ष्ट । इत्यादीनि रूपाणि भवन्ति । दिश अतिसर्जने । अकार उभयपदार्थः । पूर्ववत्प्रत्यया भवन्ति । तुदादेरः । दिशति । दिशते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । उपधाया लघोः । अनेन गुणः । दिदेश । दिदिशे । अन्यानि रूपाणि सुगमानि । दिश्यात् । ' दिश् सीष्ट ' इति स्थिते । छशष० । षढोः० । षत्वं । कषसंयोगे क्षः । दिक्षीष्ट । षत्वं । ष्टुत्वं । देष्टा । अत्र गुणो भवति । देष्टा । देक्ष्यति । देक्ष्यते । ' अदेक्ष्यत् । अदेक्ष्यत ।' हशषान्तात् । अनेन लुङि सक् । अन्यत् साधनं तु पूर्ववत् । अदिक्षत् । आत्मनेपदे । अदिक्षत । अदिक्षाताम् । अदिक्षत । इत्यादीनि भवन्ति । क्षिप् प्रेरणे । प्रत्ययादयः पूर्ववत् । क्षिपति । क्षिपते । लिट्लकारे । द्विस्वादिकं । गुणः । चिक्षेप । चिक्षिपे । क्षिप्यात् । क्षिप्सीष्ट । क्षेप्ता । क्षेप्ता । अन्येषां रूपाणि सुगमानि । लुङ्लकारे । अनिटः । अनेन वृद्धिः । अक्षैप्सीत् । झसात्० । अक्षैप्ताम् । आत्मनेपदे । अक्षिप्त । इत्यादीनि रूपाणि । कृष् विलेखने । तुदादेरः । कृषति । कृषते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्विश्च । रः । कुहोश्चुः । उपधाया लघोः । चकर्ष । चकृषतुः । चकृषुः । अत्त्वतः । चकर्षिथ । चकर्ष्ठ । चकृषे । चकृषाते । चकृषिरे । इत्यादीनि । कृष्यात् । कृष् सीष्ट । इति स्थिते । सिरयोः । अनेन गुणनिषेधः । षढोः० । षत्वं । कषसंयोगे

क्षः । कृक्षीष्ट । गुणः । ष्टुत्वं । कर्ष्टा । 'रारोझसेदृशां' अनेन अरो रकारो वा भवति । क्रष्टा । कर्ष्टा । कर्क्ष्यति । क्रक्ष्यति । अन्येषां रूपाणां सिद्धिरनेनैव प्रकारेण । लुङ्लकारे । 'अनिटः ।' अनेन वृद्धिः । अन्यत्साधनं तु पूर्वसदृशमस्ति । अकार्क्षीत् । अकार्ष्टां । 'अत्र झसात्' अनेन सेर्लोपो भवति । अकार्क्षुः । रारो झसे । अक्राक्षीत् । आत्मनेपदे । सिस्योः अनेन गुणनिषेधः । 'झसात्०' अनेन झसे परे सेर्लोपः । अकृष्ट । अकृक्षातां । आतोन्तो० । अकृक्षत । हशषान्तात् । अकृक्षत् । आत्मनेपदे । अकृक्षत । अकृक्षातां । आतोन्तो० । अकृक्षत । इत्यादीनि रूपाणि ज्ञातव्यानि । मिल संगमने । अकारः । तुदादेरः । मिलति मिलते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । उपधाया लघोः । मिमेल । मिमिलतुः । मिमिलुः । मिमेलिथ । इत्यादीनि । मिमिले । मिल्यात् । उपधाया लघोः । मेलिषीष्ट । अत्र पत्वं च भवति । मेलिता । मेलिता । मेलिष्यति । मेलिष्यते । अमेलिष्यत् । अमेलिष्यत । लुङ्लकारे । द्वाविटौ । इट ईटि । अनेन सेर्लोपो भवति । दिवादावट् । अमेलीत् । अमेलिष्टां । अमेलिषुः । आत्मनेपदे । अमेलिष्ट । अमेलिषातां । अमेलिषत । इत्यादीनि ॥ मुचॢ । मोक्षणे । लकारो लित्कार्यार्थः । तुदादेरः । सूत्रम् ।

मुचादेर्मुम् । मुचादीनां मुमागमो भवति अप्रत्यये परे । मुञ्चति, मुञ्चते, मुमोच, मुमुचे, मुच्यात् । 'सिस्योः' अनेन गुणाभावः । चोः कुः । मुक्षीष्ट, मोक्ता, मोक्ष्यति, मोक्ष्यते, अमोक्ष्यत्, अमोक्ष्यत, अमुचत्-अमुक्त । लुप्लृ छेदने । लुम्पति, लुप्सीष्ट, अलुपत् । विदॢ लाभे । विन्दति, अवेदिष्ट । अनिडयमित्येके । वेत्ता । लिप् उपदेहे । मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एते मुचादयः । लिम्पति, लिलेप, अलिपत्, अलिपत ।

मुचादेर्मुम् । मुचादेः । ( प० ए० ) मुम् ( प्र. ए. ) मुचादीनां धातूनां मुमागमो भवत्यप्रत्यये परे । मिदं० । मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एते मुचादयो धातवो ज्ञातव्याः । मुञ्चति । मुञ्चते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे द्विश्च । पूर्वस्य । उपधाया लघोः । मुमोच । मुमुचतुः । मुमुचुः । अस्वतः । मुमोचिथ । चोः कुः । मुमोक्थ । मुमुचे । मुच्यात् । चोः कुः । पत्वं । कपसं० । 'सिस्योः' अनेन गुणनिषेधः । मुक्षीष्ट । गुणः । चोः कुः । मोक्ता । मोक्ता । मोक्ष्यति । मोक्ष्यते । अमोक्ष्यत् । अमोक्ष्यत । लित्पुषादेर्ङः अनेन लुङि

ङप्रत्ययो भवति । ङित्त्वाद्गुणाभावः । अमुचत् । आत्मनेपदे । झसात् । अनेन से-र्लोपो भवति झसे परे । अमुक्त । अमुक्षाताम् । अमुक्षत । लुप् छेदने । तुदादेरः । मुचादेर्मुम् । लुंपति । लुंपते । चतुर्णां सुगमानि । लिट्लकारे । लुलोप । लुलुपे । लुप्यात् । 'सिस्योः' अनेन गुणनिषेधः । लुप्सीष्ट । लोप्ता । लोप्ता । लोप्स्यति लोप्स्य-ते । अलोप्स्यत् । अलोप्स्यत । लित्पुषादेर्ङः । अलुपत् । आत्मनेपदे । झसात् । अ-लुप्त । अलुप्साताम् । अलुप्सत । इत्यादीनि । सूत्रम् ।

लिपिसिचिह्वयतीनामात्मनेपदे सेर्ङो वा वाच्यः । अलिप्त । षिच्लृ क्षरणे । सिञ्चति, सिषेच, सिच्यात् सिक्षीष्ट, सेक्ता २, सेक्ष्यति, असिचत्, असिक्त । इति तुदादिषूभ-यपदिप्रक्रिया ॥

लिपिसिचिह्वयतीनाम् । एषां धातूनामात्मनेपदे सेर्ङो वा वाच्यः । अने-नात्मनेपदेऽपि । सेर्ङः । अलिपत । अलिपेतां । अलिपन्त । इत्यादीनि । षिच्लृ क्ष-रणे । तुदादेरः । मुचादेर्मुम् । आदेः ष्णः स्नः । सिञ्चति । सिञ्चते । अन्येषां सु-गमानि । लिट्लकारे । द्वित्वादिकं । षत्वं । गुणः । सिषेच । सिषिचतुः । सिषि-चुः । सिषेचिथ । अस्वतः । चोः कुः । सिषेक्थ । सिषिचे । सिच्यात् । चोः कुः । षत्वं । कष० । 'सिस्योः' अनेन गुणनिषेधः । सिक्षीष्ट । गुणः । चोः कुः । सेक्ता । सेक्ता । सेक्ष्यति । सेक्ष्यते । असेक्ष्यत् । असेक्ष्यत । लित्पुषादेर्ङः । असिचत् । लि-पिसिचि० । असिचत । असिचेतां । असिचन्त । ङेरभावपक्षे । झसात्० । चोः कुः । असिक्त । असिक्षातां । असिक्षत । इत्यादीनि । इत्युभयपदिनो धातवः कथिताः ।

अथ परस्मैपदिनः । कृती छेदने । कृन्तति चकर्त कृत्यात् कर्तिता कर्तिष्यति अकर्तिष्यत् अकर्तीत् । लुभ विमोहने । लोभिता-लोब्धा अलोभीत् । चृती हिंसाग्रन्थनयोः । चर्ति-ष्यति चर्त्स्यति अचर्तीत् । विध विधाने । वेधिता । कुट कौटिल्ये ।

अथ परस्मैपदिनो धातवः कथ्यन्ते । तिबादयः सर्वत्र भवन्ति । तु-दादेरः । अयमपि चतुर्षु भवति । कृती छेदने । ईकार इत् । मुचादेर्मुम् । कृन्तति । कृन्तते । चतुर्णां सुगमानि रूपाणि । लिट्लकारे । द्वित्वं । रः । उपधाया लघोः । कुहोश्चुः । चकर्त्त चकृततुः चकृतुः । चकृत । कृत्यात् । सिसता० । गुणः । कर्ति-

ता । कर्त्तिष्यति । अकर्त्तिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । उपधाया लघोः। अकर्त्तीत् । अकर्त्तिष्टां । अकर्त्तिषुः । लुभ् विमोहने । तुदादेरः । लुभति । लुभेत् । लुभतु । अलुभत् । लिट्लकारे । द्वित्वादिकं० । उपधाया लघोः । लुलोभ । लुलुभतुः । लुलुभुः । लुभ्यात् । इषुसह० । लोभिता । इडभावे गुणः । तथोर्धः । झबेजबाः । लोब्धा । लोब्धारौ । लोब्धारः । लोभिष्यति । अलोभिष्यत् । लुङ्लकारे । द्वाविटौ । उपधाया लघोः। अलोभीत् । अलोभिष्टाम् । अलोभिषुः । चृति हिंसाग्रन्थनयोः । ईकार इत् । तुदादेरः । चृतति । चृतेत् । चृततु । अचृतत् । लिट्लकारे । द्विश्च । पूर्वस्य रः । उपधाया लघोः । चचर्त्त । चचृततुः । चचृतुः । चृत्यात् । सिसता० । गुणः । चर्त्तिता । नृत् । वृद् । अनेन स्यपि वा इट् । चर्त्तिष्यति । चर्त्स्यति । अचर्त्तिष्यत् । अचर्त्स्यत् । लुङ्लकारे । द्वाविटौ । अचर्त्तीत् । अचर्त्तिष्टाम् । अचर्तिषुः। विध विधाने । तुदादेरः। विधति । चतुर्णां सुगमानि । लिट्लकारे। द्वित्वादिकं । गुणः । विवेध । विविधतुः । विविधुः। विध्यात् । सिसता० । गुणः । वेधिता । वेधिष्यति । अवेधिष्यत् । लुङ्लकारे । द्वाविटौ । गुणः । सेर्लोपः । अलोभीत् । अलोभिष्टाम् । अलोभिषुः । इत्यादीनि । कुट कौटिल्ये । अकार इत् । तुदादेरः । कुटति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्विश्च पूर्वस्य । कुहोश्चुः। उपधाया लघोः । चुकोट । चुकुटतुः । चुकुटुः । 'चुकुट इट थप् इति जाते । उपधाया लघोः । अनेन गुणे प्राप्ते । सूत्रम् ।

**कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङिद्वत् ।** चुकोट चुकुटिथ कुटिता अकुटीत् । त्रुट् छेदने । त्रुट्यति त्रुटति । ओव्रश्चू छेदने । ओऊ इतौ। ग्रहां क्ङिति च। वृश्चति । वव्रश्च ववृश्चतुः ववृश्चुः । वव्रश्चिथ वव्रष्ठ वृश्च्यात् । ऊदितो वा । व्रश्चिता-व्रष्टा । स्कोराद्योश्च व्रश्चिष्यति व्रक्ष्यति अव्रश्चीत् अव्राक्षीत् अव्राष्टाम् । कॄ विक्षेपे । ॠत इर् । किरति चकार चकरतुः कीर्यात् करिता । ईटो ग्रहाम् । करीता करीष्यति-करिष्यति अकरीष्यत् अकरिष्यत् अकारीत् ।

कुटादेः । कुटादेर्धातोर्ञ्णिद्वर्जः प्रत्ययो ङिद्वत् । ङित्त्वाद्गुणाभावः । चुकुटिथ । कुट्यात् । कुटादेः । अनेन ङित्त्वाद्गुणो न भवति । कुटिता । कुटिष्यति । अकुटिष्यत् । शेषाणि रूपाणि सुगमानि । लुङ्लकारे । द्वाविटौ । गुणाभावः । अकुटीत् । अकुटिष्टां । अकुटिषुः । इत्यादीनि । त्रुट् छेदने । क्रमुभ्रमु० अनेनास्य

धातोर्वा यः प्रत्ययो भवति। तुदादेरः। त्रुट्यति। अप्रत्यये कृते सति। त्रुटति। एवं चतुर्णां रूपाणि। लिट्लकारे। तुत्रोट। तुत्रुटतुः। तुत्रुटुः। तुत्रुटिथ। त्रुट्यात्। त्रुटिता। कुटादित्वाद्गुणो न भवति। त्रुटिष्यति। अत्रुटिष्यत्। लुङ्लकारे द्वाविटौ। सेर्लोपः। दिबादावट्। अत्रुटीत्। अत्रुटिष्टाम्। अत्रुटिषुः। इत्यादीनि रूपाणि भवन्ति। ओव्रश्चू० छेदने। ओकारोकारावितौ। तुदादेरः। 'ग्रहांङ्किति च' अनेन संप्रसारणं भवति। वृश्चति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। द्विश्च। पूर्वस्य। वव्रश्च। संप्रसारणं। ववृश्चतुः। ववृश्चुः। वव्रश्चिथ। ऊदितो वा। संयोगान्तस्य लोपः। अनेन चकारस्य लोपः। छशः०। ष्टुत्वं। वव्रष्ठ। इत्यादीनि। संप्रसारणं। वृश्च्यात्। सिसता०। व्रश्चिता। ऊदितो वा० अनेन वा इट्। संयोगांतस्यलोपः। षत्वं। ष्टुत्वं। व्रष्टा। व्रश्चिष्यति। इडभावे। स्कोराद्योश्च। चोः कुः। षत्वं। कषसंयोगे०। व्रक्ष्यति। अव्रश्चिष्यत्। अव्रक्ष्यत्। लुङ्लकारे। द्वाविटौ। सेर्लोपः। दिबादावट्। अव्रश्चीत्। अव्रश्चिष्टां। अव्रश्चिषुः। इडभावे। स्कोरा०। चोः कुः। अनिटो नामिवतः। अनेन वृद्धिः। अव्राक्षीत्। 'झसात्' अनेन सेर्लोपः। अन्यत्साधनं पूर्ववत्। अव्राष्टां। अव्राक्षुः। कृ विक्षेपे। तुदादेरः। ऋत इर्। अनेन ऋकारस्य इर् भवति। किरति। किरेत्। किरतु। अकिरत्। लिट्लकारे द्विश्च। रः। कुहोश्चुः। धातोर्नामिनः। चकार। ऋसंयोगात्। अनेनाकित्त्वान्न गुणाभावः। चकरतुः। चकरुः। चकरिथ। ऋत इर्। य्वोर्विहसे। कीर्यात्। सिसता०। गुणः। करिता। 'इटो ग्रहाम्' अनेन वा दीर्घः। करीता। अन्येषां मूलाद् ज्ञेयानि। लुङ्लकारे। णित्ये। अनेन सेर्णित्वात् वृद्धिः। धातोर्नामिनः। अकारीत्। वृद्धिहेतौ। अनेन दीर्घाभावः। अकारिष्टाम्। अकारिषुः। इत्यादीनि। सूत्रम्।

उपात्किरतेश्छेदेऽर्थे सुड्वाच्यः।

उपात्०। उपोपसर्गपूर्वात् किरतेर्धातोः छेदनेऽर्थे सुड् वाच्यः। द्वितीयं सूत्रम्।

हिंसायां प्रतेश्च। उपस्किरति, उपचस्कार, प्रतिस्किरति। गॄ निगरणे। गिरति।

हिंसायाम्। किरतेर्धातोर्हिंसायामर्थे प्रतिपूर्वाच्च सुड् वाच्यः। उपस्किरति। उपचस्कार। हिंसायां। प्रतिस्किरति। गॄ निरगणे। ऋत इर्। अनेनेट्। तुदादेरः। गिरति। सूत्रम्।

गिरतेरस्य वा लः स्वरे वाच्यः। गिलति। जगार-जगाल-

जगरतुः-जगलतुः जगरुः-जगलुः । अगारीत् अगालीत् । स्पृश् स्पर्शने । स्पृशति पस्पर्श स्पृश्यात् स्प्रष्टा स्पर्ष्टा स्प्रक्ष्यति-स्पर्क्ष्यति, अस्प्रक्ष्यत्-अस्पर्क्ष्यत्, अस्प्राक्षीत् । रो वा । अस्पार्क्षीत् ।

गिरतेः । गिरतेर्धातोरकारस्य लकारः स्वरे परे वाच्यः । अनेन रकारस्य लकारः । गिलति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वं । रः । कुहोश्चुः । धातोर्नामिनः । अनेन वृद्धिः । जगार । जगाल । ऋसंयोगात् । अनेनाकित्स्वाद्गुणो भवति । जगरतुः । जगलतुः । इत्यादीनि । ऋत इर् । य्वोर्विहसे । गीर्यात् । गरिता । गलिता । अन्यानि सुगमानि । लुङ्लकारे । द्राविटौ । धातोर्नामिनः । अनेन वृद्धिः । अगारीत् । अगारिष्टां । अगारिषुः । लत्वे कृते सति । अगालीत् । अगालिष्टां । अगालिषुः । इत्यादीनि । स्पृश् स्पर्शने । तिबादयः । तुदादेरः । स्पृशति । लिट्लकारे द्वित्वं । रः । पूर्वस्य हसादिः । उपधाया लघोः । पस्पर्श । पस्पृशतुः । पस्पृशुः । इत्यादीनि । स्पृश्यात् । स्पृश् ता इति स्थिते । छषश० । अनेन षकारः । उपधाया लघोः । अनेन गुणः । रारोझसे० अनेन अरो रकारः । कृपादीनां० । अनेन विकल्पः । ष्टुत्वं । स्प्रष्टा । स्पर्ष्टा । षढोः कः से । स्प्रक्ष्यति । स्पर्क्ष्यति । अस्प्रक्ष्यत् । अस्पर्क्ष्यत् । लुङ्लकारे । 'अनिटो नामिवतः' अनेन वृद्धिः । अन्यत्साधनं सुगमम् । अस्पार्क्षीत् । 'झसात्०' अनेन सेर्लोपः । अस्पार्ष्टाम् । अस्पार्क्षुः । अरो रकारे कृते । अस्प्राक्षीत् । अस्प्राष्टाम् । अस्प्राक्षुः । इत्यादीनि । 'कृपादीनां०' अनेन 'भूते सिः' अनेन विहितः सिप्रत्ययो वा भवति ।

कृषादीनां वा सिर्वक्तव्यः । तत्पक्षे । हशषान्तात्सक् । अस्पृक्षत् । प्रच्छ ज्ञीप्सायाम् । संप्रसारणम् । पृच्छति । पप्रच्छ पप्रच्छतुः । पप्रच्छिथ पप्रष्ठ, पृच्छ्यात्, प्रष्टा, प्रक्ष्यति, अप्राक्षीत् । सृज विसर्गे । सृजति, ससर्ज ससृजतुः ससृजुः । ससर्जिथ-सस्रष्ठ । सृज्यात् । रारो झसे हशाम् । स्रष्टा, स्रक्ष्यति, अस्राक्षीत् । टुमस्जो शुद्धौ । टु ओ इतौ । अन्यत्र सो जः । मज्जति, ममज्ज, मङ्क्ता । मस्जिनशोर्झसे नुम् । मंक्ष्यति, अमांक्षीत् अमाङ्क्ताम् अमांक्षुः । विश् प्रवेशने । वेष्टा, अविक्षत । मृश् आमर्षणे । अम्राक्षीत्,

अमार्क्षीत्, अमृक्षत् । विच्छ गतौ । आयः । विच्छायति, विच्छायाञ्चकार-विविच्छ, विच्छाय्यात् विच्छयात्, विच्छायिता-विच्छिता, अविच्छायीत् । इषु इच्छायाम् । गमां छः । इच्छति, इच्छेत्, इयेष, एषिता, एष्टा । छुप स्पर्शे । छोप्ता, अछौप्सीत् । लिश गतौ । लेष्टा अलिक्षत् । खिद परिघाते । खिन्दति, खेत्ता, अखैत्सीत् । पिश अवयवे । पिंशति, पेशिता । इति तुदादिषु परस्मैपदिप्रक्रिया ॥

'कृषादीनां' अनेन कृषादीनां धातूनां सर्वत्र सेविकल्पः । तदा 'हशषान्तात्' अनेन सक् । अन्यत्साधनं सुगमम् । अस्पृक्षत् । अस्पृक्षताम् । अस्पृक्षन् । इत्यादीनि । प्रच्छ ज्ञीप्सायां । तुदादेरः । ग्रहां क्ङितिच । अनेन संप्रसारणं । पृच्छति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । पप्रच्छ । संप्रसारणं० । पपृच्छतुः । पपृच्छुः । पप्रच्छिथ । अत्वतः । षत्वं । ष्टुत्वं । पप्रष्ठ । इत्यादीनि । संप्रसारणं० । पृच्छयात् । षत्वं । ष्टुत्वं । प्रष्टा । षढोः कः से । क्विलात्० । कष० । प्रक्ष्यति । अप्रक्ष्यत् । लुङ्लकारे । अत उपधायाः । अनेन वृद्धिः । अन्यत् साधनं सुगमम् । अप्राक्षीत् । छशष० । ष्टुत्वं । अप्राष्टाम् । अप्राक्षुः । इत्यादीनि । सृज विसर्गे । तुदादेरः । सृजति । चतुर्णां सुगमानि । लिट्लकारे । द्विश्च । रः । उपधाया लघोः । ससर्ज । ससृजतुः । ससृजुः । अत्वतः । ससर्जिथ । ससृज् थप् इति जाते । उपधाया लघोः । रारो झसे० छशष० । ष्टुत्वं । सस्रष्ठ । सृज्यात् । रारोझसे । षत्वं । ष्टुत्वं । स्रष्टा । षढोः कः से । षत्वं । कषसंयोगे० । स्रक्ष्यति । अस्रक्ष्यत् । अनिटो नामिवतः । अस्राक्षीत् । अस्राष्टाम् । अस्राक्षुः । टुमस्जो शुद्धौ । टुकारोकारौ इतौ । तुदादेरः । अन्यत्र सोजः । अनेन सकारस्य जकारः । मज्जति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । अन्यत्र सोजः । ममज्ज । ममज्जतुः । ममज्जुः । इत्यादीनि । मस्ज् ता इति स्थिते स्कोराद्योश्च । अनेन सकारस्य लोपः । चोः कुः । खसे चपा० । मस्जिनशोः । अनेन नुम् । नश्चापदान्ते । मंक्ता । मंक्तारौ । मंक्तारः । मंक्ष्यति । अमंक्ष्यत् । अत उपधायाः । अमांक्षीत् । झसात् । अनेन सेर्लोपः । अमांक्तां । अमांक्षुः । इत्यादीनि । विश् प्रवेशने । तुदादेरः । विशति । लिट्लकारे । द्विश्च । पूर्वस्य हसा० । गुणः । विवेश । विविशतुः । विविशुः । विवेशिथ । अत्वतः । षत्वं । ष्टुत्वं । गुणः । विवेष्ठ । विश्यात् । गुणः । षत्वं । ष्टुत्वं । वेष्टा । षत्वं । षढोः कः से । क्विलात्० । कष० । गुणः । वेक्ष्यति । अवेक्ष्यत् । हशषान्तात् अनेन सक् । अन्य-

रसाधनं सुगमम् । अविक्षत् । अविक्षताम् । अविक्षन् । मृश् आमर्षणे । तुदादेरः । मृशति । लिट् द्वित्वादिकं । रः । गुणः । ममर्श । ममृशतुः । ममृशुः । ममर्शिथ । अत्वतः । ममर्ष्ठ । मृश्यात् । गुणः । ष्टुत्वं । रारो० म्रष्टा । षढोः कः से । म्रक्ष्यति । अम्रक्ष्यत् । अनिटो नामिवतः । अम्राक्षीत् । अम्राष्टाम् । अम्राक्षुः । 'कृशादीनां०' अनेन सेर्विकल्पः । तत्पक्षे । हशषान्तात् । अमृक्षत् । अमृक्षताम् । अमृक्षन् । विच्छतौ । आयः । अनेन आयः प्रत्ययः । तुदादेरः । अदे । विच्छायति । लिट् । विच्छायांचकार । अत्र कासादि० अनेनाम् । अनपि वा इति उक्तत्वात् । अनपि वा भवति । तत्पक्षे विविच्छ । विविच्छतुः । विविच्छुः । विच्छायात् । अत्र । 'यतः' अनेन अकारस्य लोपः । आयाभावे । विच्छ्यात् । सिसता । विच्छायिता । विच्छित्ता । विच्छायिष्यति । विच्छिष्यति । अविच्छायिष्यत् । अविच्छिष्यत् । लुङ्लकारे । द्वाविटौ । अविच्छायीत् । अविच्छीत् । इषु इच्छायां । तुदादेरः । गमेश्छः । इच्छति । लिट् । द्विश्च । गुणः । असवर्णे । इयेष । सवर्णे । ईषतुः । ईषुः । इत्यादीनि । इष्यात् । इषु सह० । गुणः । एषिता । ष्टुत्वं । एष्टा । एषिष्यति । स्वरादेः । ऐषिष्यत् । लुङ् । ऐषीत् । छुप स्पर्शे । तुदादेरः । छुपति । चतुर्णां रूपाणि सुगमानि । लिट् द्विश्च । गुणः । झपानां । चुच्छोप । छुप्यात् । गुणः छोप्ता । च्छोप्स्यति । अच्छोप्स्यत् । अनिटो नामिवतः । अच्छौप्सीत् । झसात् । अच्छौप्ताम् । अच्छौप्सुः । लिश् गतौ । तुदादेरः । लिशति । लिट् । लिलेश । लिलिशतुः । लिलिशुः । लिलेशिथ । अत्वत० । लिलेष्ठ । लिश्यात् । गुणः । षत्वं । लेष्टा । षढोः कः से । लेक्ष्यति । अलेक्ष्यत् । हसषांता० । छशष० । षढोः कः से । षत्वं । कष० । अलिक्षत् । अलिक्षताम् । अलिक्षन् । खिद परिघाते । तुदादेरः । अनेनाप्रत्ययो भवति । मुचादेर्मुम् । अनेन मुमागमो भवति । नश्चापदान्ते झसे । अनेनानुस्वारः । खिन्दति । खिन्देत् । खिन्दतु । दिवादावट् । अखिन्दत् । रूपाणि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । 'उपधाया लघोः' अनेन गुणः । चिखेद । चिखिदतुः । चिखिदुः । इत्यादीनि । खिद्यात् । खसे० । गुणः । खेत्ता । खेत्स्यति । अखेत्स्यत् । 'अनिटो नामिवतः' अनेन वृद्धिः । अखैत्सीत् । झसात्० । अनेन सेर्लोपः । तथोर्धः । अखैद्धाम् । अखैत्सुः । इत्यादीनि । पिष् अवयवे । तुदादेरः । मुचादेर्मुम् । पिंषति । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । उपधाया लघोः । पिपेश । पिपिशतुः । पिपिशुः । पिपेशिथ । पिश्यात् । सिसता० । उपधाया लघोः । पेशिता । षत्वं । पेशिष्यति । दिवादावट् । अपेशिष्यत् । लुङ्लकारे द्वाविटौ । अन्यत्साधनं तु पूर्वसदृशम् । अपेशीत् । अपेशिष्टाम् । अपेशिषुः । इत्यादीनि । इति परस्मैपदिनो धातवः कथिताः ।

अथात्मनेपदिनः। मृङ् प्राणत्यागे। अयकि। ऋकारस्य रिङादेशो भवति अकारे प्रत्यये यकि च परे। नुधातोः। म्रियते।

अथात्मनेपदिनः कथ्यन्ते। मृङ् प्राणत्यागे ङकार आत्मनेपदार्थः। तुदादेरः। सूत्रम्। अयकि। अश्च यक् च। अयक्। तस्मिन् अयकि। ऋकारस्य 'तुदादेरः' अनेन सूत्रेण विहिते अकारे परे च यक् प्रत्यये परे रिङादेशो भवति। अत्र ङकारव्यवधानात् 'ये' अनेन दीर्घो न भवति 'अनुबन्धः प्रत्यक्षवत्' इति न्यायात्। नुधातोः अनेनेय् भवति। म्रियते। आदाथई। अइए। म्रियेते। म्रियन्ते। म्रियेत। म्रियतां। अम्रियत। सूत्रम्।

सपरोक्षयोस्तादौ म्रियतेः परस्मैपदं वाच्यम्। ममार मम्रतुः। मृषीष्ट, मर्ता, मरिष्यति, अमरिष्यत्। लोपो ह्रस्वाज्झसे। अमृत अमृषाताम् अमृषत। दृङ् आदरे। द्रियते, दद्रे, दृषीष्ट, दर्ता। हनृतः स्यपः। दरिष्यते, अदरिष्यत, अदृत। धृङ् अवस्थाने। ध्रियते। तद्वत्। पृङ् व्यापारे। व्याप्रियते, व्यापरिष्यते, व्यापृत व्यापृषाताम्। ओविजी भयचलनयोः। विजते, विजेत, विजताम्, अविजत, विविजे, विजिता।

सपरोक्षयोः। सपरोक्षयोस्तादौ स्यपि परतो म्रियतेर्धातोः परस्मैपदं वाच्यम्। तदा णबादयः प्रत्यया भवन्ति। द्विश्च। रः। धातोर्नामिनः। ममार। ऋरं। मम्रतुः। मम्रुः। ममर्थ। इत्यादीनि। उः। अनेन गुणनिषेधः। षत्वं। मृषीष्ट। गुणः। मर्ता। हनृतः स्यपः। मरिष्यति। अमरिष्यत्। लुङ्लकारे। लोपो ह्रस्वाज्झसे। अनेन सेर्लोपः। अमृत। अमृषातां। अमृषत। दृङ् आदरे। ङकार आत्मनेपदार्थः। तुदादेरः। अयकि। नुधातोः। द्रियते। द्रियेत। द्रियताम्। अद्रियत। लिट्लकारे। द्विश्च। रः। ऋरं। दद्रे। दद्राते। दद्रिरे। दृषीष्ट। गुणः। दर्ता। हनृतः। दरिष्यति। अदरिष्यत्। लुङ्लकारे 'लोपोह्रस्वाज्झसे' अनेन सेर्लोपः। अदृत। अदृषातां। अदृषत। इत्यादीनि। धृङ् अवस्थाने। ङकार आत्मनेपदार्थः। तुदादेरः। अयकि। नुधातोः। अनेन इय् भवति। ध्रियते। ध्रियेत। ध्रियताम्। अध्रियत। लिट्लकारे। द्विश्च। रः। झपानां। ऋरं। दध्रे। दध्राते। दध्रिरे। उः। धृषीष्ट। अत्र षत्वं भवति। गुणः। धर्ता। 'हनृतः' अनेनेट्।

धरिष्यते । अधरिष्यत् । लुङ्लकारे । सेर्लोपः । अधृत । अधृषाताम् । अधृषत । पृङ् व्यापारे । ङकारः । अन्यत्साधनं तु पूर्वसदृशम् । व्याङ्पूर्वोऽयं धातुः । व्याम्रियते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । व्यापप्रे । अन्येषां रूपाणि पूर्वसदृशानि । लुङ्लकारे । सेर्लोपः । व्यापृत । व्यापृषातां । व्यापृषत । इत्यादीनि । ओविजी भयचलनयोः । ईकारौकारावितौ स्तः । तुदादेरः । विजते । लिट्लकारे । द्वित्वादिकं । विविजे । विविजाते । विविजिरे । विज् इट् ता इति जाते । तत्र गुणे प्राप्ते सूत्रम् ।

विजेः पर इट् किद्वक्तव्यः । ततो नोपधागुणः । विजिष्यते, अविजिष्यत, अविजिष्ट । ओलस्जी व्रीडायाम् । अन्यत्र । सो जः । लज्जते, ललज्जे, अलज्जिष्ट । इति तुदादिष्वात्मनेपदिप्रक्रिया । इति अविकरणास्तुदादयः । इति धातूनामष्टमो गणः ॥ ८ ॥

विजेः । विजो धातोः पर इट् किद्वक्तव्यः । अनेन गुणनिषेधः । विजिता । षत्वं । विजिष्यते । अविजिष्यत । लुङ्लकारे । ष्टुत्वं । अविजिष्ट । अविजिषाताम् । अविजिषत । ओलस्जी व्रीडायां । द्वावितौ । तुदादेरः । अन्यत्र 'सो जः' अनेन सकारस्य जकारः । लज्जते । चतुर्णां लकाराणां सुगमानि । लिट्लकारे द्वित्वादिकम् । ललज्जे । इत्यादीनि । लज्जिषीष्ट । लज्जिता । लज्जिष्यते । अलज्जिष्यत । अलज्जिष्ट । अलज्जिषातां । अलज्जिषत । इत्यादीनि । इत्यात्मनेपदिनः कथिताः । इति अविकरणास्तुदादयो धातवः कथिताः ।

अथ क्र्यादयः । तत्रादावुभयपदिनः । डुक्रीञ् द्रव्यविनिमये । ना क्र्यादेः । क्र्यादेर्गणान्ना प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । णत्वम् । क्रीणाति ।

अथ क्र्यादयो धातवः कथ्यन्ते । तत्रादावुभयपदिनो धातवः सन्ति । डुक्रीञ् द्रव्यविनिमये । द्रव्यपरावर्त्तने । वस्तूनां मौल्येन ग्रहणे इत्यर्थः । डुकारञकारावनुबन्धौ । डुकारो ड्वितस्त्रिमक् इति कार्यार्थः । ञकारानुबन्धत्वादुभयपदी । तिबादयः प्रत्ययाः । क्री तिप् इति स्थिते सूत्रम् । नाक्र्यादेः । ना । सां० (प्र० ए०) क्र्यादेः । (पं० ए०) क्र्यादेर्गणात् नाप्रत्ययो भवति चतुर्षु तिबादिषु परेषु । अनेन नाप्रत्ययः । णत्वम् । क्रीणाति । 'क्री ना तस्' इति जाते । सूत्रम् ।

ई हसे। नाइत्यस्याकारस्य ईकारो भवति ङिति हसे परे।
क्रीणीतः।

ईहसे। ई। (प्र० ए०) सांकेतिकं हसे। (स० ए०) ना इति प्रत्ययसंबन्धिन आकारस्य ङिति हसे प्रत्यये परे ईकारो भवति। अनेन सर्वत्र ङिति हसे आकारस्य ईकारः कार्यः। पुर्नोणोऽनन्ते। अनेन णत्वम्। क्रीणीतः। क्री ना अन्ति इति स्थिते। सूत्रम्।

नातः। नाइत्यस्याकारस्य लोपो भवति ङिति स्वरे परे। क्रीणन्ति। क्रीणासि क्रीणीथः क्रीणीथ। क्रीणामि क्रीणीवः क्रीणीमः। क्रीणीते, क्रीणीयात्, क्रीणीत, क्रीणातु, क्रीणीताम्, अक्रीणात, अक्रीणीत। चिक्राय चिक्रियतुः चिक्रियुः। चिक्रयिथ-चिक्रेथ। चिक्रिये, क्रीयात्, क्रेषीष्ट, क्रेता २, क्रेष्यति, क्रेष्यते, अक्रेष्यत्, अक्रेष्यत, अक्रैषीत्, अक्रेष्ट। प्रीञ् तर्पणे कान्तौ च। पिप्रिये। मीञ् हिंसायाम्। मीनाति। मीनातिमिनोतिदीङां गुणवृद्धिविषये क्यपि च आत्वं वाच्यम्। ममौ मिम्यतुः मिम्युः। ममिथ-ममाथ। मासीष्ट, माता, अमासीत्, अमेष्ट। स्कुञ् आप्रवणे॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्योनुर्नाश्च। स्कुनोति, स्कुनाति, अस्कुनीत, चुस्कुविषे, अस्कौषीत, अस्कोष्ट। स्तम्भु स्तुम्भुस्कम्भुस्कुम्भु रोधने। स्तभ्नोति-स्तभ्नाति, स्तुभ्नोति-स्तुभ्नाति, स्कभ्नोति-स्कभ्नाति, स्कुभ्नोति-स्कुभ्नाति, स्तभान-स्तुभान, स्कभान-स्कुभान, अस्तभत्। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च्लेरङ् वा। अस्तम्भीत्। पूञ् पवने।

नातः। ना (ष. ए.) सांके०। आतः (ष. ए.) द्विपदं सूत्रम्। क्र्यादेरुत्पन्नस्य ना इति प्रत्ययसंबन्धिन आकारस्य ङिति स्वरे लोपो भवति। अनेन ङिति स्वरे सर्वत्र आकारस्य लोपः कार्यः। क्रीणन्ति। क्रीणासि। पित्त्वादीकारो न। अन्यानि मूले सन्ति। आत्मनेपदे। क्रीणीते। क्रीणाते। क्रीणते। आतोऽ-

न्तौ०। अनेन अन्त अत् । अन्यानि सुगमानि यथासंभवं साध्यानि । यादादावीकारः सर्वत्र । क्रीणीयात् । क्रीणीयातां । क्रीणीयुः । इत्यादीनि । 'नातः' अनेन आकारस्य लोप ईतादौ भवति । क्रीणीत । क्रीणीयाताम् । क्रीणीरन् । इत्यादीनि । लोट्लकारेऽपि साधनं सदृशम् । क्रीणातु । तातङि । ङित्त्वादीकारः । क्रीणीतात् । क्रीणीतां । नातः । अनेनाकारस्य लोपः । क्रीणंतु । हौ परे । आकारस्येकारः । क्रीणीहि । आनिबादौ सवर्णे । क्रीणानि । क्रीणीव । क्रीणीम । इत्यादीनि । आत्मनेपदे० । क्रीणीतां । क्रीणातां । क्रीणतां षत्वं भवति । क्रीणीष्व । इत्यादीनि । दिबादावट् । अक्रीणात् । अक्रीणीतां । अक्रीणन् । अक्रीणाः । अमिपि सवर्णेदीर्घः । अक्रीणाम् । आत्मनेपदे । अक्रीणीत । नातः । अक्रीणातां । अक्रीणत । इत्यादीनि रूपाणि ज्ञातव्यानि । सर्वेषां रूपाणां द्वाभ्यां सूत्राभ्यां प्रायः सिद्धिर्भवति । लिट्लकारे । द्विश्च । सस्वरादिः । ह्रस्वः । कुहोश्चुः । धातोर्नामिनः । अनेन वृद्धिः । चिक्राय । तुधातोः । अनेन इय् । चिक्रियतुः । चिक्रियुः । अत्वतः । गुणः । चिक्रयिथ । चिक्रेथ । चिक्रियथुः । चिक्रिय । इत्यादीनि रूपाणि भवन्ति । चिक्रिये । चिक्रियाते । चिक्रियिरे । क्रीयात् । गुणः । । षत्वं । क्रेषीष्ट । अन्यानि मूलात् ज्ञेयानि । लुङ्लकारे । अनिटो नामिवतः । पत्वं । दिबादावट् । अक्रैषीत् । अक्रैष्टाम् । अक्रैषुः । आत्मनेपदे । गुणः । षत्वम् । ष्टुत्वं । दिबादावट् । अक्रेष्ट । अक्रेषातां । अक्रेषत । इत्यादीनि भवन्ति । प्रीञ् तर्पणे कान्तौ च । तिबादयो भवन्ति । नाक्र्यादेः । अनेन चतुर्षु ना प्रत्ययः । णत्वं । प्रीणाति । ईहसे । प्रीणीतः । नातः । प्रीणन्ति । रूपाणि पूर्ववत् । प्रीणीते । प्रीणीयात् । प्रीणीत । प्रीणातु । प्रीणीतां । अप्रीणात् । अप्रीणीत । लिट्लकारे । द्विश्च । सस्वरादिः । ह्रस्वः । धातोर्नामिनः । पिप्राय । पिप्रियतुः । पिप्रियुः । अत्वतः । पिप्रयिथ । पिप्रेथ । इत्यादीनि । पिप्रिये । पिप्रियाते । पिप्रियिरे । प्रीयात् । गुणः । प्रेषीष्ट । अत्र षत्वं भवति । प्रेता । प्रेता । षत्वं । प्रेष्यति । प्रेष्यते । अप्रेष्यत् । अप्रेष्यत । अनिटो नामिवतः । अप्रैषीत् । आत्मनेपदे गुणः । अप्रेष्ट । अप्रेषातां । अप्रेषत । इत्यादीनि रूपाणि ज्ञातव्यानि । पूञ् पवने । तिबादयः । नाक्र्यादेः । सूत्रम् ।

प्वादेर्ह्रस्वः । प्वादीनां ह्रस्वो भवति चतुर्षु परेषु । पुनाति, पुनीते, पुनीयात्, पुनीत, पुनातु, पुनीताम्, अपुनात्, अपुनीत, पुपाव, पुपुवे, पूयात्, पविषीष्ट, पविता २, पविष्यति, पविष्यते, अपविष्यत्, अपविष्यत, अपावीत्, अपविष्ट । कॄञ् हिंसायाम् । कृणाति, कृणीते, चकार, च-

करे, कीर्यात्, करिषीष्ट, अकारीत् । धूञ् कंपने । धुनाति, धुनीते, दुधाव, अधविष्ट-अधोष्ट । ग्रह उपादाने । ग्रहां क्ङिति च । गृह्णाति गृह्णीतः । गृह्णीते, गृह्णीयात्, गृह्णीत, गृह्णातु गृह्णीतात् गृह्णीताम् गृह्णन्तु ।

प्वादेर्ह्रस्वः । प्वादेः ( ष० ए० ) । ह्रस्वः । ( प्र० ए० ) प्वादीनां धातूनां ह्रस्वो भवति चतुर्षु परेषु । अनेन ह्रस्वः । पुनाति । पुनीते । अन्यानि पूर्वसदृशानि । लिट्लकारे । द्वित्वं । सस्वरादिः । ह्रस्वः । धातोर्नामिनः । पुपाव । नुधातोः । पुपुवतुः । पुपुवुः । पुपविथ । आत्मनेपदे । पुपुवे । पुपुवाते । पुपुविरे । पूयात् । 'सिसता' अनेन इट् । गुणः । षत्वं । पविषीष्ट । अन्येषां मूलतो ज्ञातव्यानि । लुङ्लकारे । धातोर्नामिनः । अनेनवृद्धिः । अन्यत्साधनं सुगमम् । अपावीत् । अपाविष्टां । अपाविषुः । आत्मनेपदे तु गुणः । षत्वं । ष्टुत्वं । अपविष्ट । अपविषातां । अपविषत । इत्यादीनि भवंति । कॄञ् हिंसायां । ञकार उभयपदार्थः । तिबादयः प्रत्यया भवंति । नाक्र्यादेः । अनेन नाप्रत्ययो भवति । प्वादेर्ह्रस्वः । णत्वं । कृणाति । ईहसे । कृणीतः । 'नातः' अनेन अकारस्य ङिति स्वरे लोपः । कृणंति । आत्मनेपदे । कृणीते । कृणाते । कृणते । कृणीयात् । कृणीत । कृणातु । कृणीतां । अकृणात् । अकृणीत । लिट्लकारे । द्वित्वादिकं । रः । कुहोश्चुः । धातोर्नां । चकार । चकतुः । चक्रुः । चकरिथ । चक्रे । चक्राते । चक्रिरे । यादादौ । ॠतोर्विहसे । कीर्यात् । सिसता । गुणः । षत्वं । करिषीष्ट । करिता । करिता । षत्वं । गुणः । इट् । करिष्यति । करिष्यते । अकरिष्यत् । अकरिष्यत । रूपाणि सुगमानि सन्ति । अतो न लिखितानि । लुङ्लकारे । सेर्णिच्वात् । 'धातोर्नां' अनेन वृद्धिः । अकारीत् । अकारिष्टाम् । अकारिषुः । आत्मनेपदे० । गुणः । षत्वं । ष्टुत्वम् । अकरिष्ट । अकरिषाताम् । अकरिषत । इत्यादीनि भवन्ति । धूञ् कम्पने । ञकारः । तिबादयः । प्वादेर्ह्रस्वः । नाक्र्यादेः । धुनाति । धुनीते । चतुर्णां लकाराणां रूपाणि सुगमानि । तेषां साधनमपि पूर्वसदृशमस्ति । लिट्लकारे । द्वित्वादिकं । ह्रस्वः । झपानां । धातोर्नां । दुधाव । नुधातोः । नानप्योर्वः । अनेनोव् भवति । दुधुवतुः । दुधुवुः । दुधविथ । दुधुवे । दुधुवाते । दुधुविरे । इत्यादीनि । धूयात् । स्वरति० । अनेनास्य धातोरिड्विकल्पः । गुणः । षत्वं । धविषीष्ट । इडभावे । गुणः । षत्वं । धोषीष्ट । धविता २, धोता २ । धविष्यति । इडभावे । धोष्यति । धविष्यते । धोष्यते । अधविष्यत् । अधोष्यत् । अधविष्यत । अधोष्यत । लुङ्लकारे । 'स्तुसुधूञ्भ्यां' अनेन सेरिट् । वृद्धिः । अधावीत् । अधाविष्टाम् । अधाविषुः । आत्मनेपदे । अधविष्ट । अधविषाताम् । अधविषत । इडभावे । गुणः । षत्वम् । ष्टुत्वं । अधोष्ट । अधोषा-

ताम् । अघोषत । ग्रह उपादाने । उपादानं ग्रहणम् । तिबादयः । ना क्र्यादेः । ग्रहादिति च । अनेन संप्रसारणं । णत्वं । गृह्णाति । गृह्णीतः । गृह्णन्ति । गृह्णीते । गृह्णीयात् । गृह्णीत । गृह्णातु । गृह्णीतात् । गृह्णीताम् । गृह्णन्तु । 'ग्रह् हि' इति स्थिते । सूत्रम् ।

हसादान हौ । हसान्तात्क्र्यादेर्गणादानः प्रत्ययो भवति हौ परे । नाप्रत्ययाभावः । गृहाण, अगृह्णात्, जग्राह, जगृहे, गृह्यात् । ईटो ग्रहाम् । इति ईः । ग्रहीषीष्ट, ग्रहीता २, ग्रहीष्यति, अग्रहीष्यत्, अग्रहीष्यत, अग्राहीत्, अग्रहीष्ट । इति क्र्यादिषूभयपदिप्रक्रिया ।

हसादान हौ । हसात् । (पं. ए.) आनः । (प्र. ए.) हौ । (स. ए.) हसान्तात् क्र्यादेर्गणात् आनः प्रत्ययो भवति हिप्रत्यये परे । नाप्रत्ययाभावो भवति । अतः । अनेन हेर्लुक् । संप्रसारणं । गृहाण । अन्यानि सुगमानि । गृह्णीताम् । अगृह्णात् । अगृह्णीत । लिट्लकारे । द्विश्च । संप्रसारणं । रः । कुहोश्चुः । अत उपधायाः । जग्राह । जगृहतुः । जगृहुः । जगृहे । जगृहाते । जगृहिरे । संप्रसारणं । गृह्यात् । ग्रह सीष्ट । इति स्थिते । सिसत्ता । 'ईटो ग्रहां०' अनेन दीर्घः । ग्रहीषीष्ट । ग्रहीता २ । ग्रहीष्यति । ग्रहीष्यते । अग्रहीष्यत् । अग्रहीष्यत । एतेषां रूपाणि सुगमानि । लुङ्लकारे । अत उपधायाः । अनेन वृद्धिः । अन्यत् साधनं सुगमम् । अग्राहीत् । अग्राहिष्टाम् । अग्राहिषुः 'वृद्धिहेतौ' अनेन अत्र दीर्घाभावः । आत्मनेपदे । अग्रहीष्ट । अग्रहीषाताम् । अग्रहीषत । इत्यादीनि । इत्युभयपदिनः ।

अथ परस्मैपदिनः । पुष् पुष्टौ । पुष्णाति, पुष्णीयात्, पुष्णातु पुष्णीतात्, पुष्णीताम्, पुष्णन्तु । पुषाण, अपुष्णात्, पुपोष, पुष्यात्, पोषिता, पोषिष्यति, अपोषिष्यत्, अपोषीत् । मुष स्तेये । मुष्णाति, मुमोष, मुष्यात्, मोषिता, मोषिष्यति, अमोषिष्यत्, अमोषीत् । शॄ हिंसायाम् । शृणाति । शशार शशरतुः शशरुः । शीर्यात्, शरिता, शरिष्यति, अशरिष्यत्, अशारीत् । ज्या वयोहानौ । ग्रहादित्वात्संप्रसारणम् । जीनाति, जीनीयात् । जिज्यौ जिज्यतुः जिज्युः । जिज्यिथ जिज्याथ । जीयात्, ज्याता, ज्यास्यति,

अज्यास्यत्, अज्यासीत् । ज्ञा अवबोधने । ज्ञाजनिर्ज्ञोः । जानाति, जज्ञौ, ज्ञायात्, ज्ञेयात्, ज्ञाता, अज्ञासीत् । ली श्लेषणे । लीनाति । लीलिङ्गोरात्वं वा । ललौ, लिलाय, लिल्यतुः, लाता-लेता, अलासीत्, अलैषीत् । बन्ध् बन्धने । बध्नाति, बबन्ध, भन्त्स्यति, अभान्त्सीत् । मन्थ विलोडने । मथ्नाति । कुष् निष्कर्षे । कुष्णाति, कुषाण, चुकोष, कुष्यात्, कोषिता, अकोषीत् । अश भोजने । अश्नाति, अश्नीयात् । अश्नातु अश्नीतात् अश्नीताम् अश्नन्तु । अशान, आश, अशिता, आशीत् । इति क्र्यादिषु परस्मैपदिप्रक्रिया ॥

अथ परस्मैपदिनो धातवः कथ्यन्ते । पुष् पुष्टौ । तिबादयः । नाक्र्यादेः । णत्वम् । अन्यत्र साधनं तु पूर्वसदृशम् । पुष्णाति । चतुर्णां रूपाणि सुगमानि । हौ परे पुषाण । अन्यानि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । उपधाया लघोः । पुपोष । पुपुषतुः । पुपुषुः । क्र्यादेर्णादेः । गुणः । पुपोषिथ । पुष्यात् । सिसता० । उपधाया लघोः । पोषिता । षत्वं । पोषिष्यति । दिबादावट् । अपोषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । गुणः । अपोषीत् । अपोषिष्टाम् । अपोषिषुः । इत्यादीनि । मुष् स्तेये । तिबादयः । नाक्र्यादे० । णत्वं । मुष्णाति । मुष्णीयात् । मुष्णातु । हौ परे । मुषाण । अमुष्णात् । रूपाणि सुगमानि । लिट्लकारे । द्विश्च । पूर्वस्य । उपधाया लघोः । मुमोष । मुमुषतुः । मुमुषुः । गुणः । मुमोषिथ । मुष्यात् । सिसता० । गुणः । मोषिता । षत्वं । मोषिष्यति । अमोषिष्यत् । लुङ्लकारे । द्वाविटौ । गुणः । सेर्लोपः । अमोषीत् अमोषिष्टाम् अमोषिषुः । शॄ हिंसायाम् । तिबादयः । नाक्र्यादेः । प्वादेर्ह्रस्वः । णत्वम् । शृणाति । शृणीयात् । शृणातु । अशृणात् । लिट्लकारे । द्विश्च । रः । धातोर्नामिनः । शशार । शॄसंयोगात् । अनेनाकित्त्वात् गुणः । शशरतुः । शशरुः । शशरिथ । शत इट् । य्वोर्विहसे । शीर्यात् । सिसता० । गुणः । शरिता । षत्वं । शरिष्यति । अशरिष्यत् । धातोर्नामिनः । अशारीत् । अशारिष्टाम् अशारिषुः । ज्या वयोहानौ । तिबादयः । नाक्र्यादेः । ग्रहां क्ङिति च । अनेन संप्रसारणम् । दीर्घस्वरत्वात् । दीर्घः । जीनाति । जीनीतः । जीनन्ति । जीनीयात् । जीनातु । जीनीहि । अजीनात् अजीनीताम् । अजीनन् । लिट्लकारे । द्विश्च । णबादौ पूर्वस्य ह्रस्वः । आतो णप् डौ । जिज्यौ । जिज्यतुः ।

जिज्युः । जिज्यिथ । जिज्याथ । संप्रसारणं० । जीयात् । ज्याता । ज्यास्यति । अज्यास्यत् । 'आदन्तानाम्' अनेनेट्सकौ । अज्यासीत् । अज्यासिष्टाम् । अज्यासिषुः । ज्ञा अवबोधने । तिबादयः । पूर्ववत् । नाम्यादेः । अनेन चतुर्षु नाप्रत्ययो भवति । जाजनिज्ञोः । अनेन सूत्रेण जा इत्यादेशः । जानाति । ईहसे० । जानीतः । नातः । जानन्ति । इत्यादीनि रूपाणि भवन्ति । तानि पूर्वसदृशानि । जानीयात् । जानातु । हौ परे सति । 'ई हसे' अनेन ईकारः । जानीहि । अजानात् । लिट्लकारे । द्वित्वं । पूर्वस्य ह्रस्वः । आतो णप् डौ । डित्वात् टिलोपः । जज्ञौ । आतोऽनपि । जज्ञतुः । जज्ञुः । अत्त्वतः । आतोऽनपि । अनेन आकारस्य लोपो भवति । जज्ञिथ । जज्ञाथ । संयोगादेः । ज्ञायात् । ज्ञेयात् । ज्ञाता । ज्ञास्यति । दिबादावट् । अज्ञास्यत् । 'आदन्तानां०' अनेन इट्सकौ भवतः । अन्यत्साधनं सुगमम् । अज्ञासीत् । अज्ञासिष्टाम् । अज्ञासिषुः । इत्यादीनि । ली श्लेषणे । तिबादयः । नाम्यादेः । लीनाति । लीनीयात् । लीनातु । दिबादावट् । अलीनात् । चतुर्णां रूपाणि सुगमानि । लकाराणां सूत्रम् । लीलीङोः । लीलीङ्धात्वोर्गुणवृद्धिविषये आत्वं वा भवति । षष्ठी । अनेनान्तस्य भवति । आत्वपक्षे । ललौ । आत्वाभावपक्षे । द्वित्वादिकं । 'धातोर्नामिनः' अनेन वृद्धिः । लिलाय लिल्यतुः । नुधातोः । अनेन यत्वं । लिल्युः । अत्त्वतः । ललिथ । ललाथ । लिलयिथ । लिलेथ । इत्यादीनि । लीयात् । आत्वे कृते । लाता । आत्वाभावे गुणः । लेता । लास्यति । लेष्यति । अलास्यत् । अलेष्यत् । आदन्तानां० । अनेनात्वपक्षे । इट्सकौ । अलासीत् । अलासिष्टां । अलासिषुः । आत्वाभावपक्षे । 'अनिटो नामिवतः' अनेन वृद्धिः । अलैषीत् । अलैष्टाम् । अलैषुः । बंध बंधने । तिबादयः । नाम्यादेः । नो लोपः । अनेन नकारस्य लोपः । बध्नाति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । बबंध । बबंधतुः । बबंधुः । बबंधिथ । अत्त्वतः । तथोर्धः । झबेजबाः । नोलोपः । बध्यात् । बबंध । इत्यादीनि । बद्धा आदिजबानां । अनेन बस्य भः । खसे चपा । भंत्स्यति । दिबादावट् । अभंत्स्यत् । लुङ्लकारे । 'अत उपधायाः' अनेन वृद्धिः । अभांत्सीत् । प्रत्ययलोपे० । अस्यानित्यत्वाच्च भकारः । 'झसात्' अनेन सेर्लोपो भवति । तथोर्धः । अबाद्धां । अभांत्सुः । इत्यादीनि । मंथ विलोडने । नाम्यादेः । नोलोपः । मथ्नाति । चतुर्णां सुगमानि । लिट्लकारे । ममंथ । ममंथतुः । ममंथुः । ममंथिथ । अन्येषां लकाराणां भ्वादिगणोक्तमंथधातुवत् रूपाणि । कुष् निष्कर्षे । नाम्यादेः । णत्वं । कुष्णाति । कुष्णीतः । कुष्णंति । इत्यादीनि । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । द्वित्वादिकं । कुहोश्चुः । उपधाया लघोः । चुकोप । चुकुषतुः । चुकुषुः । चुकोषिथ । कुष्यात् । सिसता० । गुणः । कोषिता । षत्वं । कोषिष्यति । दिबादावट् । अकोषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । गुणः । अ-

क्रोषीत् । अक्रोषिष्टां । अक्रोषिषुः । अश् भोजने । तिबादयः । ना क्र्यादेः । अश्नाति । चतुर्णां लकाराणां रूपाणि सुगमानि । हौ परे । हसादान हौ । अतः । अशान । लुङ्लकारे । स्वरादेः । अनेन द्वितीयोऽडागमः । सवर्णे । आश्नत् । लिट्लकारे । द्वित्वादिकं । अत उपधायाः । सवर्णे । आश । आशतुः । आशुः । आशिथ । अश्यात् । सिसता । अशिता । षत्वं । अशिष्यति । दिबादावट् । स्वरादेः । आशिष्यत् आशीत् आशिष्टां आशिषुः । इत्यादीनि । इति परस्मैपदिनो धातवः कथिताः

अथात्मनेपदिनः । वृङ् संभक्तौ । वृणीते, वृणीत, वृणीताम्, अवृणीत, वव्रे, वरिषीष्ट-वरीषीष्ट । संयोगादिऋदन्तवृङ्वृञां सिस्योरात्मनेपदे इड्वा वाच्यः । वृषीष्ट । उः । अवरिष्ट-अवरीष्ट, अवृत । इति क्र्यादिष्वात्मनेपदिप्रक्रिया । इति नाविकरणाः क्र्यादयः ।

अथात्मनेपदिनः कथ्यंते । वृङ् संभक्तौ । ङकार आत्मनेपदार्थः । तआदयः प्रत्यया भवंति । नाक्र्यादेः । ईहसे । णत्वं । वृणीते । नातः । वृणाते । वृणते । वृणीत । वृणीतां । अवृणीत । रूपाणि सुगमानि । तेषां कार्यमपि सदृशम् । लिट्लकारे । द्विश्च । रः । ऋरं । वव्रे । वव्राते । वव्रिरे । क्रादित्वान्नेट् । वव्रृषे । इत्यादीनि । वृ सीष्ट । इति स्थिते । सिसता । गुणः । वरिषीष्ट । इटो ग्रहां० । वरीषीष्ट । संयोगादि० अनेन सीष्टादौ वेट् । उः । अनेन गुणनिषेधः । वृषीष्ट । वरिता । वरीता । वरिष्यते । वरीष्यते । अवरिष्यत । अवरीष्यत । लुङ्लकारे । अवरिष्ट । अवरिषाताम् । अवरिषत । दीर्घे कृते । अवरीष्ट । अवरीषातां । अवरीषत । इडभावपक्षे । 'लोपो ह्रस्वाज्झसे' अनेन झसे परे सेर्लोपः । अवृत । अवृषातां । अवृषत । अवृथाः । इत्यादीनि रूपाणि भवंति । इत्यात्मनेपदिनः कथिताः । इति नाविकरणाः क्र्यादयो धातवः ।

अथ चुरादयः । चुर स्तेये । चुरादेः । चुरादेर्गणात् स्वार्थे ञिः प्रत्ययो भवति । उपधाया गुणः । स धातुः । अपगुणायः । चोरयति, चोरयेत्, चोरयतु, अचोरयत्, चोरयाञ्चकार, चोरयाम्बभूव, चोरयामास, चोरयाञ्चक्रे । ञेः । चोर्यात्, चोरयिता, चोरयिष्यति, अचोरयिष्यत् । ञेरङ् द्विश्च । अङि लघौ ह्रस्व उपधायाः । लघोर्दीर्घः ।

अचूचुरत् । चिती संज्ञाने । चेतयति, अचीचितत् । चिति स्मृत्याम् । इदितो नुम् । चिन्तयति । लघोरभावान्न दीर्घः । अचिचिन्तत् । चुरादेर्ञिर्वेति केचित् । चिन्तति । पीड अवगाहने । पीडयति ।

अथ चुरादयो धातवः कथ्यन्ते । चुर स्तेये । सूत्रम् । चुरादेः । चुरादेः । ( पं० ए० ) चुरादेर्धातुगणात् धातुपाठोक्तात् स्वार्थे मूलार्थे एव प्रेरणाद्यर्थं विनैव ञिप्रत्ययो भवति । यथा भ्वादीनां अबादिविकरणं तथा चुरादीनां ञिविकरणमित्यर्थः । अनेन ञिप्रत्ययो भवति । तत्र वृद्धेः प्राप्तौ सूत्राभावे । उपधाया लघोः । अनेन गुणो भवति । चोरि इति स्थिते । स धातुः । अनेन धातुसंज्ञा । धातुत्वात् तिबादयः । अप्कर्तरि । अनेन अप्प्रत्ययः । गुणः । णअप् । स्वरहीनं० । चोरयति चोरयतः चोरयंति इत्यादीनि रूपाणि भवंति तानि सुगमानि । चोरयेत् । चोरयतु । दिबादावट् । अचोरयत् । लिट्लकारे कासादिप्रत्ययादाम् । अनेन आम् । गुणः । अन्यत् साधनं सुगमम् । चोरयांचकार । चोरयामास । चोरयांबभूव । इत्यादीनि रूपाणि भवंति । ञित्त्वादुभयपदी । चोरयते । चोरयांचक्रे । चोरियात् इति जाते । ञेः । अनेन सेर्लोपः । चोर्यात् । 'सिसता' अनेनेट् । चोरयिता । चोरयिष्यति । दिबादावट् । अचोरयिष्यत् । चुर् ञि दिप् इति जाते । ञेरङ्द्विश्च । अनेन सिविषये अङ्प्रत्ययो भवति च धातोर्द्वित्वं । पूर्वस्य । चुचुर् ञि अङ् दिप् इति जाते । 'ञेः' अनेन ञेर्लोपो भवति । चुचुर् अङ् दिप् इति जाते । लघोर्दीर्घः । अनेन पूर्वस्यदीर्घः । दिबादावट् । स्वर० । वावसाने । अचूचुरत् । अचूचुरताम् । अचूचुरन् । इत्यादीनि भवंति रूपाणि । अथवा चोरि इति सिद्धस्यैव अङ्प्रत्यये कृते । 'ञेः' अनेन ञेर्लोपेकृते । निमित्ताभावे इति वचनात् चोइत्यस्य चुः । ततो द्वित्वं । एवमपि साधना भवति । अचूचुरच्चंद्रमसोऽभिरामत इति माघः । चिती संज्ञाने । ईकार इत् । चुरादेः । उपधाया लघोः । सधातुः । तिबादयः । अप् कर्त्तरि । गुणः । णअप् । चेतयति । चेतयेत् । चेतयतु । अचेतयत् । कासादि० अनेन सर्वत्र णबादौ । आम्प्रत्ययो भवति । चेतयांचकार । चेतयामास । चेतयांबभूव । 'ञेः' अनेन ञेर्लोपः । चेत्यात् । सिसता । गुणः । चेतयिता । चेतयिष्यति । अचेतयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । ह्रस्वः । लघोर्दीर्घः । दिबादावट् । अचीचितत् । अचीचितताम् । अचीचितन् । इत्यादीनि । चिति स्मृत्यां । चुरादेः । अनेन ञिप्रत्ययो भवति । इदितो नुम् । अन्यत्साधनं पूर्वसदृशं वर्तते । चिंतयति । लिट्लकारे आम्प्रत्ययो भवति । अन्यानि रूपाणि पूर्वधातुवत् । लुङ्-

लकारे। णेरङ्‌द्विश्च। अनेनाङ्प्रत्ययो भवति। लघोरभावात् पूर्वस्य दीर्घो न भवति। दिबादावट्। अचिचिंतत्। अचिचिंतताम्। अचिचिंतन्। इत्यादीनि। चुरादेर्धातुर्गणात् ञिः प्रत्ययो वा भवति। इति केचिदाचार्या वदन्ति। तन्मते। चिंतति। चिंततः। चिंतंति। इत्यादीनि रूपाणि स्युः। पीड अवगाहने। अवगाहनं प्रवेशः। चुरादेः। लघ्वभावात् 'उपधाया लघोः' अनेन गुणो न भवति। अप्। गुणः। पीडयति। लिट्‌लकारे कासादि०। अनेनाम्। पीडयांचकार। ञेः। पीड्यात्। सिसता०। गुणः। पीडयिता। लुङ्‌लकारे। 'णेरङ् द्विश्च' अनेन अङ्प्रत्ययः। धातोर्द्वित्वं च। पूर्वस्य। दिबादावट्। ह्रस्वः। अपिपीड् ञि अङ् दिप् इति जाते। सूत्रम्।

**भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वो ङपरे ञौ। अपीपिडत्-अपिपीडत्। प्रथ प्रख्याने। प्रथयति।**

भ्राज०। भ्राजभासभाषदीपजीवमीलपीडामेतेषां धातूनामुपधाया वा ह्रस्वो भवति। अङ्परे ञौ परे। अनेन वोपधाया ह्रस्वः। ञेः। अनेन सेर्लोपः। लघोर्दीर्घः। अनेन पूर्वस्य दीर्घः। अपीपिडत्। अपीपिडताम्। अपीपिडन्। इत्यादीनि। यदोपधाया ह्रस्वो न भवति तदा अपिपीडत्। अपिपीडताम्। अपिपीडन्। प्रथ प्रख्याने। चुरादेः। प्रथयति। लिट्‌लकारे आम्प्रत्ययः। प्रथयांचकार। लुङ्‌लकारे। णेरङ् द्विश्च। पूर्वस्य। अप्रथ्ञिअङ्दिप् इति जाते 'अङि लघौ' अनेनोपधाया ह्रस्वः। अकारस्येकारे प्राप्ते सूत्रम्।

**स्मृद्दत्वरप्रथम्रदस्तृस्पशां पूर्वस्यातोऽदङ्परे ञौ। इत्वापवादः। अपप्रथत्। पृथ प्रक्षेपे।**

स्मृ०। स्मृद्दत्वरप्रथम्रदस्तृस्पशां धातूनां पूर्वस्य अकारस्य अकार एव भवति। इत्यपवादः। अनेन पूर्वस्य अकारस्य इकारो न भवति। 'ञेः' अनेन सेर्लोपः। अपप्रथत्। अपप्रथताम्। अपप्रथन्। इत्यादीनि। पृथ प्रक्षेपे। चुरादेः। उपधाया लघोः। अन्यत्तु पूर्ववत्। पर्थयति। लुङ्‌लकारे। णेरङ् द्विश्च। अङि लघौ। लघोर्दीर्घः। ञेः। अपीपृथ् अङ्दिप्। इति जाते।

**उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः। इरराराम्पवादः। अपीपृथत् अपपर्थत्। ज्ञप ज्ञान-ज्ञापनयोर्मित्।**

उपधायाः। उपधाया ऋवर्णस्य ऋकारो वा वक्तव्यः। इरराराम्पवादः। अनेन ऋकारस्य ऋकार एव। अपीपृथत्। अपीपृथतां। अपीपृथन्। यदा ऋकारो

न भवति । तदा ञौ परे गुणः । अपपर्थत् । अपपर्थताम् । अपपर्थन् । ज्ञप ज्ञानज्ञापनयोः । चुरादेः । अत उपधायाः । ज्ञाप् ञि इति जाते । सूत्रम् ।

मितां ह्रस्वः । मितां धातूनां ह्रस्वो भवति ञौ परे । ज्ञपयति । चिञ् चयने । मित् ।

मितां ह्रस्वः । मितां (ष० ब०) ह्रस्वः (प्र० ए०) मितां धातूनां ह्रस्वो भवति ञौ परे । मितो धातवो धातुपाठादवगन्तव्याः । अनेन ह्रस्वः । अन्यत्सुगमम् । ज्ञपयति । लिट्लकारे । आम्प्रत्ययः । ज्ञपयांचकार । लुङ्लकारे । ञेरद्धिश्च । पूर्वस्य ह्रस्वः । ञेः । अङि । अजिज्ञपत् । अजिज्ञपतां अजिज्ञपन् । चिञ् चयने । अयं धातुर्मित् । चुरादेः । अनेन ञिः । सूत्रम् ।

चिस्फुरोर्ञौवात्वं वा ।

चिस्फुरोः । चिस्फुरोधात्वोर्ञिप्रत्यये परे आत्वं वा भवति । षष्ठी । अनेनायमादेशोन्त्यस्य । चा ञि इति जाते । सूत्रम् ।

रातो ञौ पुक् । ऋ गतावित्यस्याऽऽकारस्य च पुगागमो भवति ञौ परे । चपयति-चययति । अर्च पूजायाम् । अर्चयति ।

रातो ञौ पुक् । रातः (ष. ए.) ञौ । (स० ए०) । पुक् (प्र. ए.) । ऋ गतौ इत्यस्य धातोराकारान्तस्य च धातोर्ञिप्रत्यये परे पुगागमो भवति । अनेन पुक् । किस्वादन्ते । 'मितांह्रस्वः' अनेन ह्रस्वः । स धातुः । तिवादयः । अप्कर्त्तरि । गुणः । चपयति । चपयेत् । चपयतु । अचपयत् । लिट्लकारे । कासादिप्रत्ययादाम् । अनेनास्याम् । अन्यत्साधनं सुगमम् । चपयांचकार । चपयामास । चपयांबभूव । ञेः । चप्यात् । सिसता० । चपयिता । चपयिष्यति । अचपयिष्यत् । लुङ्लकारे । चप् ञि दिप् इति जाते । ञेरद्धिश्च । पूर्वस्य । अङि लघौ । लघोर्दीर्घः । अचीचपत् । अचीचपताम् । अचीचपन् । आत्वाभावपक्षे । धातोर्नामिनः । अनेन वृद्धिः । मितांह्रस्वः । सधातुः । अप् । चययति । लिट्लकारे । आम्प्रत्ययः । चययांचकार । ञेः । चय्यात् । लुङ्लकारे । चय्ञिदिप् इति जाते । ञेरद्धिश्च । ञेः । अङिलघौ । लघोर्दीर्घः । अचीचयत् । अचीचयतां । अचीचयन् । अर्च पूजायाम् । चुरादेः । अन्यत्साधनं तु पूर्ववत् । अर्चयति । लिट्लकारे । अर्चयांचकार । आशीर्यादादौ । ञेः । अर्च्यात् । लुङ्लकारे । आर्चि दिप् इति जाते । ञेरद्धिश्च ।

स्वरादेः परः । स्वरादेर्धातोः परोऽवयवोऽद्विरुक्तः सस्वरो

द्विर्भवति । 'नदराः संयोगादयो न द्विः' इति रेफस्य न द्वित्वम् । आर्चिचत् । कृत संशब्दे ।

स्वरादेः परः । नदराः । अनेन रकारस्य द्वित्वनिषेधः । ञेः । दिवादावट् । स्वरादेः । आर्चिचत् । आर्चिचताम् । आर्चिचन् । कृत संशब्दे । चुरादेः । सूत्रम् ।

धातोरुपधाया ऋकारस्य ईकारादेशो वाच्यो ञिप्रत्यये परे । कीर्तयति, अचिकीर्तत् । गण संख्याने । अकारान्तः। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । गणयति ।

धातोः । धातोरुपधाया ऋकारस्य ञिप्रत्यये परे ईरादेशो वाच्यः । 'य्वोर्वि-हसे' अनेन दीर्घः । कीर्त्तयति । लिट् । कीर्त्तयांचकार । लुङ्। ञेरङ्द्विश्च । ह्रस्वः। कुह्वोश्चुः । दिवादावट् । अचिकीर्त्तत् । अचिकीर्त्तताम्। अचिकीर्त्तन् । गण संख्याने। अयमकारांतः । चुरादेः । यतः । अनेनाकारस्य लोपः । तत्र । अत उपधायाः । अनेन सूत्रेण वृद्धेः प्राप्तौ सत्यां 'यादादेशस्तद्वद्भवति' इति न्यायेन वृद्धिर्न भवति। उपधायामकाराभावात् । गणयति । चतुर्णां सुगमानि । लिट् । गणयांचकार । लुङ् । ञेरङ् द्विश्च । पूर्वस्य । कुह्वोश्चुः । सूत्रम् ।

अल्लोपिनो नाङ्कार्यम् । अजगणत् । कथगणयोरङ्कार्यं चेति केचित् । अजीगणत् । कथ वाक्यप्रबन्धे । कथयति, अचकथत्, अचीकथत् । ऊन परिहाणे । ऊनयति । ञिनि-मित्तस्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । स्वरादेः परः । अर्थङ् याचने । अर्थयते, आर्तथत । संग्रामङ् युद्धे । अ-ससंग्रामत । अन्ध दृष्ट्युपघाते। आन्दधत्। अङ्क अङ्ग पदे लक्षणे च । आञ्चकत् । इति चुरादिप्रक्रिया ।

अल्लोपिनः । अल्लोपिनो धातोरङ्कार्यं न भवति । अङि लघौ । ल-घोर्दीर्घः । आभ्यां सूत्राभ्यामुक्तं कार्यं न भवति इत्यर्थः । अजगणत् । अजग-णताम् । अजगणन् । कथगणयोर्धात्वोरङ्कार्यं वा भवतीति केचिदाचार्या वदंति । तन्मते । अजीगणत् । अजीगणताम् । अजीगणन् । कथ वाक्यप्रबंधे । अयमप्यका-रांतः । चुरादेः । कथयति । कथयांचकार । कथ्यात् । अल्लोपिनः । अनेनाङ्कार्यं न भवति । कुह्वोश्चुः । अचकथत् । अचकथताम्। अचकथन् । वा भवतीत्युक्तत्वात् अङ्कार्यं भवति । साधनं तु पूर्ववत् । अचीकथत् । अचीकथताम् । अचीकथन् ।

ऊन परिहाणे । चुरादेः । अकारांतोयम् । ऊनयति । ऊनयेत् । ऊनयतु । स्वरादेः अनेनास्य धातोर्द्वितीयोऽडागमो भवति । औनयत् । लिट्लकारे । कासादि० । अनेनाम् । ऊनयांचकार । ञेः । ऊन्यात् । सिसता० । ऊनयिता । ऊनयिष्यति । औनयिष्यत् । लुङ्लकारे । ऊनयिदिपू इति स्थिते । ञेरङ् द्विश्च । अनेन ङप्रत्ययो धातोर्द्वित्वं च भवति । स्वरादेः परः । अनेन नकारस्य द्वित्वं । ञेः । यतः । दिबादावट् । स्वरादेः परः । औननत् । औननताम् । औननन् । इत्यादीनि रूपाणि भवंति । अर्थङ् याचने । ङकार आत्मनेपदार्थः । अकारान्तोऽयं धातुः । चुरादेः । अन्यत्साधनं पूर्ववत् । अर्थयते । अर्थयेत । अर्थयतां । स्वरादेः । अनेन द्वितीयोऽडागमो भवति । आर्थयत । लिट्लकारे । कासादि० अनेनाम् । अर्थयांचक्रे । आम्प्रत्ययः । अनेन । अर्थयामास । अर्थयांबभूव । इत्यादीनि रूपाणि । सिसता । अर्थयिषीष्ट । लुङ्लकारे । अङ्प्रत्ययः । धातोर्द्वित्वं । स्वरादेः परः । अनेन थकारस्य द्वित्वं भवति । झपानां० अनेन थकारस्य तकारः । ञेः । यतः । स्वरादेः । अनेन द्वितीयोऽडागमः । आर्तथत । आर्तथेतां । आर्तथंत । इत्यादीनि । संग्रामङ् युद्धे । ङकार आत्मनेपदार्थः । अकारान्तोऽयम् । चुरादेः । यतः । अन्यत्साधनं पूर्ववत् । संग्रामयते । संग्रामयेत । संग्रामयतां । असंग्रामयत । कासादि० । संग्रामयांचक्रे । सिसता० । संग्रामयिषीष्ट । संग्रामयिता । लुङ्लकारे । सस्वरादिः । अनेन सकारस्य द्वित्वम् । अन्यत् असंग्रामत । अससंग्रामत । अससंग्रामेतां । अससंग्रामत । इत्यादीनि भवंति । अंध दृष्ट्युपघाते । अकारान्तोऽयम् । चुरादेः । यतः । सधातुः । तिबादयः । अबादयः । अंधयति । अंधयेत् । अंधयतु । स्वरादेः । अनेन द्वितीयोऽडागमो भवति । आंधयत् । लिट्लकारे आम्प्रत्ययो भवति । अंधयांचकार । ञेः । अंध्यात् । सिसता० । अंधयिता । आंधयिष्यति । अंधयिष्यत् । लुङ्लकारे । अङ्प्रत्ययः । धकारस्य द्वित्वम् । झपानां । ञेः । यतः । स्वरादेः । आंदधत् । आंदधतां । आंदधन् । इत्यादीनि । अंक अंग पदे लक्षणे च । अकारांतौ । चुरादेः । यतः । अंकयति । अंगयति । इत्यादीनि रूपाणि सुगमानि । लिट्लकारे आम्प्रत्ययो भवति । अंकयांचकार । लुङ्लकारे अङ्प्रत्ययः । स्वरादेः परः अनेन ककारस्य द्वित्वं । कुहोश्चुः । ञेः । यतः । स्वरादेः । आंचकत् । आंचकतां । आंचकन् । इत्यादीनि । इति चुरादयो धातवः कथिताः ।

## अथ ञ्यन्ताः ।

अथ ञ्यंता धातवः कथ्यंते । सूत्रम् ।

धातोः प्रेरणे । प्रयोजकव्यापारेऽर्थे धातोर्ञिः प्रत्ययो भवति । कुर्वन्तं प्रेरयति यः स प्रयोजकः । कारयति, कारय-

ते, अचीकरत् । पाचयति, अपीपचत् । भवंतं प्रेरयति भावयति, भावयते, भावयांबभूव । अङ्सयोः। पूर्वस्योकारस्येत्वं पवर्गयवरलजकारेष्ववर्णपरेषु परतः । द्विर्निमित्तेऽचि । द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । अबीभवत् । मूङ् मोहने । मावयति अमीमवत् । यु मिश्रणे । अयीयवत् । रुशब्दे । अरीरवत् । लूञ् छेदने । अलीलवत् । जु गतौ । अजीजवत् ।

धातोः प्रेरणे । धातोः । ( ष० ए० ) प्रेरणे ( स० ए० ) द्विपदं सूत्रम् । भ्वादेर्धातोः प्रेरणेऽर्थे कारितेऽर्थे ञिः प्रत्ययो भवति । प्रेरणेऽर्थे इति कोऽर्थः प्रयोजकव्यापारे । प्रयोजक इति कोऽर्थः । कुर्वंतं पुरुषं यः कारयति 'एतत्कार्यं त्वं कुरु' इति प्रवर्त्तयति स प्रयोजक इत्युच्यते । तस्य व्यापारः प्रयोज्यद्वारेण रूपेण क्रियासंबंधस्तस्मिन् ञिः प्रत्ययो भवति । कुर्वंतं प्रेरयति यः स प्रयोजकः । एकः करोति तं कुर्वंतं अन्यः प्रेरयति इत्यस्मिन्नर्थे कृधातोर्ञिः प्रत्ययः । कृञि इति जाते ञकारो वृद्ध्यर्थः उभयपदार्थश्च । 'धातोर्नामिनः' अनेन वृद्धिः । स धातुः । अनेनास्मिन्प्रकरणे धातुसंज्ञा सर्वत्र भवति । तिबादयः । अप् कर्त्तरि । गुणः । ण अप् । कारयति। ञित्त्वादयमुभयपदी । कारयते । चतुर्णां लकाराणां रूपाणि सुगमानि । लिट्लकारे । कासादिप्रत्ययादाम् । अनेनाम्प्रत्ययो भवति । अन्यत्साधनं सुगमम् । कारयांचकार । कारयांचक्रे । कारयामास । कारयांबभूव । इत्यादीनि । ञेः । कार्यात् । सिसता० । षत्वं । कारयिषीष्ट । कारयिता २ । अन्येषां सुगमानि । लुङ्लकारे । कार् ञि दिप् इति जाते । ञेरङ् द्विश्च । अनेनाङ् । धातोर्द्वित्वं च । ह्रस्वः । कुहोश्चुः । अङि लघौ । लघोर्दीर्घः । दिवादावट् । अचीकरत् । अचीकरताम् । अचीकरन् । आत्मनेपदे । अचीकरत । अचीकरेतां । अचीकरंत । इत्यादीनि भवंति । ञ्यंता धातवः सर्वे उभयपदिनः । ञित्त्वात् । डुपचष् पाके । पचंतं प्रेरयति इति विग्रहे । धातोः प्रेरणे । अनेन ञिः प्रत्ययः । अत उपधायाः । स धातुः । तिबादयः । अप् कर्त्तरि । गुणः । ण अप् । पाचयति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । आम्प्रत्ययः । पाचयांचकार । ञेः । पाच्यात् । सिसता० । पाचयिता । षत्वं । पाचयिष्यति । दिवादावट् । अपाचयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अन्यत्साधनं सुगमम् । अपीपचत् । अपीपचताम् । अपीपचन् । इत्यादीनि । भू सत्तायां । भवंतं प्रेरयति इति विग्रहे । धातोः प्रेरणे । धातोर्नामिनः । अन्यत्साधनं सुगमम् । भावयति । भावयते । भावयांचकार । भाव्यात् ।

सिसता० । भावयिता । लुङ्लकारे । भूभूञ्जिअङ्दिप् इति जाते । धातोर्नामिनः । अनेन वृद्धिः । ह्रस्वः । झपानां । अङ्सयोः । अङ्सयोः परयोः पूर्वस्य उकारस्य इत्वं भवति । अवर्णपरेषु पवर्गयवरलजकारेषु परतः । अनेन उकारस्य इत्वं । अङि लघौ । लघोर्दीर्घः । अबीभवत् । अबीभवताम् । अबीभवन् । इत्यादीनि । मूङ् मोहने मवंतं प्रेरयति । धातोः प्रेरणे । अन्यत्पूर्ववत् । मावयति । लिट्लकारे । कासादि० अनेनाम् । मावयांचकार । ञेः । माव्यात् । सिसता । मावयिता । लुङ्लकारे साधनं पूर्वसदृशम् । अमीमवत् । अमीमवताम् । अमीमवन् । इत्यादीनि । यु मिश्रणे । एकः यौति तमन्यः प्रेरयति इति विग्रहे धातोः प्रेरणे । यावयति । लिट्लकारे । कासादि० अनेनाम् । यावयांचकार । ञेः । याव्यात् । यावयिता । लुङ्लकारे । अङ्प्रत्ययः । द्वित्वादिकं । अङ्सयोः अनेन इत्वं । अयीयवत् । अयीयवताम् । अयीयवन् । रु शब्दे । धातोः प्रेरणे । अन्यत्पूर्ववत् ज्ञेयम् । रावयति । लिट्लकारे । रावयांचकार । ञेः । राव्यात् । रावयिता । लुङ्लकारे अङ्प्रत्ययः द्वित्वादिकम् । अन्यत्पूर्ववत् कार्यं भवति । अरीरवत् । अरीरवताम् । अरीरवन् । इत्यादीनि । लूञ् छेदने । धातोः प्रेरणे । एकः लुनाति तमन्यः प्रेरयति । लावयति । लावयेत् । लावयतु । अलावयत् । लावयांचकार । लाव्यात् । सिसता । लावयिता । लावयिष्यति । अलावयिष्यत् । लुङ्लकारे । अलीलवत् । अलीलवताम् । अलीलवन् । जु गतौ । धातोः प्रेरणे । जावयति । लिट्लकारे । जावयांचकार । जाव्यात् । लिट्लकारे साधनं सुगमम् । अजीजवत् । अजीजवताम् । अजीजवन् । इत्यादीनि रूपाणि भवंति । एषां धातूनां लुङ्लकारे । द्वित्वनिमित्ते स्वरे स्वरादेशो न भवति । तस्मात्पूर्वं द्वित्वं भवति । पश्चाद्वृद्धिः । स्रु स्रवे । एकः स्रवति तमन्यः प्रेरयति । धातोः प्रेरणे । अन्यत् सुगमम् । स्रावयति । लिट्लकारे । आम्प्रत्ययः । स्रावयांचकार । लुङ्लकारे । ञेरङ् द्विश्च । पूर्वस्य । ञेः अनेन ञेर्लोपो भवति । असुस्रव् अङ् दिप् इति जाते । अङिलघौ । सूत्रम् ।

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनाम् । अङ्सयोः पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे । असिस्रवत्, असुस्रवत्, अशिश्रवत्, अशुश्रवत्, अदिद्रवत्, अदुद्रवत् ।**

स्रवति । स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां धातूनां अङ्सयोः परयोः पूर्वस्य इत्वं वा भवति । अवर्णपरे धात्वक्षरे परे । अनेन पूर्वस्य इकारः । असिस्रवत् । असिस्रवतां । असिस्रवन् । इत्वाभावपक्षे । असुस्रवत् । असुस्रवताम् । असुस्रवन् । श्रु श्रवणे । शृण्वंतं प्रेरयति । धातोः प्रेरणे । धातोर्नामिनः । श्रावयति । श्रावयेत् । श्रावयतु । अश्रावयत् । लिट् । कासादि० । अनेनाम् । श्रावयांच

कार। ञेः। श्राव्यात्। सिसता०। श्रावयिता। श्रावयिष्यति। अश्रावयिष्यत्। लुङ्। णेरङ् द्विश्च। पूर्वस्य हसादिः। धातोर्नामिनः। ञेः। अङ्लिघौ। स्रवतिशृणोति० अनेन पूर्वस्येत्वम्। अशिश्रवत्। अशिश्रवताम्। अशिश्रवन्। इत्वाभावपक्षे साधनं पूर्वसदृशम्। अशुश्रवत्। अशुश्रवताम्। अशुश्रवन्। द्रुगतौ। धातोः प्रेरणे। द्रावयति। चतुर्णां सुगमानि। लिट्। द्रावयांचकार। लुङ्लकारे। स्रवति० अनेन पूर्वस्य वा इत्वं। अदिद्रवत्। अदिद्रवताम्। अदिद्रुवन्। इत्वाभावपक्षे। अदुद्रवत्। अदुद्रवताम्। अदुद्रवन्। हन् हिंसागत्योः। घ्नंतं प्रेरयति इति विग्रहे। धातोः प्रेरणे। हन् ञि इति जाते। सूत्रम्।

हनो घत्। हन्तेर्घदादेशो भवति ञ्णाति णपवर्जिते परतः। घातयति, अजीघतत्। शद्लृ शातने।

हनो घत्। हनः (ष० ए०)। घत् (प्र. ए.)। द्विपदं। हंतेर्धातोर्घदादेशो भवति। णप् वर्जिते ञ्णाति प्रत्यये परतः। अनेन घदादेशः। अत उपधायाः। स धातुः। घातयति। घातयेत्। घातयतु। अघातयत्। लिट्। कासादि०। घातयांचकार। ञेः। घात्यात्। सिसता०। घातयिता। घातयिष्यति। अघातयिष्यत्। लुङ्लकारे। घात् ञि दिप् इति स्थिते। णेरङ् द्विश्च। कुहोश्चुः। झपानां। अङि लघौ। लघोर्दीर्घः। दिबादावट्। अजीघतत्। अजीघततां। अजीघतन्। इत्यादीनि। शद्लृ शातने। शदंतं प्रेरयति इति विग्रहे। धातोः प्रेरणे।

शदेः शत्। शदेः शतादेशो भवति अगतौ ञौ परे। शातयति। गतौ तु शादयति अशीशतत्। आतो ञौ पुक् च। डुदाञ् दाने। दापयति, अदीदपत्, धापयति, अदीधपत्।

शदेःशत्। शदेः (ष० ए०)। शत् (प्र० ए०)। शदेर्धातोः शतादेशो भवति। अगतौ ञौ परे। अत उपधायाः। शातयति। लिट्। शातयांचकार। लुङि साधनं तु पूर्ववत्। अशीशतत्। अशीशततां। अशीशतन्। गतौ तु। शादयति। अशीशदत्। डुदाञ् दाने। ददतं प्रेरयति इति विग्रहे। धातोः प्रेरणे। रातो ञौ पुक् च। अनेन पुगागमः। दापयति। लिट्। दापयांचकार। लुङ्लकारे। णेरङ् द्विश्च। ह्रस्वः। अङि लघौ। लघोर्दीर्घः। अदीदपत्। डुधाञ् धारणपोषणयोः। दधतं प्रेरयति इति विग्रहे धातोः प्रेरणे। रातो ञौ पुक् च। धापयति। धापयांचकार। लुङ्। झपानां० अनेन दस्य धः। अन्यत्पूर्ववत्। अदीधपत्। अदीधपताम्। अदीधपन्। ऋ गतौ। ऋच्छंतं प्रेरयति इति विग्रहे। धातोः प्रेरणे। रातो ञौ पुक् च। ऋप् ञि इति जाते सूत्रम्।

पुगन्तस्य गुणो वक्तव्यः । अर्पयति । स्वरादेः परः । आर्पिपत् । ष्ठा गतिनिवृत्तौ । स्थापयति ।

पुगंतस्य० । पुगंतस्य धातोर्गुणो वक्तव्यः । अनेन गुणः । अर्पयति । लिट् अर्पयांचकार । ञेः । अर्प्यात् । सिसता० । अर्पयिता । लुङ्लकारे । अर्पि दिप् इति स्थिते । ञेरङ् द्विश्च । स्वरादेः परः । नदराः अनेन रकारस्य द्वित्वं न भवति । ञेः । दिबादावट् । स्वरादेः । सवर्णे० । आर्पिपत् । आर्पिपताम् । आर्पिपन् । ष्ठा गतिनिवृत्तौ । आदेः ष्णः स्नः । धातोः प्रेरणे । तिष्ठंतं प्रेरयति इति विग्रहे । ञिः प्रत्ययः । रातो ञौ पुक् च । स्थापयति । स्थापयांचकार । ञेः । स्थाप्यात् । सिसता० । स्थापयिता । स्थापयिष्यति । अस्थापयिष्यत् । लुङ्लकारे । स्थाप् ञि दिप् इति स्थिते । ञेरङ् द्विश्च । ञेः । सूत्रम् ।

तिष्ठतेरुपधाया इकारो वक्तव्योऽङि परे । ततो द्वित्वम् । अतिष्ठिपत् ।

तिष्ठतेः । तिष्ठतेर्धातोरुपधाया इकारो वक्तव्यः अङि परे । ततः द्वित्वं भवति । झसात् खपाः । अतिष्ठिपत् । अतिष्ठिपताम् । अतिष्ठिपन् । अतिष्ठिपः । अतिष्ठिपतं । अतिष्ठिपत । इत्यादीनि । पा पाने । पिबंतं प्रेरयति इति विग्रहे धातोः प्रेरणे अनेन ञिप्रत्ययः । पा ञि इति जाते सूत्रम् ।

पादेर्युक् । पाशाछासाह्वेञ्व्येञां युगागमो भवति ञौ परे । पाययति ।

पादेर्युक् । पादेः ( ष० ए० ) । युक् ( प्र० ए० ) । पाशाछासाह्वेञ्व्येञामेतेषां धातूनां युगागमो भवति ञिप्रत्यये परे । पुकोऽपवादः । पाय् ञि इति जाते । स धातुः । अन्यत्साधनं पूर्ववत् । पाययति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । कासादि० । पाययांचकार । ञेः । पाय्यात् । सिसता० । पाययिता । पाययिष्यति । अपाययिष्यत् । अपापाय् ञि अङ् दिप् । ञेः अनेन ञेर्लोपो भवति । सूत्रम् ।

पिबतेरङि पूर्वस्येकारोपधालोपौ वक्तव्यौ । अपीप्यत् । शो तनूकरणे । संध्यक्षराणामा । शाययति, अशीशयत् । छो छेदने । अचीच्छयत् । षोऽन्तकर्मणि । साययति, असीषयत् । ह्वेञ् स्पर्धायाम् ।

पिबतेः । पिबतेर्धातोरङि पूर्वस्य ईकारोपधालोपौ वक्तव्यौ । सुगममिदं सूत्रम् । अनेन पूर्वस्य ईकारो भवति । उपधालोपश्च । अपीप्यत् । अपीप्यताम् अपीप्यन् । इत्यादीनि । शो तनूकरणे । संध्यक्षराणामा । श्यंतं प्रेरयति । पादेर्युक् । अन्यत्साधनं सुगमम् । शाययति । लिट्लकारे । शाययांचकार । ञेः । शाय्यात् । सिसता० । शाययिता । शाययिष्यति । अशाययिष्यत् । शाय् ञि दिप् इति जाते । ञेरङ् द्विश्च । अङिलघौ । लघोर्दीर्घः । दिवादावट् । अशीशयत् । अशीशयताम् । अशीशयन् । छो छेदने । संध्यक्षराणामा । एकः स्यति तमन्यः प्रेरयति । धातोः प्रेरणे । पादेर्युक् । अनेन युगागमो भवति । छाययति । छाययांचकार । ञेः । छाय्यात् । सिसता० । छाययिता । छाययिष्यति । अच्छाययिष्यत् । लुङ्लकारे । झपानां० अनेन छकारस्य चकारः । अन्यत्साधनं सुगमम् । अचीछयत् । अचीछयताम् । अचीछयन् । षो अंतकर्मणि । आदेः ष्णः स्नः । संध्यक्षराणामा । एकः स्यति तमन्यः प्रेरयति । धातोः प्रेरणे । पादेर्युक् । साययति । साययांचकार । ञेः । साय्यात् । सिसता० । साययिता । साययिष्यति । असाययिष्यत् । लुङ्लकारेऽपि पूर्ववत् साधनम् । असीषयत् । असीषयताम् । असीषयन् । इत्यादीनि । ह्वेञ् स्पर्धायाम् । एको ह्वयति तमन्यः प्रेरयति । संध्यक्ष० । धातोः प्रेरणे । पादेर्युक् । ह्वाययति । ह्वाययांचकार । लुङ्लकारे । सूत्रम् ।

ह्वयतेरङि संप्रसारणं युगभावश्च वक्तव्यः । कृतसंप्रसारणस्य ह्वयतेरङि क्रमाद्गुणवृद्धी वाच्ये । अजुहावत्, अजुहवत्, अजुहवताम् । व्येञ् संवरणे । व्याययति, अवीव्ययत् । वेञ् तन्तुसंताने । वाययति, अवीवयत् ।

ह्वयतेः । ह्वयतेः (ष०ए०) ह्वयतेर्धातोरङि परे सति संप्रसारणं युगभावश्च वक्तव्यः । कृतसंप्रसारणस्य ह्वयतेर्धातोरङि क्रमात् गुणवृद्धी वाच्ये । कुहोश्चुः अनेन हस्य जः । अजुहावत् । अजुहावतां । अजुहावन् । गुणे कृते सति । अजुहवत् । अजुहवतां अजुहवन् । व्येञ् संवरणे । संध्यक्षराणामा० । पादेर्युक् । एको व्ययति तमन्यः प्रेरयति । व्याययति । व्याययांचकार । लुङ्लकारे । व्याय् ञि दिप् इति जाते । ञेरङ् द्विश्च । ञेः । पूर्वस्य । अङि लघौ । अवीव्ययत् । अवीव्ययतां । अवीव्ययन् । वेञ् तंतुसंताने । एको वयति । तमन्यः प्रेरयति । धातोः प्रेरणे । संध्यक्ष० । पादेर्युक् । वाययति । लिट्लकारे । कासादि० । अनेनाम्प्रत्ययो भवति । वाययांचकार । ञेः वाय्यात् । सिसता० । वाययिता । वाययिष्यति । अवाययिष्यत् । लुङ्लकारे । पूर्वोक्तैरेव सूत्रैरूपाणां सिद्धिः । अवीवयत् । अवीवयताम् । अवीवयन् । पा रक्षणे । धातोः प्रेरणे । सूत्रम् ।

**पातेर्ञौ लुग्वक्तव्यः । युकोऽपवादः । पालयति अपीपलत् ।**
**रभ राभस्ये । रभसो वेगहर्षयोः ।**

पातेः । पातेर्धातो ञिप्रत्यये परे लुगागमो वक्तव्यः । युकोऽपवादः । पालयति । लिट् । पालयांचकार । लुङ् । अपीपलत् । अपीपलताम् । अपीपलन् । रभ राभस्ये । सूत्रम् ।

**रभलभोः स्वरे णाद्यपौ विना नुम्वाच्यः । रम्भयति अररम्भत् । डुलभष् प्राप्तौ । लम्भयति, अललम्भत् ।**

रभलभोः । वेगहर्षयोः रभलभोर्णाद्यपौ विना स्वरे परे नुम् वाच्यः । नश्चापदान्ते । धातोः प्रेरणे । रंभयति । लिट्लकारे रंभयांचकार । ङेः । रंभ्यात् । सिसता० । रंभयिता । लुङ्लकारे । ङेरङ् द्विश्च । अनेनाङ्प्रत्ययः । धातोर्द्वित्वम् । अङ्कार्यं न स्यात् । अररंभत् । अररंभताम् । अररंभन् । इत्यादीनि । डुलभष् प्राप्तौ । डुकारषकारावितौ । धातोः प्रेरणे । रभलभोः । अनेन नुम् । अन्यत्साधनं पूर्ववत् । लंभयति । लिट्लकारे । लंभयांचकार । सिसता । लंभयिता । लुङ्लकारे । अललंभत् । अललंभतां । अललंभन् । प्रीञ् तर्पणे । धातोः प्रेरणे । एकः प्रीणाति । तमन्यः प्रेरयति । सूत्रम् ।

**प्रीङ्धूङोर्नुक् । अनयोर्नुगागमो भवति ञौ परे । प्रीञ् तर्पणे । प्रीणयति, अपीप्रिणत् । धूङ् कम्पने धूनयति, अदूधुनत् । स्मिङ् ईषद्धसने ।**

प्रीङ्धूङोर्नुक् । प्रीञ् च धूङ् च प्रीङ्धूङौ तयोः । प्रीङ्धूङोः (ष. द्वि.) नुक् (प्र० ए० ) अनयोः प्रीङ्धूङोर्धात्वोर्नुगागमो भवति ङिप्रत्यये परे । णत्वं भवति । प्रीणयांचकार । लुङ्लकारे । ञेरङ् द्विश्च । पूर्वस्य ह्रस्वः । अङि लघौ । अनेनोपधाया ह्रस्वः । अपीप्रिणत् । अपीप्रिणतां । अपीप्रिणन् । धूङ् कंपने । धातोः प्रेरणे । प्रीङ्धूङोर्नुक् । धूनयति । धूनयांचकार । धून्यात् । धूनयिता । लुङ्लकारे । ङेरङ् । अङि लघौ । लघोर्दीर्घः । झपानां । अदूधुनत् । अदूधुनताम् । अदूधुनन् । स्मिङ् ईषद्धसने । एकः स्मयति तमन्यः प्रेरयति । धातोः प्रेरणे । सूत्रम् ।

**स्मयतेरात्यात्वं ञौ वाच्यम् । विस्मापयते, असिष्मपत । आति किम् । विस्मापयति, असिष्मपत् ।**

स्मयतेः । स्मयतेर्धातोरात्वं वा भवति ञिप्रत्यये परे । अनेनात्वं वा । स्मापयति । अत्र रातो ञौपुक् । अनेन पुक् । स्मापयांचकार । लुङ्लकारे । पूर्वस्येकारः

षत्वं। असिष्मपत्। असिस्मपतां। असिष्मपन्। आत्वाभावपक्षे। वृद्धिः। ऐआय्। विस्माययति। विस्माययांचकार। लुङ्लकारे। असिष्मयत्। असिष्मयतां। असिष्मयन्। साधनं सुगमम्। रुह बीजजन्मनि प्रादुर्भावे च। धातोः प्रेरणे। सूत्रम्।

रुहेर्णौ पो वा वाच्यः। रुह बीजजन्मनि प्रादुर्भावे च। रोहयति। रोपयति। अरूरुहत्-अरूरुपत्। कृपू सामर्थ्ये। कृपो रो लः। कल्पयति।

रुहेः। रुहेर्धातोर्णिप्रत्यये परे पो वा वाच्यः। षष्ठी। अनेनांत्यस्यैव। उपधाया अनेन गुणः। रोपयति। रोपयांचकार। लुङ्लकारे। अङ्कार्यं भवति। अरूरुपत्। अरूरुपतां। अरूरुपन्। पत्वाभावपक्षे। रोहयति। रोहयांचकार। अङ्कार्यं सर्वं भवति। अरूरुहत्। अरूरुहताम्। अरूरुहन्। कृपू सामर्थ्ये। धातोः प्रेरणे। गुणो भवति। कृपोरोलः। अनेन रकारस्य लः। कल्पयति। कल्पयांचकार। ङेः। कल्प्यात्। सिसता। कल्पयिता।

उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः। इररारामपवादः। अचीक्लृपत् अचकल्पत्। वृतुङ् वर्तने। वर्तयति, अवीवृतत्, अववर्तत्। मृजूष् शुद्धौ। मार्जयति, अमीमृजत्, अममार्जत्।

उपधाया ऋवर्णस्य। अचीक्लृपत्। विकल्पेन। अचकल्पत्। अत्राङ्कार्यं न भवति। अचकल्पतां। अचकल्पन्। वृतुङ् वर्तने। धातोः प्रेरणे। उपधाया लघोः। वर्त्तयति। वर्त्तयांचकार। उपधाया ऋवर्णस्य। अनेन वा ऋकारस्य ऋकारः। यदा ऋकारस्तदा अङ्कार्यं भवति। अवीवृतत्। अवीवृततां। अवीवृतन्। ऋकाराभावपक्षे। अङ्कार्यं न भवति। सूत्रप्राप्त्यभावात्। अववर्त्तत्। अववर्त्तताम्। अववर्त्तन्। मृजूष्। शुद्धौ। धातोः प्रेरणे। मृजेः। अनेन वृद्धिः। मार्ज्जयति। लिट्लकारे कासादि० अनेनाम्। मार्ज्जयांचकार। अन्येषां सुगमानि। लुङ्लकारे। उपधायाः। अन्यत्साधनं सुगमम्। अमीमृजत्। अमीमृजतां। अमीमृजन्। मृजेः अनेन वृद्धिः। अममार्ज्जत्। अममार्ज्जताम्। अममार्ज्जन्। इङ् अध्ययने। धातोः प्रेरणे। सूत्रम्।

इङादेर्णौ पुक् च। इङ्क्रीजीनामात्वं भवति णौ परे। ह्रीव्लीरीक्नूयीक्ष्मायीनां पुगागमो भवति णौ परे। इङ् अध्ययने। अध्यापयति, अध्यापिपत्।

इङादेर्ञौ पुक् च । इङादेः (ष० ए०)। ञौ (स० ए०)। पुक् (प्र० ए०) च (प्र० ए०) इङ्क्रीजीनां धातूनां ञिप्रत्यये परे आत्वं भवति । पुक् च भवति ह्रीब्लीरीक्नूयीक्ष्मायीनां धातूनां ञिप्रत्यये पुगागमो भवति । एकोऽधीते । तमन्यः प्रेरयति । इयंस्वरे । अध्यापयति । अध्यापयांचकार । लुङ्लकारे । अङ्लिघौ । अनेन पूर्वस्येकारः । अध्यापिपत् । अध्यापिपताम् । अध्यापिपन् । सूत्रम् ।

अङ्परे ञौ इङो गाङ् वा वक्तव्यः । अध्यजीगपत् । डुक्रीञ् द्रव्यविनिमये । क्रापयति अचिक्रपत् । जि जये । जापयति, अजीजपत् । ह्री लज्जायाम् । ह्रेपयति, अजिह्रिपत् । ब्ली वरणे । ब्लेपयति अबिब्लिपत् । रीङ् क्षरणे । रेपयति, अरीरिपत् । क्नूयी दुर्गन्धे ।

अङ्परे । अङ्परे ञिप्रत्यये परे इङो धातोर्गाङ् वा वाच्यः । अनेन गा इत्यादेशः । पुगागमः । ततो द्वित्वं । कुहोश्चुः । अङि लघौ । लघोर्दीर्घः । अध्यजीगपत् । अध्यजीगपताम् । अध्यजीगपन् । डुक्रीञ् द्रव्यविनिमये । एकः क्रीणाति । तमन्यः प्रेरयति । धातोः प्रेरणे । इङादेर्ञौ पुक् । अनेनात्वपुकौ । क्रापयति । लिट् । आम्प्रत्ययः । क्रापयांचकार । ञेः । क्राप्यात् । सिसता० । क्रापयिता । क्रापयिष्यति । अक्रापयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । अचिक्रपत् । अचिक्रपताम् । अचिक्रपन् । जि जये । एको जयति तमन्यः प्रेरयति । धातोः प्रेरणे । आत्वपुकौ । जापयति । लिट्लकारे । जापयांचकार । ञेः । जाप्यात् । सिसता० । जापयिता । जापयिष्यति । अजापयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः । अजीजपत् । अजीजपताम् । अजीजपन् । ह्री लज्जायां । एको जिह्रेति । तमन्यः प्रेरयति । धातोः प्रेरणे । पुग् भवति । गुणः । ह्रेपयति । ह्रेपयांचकार । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । कुहोश्चुः । अजिह्रिपत् । अजिह्रिपतां । अजिह्रिपन् । ब्ली वरणे । धातोः प्रेरणे । पुक् । गुणः । अन्यत्सर्वं पूर्ववत् । ब्लेपयति । ब्लेपयांचकार । ञेः ब्लेप्यात् । सिसता० । ब्लेपयिता । ब्लेपयिष्यति । अब्लेपयिष्यत् । लुङ्लकारे । ञेरङ्द्विश्च । अङ्लिघौ । अबिब्लिपत् । अबिब्लिपतां । अबिब्लिपन् । रीङ् क्षरणे । धातोः प्रेरणे । पुक् । गुणः । रेपयति । रेपयांचकार । ञेः । रेप्यात् । रेपयिता । लुङ्लकारे । पूर्ववत् साधना । अरीरिपत् । अरीरिपताम् । अरीरिपन् । क्नूयी दुर्गंधे । ईकार इत् । धातोः प्रेरणे । ञौ परे पुगागमः ।

यवयोर्वसे हकारे च लोपो वक्तव्यः । क्नोपयति, अचु-

क्रुपत् । क्ष्मायी विधूनने । एकः क्ष्मायति । तमन्यः प्रेरयति क्ष्मापयति, अचिक्ष्मपत् । लीङ् श्लेषणे ।

यवयोः। अनेन यकारस्य लोपः। गुणः। क्रोपयति। क्रोपयांचकार। ञेः क्रोप्यात्। सिसता० । क्रोपयिता । अक्रोपयिष्यत् । क्रोपयिष्यति। लुङ्लकारे। ञेरङ्द्विश्च। अङि लघौ । कुहोश्चुः । अचुक्रुपत् । अचुक्रुपतां । अचुक्रुपन् । क्ष्मायी विधूनने । धातोः प्रेरणे । पुगागमः । यवयोः । अनेन यकारस्य लोपः । क्ष्मापयति । क्ष्मापयांचकार। क्ष्माप्यात् । सिसता० । क्ष्मापयिता । क्ष्मापयिष्यति। अक्ष्मापयिष्यत्। लुङ्लकारे । ञेरङ् द्विश्च । पूर्वस्य । अङि लघौ । कुहोश्चुः । अचिक्ष्मपत् । अचिक्ष्मपतां । अचिक्ष्मपन् । लीङ् श्लेषणे । एको लिनाति । धातोः प्ररणे । सूत्रम् ।

लीयतेर्ञावात्वं वा । विलापयति ।

लीयतेः । लीयतेर्धातोर्ञौ परे आत्वं वा भवति । रातो ञौ पुक् च । विपूर्वोऽयम् । विलापयति । विलापयांचकार । विलाप्यात् । सिसता० । विलापयिता । लुङ्लकारे । व्यलीलिपत् । व्यलीलिपतां । व्यलीलिपन् । सूत्रम् ।

लीलोः पुग् वक्तव्यः । विलेपयति,व्यलीलिपत्,व्यलीलपत् ।

लीलोः । ली ला एतयोर्धात्वोः पुग् वक्तव्यः । तदा विलेपयति । विलेपयांचकार । लुङ्लकारे । ञेरङ्द्विश्च । अङिलघौ । लघोर्दीर्घः । व्यलीलिपत् । व्यलीलिपताम् । व्यलीलिपन् । सूत्रम् ।

लीलोर्ञौ क्रमान्नुग्लुकौ वा । विलीनयति, व्यलीलिनत् । ला ग्रहणे । लापयति, अलीलपत् । लालयति, अलीललत् अलीललताम् ।

लीलोः । ली ला एतयोर्धात्वोः क्रमात् नुग्लुकौ वा भवतः । तदा विलीनयति । विलीनयांचकार । विलीन्यात् । सिसता०। विलीनयिता। विलीनयिष्यति। लुङ्लकारे । पूर्वसूत्रैरेतद्रूपाणां सिद्धिः । व्यलीलिनत् । व्यलीलिनताम् । व्यलीलिनन् । ला ग्रहणे । एको लाति तमन्यः । धातोः प्रेरणे । पुक् । लापयति । लापयांचकार । लाप्यात् । लापयिता । लापयिष्यति । अलापयिष्यत् । लुङ्लकारे । अलीलपत् । अलीलपतां । अलीलपन् । लुगागमे कृते सति । लालयति । लालयांचकार । लाप्यात् । सिसता० । लापयिष्यति । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः । अलीललत् । अलीललतां । अलीललन् । ढौकृ गतौ । ऋकार इत् । एको ढौकति तमन्यः प्रेरयति । धातोः प्रेरणे । ढौकयति । चतुर्णां सुगमानि।

ढौकयांचकार । ञेः । ढौक्यात् । सिसता० ॥ ढौकयिता । ढौकयिष्यति । अढौकयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । सूत्रम् ।

न रितः । ऋकारेतोऽनेकस्वरस्य शासश्चाङि उक्तं कार्यं न भवति । ढौकृ गतौ । ढौकयति, अडुढौकत् । टुयाचृ याच्ञायाम् । याचयति अययाचत् । शासु अनुशिष्टौ । शासयति, अशशासत् । दरिद्रा दुर्गतौ । दरिद्रयति, अददरिद्रत् अददरिद्रताम् । दुष वैकृत्ये ।

न रितः । न (प्र० ए०) ऋ इत् यस्यासौ रित् तस्य रितः (ष० ए०) ऋकारानुबंधस्य अनेकस्वरस्य च शासो धातोरङि प्रत्यये परे । अङि लघौ । लघोर्दीर्घः । इति द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । ह्स्वः । झपानां । अडुढौकत् । अडुढौकतां । अडुढौकन् । इत्यादीनि । टुयाचृ याच्ञायां । ऋकार इत् । धातोः प्रेरणे । याचयति । याचयांचकार । ञेः । याच्यात् । सिसता० । याचयिता । याचयिष्यति । अयाचयिष्यत् । लुङ्लकारे । न रितः । अन्यत्सुगमं साधनम् । पूर्ववत् । अययाचत् । अययाचतां । अययाचन् । शासु अनुशिष्टौ । एकः शास्ति तमन्यः प्रेरयति । धातोः प्रेरणे । शासयति । शासयांचकार । शासयिता । लुङ् । न रितः । अशशासत् । अशशासताम् । अशशासन् । दरिद्रा दुर्गतौ । एको दरिद्राति तमन्यः प्रेरयति । धातोः प्रेरणे । णप् वुण् । अनेन आकारस्य लोपः । दरिद्रयति । लिट्लकारे । कासादि० । दरिद्रयांचकार । ञेः । दरिद्रियात् । सिसता० । दरिद्रयिता । दरिद्रयिष्यति । अदरिद्रयिष्यत् । लुङ्लकारे । न रितः । सस्वरादिः । अददरिद्रत् । अददरिद्रताम् । अददरिद्रन् । दुष वैकृत्ये । धातोः प्रेरणे । सूत्रम् ।

दुषेर्ञौ वा दीर्घो वक्तव्यः । दूषयति, दोषयति, अदूदुषत् । घट चेष्टायाम् । मितां ह्रस्वः । धातुपाठे मित इत्येवं पठितानां धातूनां ह्रस्वो भवति ञौ परे । घटयति, अजीघटत् । व्यथ दुःखभयचलनयोः । व्यथयति, अवीव्यथत् । एवं पञ्चपञ्चाशतो रूपम् ।

दुषेः । दुषेर्धातोर्ञिप्रत्यये परे वा दीर्घो भवति । अनेन पूर्वस्य वा दीर्घः । दूषयति । दूषयांचकार । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः । अदूदुषत् । अदूदुषताम् । अदूदुषन् । दीर्घाभावपक्षे । दोषयति । दोषयांचकार । ञेः । दोष्यात् । सिसता० । दोषयिता । दोषयिष्यति । अदोषयिष्यत् । लुङ्लकारे ।

पूर्वसूत्रैरेव सिद्धिः । अदूदुषत् । अदूदुषताम् । अदूदुषन् । घट चेष्टायाम् । धातोः प्रेरणे । अत उपधायाः । मितां ह्रस्वः । अनेन ह्रस्वः । घटयति । लिट्लकारे कासादि० । अनेनाम् । घटयांचकार । ञेः । घट्यात् । सिसता० । घटयिता । घटयिष्यति । अघटयिष्यत् । लुङ्लकारे । ञेरङ्द्विश्च । अङि लघौ । लघोर्दीर्घः । झपानां । अजीघटत् । अजीघटताम् । अजीघटन् । व्यथ दुःखभयसंचलनयोः । एको व्यथति तमन्यः प्रेरयति । धातोः प्रेरणे । अत उपधायाः । मितां ह्रस्वः । अनेन ह्रस्वो भवति । अन्यत्सुगमम् । व्यथयति । लिट्लकारे । आम्प्रत्ययो भवति । व्यथयांचकार । ञेः । व्यथ्यात् । सिसता० । व्यथयिता । व्यथयिष्यति । अव्यथयिष्यत्-लुङ्लकारे । ञेरङ्द्विश्च । पूर्वस्य । अङि लघौ । अवीव्यथत् । अवीव्यथताम् । अवीव्यथन् ।

**जनीजॄष्क्नसुरञ्जोऽमन्ताश्च । एतेऽपि मितः । जनयति अजीजनत् । जॄष् वयोहानौ । षृइत् । जरयति, अजीजरत् । क्नसु ह्वरणदीप्त्योः । क्नसयति अचिक्नसत् । रञ्ज रागे ।**

**जनी प्रादुर्भावे** । एको जायते तं० । धातोः प्रेरणे । वृद्धिः । मितां ह्रस्वः । जनयति । लिट्लकारे । कासादि० । जनयांचकार । ञेः । जन्यात् । सिसता० । जनयिता । जनयिष्यति । अजनयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः । अजीजनत् । अजीजनताम् । अजीजनन् । इत्यादीनि । जॄष् वयोहानौ । षृइत् । धातोः प्रेरणे । एको जृणाति तं० । धातोर्नामिनः । अनेन वृद्धिः । मितां ह्रस्वः । अन्यत्सुगमम् । जरयति । जरयांचकार । ञेः । जर्यात् । सिसता० । जरयिता । जरयिष्यति । अजरयिष्यत् । लुङ्लकारे । त्रिसूत्रैः कार्यसिद्धिः । अजीजरत् । अजीजरताम् । अजीजरन् । क्नसु ह्वरणदीप्त्योः । धातोः प्रेरणे । वृद्धिः । मितां ह्रस्वः । क्नसयति । क्नसयांचकार । ञेः । क्नस्यात् । सिसता० । क्नसयिता । क्नसयिष्यति । अक्नसयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । अचिक्नसत् । अचिक्नसताम् । अचिक्नसन् । रंज रागे । एको रज्यति तं० । धातोः प्रेरणे सूत्रम् ।

**रञ्जेर्णौ मृगरमणेऽर्थे नलोपो वाच्यः । रज्यति मृगान्, अरीरजत् । शम दम उपशमे । शमयति, अशीशमत् । दमयति, अदीदमत् ।**

**रंजेः** । रंजेर्धातोर्मृगरमणेऽर्थे नकारस्य लोपो वाच्यः । अनेन सूत्रेण नकारस्य लोपो भवति । अत उपधायाः । मितां ह्रस्वः । रजयति । रजयांचकार । ञेः । रज्यात् । सिसता० । रजयिता । । रजयिष्यति । अरजयिष्यत् ।

लुङ्लकारे । त्रिसूत्रैः कार्यसिद्धिः प्रायः । अजीजरत् । अजीजरताम् । अजीजरन् । मृगरमणाभावेऽर्थे नकारस्य लोपो न भवति । रंजयति । रंजयांचकार । अररंजत् । अररंजतां । अररंजन् । शम् दम् उपशमे । एकः शाम्यति तं० । धातोः प्रेरणे । मितां ह्रस्वः । शमयति । शमयांचकार । ञेः । शम्यात् । सिसता० । शमयिता । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । लघोर्दीर्घः । अशीशमत् । अशीशमतां । अशीशमन् । दमयति । दमयांचकार । अदीदमत् । अदीदमतां । अदीदमन् । एतेषां रूपाणां पूर्वोक्तैरेव सूत्रैः सिद्धिः । ज्ञा अवबोधने । धातोः प्रेरणे । एको जानाति तमन्यः प्रेरयति । सूत्रम् ।

**जानातेर्ञौ वा ह्रस्वः । ज्ञाऽवबोधने । एकः जानाति तमन्यः प्रेरयति ज्ञपयति, अजिज्ञपत् ।**

जानातेः । जानातेर्धातोर्ञिप्रत्यये परे वा ह्रस्वो भवति । ज्ञपयति । अत्र प्रथमं कृत्वा पश्चात् ह्रस्वो भवति । ह्रस्वाभावपक्षे । ज्ञापयति । ज्ञपयांचकार । ज्ञापयांचकार । लुङ्लकारे तु । अजिज्ञपत् । त्रिसूत्रैः । अजिज्ञपतां । अजिज्ञपन् । ज्वल दीप्तौ । धातोः प्रेरणे । एको ज्वलति तं० । अत उपधायाः । सूत्रम् ।

**ज्वलग्लास्नाश्च वा मितः । ज्वल दीप्तौ । ज्वलयति, ज्वालयति, अजिज्वलत् । ग्लै हर्षक्षये । ग्लपयति, ग्लापयति, अजिग्लपत् । ष्णा शौचे । आदेः ष्णः स्नः । स्नापयति, स्नपयति, असिस्नपत् । ओस्फायी वृद्धौ ।**

ज्वलग्लास्नाः । ज्वलग्लास्ना एते धातवो वा मितो भवंति । मितां ह्रस्वः । ज्वलयति । मित्त्वाभावे । ज्वालयति । ज्वलयांचकार । ज्वालयांचकार । ञेः । ज्वल्यात् । ज्वाल्यात् । सिसता० । ज्वलयिता । ज्वालयिता । लुङ्लकारे । ञेरङ् द्विश्च । अङि लघौ । अजिज्वलत् । अजिज्वलतां । अजिज्वलन् । ग्लै हर्षक्षये । धातोः प्रेरणे । संध्यक्षराणामा । रातो ञौ पुक् च । ज्वल० अनेन वा मित्त्वं । ग्लापयति । ग्लपयति । ग्लापयांचकार । ग्लपयांचकार । ञेः । ग्लाप्यात् । ग्लप्यात् । सिसता० । ग्लापयिता । ग्लपयिता । लुङ्लकारे । ञेरङ् । अङि लघौ । अजिग्लपत् । अजिग्लपतां । अजिग्लपन् । इत्यादीनि । ष्णा शौचे । एकः स्नाति तमन्यः प्रेरयति । धातोः प्रेरणे । वा मित्त्वम् । रातो ञौ पुक् च । स्नपयति । स्नापयति । लिट्लकारे । कासादि । स्नपयांचकार । स्नापयांचकार । लुङ्लकारे । पूर्वस्य । अङि लघौ । असिस्नपत् । असिस्नपतां । असिस्नपन् । ओस्फायी वृद्धौ । आकारेकारान्वितौ । धातोः प्रेरणे । सूत्रम् ।

**स्फायो वकारः स्यात् ञौ परे । स्फावयति, अपिस्फवत् ।**

**स्फायः** । स्फायो धातोर्वकारः स्यात् ञिप्रत्यये परे । षष्ठी । अनेनांन्त्यस्यैव भवति । स्फावयति । लिट्लकारे । कासादि० अनेनाम्प्रत्ययो भवति । स्फावयांचकार । ञेः । स्फाव्यात् । सिसता० । स्फावयिता । स्फावयिष्यति । अस्फावयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । झसात् । झपानां । अङि लघौ । अपिस्फवत् अपिस्फवतां । अपिस्फवन् । ञि भी भये । ञकार इत् । एको बिभेति तं० । धातोः प्रेरणे । सूत्रम् ।

**भियो ञौ वा षुगात्वे वाच्ये । भीषयति, भापयति, भाययति, अबीभिषत्, अबीभपत्, अबीभयत् ।**

**भियः** । भियो धातोर्ञिप्रत्यये परे षुगात्वे वाच्ये । क्रमाद् भवतः । भीषयति । भीषयांचकार । लुङ्लकारे । ञेरङ् द्विश्च । झपानां । अङि लघौ । लघोर्दीर्घः । अबीभिषत् । अबीभिषताम् । अबीभिषन् । आत्वे कृते । रातो ञौ पुक् च । भापयति । भापयांचकार । भाप्यात् । भापयिता । भापयिष्यति । लुङ्लकारे । त्रिसूत्रैः पूर्वोक्तैरेव रूपसिद्धिः । अबीभपत् । अबीभपतां । अबीभपन् । सूत्रे वाग्रहणं कृत्वा भाययति इति रूपमिच्छंति । भाययांचकार । लुङ्लकारे । पूर्वोक्तैरेव सूत्रैः सिद्धिः । अबीभयत् । अबीभयतां । अबीभयन् । सूत्रम् ।

**व्यापारमात्रे ञिर्वक्तव्यः स च डित् । हलं गृह्णाति हलयति । इति ञ्यन्तप्रक्रिया ॥**

**व्यापारमात्रे** । व्यापारमात्रे ञिप्रत्ययो वक्तव्यः । स च डित् । हलं गृह्णाति इति । अत्रानेन ञिः प्रत्ययो भवति । डित्त्वात् टिलोपः । हलयति । लिट्लकारे हलयांचकार । ञेः । हल्यात् । सिसता० । हलयिता । हलयिष्यति । अहलयिष्यत् । लुङ्लकारे । ञेरङ् द्विश्च । अल्लोपिनः । अनेनास्याङ्कार्यं न भवति । कुहोश्चुः । अजहलत् । अजहलतां । अजहलन् । इत्यादीनि रूपाणि भवंति । इति ञ्यंतप्रक्रिया समाप्ता ।

**अथ सप्रक्रिया निरूप्यते ॥**

अथ सप्रक्रिया निरूप्यते । सूत्रम् ।

**इच्छायामात्मनः सः । धातोरिच्छायामर्थे सः प्रत्ययो भवति सा चेत्स्वसम्बन्धिनी । द्विश्च । भवितुमिच्छति बुभूषति । स धातुः । धातुत्वादप्तिबादि । अदे ।**

**इच्छायामात्मनः सः** । इच्छायां ( स० ए० ) आत्मनः ( ष० ए० )

सः ( प्र० ए० ) धातोरर्थसंबंधिन्यामिच्छायां वाच्यमानायां इच्छारूपेऽर्थे वाच्ये सति सः प्रत्ययो भवति । स चेच्छा स्वसंबंधिनी चेत् । धातोर्द्वित्वं च भवति । भवितुमिच्छति इति विग्रहे । अनेन सूत्रेण सः प्रत्ययः । द्वित्वं च भवति । ह्रस्वः । झपानां । षत्वं । नन्वत्र० सिसता अनेनेट् कथं न क्रियते । तत्राह । सूत्रम् ।

**वुः से । उश्च ऋच वृ तस्मात् वुः । उवर्णान्तादृवर्णान्ताच्च ग्रहगुहोश्च से परे इट् न भवति ।**

**वुः से** । उश्च ऋ च वृ तस्मात् वुः ( पं० ए० ) से ( स० ए०) अयं समासो बालबोधनार्थं दर्शितः । उवर्णांतात् ऋवर्णांतात् ' ग्रह उपादाने ' ' गुह संवरणे ' इत्येताभ्यां परस्य सप्रत्ययस्य इडागमो न भवति इति इडागमनिषेधः । नन्वत्र गुणः कथं न क्रियते । तत्राह ।

**नानिटि से । इड्वर्जिते सप्रत्यये परे गुणो न भवति । तॄ प्लवनतरणयोः ।**

**नानिटि से** । अस्य सूत्रस्य व्याख्यानं कृतमस्ति । अनेन गुणनिषेधः । बुभूष इति जाते । स धातुः । अनेन धातुत्वं । धातुत्वात् तिबादयो भवंति । अप् कर्त्तरि । अदे । बुभूषति । बुभूषेत् । बुभूषतु । अबुभूषत् । लिट्लकारे । कासादि० अनेनाम् । बुभूषांचकार । यादादौ । यतः । अनेन आकारस्य लोपः । बुभूष्यात् । सिसता० । बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्या साधना पूर्ववत् । अबुभूषीत् । अबुभूषिष्टाम् । अबुभूषिषुः । तॄ प्लवनतरणयोः । तरितुमिच्छतीति विग्रहे । इच्छायामात्मनः सः । अनेन सः प्रत्ययः । धातोर्द्वित्वं च । सूत्रम् ।

**नाम्यन्तात्परस्य सस्य कित्त्वं वाच्यम् । ऋत इर् । तरितुमिच्छति तितीर्षति, अतितीर्षीत् । डुकृञ् करणे । कर्तुमिच्छति चिकीर्षति ॥**

**नाम्यन्तत्** । नाम्यंताद्धातोः परस्य सस्य कित्त्वं वाच्यम् । ऋत इर् । अनेन इर् । पश्चाद्द्वित्वं । य्वोर्विहसे । षत्वं । स धातुः । तितीर्षति । लिट्लकारे । तितीर्षांचकार । सिसता० । तितीर्षिता । लुङ् । अतितीर्षीत् । अतितीर्षिष्टाम् । अतितीर्षिषुः । इत्यादीनि । डुकृञ् करणे । सप्रत्ययः । नाम्यंतात् । ऋत इर् । ततः द्वित्वं । कुहोश्चुः । य्वोर्विहसे । नैकस्वरात् । अनेन इड्निषेधः । चिकीर्षति । चिकीर्षांचकार ।

अचिकीर्षीत्। अचिकीर्षिष्टाम्। अचिकीर्षिषुः। ऋत इति तपरकरणात् ऋकारस्यैव इर् क्रियते। स विधिः सार्वत्रिको न। तेन ह्रस्वस्यापि ऋवर्णस्य इर् भवति। चिञ् चयने। इच्छायां सूत्रम्।

**चिनोतेः से णादौ किस्त्वं वा वाच्यम्। चिकीषति, चिचीषति। जि जये। सपरोक्षयोर्जेर्गिः। जेतुमिच्छति जिगीषति। यु मिश्रणे। युयूषति। डुपचष् पाके। यः से। पक्तुमिच्छति पिपक्षति। पातुमिच्छति पिपासति।**

**चिनोतेः।** चिनोतेर्धातोः सप्रत्यये णादौ किस्त्वं वा वाच्यं। अनेन चस्य कः। ततो द्वित्वं। सूत्रम्।

**से दीर्घः। से परे पूर्वस्य दीर्घो भवति। चिञ् चयने।**

**से दीर्घः।** सप्रत्यये परे पूर्वस्य दीर्घो भवति। नैकस्वरात् षत्वं। स धातुः। चिकीषति। चिकीषांचकार। अचिकीष्यात्। कत्वाभावे। सेर्दीर्घः। अन्यत्साधनं तु पूर्ववत्। चिचीषति। चिचीषांचकार। अचिचीषीत्। जि जये। इच्छायां। सपरोक्षयोर्जेर्गिः। अनेन जस्य गः। ततः द्वित्वं। कुहोश्चुः। सेर्दीर्घः। षत्वं। नैकस्वरात् अनेन सूत्रेण। सर्वेषां एकस्वराणां धातूनां सप्रत्यये परे इट् न भवति। इति ज्ञातव्यं। जिगीषति। जिगीषांचकार। सिसता। जिगीषिता। अजिगीषीत्। यु मिश्रणे। इच्छायां। यवितुमिच्छति इति विग्रहे। सप्रत्ययः। धातोर्द्वित्वम्। से दीर्घः। युयूषति। युयूषांचकार। यतः। युयूष्यात्। सिसता०। युयूषिता। युयूषिष्यति। अयुयूषिष्यत्। अयुयूषीत्। अयुयूषिष्टाम्। अयुयूषिषुः। डुपचष् पाके। पक्तुमिच्छति इति विग्रहे। इच्छायां द्वित्वं पूर्वस्य। यः से। चोः कुः। किलात्। कपसंयोगे०। स धातुः। पिपक्षति। पिपक्षांचकार। यतः। पिपक्ष्यात्। सिसता०। पिपक्षिता। पिपक्षिष्यति। दिबादावट्। अपिपक्षिष्यत्। लुङ्लकारे द्वाविटौ। सेर्लोपः। अपिपक्षीत्। अपिपक्षिष्टाम्। अपिपक्षिषुः। इत्यादीनि भवंति। पा पाने। पातुमिच्छति। इति विग्रहे। इच्छायां। अनेन सः प्रत्ययः। धातोर्द्वित्वं च भवति। ह्रस्वः। यः से। पिपासति। चतुर्णां रूपाणि सुगमानि। लिट्लकारे। कासादि०। अनेनाम्प्रत्ययो भवति। पिपासांचकार। यतः। पिपास्यात्। सिसता०। पिपासिता। पिपासिष्यति। अपिपासिष्यत्। अपिपासीत्। अपिपासिष्टाम्। अपिपासिषुः। एतेषां साधनं तु पूर्ववत्। ननु देवदत्तः काष्ठेन पिपक्षति। पक्तुमिच्छति। इत्यत्र काष्ठेनेति साधनस्य किं पाकेन संबंधः किं वा इच्छायां। इत्याशंकायामाह।

**गौणः प्रकृत्यर्थोऽन्यत्र साव्। प्रकृतिप्रत्यययोर्मध्ये प्रत्यया-**

र्थः प्रधानीभूतः । अत्र सप्रत्यये तु वैपरीत्यं, प्रकृत्यर्थः प्रधानीभूतः । तेन काष्ठेन पिपक्षतीत्यत्र तृतीयायाः पाकेन संबन्धो न त्विच्छया । मृङ् प्राणत्यागे । मर्तुमिच्छति मुमूर्षति । पोरुर् । पृ पालनपूरणयोः । पुपूर्षति ।

गौणः प्रकृत्यर्थोऽन्यत्र सात् । सप्रत्ययादन्यत्र स्थाने अन्येषु प्रत्ययेषु प्रकृत्यर्थो धात्वर्थो गौणोऽमुख्यः प्रत्ययार्थो मुख्यः । सप्रत्यये तु धातोरर्थो मुख्यः। अतोऽत्र काष्ठेन पिपक्षति इत्यत्र काष्ठेन साधनभूतेन यः पाकलक्षणो धात्वर्थस्तमिच्छति इत्यर्थः । अन्यथा पाकं काष्ठेन इच्छति इति स्यात् । अत्र इषुधातोरिच्छार्थस्य गौणत्वम् । अतोऽत्र काष्ठस्य इच्छां प्रति साधनत्वाभावः । किंतु पाकलक्षणं प्रकृत्यर्थं प्रति साधनत्वं । मृङ् प्राणत्यागे । मर्तुमिच्छति । इच्छायाम् । पोरुर् । ततो द्वित्वं । पूर्वस्य । य्वोर्विहसे । मुमूर्षति । मुमूर्षांचकार । यतः । मुमूर्ष्यात् । सिसता० । मुमूर्षिता । मुमूर्षिष्यति । अमुमूर्षिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपो भवति । अमुमूर्षीत् । अमुमूर्षिष्टाम् । अमुमूर्षिषुः । पृ पालनपूरणयोः । पूरितुमिच्छति इति विग्रहे । इच्छायाम् । पोरुर् । य्वोर्विहसे । षत्वम् । विभक्तिकार्यं प्राग्वत् । पुपूर्षति । पुपूर्षांचकार । अन्येषां लकाराणां रूपाणि सुगमानि । लुङ्लकारे । अपुपूर्षीत् । अपुपूर्षिष्टाम् । अपुपूर्षिषुः । इत्यादीनि । वृङ् वरणे । वरितुमिच्छति । इच्छायां सूत्रम् ।

वृङ् इत्यस्य उर्वाच्यः । वृङ् वरणे । वरितुमिच्छति वुवूर्षति ।

वृङ् । वृङो धातोः सप्रत्यये परे उर् वाच्यः । षष्ठी । अन्यत्साधनं पूर्वसदृशं । वुवूर्षति । वुवूर्षांचकार । लुङ्लकारे । अवुवूर्षीत् । अवुवूर्षिष्टाम् । अवुवूर्षिषुः । रुदिर् अश्रुविमोचने । इच्छायाम् सूत्रम् ।

रुदविदमुषग्रहिस्वपिप्रच्छः सः किद्वाच्यः । रुदिर् अश्रुविमोचने । रुरुदिषति । विद् ज्ञाने । विविदिषति । मुष स्तेये । मुमुषिषति । ग्रह उपादाने । हो ढः । आदिजबानाम् । षढोः कः से । षत्वम् । क्षः । गृहीतुमिच्छति जिघृक्षति । सुषुप्सति । प्रच्छ ज्ञीप्सायाम् ।

रुद० । रुद् विद मुष ग्रहि स्वपि प्रच्छ एभ्यो धातुभ्यः सः कित् वाच्यः । द्वित्वम् । सिसता० । षत्वम् । रुदितुमिच्छति । रुरुदिषति । लिट्लकारे । कासा-

दि० । रुरुदिषांचकार । यतः । रुरुदिष्यात् । सिसता० । रुरुदिषिता । रुरुदिषिष्यति । अरुरुदिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अरुरुदिषीत् । अरुरुदिषिष्टां । अरुरुदिषिषुः । इत्यादीनि । विद ज्ञाने । विविदिषुमिच्छति । इच्छायाम् सः प्रत्ययः । द्वित्वम् । सिसता० । षत्वम् । विविदिषति । विविदिषांचकार । लुङ्लकारे । अविविदिषीत् । मुष स्तेये । मुषितुमिच्छति । इच्छायाम् साधनं पूर्ववत् । मुमुषिषति । मुमुषिषांचकार । अमुमुषिषीत् । अन्यानि सुगमानि । ग्रह उपादाने । गृहीतुमिच्छति । इच्छायाम् अनेन सः प्रत्ययः । ततः । ग्रहां क्ङिति च । ततो द्वित्वम् । रः । कुहोश्चुः । झपानां । यः से । होढः । आदिजबानाम् । षढोः कः से । षत्वं । कषसंयोगे० । जिघृक्षति । जिघृक्षांचकार । लुङ्लकारे । अजिघृक्षीत् । अजिघृक्षिष्टां । ञिष्वप् शये इच्छायाम् । संप्रसारणं । ततो द्वित्वम् । षत्वम् । स्वप्तुमिच्छति सुषुप्सति । लिट्लकारे । सुषुप्सांचकार । लुङ्लकारे । असुषुप्सीत् । असुषुप्सिष्टाम् । असुषुप्सिषुः । प्रच्छ ज्ञीप्सायाम् । इच्छायाम् सूत्रम् ।

**कृगृदृधृप्रच्छस्मिङञ्ज्वशूङर्त्तीनां सस्येड् वक्तव्यः । पिपृच्छिषति । करितुमिच्छति चिकरिषति । जिगरिषति, जिगलिषति, दिदरिषति, दिधरिषति, सिस्मयिषति । स्वरादेः परः । अञ्जिजिषति, अशिशिषते, अरिरिषति । अद भक्षणे । सिसयोः इति घसादेशः । सस्तोऽनपि । अत्तुमिच्छति जिघत्सति ।**

कृगृदृधृप्रच्छस्मिङ्अंजूअशूङर्त्तीनां धातूनां स्वप्रत्ययस्य इड् वक्तव्यः । संप्रसारणम् । यः से । षत्वम् । पिपृच्छिषति । लिट्लकारे । पिपृच्छिषांचकार । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अपिपृच्छिषीत् । अन्यानि सुगमानि । कृ विक्षेपे । करितुमिच्छति । इच्छायाम् । रः । गुणः । इट् । षत्वं । कुहोश्चुः । यः से । चिकरिषति । चिकरिषांचकार । अचिकरिषीत् । गृ निगरणे । गरितुमिच्छति । इच्छायाम् । द्वित्वम् । रः । कुहोश्चुः । यः से । इट् गुणः । षत्वं । जिगरिषति । जिगरिषां चकार । यतः । जिगरिष्यात् । सिसता० जिगरिषिता । अजिगरिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिगरिषीत् । अजिगरिषिष्टाम् । अजिगरिषिषुः । गिरतेः । अनेन रस्य लः । जिगलिषति । दृ विदारणे । दरितुमिच्छति । इच्छायाम् । सः प्रत्ययः । धातोर्द्वित्वम् । रः । यः से । गुणः । इट् । षत्वम् । दिदरिषति । दिदरिषांचकार । यतः । दिदरिष्यात् । सिसता० । दिदरिषिता । लुङ्लकारे । साधनं पूर्ववत् । अदिदरिषीत् । अन्यानि सुग-

मानि । धृ धारणे । धर्तुमिच्छति । इच्छायाम् । अन्यत्सर्वं पूर्ववत् । झपानां अनेन धस्य दः । दिधरिषति । दिधरिषांचकार । लुङ्लकारे । अदिधरिषीत् । स्मिङ् ईषद्धसने । स्मयितुमिच्छति । सः । द्वित्वं । पूर्वस्य । गुणः । सिस्मयिषति । सिस्मयिषांचकार । लुङ्लकारे । द्वाविटौ । सेर्लोपः । दिवादावट् । असिस्मयिषीत् । असिस्मयिषिष्टां । असिस्मयिषिषुः । इत्यादीनि । अंजू व्यक्तिमर्षणकांतिगतिषु । अजितुमिच्छति । इच्छायाम् । कृ गृ अनेनेट् । पश्चात् । स्वरादेः परः । जस्य द्वित्वं । षत्वम् । अंजिजिषति । चतुर्णां सुगमानि । कासादि० । अंजिजिषांचकार । यतः । अंजिजिष्यात् । सिसता० । अंजिजिषिता । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अन्यत्सुगमं । स्वरादेः । अनेन द्वितीयोऽडागमो भवति । सवर्णे । आंजिजिषीत् । अन्यानि सुगमानि । अशूङ् व्याप्तौ । अशितुमिच्छति । इच्छायाम् । स्वरादेः परः । अशिशिषति । कासादि० । अनेनाम् । अशिशिषांचकार । यतः । अशिशिष्यात् सिसता० । अशिशिषिता । अशिशिषिष्यति । स्वरादेः । आशिशिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । आशिशिषीत् । अद् भक्षणे । अत्तुमिच्छति । इच्छायाम् अनेनास्य सः प्रत्ययः । सिसयोः । अनेन घसादेशः । ततो द्वित्वम् । कुहोश्चुः । झपानां । यः से । सुस्तोऽनपि । अनेन सकारस्य तकारः । जिघत्सति । लिट्लकारे । जिघत्सांचकार । यतः । जिघत्स्यात् । सिसता० । जिघत्सिता । जिघत्सिष्यति । अजिघत्सिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिघत्सीत् । अजिघत्सिष्टाम् । अजिघत्सिषुः । हन् हिंसागत्योः । सूत्रम् ।

हन्तीङोः सो णित् ... उर्वाच्यः । वृङ्वर्णे ... णिद्भवति । हन्

वृङ् । वृङौ धातोः सप्रत्यये परे उर् वाच्यः सादिः शेषः । कुहोश्चुः ।

वुवूर्षति । वुवूर्षांचकार । लुङ्लकारे । अवुवूर्षीत् । घे । अत उपधायाः ।

अश्रुविमोचने । इच्छायाम् सूत्रम् । अपू । अदे । हन्तुमिच्छति

रुदविदमुषग्रहिस्वपिप्रच्छः सः

विमोचने । रुरुदिषति । हंतीङोः ( ष० द्वि० ) सः ( प्र० ए० ) णित्

स्तेये । मुमुषिषति । प्रत्ययो णित् भवति । णित्वात् वृद्धिः । अन्यत्साधनं

बानाम् । षढोः कः जिघांसति । लिट्लकारे । जिघांसांचकार । लुङ्ल-

जिघृक्षति । सुषुप्सा अजिघांसीत् । इत्यादीनि । इङ् अध्ययने । अध्येतुमि-

रुद० । रुद् विद मुष

द्वित्वम् । सिसतागमू वाच्यः । अध्येतुमिच्छति अधिजिगांसते ।

इङः । इङो धातोः सप्रत्यये परे गम् वाच्यः । अन्यत्साधनं तु पूर्ववत् । अधिजिगांसते । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । कासादि० । अधिजिगांसांचक्रे । सिसता० । अधिजिगांसिषीष्ट । अधिजिगांसिता । अधिजिगांसिष्यते । दिबादावट् । अध्यजिगांसिष्यत् । लुङ्लकारे । अध्यजिगांसिष्ट । इत्यादीनि । गम्लृ । गन्तुमिच्छति । इच्छायाम् । सूत्रम् ।

**गमेः से इङ्वाच्यः । गन्तुमिच्छति जिगमिषति ।**

गमेः । गमेर्धातोः सप्रत्यये इङ् वाच्यः । अनेनास्येट् । द्वित्वादिकं तु पूर्ववत् कार्यम् । षत्वम् । जिगमिषति । लिट्लकारे । कासादि० । जिगमिषांचकार । यतः । जिगमिष्यात् । सिसता० । जिगमिषिता । जिगमिषिष्यते । अजिगमिषिष्यत् । लुङ्लकारे । द्वाविटौ । सेर्लोपः । अजिगमिषीत् । इत्यादीनि भवंति । दा दाने । दातुमिच्छति । इच्छायाम् । अनेन सः प्रत्ययः । धातोर्द्वित्वं च ।

**इस्से । अपिद्दाधारभ्लभ्शक्पद्पतामिमीमामाङ्मेङ्हिंसार्थराधां स्वरस्य से परे इसादेशो भवति पर्वस्य च लोपः । दित्सति । धित्सति । स्कोराद्योश्च । खसे चपा० । रिप्सति, लिप्सति, शिक्षते, पित्सते ।**

इस्से । इदं सूत्रम् । इस् (प्र. ए.) से (स ए.) अपित् दा धा रभ् लभ् शक् पद् पत् मि मी मा माङ् मेङ् हिंसार्थराधां धातूनां स्वरस्य सप्रत्यये परे इसादेशो भवति । पूर्वस्य च लोपो भवति । अनेनेस्, पूर्वस्य लोपः। सस्तोनपि । अनेन सस्य तः । दित्सति । चतुर्णां सुगमानि । लिट्लकारे । कासादि० । दित्सांचकार । यतः । दित्स्यात् । सिसता० । दित्सिता । दित्सिष्यति । अदित्सिष्यत् । अदित्सीत् । इत्यादीनि । डुधाञ् धारणपोषणयोः । धातुमिच्छतीति इच्छायाम् । इस्से । धित्सति । धित्सांचकार । लुङ्लकारे । अधित्सीत् अधित्सिष्टां । अधित्सिषुः । रभ रामस्ये । रब्धुमिच्छति । इच्छायाम् । इस्से । खसे । स्कोराद्योश्च । रिप्सति । रिप्सांचकार । लुङ् । अरिप्सीत् । डुलभष् प्राप्तौ । लब्धुमिच्छति । इच्छायाम् । द्वित्वम् । इस्से । स्कोराद्योश्च । खसे० । लिप्सति । लिट्लकारे । कासादि० । लिप्सांचकार । यतः । लिप्स्यात् । सिसता० । लिप्सिता । लुङ्लकारे । द्वाविटौ । अलिप्सीत् । अलिप्सिष्टाम् । अलिप्सिषुः । इत्यादीनि । शक्लृ शक्तौ । शक्तुमिच्छति । इच्छायाम् । इस्से । षत्वं । कषसंयोगे क्षः । शिक्षते । लिट्लकारे । शिक्षांचकार । यतः । शिक्ष्यात् । सिसता० । शिक्षिता । लुङ्लकारे । साधनं सुगमम् । अशिक्षीत् ।

इत्यादीनि । पत्लृ पतने । पतितुमिच्छति । इच्छायाम् । इस्से । पित्सति । पित्सांचकार । लुङ्लकारे । अपित्सीत् । सूत्रम् ।

**पतो वेट् । पित्सति, पिपतिषति । इट्पक्षे इस्पूर्वलोपौ न भवतः । मीञ् हिंसायाम् । डुमिञ् प्रक्षेपे । मित्सति । माङ् माने । मेङ् शोधने । मित्सते । राध् संसिद्धौ । रित्सति ।**

पतः । पत्लृ पतने इत्यस्य धातोर्वा इट् भवति । यः से अनेन पूर्वस्याकारस्येकारः । इट्पक्षे इस्पूर्वलोपौ न भवतः । पिपतिषति । लिट्लकारे । पिपतिषांचकार । लुङ्लकारे । साधनं पूर्ववत् । अपिपतिषीत् । पद् गतौ । पत्सुमिच्छति । इच्छायाम् । इस्से । पित्सते । पित्सांचक्रे । लुङ्लकारे । अपित्सिष्ट । इत्यादीनि । मीञ्हिंसायां । डुमिञ् । प्रक्षेपे । अनयोर्धात्वोः सप्रत्यये कृते । इस्से । सस्तोनपि । अनेन सकारस्य तकारः । मित्सति । लिट्लकारे । मित्सांचकार । लुङ्लकारे । साधनं सुगमम् । अमित्सीत् । अमित्सिष्टां । माङ् माने । मेङ् शोधने । अनयोर्धात्वोः सप्रत्यये कृते । इस्से । मित्सते । मित्सांचक्रे । सित्सता । अनेनेट् । मित्सिषीष्ट । लुङ्लकारे । अमित्सिष्ट । इत्यादीनि । राध् संसिद्धौ । राद्धुमिच्छति । इच्छायाम् । इस्से । अनेनेस्पूर्वलोपौ भवतः । स्कोराद्योश्च । खसे । रित्सति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । कासादि० । अनेनाम् । रित्सांचकार । लुङ्लकारे । दिबादावट् । अरित्सीत् । इत्यादीनि । आप्लृ व्याप्तौ । आप्तुमिच्छति । इच्छायाम् । स्वरादेः । सूत्रम् ।

**आप्नोतेरीः । आप्नोतेराकारस्येकारो भवति से परे पूर्वस्य च लोपः । आप्लृ व्याप्तौ । ईप्सते ।**

आप्नोतेरीः । आप्नोतेः ( ष. ए. ) ईः । ( प्र० ए० ) आप्नोतेर्धातोराकारस्य ईकारो भवति सप्रत्यये परे । पूर्वस्य च लोपो भवति । ईप्सते । लिट्लकारे । कासादि० । ईप्सांचक्रे । लुङ्लकारे । दिबादावट् । स्वरादेः परः । अइए । एऐऐ । ऐप्सिष्ट । ऐप्सिषातां । ऐप्सिषत । अश् भोजने । अशितुमिच्छति । इच्छायाम् । सूत्रम् ।

**अशेरनायो वा । अशेरिच्छायां सस्थाने वा अनायप्रत्ययो भवति । अशनायति । अशिशिषति ।**

अशेरनायो वा । अशेः ( ष. ए. ) अनायः ( प्र. ए. ) वा ( प्र. ए. ) अशेर्धातोरिच्छायां सकारस्य स्थाने वा अनायः प्रत्ययो भवति । तदा धातोर्द्वित्वं न

भवति । अशनायति । अशनायांचकार । लुङ् । अशनायीत् । इत्यादीनि । यदा आनायः प्रत्ययो न भवति तदा इट् । स्वरादेः परः । षत्वम् । अशिशिषति । लिट्लकारे । अशिशिषांचकार । लुङ्लकारे । स्वरादेः । अशिशिषीत् । इत्यादीनि । तनु विस्तारे । तनितुमिच्छति । इच्छायाम् । अनेन सः प्रत्ययो धातोर्द्वित्वं च । ~~सिसता०~~ । यः से । षत्वम् । तितनिषति । तितनिषांचकार । अतितनिषीत् । सूत्रम् ।
पततनदरिद्राभ्य इड्वा

**पततनदरिद्राभ्यः से वा इड्वाच्यः । तितनिषति तितंसति ।**

**पततनदरिद्राभ्यः०** । पत तन दरिद्रा एभ्यो धातुभ्यः सप्रत्यये वा इड् वाच्यः । तदा । नश्चापदान्ते । तितंसति । लिट्लकारे । तितंसांचकार । यतः । तितंस्यात् । सिसता० । तितंसिता । लुङ्लकारे । अतितंसीत् । सूत्रम् ।

**तनेः से वा दीर्घः । तितांसति, दिदरिद्रिषति, दिदरिद्रासति ॥**

**तनेः** । तनोतेर्धातोः सप्रत्यये वा दीर्घो भवति । अनेन दीर्घः । तितांसति । तितांसांचकार । यतः । तितांस्यात् । लुङ्लकारे । अतितांसीत् । इत्यादीनि । दरिद्रा दुर्गतौ । दरिद्रातुमिच्छति । इच्छायाम् । द्वित्वम् । यः से । सिसता० । णप् । अनेनाकारस्य लोपः । षत्वम् । दिदरिद्रिषति । पत० अनेनास्येड्विकल्पः । दिदरिद्रासति । लिट्लकारे । कासादि० । दिदरिद्रासांचकार । यतः । दिदरिद्रास्यात् । सिसता० । दिदरिद्रासिता । लुङ्लकारे । अदिदरिद्रासीत् । इत्यादीनि । दंभ दंभने । आत्मनो दंभितुमिच्छति ।

**वेडिस्से दीर्घता च** । दम्भिज्ञप्योर्धात्वोर्वा इट् भवति सप्रत्यये परे । यदा नेट् तदा किम् । अनयोर्दम्भिज्ञप्योर्धात्वोः सानुस्वारस्य स्वरस्य इस् भवति।इकारस्य दीर्घता। दम्भेरिकारस्य वा दीर्घता। चकारात्पूर्वस्य लोपः। दम्भ दम्भने।आत्मनः दम्भितुमिच्छाति दिदम्भिषति । द्वित्वम् । इस् । आदिजबानाम् । खसे चपा झसानाम् । स्कोराद्योश्च । वा दीर्घता । धीप्सति-धिप्सति । ज्ञाऽवबोधने । इच्छायामात्मनः सः । द्विश्च । ह्रस्वः । पूर्वस्य हसादिः शेषः । यस्से । वा इट् गुणः । णअय् । स्वरहीनम् । षत्वम् । स धातुः । तिप् । अप् । अदे । आत्मनः ज्ञापयितुमिच्छतीति जि-

**ज्ञापयिषति । पक्षे । जिज्ञापि स इति स्थिते । सस्य इस् तस्य दीर्घता । पूर्वस्य लोपः । अेः । स्कोराद्योश्च । ज्ञीप्सति । ज्ञप ज्ञानज्ञापनयोः । जिज्ञापयिषति । मितां ह्रस्वः । जिज्ञपयिषति । ज्ञीप्सति । इति सप्रक्रिया ।**

वेडिस्से दीर्घता च । वा (प्र. ए.) इट् (प्र. ए.) इस् (प्र. ए.) से (स. ए.) दीर्घता (प्र. ए.) च (प्र. ए.) अस्य सूत्रस्य व्याख्यानं मूल एव कृतम् । साधने यानि सूत्राणि तानि मूले उक्तानि । दीर्घता वा भवति । धीप्सति । धिप्सति । यदा इट् तदा दिदंभिषति । अस्य साधनं तु सुगमम् । लिट्लकारे । दिदंभिषांचकार । धीप्सांचकार । धिप्सांचकार । लुङ् अदिदंभिषीत् । अधीप्सीत् । अधिप्सीत् । इत्यादीनि रूपाणि सुगमानि । ज्ञा अवबोधने । आत्मनः ज्ञापयितुमिच्छति । अस्य अपंतात् सः । सूत्राणि मूले लिखितानि । जिज्ञापयिषति । लिट्लकारे । कासादि० । जिज्ञापयिषांचकार । लुङ्लकारे । अजिज्ञापयिषीत् । यदा इट् न भवति । तदापि अस्य साधनं मूले उक्तं । ज्ञीप्सति । लिट्लकारे ज्ञीप्सांचकार सिसता० । ज्ञीप्सिता । लुङ् । अज्ञीप्सीत् । ज्ञप ज्ञानज्ञापनयोः । इच्छायाम् । ण्यंतानाम् । अन्यत्साधनं तु मूलतो ज्ञेयम् । जिज्ञपयिषति । लिट्लकारे । जिज्ञपयिषांचकार । लुङ् । अजिज्ञपयिषीत् । यदा इट् न भवति तदा ज्ञीप्सति । लिट्लकारे । कासादि० । ज्ञीप्सांचकार । लुङ् । अज्ञीप्सीत् । अज्ञीप्सिष्टाम् । अज्ञीप्सिषुः । इत्यादीनि रूपाणि भवंति । सुगमत्वात्सर्वाणि न लिखितानि । इति सप्रक्रिया समाप्ता ।

## अथ यङ्प्रक्रिया निरूप्यते ।

अथ यङ्प्रक्रिया कथ्यते । सूत्रम् ।

**अतिशये हसादेर्यङ् द्विश्च । हसादेरेकस्वराद्धातोरतिशयेऽर्थे यङ् प्रत्ययो भवति तस्मिन्सति धातोर्द्वित्वम् ।**

**अतिशये हसादेर्यङ् द्विश्च** । अतिशये (स. ए.) हसादेः (पं. ए.) हस् प्रत्याहार आदिर्यस्य सः । हसादिः । तस्मात् । हसादेः यङ् । (प्र. ए.) चअव्ययं । द्विः (प्र. ए.) हस्प्रत्याहारादेर्धातोरतिशयेऽर्थे यङ्प्रत्ययो भवति । क्वचिदेकस्वराद्धातोरपि दृश्यते । तेन जागृ चकास्ट इत्यादिभ्यो नैकस्वरेभ्यो यङ्प्रत्ययो न भवति । अतिशयेन भवति इतिविग्रहे अत्र भूधातोरेकस्वरत्वात् हसादित्वात् यङ्प्रत्ययो भवति । ततो द्वित्वम् । ङकार आत्मनेपदार्थः । भू भू य इति जाते । सूत्रम् ।

यङि। यङि सति लुकि च पूर्वस्य नामिनो गुणो भवति। सधातुः। ङित्त्वादात्मनेपदम्। अप्। अतिशयेन भवतीति बोभूयते, बोभूयेत, बोभूयताम्, अबोभूयत, बोभूयांचक्रे, बोभूयिषीष्ट, बोभूयिता, बोभूयिष्यते, अबोभूयिष्यत, अबोभूयिष्ट, बोभुज्यते।

यङि। यङि (स. ए.) यङि सति लुकि च सति पूर्वस्य द्विरुक्तसंबंधिनो नामिनो गुणो भवति। अनेन गुणः। झपानां। स धातुः। अनेनास्मिन् प्रकरणे सर्वत्र धातुसंज्ञा कार्या। धातुत्वात् त आदयः प्रत्यया भवंति। अप् कर्त्तरि। अदे। बोभूयते। बोभूयेते। बोभूयंते। इत्यादीनि। बोभूयेत। बोभूयेयातां। बोभूयेरन्। लोट्। बोभूयतां। बोभूयेतां। बोभूयंतां। अबोभूयत। अबोभूयेतां। अबोभूयंत। लिट्। कासादि० अनेन सूत्रेण सर्वत्राम्प्रत्ययो भवति। अन्यत्साधनं सुगमम्। बोभूयांचक्रे। बोभूयांचक्राते। बोभूयांचक्रिरे। सिसता०। यतः। षत्वं। बोभूयिषीष्ट। बोभूयिता। बोभूयिष्यते। दिबादावट्। अबोभूयिष्यत। लुङ्लकारे। भूते सिः। ईट्। षत्वम्। ष्टुत्वं। अबोभूयिष्ट। अबोभूयिषातां। अबोभूयिषत। इत्यादीनि। भुज् पालनाभ्यवहारयोः। अतिशयेन भुनक्ति इति विग्रहे। यङ्। द्वित्वम्। झपानाम्। यङि अनेनास्य पूर्वस्य गुणः। बोभुज्यते। बोभुज्येत। बोभुज्यतां। गुणः। अबोभुज्यत। रूपाणि सुगमानि। लिट्लकारे। कासादि० अनेनाम् प्रत्ययः। सूत्रम्।

अनपि च हसात्। हसादुत्तरस्य यङो लुग्भवति अनपि विषये।

अनपि च हसात्। अनपि (स० ए०) च (प्र० ए०) हसात् (पं० ए०) हसादुत्तरस्य यङ्प्रत्ययस्य लुग् भवति। अनपि विषये। अनेन यङो लुक्। अत्र गुणे प्राप्ते सूत्रम्।

धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्ते समाननामिनां गुणवृद्धी न वाच्ये। बोभुजांचक्रे। मुह वैचित्त्ये। मोमुह्यते। लिह आस्वादने। लेलिह्यते। हु दानादनयोः। जोहूयते। विद ज्ञाने। वेविद्यते।

धात्वंशलोपनिमित्ते आर्धधातुके परे सति तन्निमित्ते स-

**माननामिनां गुणवृद्धी न वाच्ये ।** अनेन गुणाभावः । बोभुजांचक्रे । सिसता० । षत्वम् । बोभुजिषीष्ट । बोभुजिता । बोभुजिष्यते । दिवादावट् । अबोभुजिष्यत । लुङ्लकारे । भूते सिः । इट् । षत्वम् । ष्टुत्वम् । अबोभुजिष्ट । अबोभुजिषातां । अबोभुजिषत । इत्यादीनि । मुह वैचित्त्ये । अतिशये द्वित्वं । गुणः । स धातुः । मोमुह्यते । चतुर्णां सुगमानि । लिट्लकारे कासादि० । अनेनाम् । अनपि च हसात् । अनेन यङो लोपः । मोमुहांचक्रे । सिसता० । मोमुहिषीष्ट । मोमुहिता । मोमुहिष्यते । अमोमुहिष्यत । अमोमुहिष्ट । रूपाणि सुगमानि । लिह आस्वादने । अतिशये अनेन यङ् । अतिशयेन लेढि । लेलिह्यते । लिट् । अनपि च हसात् । लेलिहांचक्रे । सिसता० । लेलिहिषीष्ट । लुङ् । अलेलिहिष्ट । रूपाणि सुगमानि । हुदानादनयोः । अतिशयेन जुहोति । यङ् । द्वित्वं । कुहोश्चुः । गुणः । जोहूयते । लिट् । जोहूयांचक्रे । सिसता० । जोहूयिषीष्ट । लुङ् । अजोहुयिष्ट । रूपाणि सुगमानि । विद ज्ञाने । अतिशयेन वेत्तीति । अतिशये अनेन यङ् । अन्यत्साधनं तु पूर्ववत् । वेविद्यते । लिट् । वेविदांचक्रे । लुङ् । अवेविदिष्ट । पच्लृ पचने । पठ व्यक्तायां वाचि । अनयोर्यङ् । सूत्रम् ।

**आतः । यङि लुकि च सति पूर्वस्य अकारस्य आकारो भवति अकिति । पापच्यते । पठ व्यक्तायां वाचि । पापठ्यते ।**

आतः । आ ( प्र० ए० ) अतः ( ष० ए० ) यङि लुकि च पूर्वस्य अकारस्य आकारो भवति । अयकि । पापच्यते । अपापचिष्ट । पापठ्यते । अपापठिष्ट । रूपाणि सुगमानि । सूत्रम् ।

**सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः । सोसूच्यते, सोसूत्र्यते, मोमूत्र्यते । गत्यर्थात्कौटिल्य एव यङ् । स्वरादेः परः । अट गतौ । यङ्सहितस्य द्वित्वम् । अट्य ट्य इति स्थिते । पूर्वस्य हसादिः शेषः । आतः । इति पूर्वस्यात्वम् । कुटिलं अटतीति अटाट्यते, अटाटांचक्रे, अटाटिषीष्ट । व्रज गतौ । कुटिलं व्रजतीति वाव्रज्यते । अश् भोजने अशाश्यते । ऊर्णुञ् आच्छादने । ऊर्णोनूयते । नवराः संयोगादयो द्विर्न । गुणोर्तिसंयोगाद्योः ।**

सूचि० । सूचि सूत्रि मूत्रि अटि अर्त्ति अश् ऊर्णोति एभ्यो धातुभ्यो यङ्-

प्रत्ययो वाच्यः। एषामप्राप्तत्वात्सूत्रमिदम्। साधनं तु सुगमं। सोसूच्यते। लिट्। सोसूचांचक्रे। लुङ्। असोसूचिष्ट। सोसूत्र्यते। लिट्। सोसूत्रांचक्रे। लुङ्। असोसूत्रिष्ट। मोमूत्र्यते। लिट्। कासादि०। अनपि च हसात्। मोमूत्रांचक्रे। लुङ्। अमोमूत्रिष्ट। अट गतौ। गत्यर्थाद्धातोः कौटिल्येऽर्थे यङ्। स्वरादेः परः। यङ्सहितस्य द्वित्वं। अट्य व्यइति स्थिते। पूर्वस्य। आतः। कुटिलं अटति। अटाट्यते। लिट्। अटाटांचक्रे। लुङ्। अटाटिष्ट। कोपि व्रजति। यङ्। आतः। साधनं सुगमं। वाव्रज्यते। लिट्। वाव्रजांचक्रे। लुङ्। अवाव्रजिष्ट। अश भोजने। अतिशयेन अश्नातीति। यङ्। द्वित्वं। आतः। अशाश्यते। लुङ्। अशाशिष्ट। ऊर्णुञ् आच्छादने। अतिशयेन ऊर्णोतीति। यङ्। स्वरादेः। नदराः। गुणः। ये। ऊर्णोनूयते। लिट्। ऊर्णोनूयांचक्रे। लुङ्। और्णोनूयिष्ट। अत्र स्वरादेः। अनेन द्वितीयोऽडागमः। ऋ गतौ। अतिशयेन इयर्ति। यङ् गुणोर्त्ति० अनेन गुणः।

यकारपरस्य रेफस्य द्वित्वं वाच्यम्। अरार्यते।

यकारसहितरेफस्य द्वित्वम्०। पूर्वस्य। आतः। अरार्यते। लिट्। अरारांचक्रे। लुङ्। स्वरादेः। अरारिष्ट। सूत्रम्।

लुप्सदचरजपजभदहदशगृभ्यो धात्वर्थगर्हायामेव यङ्। गर्हितं लुम्पतीति लोलुप्यते। सासद्यते।

लुप्। लुप् सद चर जप जभ दह दश गृ एभ्यो धात्वर्थगर्हायामेव यङ्प्रत्ययो भवति। गर्हितं लुंपति लोलुप्यते। साधनं सुगमं। लिट्। लोलुपांचक्रे। लुङ्। अलोलुपिष्ट। षद्लृ विशरणगत्यवसादनेषु। सत्वं। आतः। सासद्यते। लिट्। सासदांचक्रे। लुङ्। असासदिष्ट। सूत्रम्।

ञमजपां नुक्। ञमान्तस्य जपादीनां च पूर्वस्य नुगागमो यङि लुकि च सति। जप् जभ् दह् दश् भञ्ज् पश् एते जपादयः। जङ्गम्यते बम्भज्यते। अझसेऽप्यनुस्वारः। आदेशिना आदेशो निर्दिश्यते। यंयम्यते। कण शब्दे। चङ्कण्यते तन्तन्यते। जप मानसे च। जपतीति जञ्जप्यते। जभ गात्रविनामे। जभतीति जञ्जभ्यते। दह भस्मीकरणे। दन्दह्यते। नो लोपः। दन्दश्यते। बम्भज्यते। पश्यतीति पम्पश्यते। पश् बाधनग्रन्थनयोः।

**अमजपां नुक्** । अमजपां । ( ष. ब. ) नुक् ( प्र. ए. ) अमांतस्य धातोश्च जपादीनां धातूनां पूर्वस्य नुगागमो भवति यङि लुकि च सति । अनेन नुक् । उकार उच्चारणार्थः । ककारः कित्कार्यार्थः । कुहोश्चुः । नश्चापदांते । जंगम्यते । झसेपि अनुस्वारो भवति । नकारस्य आदेशिना अनुस्वारादेशवता नुगागमेन नकारेण आदेशो निर्दिश्यते । जंगमांचक्रे । अजंगमिष्ट । भ्रमु चलने । अतिशयेन भ्राम्यति । यङ्प्रत्ययः । द्वित्वं । पूर्वस्य । झपानां । अमजपां । बंभ्रम्यते । लिट् । बंभ्रमांचक्रे । लुङ् । अबंभ्रमिष्ट । यम उपरमे । अतिशयेन यच्छतीति । यङ् । द्वित्वं । पूर्वस्य । अमजपां । झसेऽप्यनुस्वारः । आदेशिना अदेशो निर्दिश्यते । अस्य व्याख्यानं पूर्वं कृतम् । अनेन झसेपि नकारस्य अनुस्वारः । यंयम्यते । यंयमांचक्रे । अयंयमिष्ट । कण शब्दे । अतिशयेन कणतीति यङ् । द्वित्वं । पूर्वस्य । कुहोश्चुः । अमजपां । नश्चा० । चंकण्यते । चंकणांचक्रे । अचंकणिष्ट । तनु विस्तारे । अतिशयेन तनोति । साधनं तु पूर्ववत् । तंतन्यते । तंतनांचक्रे । अतंतनिष्ट । जप मानसे । गर्हितं जपति । साधनं पूर्ववत् । जंजप्यते । जंजपांचक्रे । अजंजपिष्ट । जभ गात्रविनामे । गर्हितं जभति । द्वित्वादिकं पूर्ववत् कार्यं । जंजभ्यते । जंजभांचक्रे । अजंजभिष्ट । दह भस्मीकरणे । गर्हितं दहति । यङ् । द्वित्वादिकं । दंदह्यते । दंदहांचक्रे । अदंदहिष्ट । दंश दशने । गर्हितं दशति । यङ् । नोलोपः । द्वित्वं । अमजपां नुक् । दंदश्यते । दंदशांचक्रे । भंजो आमर्दने । अतिशयेन भनक्ति । यङ् । नोलोपः । द्वित्वं । अमजपां । झपानां । बंभज्यते । बंभजांचक्रे । अबंभजिष्ट । अतिशयेन पशति । यङ् । द्वित्वं । अमजपां । पश बाधनग्रंथनयोः । पंपश्यते । पंपशांचक्रे । अपंपशिष्ट । चर गतिभक्षणयोः । गर्हितं चरति । यङ् । द्वित्वं । सूत्रम् ।

**चरफलोरुच्चास्य** । अनयोर्यङि लुकि च सति पूर्वस्य नुगागमो भवति पूर्वात्परस्य अकारस्य उकारः । चञ्चूर्यते । फल निष्पत्तौ । पम्फुल्यते ।

**चरफलोरुच्चास्य** । चरफलोः ( ष० द्वि० ) उत् ( प्र० ए० ) च ( प्र० ए० ) अस्य ( ष० ए० ) अनयोर्धात्वोर्यङि लुकि च पूर्वस्य नुगागमो भवति । पूर्वात् परस्य अकारस्य उकारः । अनेन नुक् । पूर्वात्परस्य अकारस्य उकारः । नश्चापदांते । य्वोर्विहसे । चंचूर्यते । चंचूरांचक्रे । अचंचूरिष्ट । फल निष्पत्तौ । अतिशयेन फलति । यङ् । द्वित्वं । चरफलोः । झपानां० । पंफुल्यते । पंफुलांचक्रे । अपंफुलिष्ट । सूत्रम् ।

वलयान्तस्य वा नुक्। मव स्थौल्ये। मम्मव्यते-मामव्यते। चल कम्पने। चञ्चल्यते-चाचल्यते। दयङ् दाने। दन्दय्यते-दादय्यते।

वलयांतस्य०। वलयांतस्य धातोर्वा नुग् भवति। तत्पक्षे। आतः। मव स्थौल्ये। यङ्। द्वित्वादिकं। मंमव्यते। मंमवांचक्रे। अमंमविष्ट। नुगभावे। मामव्यते। मामवांचक्रे। अमामविष्ट। चल कंपने। अतिशयेन चलति। यङ्। द्वित्वादिकं। जमजपां। चंचल्यते। चंचलांचक्रे। अचंचलिष्ट। नुगभावे आतः। चाचल्यते। चाचलांचक्रे। अचाचलिष्ट। दयङ्दाने। यङ्। द्वित्वादिकं। जमजपां। दंदय्यते। दंदयांचक्रे। अदंदयिष्ट। नुगभावे। दादय्यते। दादयांचक्रे। अदादयिष्ट। नृती गात्रविक्षेपे। अतिशयेन नृत्यति। यङ् द्वित्वं। रः। सूत्रम्।

रीगृदुपधस्य। ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति। कित्त्वादाकाराभावः। नृती गात्रविक्षेपे। अतिशयेन नृत्यति नरीनृत्यते नटः। अत्र णत्वाभावो वाच्यः। वृतुङ् वर्तने। वरीवृत्यते। ग्रह उपादाने। जरीगृह्यते।

रीगृदुपधस्य। रीक् (प्र० ए०)। ऋदुपधस्य (प० ए०) ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति। कित्त्वादाकाराभावः। नरीनृत्यते। अत्र णत्वाभावो वाच्यः। नरीनृतांचक्रे। अनरीनृतिष्ट। वृतुङ् वर्त्तने। अतिशयेन वर्त्तते। यङ्। द्वित्वादिकं। रः। रीगृदुपधस्य। वरीवृत्यते। वरीवृतांचक्रे। अवरीवृतिष्ट। ग्रह उपादाने। यङ्। संप्रसारणं। द्वित्वादिकं। रीगृदुपधस्य। जरीगृह्यते। जरीगृहांचक्रे। अजारीगृहिष्ट। ओव्रश्चू छेदने। अतिशयेन वृश्चति। यङ्। संप्रसारणं। सूत्रम्।

ऋत्वतो रीग्वाच्यः। ओव्रश्चू छेदने। वरीवृश्च्यते। प्रच्छ ज्ञीप्सायाम्। परीपृच्छ्यते। कृपू सामर्थ्ये। कृपो रो लः। ऌ। चरीक्लृप्यते।

ऋत्वतो रीग् वाच्यः। ऋत्वतो धातोरीगागमो वाच्यः। अनेनास्य रीक्। वरीवृश्च्यते। वरीवृश्चांचक्रे। अवरीवृश्चिष्ट। प्रच्छज्ञी प्सायां। यङ्। संप्रसारणं। ततो द्वित्वं। रः। रीक्। परीपृच्छ्यते। परीपृच्छांचक्रे। अपरीपृच्छिष्ट। कृपू सामर्थ्ये।

अतिशयेन कल्पति । यङ् । द्वित्वं । रः । कुहोश्चुः । रीक् । कृपो रोलः । चरीक्लृप्यते । चरीक्लृपांचक्रे । अचरीक्लृपिष्ट । वश् कांतौ । कांतिरिच्छा । यङ् । सूत्रम् ।

**वशेर्यङि न संप्रसारणम् । वावश्यते ।**

**वशेः** । वशेर्धातोर्यङि संप्रसारणं न भवति । द्वित्वं । पूर्वस्य । आतः । वावश्यते । वावशांचक्रे । अवावशिष्ट । सूत्रम् ।

**पदस्रंसुध्वंसुभ्रंसुदंशुकसवञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नीगागमो वाच्यः । पनीपद्यते । नो लोपः । स्रंसु ध्वंसु अधःपतने । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । वञ्चु वञ्चने । वनीवच्यते, दनीदस्यते, चनीकस्यते, पनीपत्यते, चनीस्कद्यते ।**

**पद०** । अनेन नुगागमः अतिशयेन पद्यते । यङ् । द्वित्वं । नीगागमः । कित्त्वादाकाराभावः । पनीपद्यते । पनीपदांचक्रे । अपनीपदिष्ट । स्रंसु ध्वंसु अधः पतने । यङ् । नोलोपः । द्वित्वं । पूर्वस्य नीगागमः । सनीस्रस्यते । सनीस्रसांचक्रे । असनीस्रसिष्ट । झपानां । अनेन धस्य दः । अन्यत्तु पूर्ववत् । दनीध्वस्यते । दनीध्वसांचक्रे । अदनीध्वसिष्ट । भ्रंसुधातोर्यङ् । द्वित्वम् । पूर्वस्य । झपानाम् । पद० अनेन नीगागमः । नोलोपः । बनीभ्रस्यते । चतुर्णां सुगमानि । लिट् । कासादि० । अनपि च हसात् । बनीभ्रसांचक्रे । सिसता० । बनीभ्रसिषीष्ट । बनीभ्रसिता । लुङ्लकारे । भूते सिः । इट् । पत्वम् । ष्टुत्वम् । अबनीभ्रसिष्ट । वंचु वंचने । अतिशयेन वंचति । यङ् । द्वित्वम् । पूर्वस्य नीगागमः । वनीवच्यते । अनेन नोलोपः । इति सूत्रेण नकारलोपः । लिट् लकारे । कासादि० । वनीवचांचक्रे । लुङ्लकारे साधनं तु पूर्ववत् । अवनीवचिष्ट । इत्यादीनि भवंति । दंश दशने । अतिशयेन दशति । यङ् । अन्यत्साधनं पूर्ववत् । नीगागमः । नोलोपः । दनीदस्यते । लिट् । कासादि० । दनीदसांचक्रे । लुङ् । अदनीदसिष्ट । स्कंदिर् गतिशोषणयोः । अतिशयेन स्कंदति । अतिशये नीगागमः । नोलोपः । कुहोश्चुः । चनीस्कद्यते । लिट् । चनीस्कदांचक्रे । लुङ् । अचनीस्कदिष्ट । कस गतौ । अतिशयेन कसति । यङ् । द्वित्वादिकम् । नीगागमः । कुहोश्चुः । चनीकस्यते । लिट्लकारे । कासादि० अनेनाम् । अनपिच । चनीकसांचक्रे । लुङ् । अचनीकसिष्ट । पत्लृ । पतने । अतिशयेन पतति । यङ् । अन्यत्सुगमम् । नीगागमः । पनीपत्यते । लिट् । कासादि० । पनीपतांचकार । लुङ्लकारे । अपनीपतिष्ट । डु-[illegible] करणे । अतिशयेन करोति । अतिशये० अनेन यङ् । सूत्रम् ।

ऋतो रिः। ऋकारस्य रिरादेशो भवति यङि सति। ततो द्वित्वम् ये। चेक्रीयते, चेक्रीयांचक्रे, जेह्रीयते।

ऋतो रिः। ऋतः (ष० ए०)। रिः (प्र. ए.)। ऋकारांतस्य धातो रि इत्यादेशो भवति यङि सति। ये अनेन दीर्घः। ततो द्वित्वम्। ह्रस्वः। पूर्वस्य कुहोश्चुः। यङि अनेन गुणः। चेक्रीयते। चतुर्णां सुगमानि। लिट्। कासादि०। चेक्रीयांचक्रे। लुङ्लकारे। अचेक्रीयिष्ट। इत्यादीनि। हृञ् हरणे। अतिशयेन हरति। यङ्। द्वित्वादिकम्। पूर्वम् ऋतो रिः। अन्यत्सुगमम्। जेह्रीयते। लिट्लकारे। कासादि०। जेह्रीयांचक्रे। लुङ्लकारे अजेह्रीयिष्ट। इत्यादीनि। दा दाने। अतिशयेन ददाति। अतिशये अनेन यङ्। सूत्रम्।

दादेरिः। अपिद्दाधामाङोहाकूपिबसोस्थानामिकारो भवति किति ङिति हसे परे। देदीयते, देदीयांचक्रे। ये। देधीयते, मेमीयते, जेगीयते, जेहीयते, पेपीयते, सेषीयते, तेष्ठीयते।

दादेरिः। दादेः (ष० ए०)। रिः (प्र० ए०)। अपिदा धा मा गा हाक् पिब सो स्थानां। एतेषां धातूनां इकारो भवति किति ङिति हसे परे। षष्ठी० अनेन अंतस्य भवति। ततो ये अनेन दीर्घः। ततो द्वित्वम्। ह्रस्वः। गुणः। अन्यत्साधनं सुगमम्। देदीयते। लिट्। कासादि०। देदीयांचक्रे। लुङ्लकारे। अदेदीयिष्ट। इत्यादीनि भवंति। डुधाञ् धारणपोषणयोः। अतिशयेन दधाति। यङ्। दादेरिः। अन्यत्सुगमम्। देधीयते। लिट्लकारे। कासादि०। देधीयांचक्रे। लुङ्लकारे। अदेधीयिष्ट। इत्यादीनि। मा माने। अतिशयेन माति। यङ्। दादेरिः। मेमीयते। लिट्। मेमीयांचक्रे। लुङ्। अमेमीयिष्ट। इत्यादीनि। गाङ् गतौ। अतिशयेन गाते। यङ्। दादेरिः। अन्यत्सुगमम्। जेगीयते। लिट्। जेगीयांचक्रे। लुङ्। अजेगीयिष्ट। इत्यादीनि। पा पाने। अतिशयेन पिबति। अतिशये। यङ्। दादेरिः। अन्यत्सुगमम्। पेपीयते। लिट्लकारे। कासादि०। पेपीयांचक्रे। लुङ्। अपेपीयिष्ट। इत्यादीनि। षो अंतकर्मणि। आदेः ष्णः स्नः। अतिशयेन स्यति। यङ्। दादेरिः। षत्वं। सेषीयते। लिट्। कासादि०। सेषीयांचक्रे। लुङ्लकारे। असेषीयिष्ट। इत्यादीनि। ष्ठा गतिनिवृत्तौ। आदेः ष्णः स्नः। अतिशयेन तिष्ठति। अतिशये। यङ्। दादेरिः। गुणः। षत्वम्। तेष्ठीयते। चतुर्णां सुगमानि। लिट्लकारे। कासादि०। अनेनाम् तेष्ठीयांचक्रे। लुङ्लकारे। अतेष्ठयिष्ट। इत्यादीनि। घ्रा गंधोपादाने। अतिशयेन जिघ्रति। यङ्। सूत्रम्।

**घ्राध्मोरीः ।** अनयोरीकारो भवति यङि सति । जेघ्रीयते, देध्मीयते ।

**घ्राध्मोरिः ।** घ्राध्मोः ( ष० द्वि० ) । इः (प्र. ए.) । घ्रा ध्मा अनयोर्धात्वोरिकारो भवति । यङि सति । षष्ठी० अनेनांतस्य । ततो द्वित्वम् । पूर्वस्य झपानां । अन्यत्सुगमम् । जेघ्रीयते । लिट्लकारे । कासादि० । जेघ्रीयांचक्रे । लुङ्लकारे । अजेघ्रीयिष्ट । इत्यादीनि । ध्मा शब्दाग्निसंयोगयोः । अतिशयेन धमति । यङ् । घ्राध्मोरिः । अनेनेकारः । द्वित्वम् । पूर्वस्य । अन्यत्सुगमम् । देध्मीयते । देध्मीयांचक्रे अदेध्मीयिष्ट । इत्यादीनि । हन् हिंसागत्योः । अतिशयेन हंति । यङ् । सूत्रम् ।

**हन्तेर्हिंसायां घ्नी वा वाच्यः । जेघ्नीयते । अमजपां नुक् । द्विरुक्तस्य हन्तेः कुत्वं वाच्यम् । जंघन्यते ।**

**हंतेः ।** हंतेर्धातोर्हिंसायां वा घ्नी वाच्यः । ततो द्वित्वादिकम् । अन्यत्साधनं सुगमम् । जेघ्नीयते । जेघ्नीयांचक्रे । अजेघ्नीयिष्ट । इत्यादीनि भवंति । हिंसाभावे तु । द्विरुक्तस्य अनेन कुत्वम् अमजपां० अनेन नुक् । नश्चापदांते । जंघन्यते । लिट् जंघनांचक्रे । लुङ्लकारे । अजंघनिष्ट । इत्यादीनि । चायृ संतानपालनयोः । सूत्रम् ।

**चायो यङि की वाच्यः । चायृ सन्तानपालनयोः । चेकीयते ।**

**चायः ।** चायो धातोः की वाच्यः यङि परे । अनेन कीः । कुहोश्चुः । गुणः । चेकीयते । लिट्लकारे कासादि० । चेकीयांचक्रे । सिसता० चेकीयिषीष्ट । चेकीयिता । चेकीयिष्यते । अचेकीयिष्यत । लुङ्लकारे । अचेकीयिष्ट । इत्यादीनि । कु शब्दे । अतिशयेन कवति । यङ् । द्वित्वम् । सूत्रम् ।

**कवतेर्यङि चुत्वाभावो वाच्यः । कु शब्दे । कोकूयते ।**

**कवतेः ।** कवतेर्धातोर्यङि चुत्वाभावो वाच्यः । अनेन चुत्वनिषेधः । ये । गुणः । कोकूयते । लिट् । कासादि० । कोकूयांचक्रे । लुङ्लकारे । अकोकूयिष्ट । इत्यादीनि । शीङ् स्वप्ने । अतिशयेन शेते । अतिशये अनेन यङ् । सूत्रम् ।

**शीङोऽयङ् क्ङिति ये वक्तव्यः । शाशय्यते । ढौकृ गतौ । डोढौक्यते । त्रौकृ गतौ । तोत्रौक्यते । इति यङ्प्रक्रिया ।**

**शीङः ।** शीङो धातोरयङ् क्ङिति यप्रत्यये परे वक्तव्यः । ङिदंतस्य । पश्चात् द्वित्वम् । आतः । यतः । शाशय्यते । लिट्लकारे । शाशयांचक्रे । अशाशयिष्ट । इत्यादीनि भवंति । ढौकृ गतौ । अतिशयेन ढौकति । यङ् । द्वित्वम् । ह्रस्वः । गुणः । झपानां । डोढौक्यते । लिट्लकारे । डोढौकांचक्रे । लुङ्लकारे । अडोढौ-

किष्ट। इत्यादीनि। त्रौक्ट गतौ। अतिशयेन त्रौकति। यङ्। द्वित्वम्। पूर्वस्य। ह्रस्वः। गुणः। तोत्रौक्यते। लिट्लकारे। तोत्रौकांचक्रे। लुङ्लकारे। अतोत्रौकिष्ट। अतोत्रोकिषातां। अतौत्रौकिषत। इत्यादीनि भवंति। इति यङ्प्रक्रिया समाप्ता।

## अथ यङ्लुक्प्रक्रिया निरूप्यते ॥

अथ यङ्लुक्प्रक्रिया कथ्यते। सूत्रम्।

**वान्यत्र लुगनुवर्तते। अन्यत्रेत्यच्प्रत्ययसंयोगं विनापि वा यङो लुग्भवति।**

वान्यत्र। द्विपदं सूत्रम्। लुक् एतत् पदम् पूर्वसूत्रादनुवर्तते। अनुवृत्तिक्रमस्तु। सूत्रपाठाद् ज्ञातव्यः। अन्यत्र अच् प्रत्ययसंयोगं विनापि वातिशयार्थे विहितस्य यङ्प्रत्ययस्य लुग् भवति। चंद्रकीर्त्यां तु, उक्प्रत्यये परे यङो लुग् भवति। अन्यत्रापि उक्प्रत्ययाभावेपि यङो लुग् भवतीति व्याख्यातं। वाग्रहणात् क्वचित्। यङो लोपो न भवति। अनेन यङो लोपः। भू सत्तायां। अस्य धातोरतिशयार्थे विहितस्य यङो लोपः। यङ्लुगंतं धातुरूपं परस्मैपदे प्रयोज्यम्। तच्च ह्वादिवत्साध्यम्। ह्वादित्वात्। ह्वादेर्द्विश्च। अनेनाम्। 'कर्तरि' अनेन सूत्रेण विहितस्यापो लुग् भवति। लुकि कृते सति धातोर्द्वित्वं च भवति। अनेन व्याख्यानेनापो लुक् धातोर्द्वित्वम्। यङि अनेन गुणः। 'झपानां' अनेन भस्य बः। सूत्रम्।

**लुकि सति पितितिस्मिवा इकारो वक्तव्यः। बोभवीति-बोभोति बोभूतः बोभुवाति। यङ्लुगन्तं परस्मैपदं ह्वादिवच्च द्रष्टव्यम्। ह्वादित्वादपो लुक् द्वित्वमपि ज्ञातव्यम्। बोभूयात्। बोभवीतु बोभोतु-बोभूतात् बोभूताम् बोभुवतु। अबोभवीत्। अबोभोत् अबोभूताम् अबोभवुः। बोभवांचकार, बोभूयात्, बोभविता, बोभविष्यति, अबोभविष्यत्। दादेः पे। गुणं बाधित्वा नित्यत्वाद्वुक्। अबोभूवीत्-अबोभोत् अबोभूताम् अबोभुवुः। पापचीति-पापक्ति पापक्तः पापचति। पापच्यात्। पापचीतु-पापक्तु। झसाद्धिर्हेः। पापग्धि। अपापचीत्, अपापक्, पापचांचकार, पापच्यात्, पापचिता, पापचिष्यति, अपापचिष्यत्, अपापचीत्।**

लुकि. । लुकि कृते पिति, तकारे, सकारे, अकारे च परे वा ईट् वक्तव्यः । अनेन ईट् । गुणः । अनेन गुणो नभवति । ओअव् । बोभवीति । यदा ईट् न भवति । तदा गुणो भवति । बोभोति । बोभूतः । नुधातोः । अनेनोव् । बोभुवति । बोभवीषि । बोभोषि । बोभूथः । बोभूथ । बोभवीमि । बोभोमि । बोभूवः । बोभूमः । बोभूयात् । बोभूयातां । बोभूयुः । बोभवीतु । बोभोतु । बोभूतात् । बोभूतां बोभुवतु । बोभूहि बोभूतात् । बोभूतं । बोभूत । बोभवानि । बोभवाव । बोभवाम । दिबादावट् । अबोभवीत् । अबोभोत् । अबोभूतां । अन उस् । उसि परे गुणः । अबोभवुः । अबोभवीः । अबोभोः । अबोभूतं । अबोभूत । अबोभवं । अबोभूव । अबोभूम । कासादि० । अनेनाम् । गुणः । बोभवांचकार । बोभवामास । बोभवांबभूव । बोभूयात् । सिसता० । अनेनेट् । गुणः । बोभविता । बोभविष्यति । अबोभविष्यत् । लुङ्लकारे । दादेः पे । अनेन सेर्लोपः । गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । इडभावे गुणः । अबोभोत् । अबोभूतां । अन उस् । गुणः । अबोभूवुः । अबोभवीः । अबोभोः । अबोभूतम् । अबोभूत । अबोभूवं । अबोभूव । अबोभूम । पच् धातोर्यङो लुकि कृते । साधनं तु पूर्ववत् । 'आतः' अनेन सूत्रेण पूर्वस्याकारस्याकारः लुकि सति । अनेन वा ईट् । पापचीति । ईडभावे । चोः कुः । पापक्ति । पापक्तः । पापचति । अन्यानि सुगमानि । पापच्यात् । पापचीतु । पापक्तु । पापक्तात् । पापक्तां । पापचतु । हौ परे । झसाद्धिर्हेः । चोः कुः । झबे जबाः । पापग्धि । अन्यानि सुगमानि । अपापचीत् । ईडभावे । चोः कुः । दिस्योर्हसात् । अपापक् । अपापक्तां । अपापचुः । अन्यानि सुगमानि । लिट् । कासादि० । पापचांचकार । पापच्यात् । अनपि धातुः प्रत्ययांतः सन् सेड् भवति । पापचिता । पापचिष्यति । अपापचिष्यत् । लुङ् । द्वाविटौ । सेर्लोपः। अपापचीत् । अपापचिष्टां । अपापचिषुः । इत्यादीनि । भुज् पालनाभ्यवहारयोः । यङो लुकि कृते सति । अन्यत् साधनं तु पूर्ववत् । 'उपधाया लघोः' अनेन गुणे प्राप्ते । सूत्रम् ।

द्वेः । द्विरुक्तस्य पिति सार्वधातुके स्वरेऽपि नोपधाया गुणः । बोभुजीति-बोभोक्ति । अबोभुजीत्-अबोभोक् । वावदीति-वावत्ति । जाघटीति-जाघट्टि ।

द्वेः । द्वेः ( ष० ए० ) । द्विरुक्तस्य धातोः पिति सार्वधातुके स्वरे परेऽपि उपधाया गुणो न भवति । अनेन गुणनिषेधः । बोभुजति । ईडभावे । चोः कुः । खसे० । उपधाया लघोः । बोभोक्ति । बोभुक्तः । बोभुजति । द्वेः । अनेनात्र अंतभत् । अन्यानि सुगमानि । बोभुज्यात् । बोभुजीतु । बोभोक्तु । हौ परे । झसाद्धिः

र्हैः । चोः कुः । झबेजशः । बोभुग्धि । अन्यानि सुगमानि । अबोभुजीत् । ईडभावे । चोः कुः । दिस्योर्हसात् । वावसाने । अबोभोक् । अबोभुक्ताम् । अबोभुजुः । इत्यादीनि । लिट् । कासादि० । बोभोजांचकार । इत्यादीनि । बोभुज्यात् । सिसता० । बोभोजिता । बोभोजिष्यति । अबोभोजिष्यत् । लुङ् । अबोभोजीत् । वद व्यक्तायां वाचि । यङो लुक् । आतः । अनेन पूर्वस्याकारः । लुकि सति अनेन ईट् । वावदीति । ईडभावे । ससे० । वावत्ति । वावत्तः । वावदति । इत्यादीनि । वावद्यात् । वावदीतु । वावत्तु । हौपरे । झसाद्धिर्हैः । वावद्धि । अवावदीत् । ईमभावे अवावत् । अवावत्तां । अवावदुः । इत्यादीनि । लिट् । कासादि० । वावदांचकार । वावद्यात् । सिसता० । वावदिता । वावदिष्यति । अवावदिष्यत् । लुङ् । द्वाविटौ । सेर्लोपः । अवावदीत् । अवावदिष्टाम् । अवावदिषुः । घट चेष्टायां । यङो लुक् । द्वित्वं ॥ कुहोश्चुः । आतः । लुकि सति । अनेन ईट् । जाघटीति । ईडभावे । ष्टुभिः ष्टुः । जाघट्टि । जाघट्टः । जाघटति । जाघट्यात् । जाघटीतु । जाघट्टु । हौ परे । झसाद्धिर्हैः । ष्टुत्वं । जाघड्ढि । अजाघटीत् । ईडभावे । अजाघट् । लिट् । कासादि० । जाघटांचकार । जाघट्यात् । जाघटिता । जाघटिष्यति । अजाघटीत् । डुकृञ् करणे । यङ्लुकि सति । द्वित्वं । रः । कुहोश्चुः । सूत्रम् ।

ऋकारान्तानामृदुपधानां च यङ्लुकि सति पूर्वस्य रुक्रिक्रीक् आगमा वक्तव्याः । रः । डुकृञ् करणे । चर्करीति-चरिकरीति-चरीकरीति । चर्कर्ति-चरिकर्ति चरीकर्ति-चर्कृतः-चरिकृतः-चरीकृतः चर्क्रति-चरिक्रति चरीक्रति । अचर्कारीत् । अचरिकारीत्-अचरीकारीत् । वर्वृतीति-वरिवृतीति-वरीवृतीति । वर्वर्ति-वरिवर्ति-वरीवर्ति । अवर्वृतीत्-अवरिवृतीत्-अवरीवृतीत् ।

ऋकारांतानां० । किस्वादंते । रुक् इत्यत्र उकार उच्चारणार्थः ककारः कित्कार्यार्थः । अतोर इत्यागमः । रिक्रीकौ तु यथास्थितौ । ककारः कित्कार्यार्थः । लुकि सति । अनेन पित्यडागमो वा भवति । रुगकृते ईडागमे कृते । चर्करीति । अत्र गुणो भवति । रिगागमे कृते । चरिकरीति । रीगागमे कृते । चरीकरीति । ईडभावेपि त एवागमा भवंति । चर्कर्ति चरिकर्ति । चरीकर्ति । द्वित्वबहुत्वयोस्तु रुक्रिक्रीगागमेषु कृतेषु सत्सु त्रीणि रूपाणि भवंति । चर्कृतः । चरिकृतः । चरीकृतः । अंत अत् । ऋरं ।

क्रा आगमा भवंति । चर्क्रति । चरिक्रति । चरीक्रति । एवं प्रथमपुरुषे द्वादश रूपाणि भवंति । मध्यमपुरुषेपि द्वादश रूपाणि भवंति । चर्करीषि । अत्र षत्वं च भवति । चरिकरीषि । चरीकरीषि । ईडभावे । चर्कर्षि । चरिकर्षि । चरीकर्षि । चर्कृथः । चरिकृथः । चरीकृथः । चर्कृथ । चरिकृथ। चरीकृथ । उत्तमपुरुषेऽपि द्वादश। ईड् वा भवति । चर्करीमि । चरिकरीमि । चरीकरीमि । चर्कृवः । चरिकृवः । चरीकृवः । चर्कृमः । चरिकृमः । चरीकृमः । एवं षट्त्रिंशद्रूपाणि वर्त्तमाने स्युः । विधिसंभावनयोः । एते आगमा भवंति । चर्कृयात् । चरिकृयात् । चरीकृयात् । चर्कृयातां । चरिकृयातां । चरीकृयातां । चर्कृयुः । चरिकृयुः । चरीकृयुः । चर्कृयाः । चरिकृयाः । चरीकृयाः । चर्कृयातं । चरिकृयातं । चरीकृयातं । चर्कृयात । चरिकृयात । चरीकृयात । चर्कृयां।चरिकृयां । चरीकृयां । चर्कृयाव। चरिकृयाव । चरीकृयाव । चर्कृयाम । चरिकृयाम । चरीकृयाम । लोट्लकारे ईडागमे त्रीणि रूपाणि । तदभावे त्रीणि रूपाणि भवंति । अन्यत्र यथासंभवम् । चर्करीतु । चरिकरीतु । चरीकरीतु । ईडभावे । चर्कर्त्तु । चरिकर्त्तु । चरीकर्तु । तातङादेशे कृते । चर्कृतात् । चरिकृतात् । चरीकृतात् । एवं तुपि नव रूपाणि । द्विवचनेऽपि त्रीणि रूपाणि । चर्कृतां । चरिकृतां । चरीकृतां । बहुवचने त्रीणि रूपाणि । द्वेः अनेन अंत अत् । ऋरं । चर्क्रतु । चरिक्रतु । चरीक्रतु । मध्यमपुरुषे । चर्कृहि । चरिकृहि । चरीकृहि । तातङादेशे । चर्कृतात् । चरिकृतात् । चरीकृतात् । चर्कृतं । चरिकृतं । चरीकृतं । चर्कृत । चरिकृत । चरीकृत । उत्तमपुरुषे । पित्त्वात् गुणः । णत्वं । चर्कराणि । चरिकराणि । चरीकराणि । चर्कराव । चरिकराव । चरीकराव । चर्कराम । चरिकराम । चरीकराम । एवमाशीःप्रेरणयोः षट्त्रिंशद्रूपाणि । लङ् । त्रिष्विमागमः । दिबादावट् । अचर्करीत् । अचरिकरीत् । अचरीकरीत् । ईडभावे । दिस्योर्हसात् । स्रोर्विसर्गः । अचर्कः । अचरिकः । अचरीकः । अचर्कृतां । अचरिकृतां । अचरीकृताम् । अन उस् । गुणः । अचर्करुः । अचरिकरुः । अचरीकरु । अचर्करीः । अचरिकरीः । अचरीकरीः । ईडभावे । दिस्योर्हसात् । स्रोर्विसर्गः । अचरिकः । अचरीकः । अचर्कृतं । अचरिकृतं । अचरीकृतं । अचर्कृत ।अचरिकृत । अचरीकृत । अचर्करं । अचरिकरं । अचरीकरं । अचर्कृव । अचरिकृव । अचरीकृव । अचर्कृम । अचरिकृम । अचरीकृम । लिट् । कासादि० । चर्करांचकार । चरिकरांचकार । चरीकरांचकार । इत्यादीनि । चर्करामास । चरिकरामास । चरीकरामास । चर्करांबभूव । चरिकरांबभूव । चरीकरांबभूव । इत्यादीनि रूपाणि भवंति । चर्क्रियात् । चरिक्रियात् । चरीक्रियात् । सिसता० अनेन इट् । चर्करिता । चरिकरिता । चरीकरिता । इत्यादीनि । चर्करिष्यति । चरिकरिष्यति । चरीकरिष्यति । अचर्करिष्यत् । अचरिकरि-

ष्यत् । अचरीकरिष्यत् । लुङ् । द्वाविटौ । सेर्लोपः । अचर्कारीत् । अचरिकारीत् । इत्यादीनि । वृतुङ् वर्त्तने । यङ्लुकि कृते साधनं तु पूर्ववत् । अयं धातुर्ऋदुपधोऽस्ति तस्मात् पूर्वोक्ता आगमा भवंति लुकि सति । अनेन ईडागमः । वर्वृतीति । वरिवृतीति । वरीवृतीति । ईडभावे । वर्वर्ति । वरिवर्ति । वरीवर्त्ति । इत्यादीनि । लिङ् । वर्वृत्यात् । वरिवृत्यात् । वरीवृत्यात् । इत्यादीनि । लोट् । वर्वृतीतु । वरिवृतीतु । वरीवृतीतु । तातङादेशे । वर्वृतात् । वरिवृतात् । वरीवृतात् । इत्यादीनि । लुङ् । 'द्वेः' अनेन गुणनिषेधः । अवर्वृतीत् । अवरिवृतीत् । अवरीवृतीत् । ईडभावे । 'संयोगांतस्य' अनेन सकारस्य लोपे प्राप्ते ।

रात्सस्य । रेफादुत्तरस्य सस्यैव लोपो नान्यस्य । अवर्वर्त् । अवरीवर्त् अवरिवर्त् । अवर्वृताम् अवरिवृताम् अवरीवृताम् । वर्वर्तांचकार-वरिवर्तांचकार-वरीवर्तांचकार । वनीवञ्चीति वनीवङ्क्ति । नो लोपः । वनीवक्तः । वनीवचति । जङ्गमीति जङ्गन्ति । लोपस्त्वनुदात्ततनाम् । जङ्गतः । गमां स्वरे । जंग्मति । धातुग्रहणोक्तं यङ्लुकि वेति केचित् । जङ्गमति, जङ्गमीमि ।

रात्सस्य । अनेन तन्निषेधः । अवर्वर्त् । अत्र दिस्योः० अनेन लोपः । अवरिवर्त् । अवरीवर्त् । अवर्वृतां । अवरिवृताम् । अवरीवृताम् । इत्यादीनि । लिट् । कासादि० । वर्वर्त्तांचकार । वरिवर्त्तांचकार । वरीवर्त्तांचकार । वर्वर्त्तामास । वरिवर्त्तामास । वरीवर्त्तामास । वर्वर्त्तांबभूव । वरिवर्त्तांबभूव । वरीवर्त्तांबभूव । वर्वृत्यात् । वरिवृत्यात् । वरीवृत्यात् । सिसता० । वर्वर्तिता । वरिवर्तिता । वरीवर्तिता । वर्वर्तिष्यति वरिवर्तिष्यति । वरीवर्त्तिष्यति । अवर्वर्तिष्यत् । अवरिवर्तिष्यत् । अवरीवर्त्तिष्यत् । लुङ् । अवर्वर्तीत् । अवरिवर्तीत् । अवरीवर्तीत् । वंचु वंचने । यङ्लुकि कृते । पूर्ववत् साधनं । नीगागमः । लुकि सति । अनेन ईट् । वनीवंचीति । ईडभावे । चोः कुः । वनीवंक्ति । नो लोपः । वनीवक्तः । द्वेः । वनीवचति । इत्यादीनि । वनीवच्यात् । वनीवंचीतु । वनीवंक्तु । अवनीवंचीत् । अवनीवक् । इत्यादीनि । लिट् । वनीवंचांचकार । वनीवंचामास । वनीवंचांबभूव । नो लोपः । वनीवच्यात् । सिसता० । वनीवंचिता । वनीवंचिष्यति । अवनीवंचिष्यत् । अवनीवंचीत् । अवनीवंचिष्टाम् । अवनीवंचिषुः । गाङ् गतौ । यङ्लुकि कृते । द्वित्वादिकं कार्यम् । कुहोश्चुः ।

अनेन गस्य जः । जमजपां० अनेन पूर्वस्य नुक् । नश्चा० । लुकि सति अनेन वेट् । जंगमीति । इडभावे । नश्चा० । जंगंति । लोपस्त्वनुदात्ततनां० अनेन नकारस्य लोपः । जंगतः । गमां स्वरे । अनेनोपधालोपः । जंग्मति । इत्यादीनि । धातुग्रहणोक्तं यङ्लुकि वा भवति । इति केचिदाचार्या वदंति । तेन वा नोपधालोपः । जंगमति । अन्यानि मूलतो ज्ञेयानि । जंगम्यात् । जंगमीतु । जंगंतु । अजंगमीत् । ईडभावे । दिस्योः ।

**मो नो धातोः । धातोर्मकारस्य नकारो भवति झसे पदान्तवमयोश्च । जङ्गन्मि जङ्गन्वः जङ्गन्मः ।**

मो नो धातोः । अजंगन् । इत्यादीनि रूपाणि सुगमानि । अनेनैव मकारेण साध्यानि । लिट्लकारे । कासादि० अनेनाम् । जंगमांचकार । जंगमामास । जंगमांबभूव । इत्यादीनि । जंगम्यात् । सिसता० । जंगमिता । जंगमिष्यति । अजंगमिष्यत् । लुङ्लकारे । अजंगमीत् । अजंगमिष्टाम् । अजंगमिषुः । हन् हिंसागत्योः । यङ्लुकि कृते । द्वित्वादिकं सर्वं भवति । कुहोश्चुः । झपानां ।

**द्विरुक्तस्य हन्तेः कुत्वं वाच्यम् । जङ्घनीति-जङ्घन्ति जङ्घतः जङ्घति जंघ्नति । जाहेति-जाहाति जाहीतः जाहति । एवं दाधेत्यादि । दादेति-दादाति दत्तः दादति । दादेतु, दादेयात्, अदादात् । एवं धेट् । दाधेति-दाधाति दाद्धः दाधति । दाधेयात्, अदाधासीत्, अदाधात्, अदाधत् । धात्रू । दाधाति धत्तः । पितोस्तु । दादेति दादीतः । दादीहि, दादायात्, अदादासीत् । जहातेः पूर्वस्य दीर्घो वेति केचित् । जहाति । इति यङ्लुक्प्रक्रिया ॥**

द्विरुक्तस्य । जजमपाम् । नश्चा० । लुकि सति । जंघनीति । ईडभावे । नश्चा० । जंघति । लोपस्त्वनु० । गमांस्वरे । जंघ्नति । जंघन्यात् । जंघनीतु । जंघंतु । इत्यादीनि । अजंघनीत् । ईडभावे । अजंघत् । अजंघतां । अजंघ्नुः । जंघनांचकार । जंघनामास । जंघनांबभूव । वधादेशः । आशिषि । वध्यात् । जंघनिता । जंघनिष्यति । अजंघनिष्यत् । वृद्धिनिषेधः । अवधीत् । इत्यादीनि । ओहाक् त्यागे । यङ्लुकि कृते । द्वित्वादिकं । कुहोश्चुः । ह्रस्वः ।

ह्रस्वानां । आतः । लुकि सति । अनेन ईट् । अइए । जाहेति । ईडभावे । जाहाति । हेस्तौ अनेनाकारस्य ईकारः । जाहीतः । जाहति । जाहीयात् । जाहेतु । जाहातु । अजाहेत् । अजाहात् । जाहांचकार । जाहायात् । सिसता० । जाहिता । जाहिष्यति । अजाहिष्यत् । आदंतानां० । अजासीत् । दा दाने । यङ्लुकि कृते । द्वित्वादिकम् । ह्रस्वः । आतः । लुकि सति । दादेति । दादाति । दादेः । दात्तः । ददति । दाद्यात् । दादेतु । अदादेत् । अदादात् । दादांचकार । दादायात् । दादिता । दादिष्यति । अदादिष्यत् । अदादासीत् । दादेःपे । अदादात् । एवं । दाधेति । दाधाति । दाद्धः । दाधाति । लिट् । दाधांचकार । लुङ् । अदाधासीत् । वा सिलोपः । अदाधात् । डुधाञ् धारणपोषणयोः । अस्यापि रूपाणि पूर्ववत् । दैप् शोधने । दादेति । दादाति । दादीतः । दादति । दादीयात् । दादेतु । दादातु । अदादेत् । अदादात् । दादांचकार । दादायात् । लुङ्लकारे । आदंतानां । अदादासीत्।जहातेर्धातोः पूर्वस्य दीर्घो वा भवतीइति केचिदाचार्या वदंति । तन्मते । जहाति । इत्यादीनि रूपाणि भवंति । तेषां सुगमत्वात् व्याख्यानं न कृतम् । इति यङ्लुक्प्रक्रिया समाप्ता ।

अथ नामधातुप्रक्रिया । नाम्नो य ई चास्य । नाम्न इच्छायामर्थे यः प्रत्ययो भवति तत्सन्नियोगेनाकारस्य ईकारः । आत्मनः पुत्रमिच्छतीति पुत्रीयति । पुत्रीयेत्, पुत्रीयतु, अपुत्रीयत् । इत्यादि ।

अथ नामधातुप्रक्रिया । सूत्रम् । नाम्नो य ई चास्य । नाम्नः । (प०ए०)। यः(प्र०ए०) । ईः(प्र०ए०)। च (प्र०ए०)। अस्य (ष०ए०)। नाम्नःशब्दात् इच्छायां वाच्यायां यः प्रत्ययो भवति। तस्य सन्नियोगे सति अकारस्य ईकारो भवति। आत्मनः पुत्रमिच्छति इति विग्रहे । अनेन यः प्रत्ययो भवति । 'समासप्रत्यययोः' अनेन विभक्तिलोपः । स धातुः । अनेन धातुत्वम् । धातुत्वात् तिबादयः । अप् कर्त्तरि । यतः । पूर्वस्य अकारस्य ईकारः । पुत्रीयति । चतुर्णां रूपाणि सुगमानि । लिट्लकारे । कासादि० । पुत्रीयांचकार । पुत्रीय्यात् । सिसता० । पुत्रीयिता । पुत्रीयिष्यति । अपुत्रीयिष्यत् । अपुत्रीयीत् । इत्यादीनि । गामिच्छति । नाम्नो य ई चास्य । अनेन यः प्रत्ययः । अन्यत्तु पूर्ववत् कार्यं । सूत्रम् ।

यादौ प्रत्यये ओकारौकारयोरवावौ वक्तव्यौ । गामिच्छतीति । गव्यति । नावमिच्छतीति नाव्यति । स्वव्यति मव्यति ।

युष्मद्यति । अस्मद्यति । धनीयति । काम्यश्च । पुत्रमिच्छति पुत्रकाम्यति । गव्याञ्चकार । यकारस्यानपि वा लोपो वाच्यः । गवांचकार, गव्यात्, गव्यिता-गविता । अगव्यीत्-अगवीत्-अगव्यिष्टाम्-अगविष्टाम् अगव्यिषुः-अगविषुः । नाव्यात् नाव्यिता-नाविता अनाव्यीत्-अनावीत् ।

यादौ । यादौ प्रत्यये परे आकारौकारयोः अवावौ वक्तव्यौ । अनेन अव् । गव्यति । लिट्लकारे । कासादि० । गव्यांचकार । सूत्रम् । यकारस्य । हसात् । यकारस्य अनपि विषये वा लोपो वाच्यः । अनेन यकारलोपः । गवांचकार । एवमन्येषामपि । नावमिच्छति । यः प्रत्ययः । आव् च भवति । नाव्यति । नाव्यांचकार । नावांचकार । नाव्यात् । नाव्यिता । नाविता । इत्यादीनि । लुङ्लकारे । अनाव्यीत् । अनावीत् । इत्यादीनि भवंति । स्वामिच्छति । यः । त्वन्मदे । अनेन त्वत् । त्वद्यति । लिट् । त्वद्यांचकार । यकारस्य लोपे सति यानि रूपाणि भवंति तानि सुगमानि । लुङ्लकारे । अत्वद्यीत् । मामिच्छति । यः । मत् । मद्यति । मद्यांचकार । मदांचकार । लुङ्लकारे । अमद्यीत् । अमदीत् । युष्मान् इच्छति युष्मद्यति । युष्मद्यांचकार । युष्मदांचकार । लुङ्लकारे । अयुष्मद्यीत् । अयुष्मदीत् । इत्यादीनि । अस्मान् इच्छति अस्मद्यति । लिट् । अस्मद्यांचकार । अस्मदांचकार । स्वरादेः । अनेन द्वितीयोऽडागमः । आस्मद्यीत् । आस्मदीत् । इत्यादीनि । धनमिच्छति इति विग्रहे यः प्रत्ययः । अकारस्य ईकारः । धनीयति । धनीयांचकार । धनीय्यात् । सिसता० । धनीयिता । लुङ्लकारे । अधनीयीत् । अधनीयिष्टाम् । अधनीयिषुः । इत्यादीनि । गार्ग्यमिच्छति । यः प्रत्ययः । सूत्रम् ।

हसात्तद्धितस्य लोपो ये । गार्गीयति वाच्यति ।
हसाद्यस्य लोपो वानपि । समिध्यिता, समिधिता ।

हसात् । हसादुत्तरस्य तद्धितस्य यप्रत्यये लोपो भवति । अनेन यकारस्य लोपः । निमित्ताभावे० अनेन अलोपाभावः । अकारस्य ईकारो भवति । गार्गीयति चतुर्णां सुगमानि । लिट्लकारे । कासादि० । गार्गीयांचकार । गार्गीय्यात् । सिसता० । गार्गीयिता । गार्गीयिष्यति । अगार्गीयिष्यत् । लुङ्लकारे । अगार्गीयीत् ।

वाचमिच्छति। यः प्रत्ययः। अन्यत्पूर्ववत्। वाच्यति। वाच्यांचकार। वा यकारलोपः। वाचांचकार। अन्येषां सुगमानि अनेनैव प्रकारेण साध्यानि। लुङ्लकारे। अवाच्यीत्। अवाचीत्। समिधमिच्छति। समिध्यति। समिध्यांचकार। वा यलोपः। समिधांचकार। सिसता०। समिध्यिता। समिधिता। लुङ्लकारे। असमिध्यीत्। असमिधीत्। इत्यादीनि। सूत्रम्।

**मान्ताव्ययाभ्यां यो न। किमिच्छति इदमिच्छति स्वरिच्छति।**

मान्ताव्ययाभ्यां०। मांतशब्दात् अव्ययात् यः प्रत्ययो न भवति। अतो वाक्यमेव भवति। किमिच्छति। इदमिच्छति। स्वरिच्छति। इत्यादीनि। सूत्रम्।

**करणे च। नाम्नः करणेऽर्थे यः प्रत्ययो भवति। कण्डूं करोतीति कण्डूयति, नमस्यति, तपस्यति, वरिवस्यति। गुरून् शुश्रूषत इत्यर्थः।**

करणे। करणे (स० ए०) नाम्नः करणेऽर्थे यः प्रत्ययो भवति। कंडू करोति अनेन यः। ये अनेन पूर्वस्य दीर्घः। अन्यत्साधनं तु पूर्ववत्। कंडूयति। लिट्लकारे। कंडूयांचकार। लुङ्लकारे। अकंडूयीत्। नमः करोति। यः प्रत्ययः। नमस्यति। चतुर्णां सुगमानि। नमस्यांचकार। नमस्यात्। नमस्यिता। लुङ्लकारे। अनमस्यीत्। इत्यादीनि। तपः करोति। यः प्रत्ययः। तपस्यति। तपस्यांचकार। अतपस्यीत्। अतपसीत्। यलोपस्य विकल्पः। वरिवस्शब्दस्य यः प्रत्ययः। अन्यत्साधनं पूर्ववत्। वरिवस्यति। वरिवस्यांचकार। वरिवसांचकार। अवरिवस्यीत्। अवरिवसीत्। इत्यादीनि भवंति। गुरून् शुश्रूषते इत्यर्थः। सूत्रम्।

**क्षीरलवणयोस्तृष्णायां यः सुट् च। क्षीरस्यति, लवणस्यति।**

क्षीरलवणयोः। क्षीरलवणयोः शब्दयोस्तृष्णायामिच्छायां यः प्रत्ययो भवति। सुट् च भवति प्रत्ययस्य। क्षीरमिच्छति। यः सुट्। अन्यत्तु पूर्ववत्। क्षीरस्यति। क्षीरस्यांचकार। क्षीरसांचकार। लुङ्लकारे। अक्षीरस्यीत्। अक्षीरसीत्। लवणमिच्छति। यः। सुट्। लवणस्यति। लवणस्यांचकार। लवणसांचकार। लवणस्यात्। सिसता०। लवणस्यिता। लवणसिता। लुङ्लकारे। अलवणस्यीत्। अलवणसीत्। इत्यादीनि। सूत्रम्।

**शब्दादिभ्यो यङ्। ये। शब्दायते, वैरायते, कलहायते, अभ्रायते, मेधायते, कष्टायते।**

शब्दादिभ्यः । शब्दादिभ्यः शब्देभ्यो यङ्प्रत्ययो भवति । ङकार आत्मनेपदार्थः । अयमपि प्रत्ययः करोत्यर्थे । शब्दं करोति । यङ्प्रत्ययः । ङकारो ङित्कार्यार्थः । ये अनेन पूर्वस्य दीर्घः । शब्दायते । लिट्लकारे । शब्दायांचकार । लुङ्लकारे । अशब्दायिष्ट । इत्यादीनि । कलहं करोति । यङ् । ये । कलहायते । कलहायांचक्रे । लुङ्लकारे । अकलहिष्ट । वैरं करोति । यङ् । ये । वैरायते । वैरायांचक्रे । वैराय्यात् । सिसता० । वैरायिता । वैरायिष्यते । अवैरायिष्यत । अवैरायिष्ट । इत्यादीनि । अभ्रं करोति । यङ् । ये । अभ्रायते । अभ्रायांचक्रे । स्वरादेः । आभ्रयिष्ट । मेघं करोति । यङ् । ये । मेघायते । मेघायांचक्रे । अमेघायिष्ट । कष्टं करोति । यङ् । ये । कष्टायते । कष्टायांचक्रे । अकष्टायिष्ट । इत्यादीनि । सूत्रम् ।

**ऊष्मबाष्पाभ्यामुद्वमने यङ् वाच्यः । ऊष्माणमुद्वमति ऊष्मायते, बाष्पायते ।**

ऊष्मबाष्पाभ्यां० । ऊष्मबाष्पाभ्यां शब्दाभ्यामुद्वमनेऽर्थे यङ्प्रत्ययो भवति । ऊष्माणमुद्वमति । यङ् । नकारलोपः । ये । ऊष्मायते । ऊष्मायांचकारास्वरादेः । औष्मायिष्ट । बाष्पमुद्वमति । यङ् । ये । बाष्पायते । बाष्पायांचक्रे । अबाष्पायिष्ट । इत्यादीनि भवंति । सुगमत्वात्सर्वाणि न लिखितानि । सूत्रम् ।

**ञिर्डित्करणे । नाम्नो ञिः प्रत्ययो भवति करणेऽर्थे स च । डित् ञकार उभयपदार्थः । घटं करोतीति घटयति । अग्लोपिनो नाङ्कार्यम् । अजघटत् । महान्तं करोतीति महयति, अममहत् ।**

ञिर्डित्करणे । ञिः ( प्र० ए० ) डित् ( प्र० ए० ) करणे ( स०ए० ) नाम्नो ञिः प्रत्ययो भवति करणेऽर्थे स प्रत्ययो डित् भवति च । ञकार उभयपदार्थः । डित्त्वाट्टिलोपः । घटं करोति । इति विग्रहे । अनेन ञिः प्रत्ययः । टिलोपः । अन्यत्पूर्ववत् । घटयति । घटयते । घटयांचकार । लुङ्लकारे । ञेरङ् द्विश्च । 'अग्लोपिनो नाङ्कार्यं इति उक्तत्वात् । अङि लघौ । लघोर्दीर्घः । द्वाभ्यां सूत्राभ्यामुक्तं कार्यं न भवति । ञेः । झपानां । अजघटत् । महांतं करोति । ञिः प्रत्ययः । टिलोपः । महयति । महयांचकार । लुङ्लकारे । अममहत् । सूत्रम् ।

**ञाविष्ठवत्कार्यम् ।**

ञौ । ञिप्रत्यये परे इष्ठवत् कार्यं भवति । द्वितीयं सूत्रम् ।

पृथ्वादेरः । पृथ्वादेर्ऋकारस्य रो भवति ञौ परे । पृथुं करोति प्रथयति, म्रदयति, द्रढयति । स्थूलं करोति स्थावयति । अङि लघौ ह्रस्व उपधायाः । अतिस्थवत् । दवयति, अदीदवत् । प्रियं करोति प्रापयति । गुरुं करोति गरयति । स्थिरं करोति स्थापयति । ऊढिं करोतीति ऊढयति । ञेरङ् द्विश्च । ञेः । स्वरादेः परः । आङि पूर्वस्य ढस्य वा जः । औढिढत्, औजिढत्, ऊढं करोतीति ऊढयति ।

वहः क्तक्तौ कृतसंप्रसारे हो ढस्तथोर्धः
झभिना ढि ढश्च ॥ ऊढिश्च त्रिर्डित्करणे
स धातुर्ञेरङ् स्वरादेर्ढज औजढञ्च ॥ १ ॥

॥ औजढत् ॥

पृथ्वादेरः । पृथ्वादेः (प० ए०) रः (प्र० ए०) पृथ्वादेर्ऋकारस्य रकारो भवति । पृथुं करोति । ञिः । टेर्लोपः । रः । प्रथयति । प्रथयांचकार । लुङ् । ञेरङ् द्विश्च । अपप्रथत् । मृदुं करोति । ञिः । टिलोपः । रः । म्रदयति । म्रदयांचकार । लुङ् । अमम्रदत् । स्थूलं करोति । ञिः । स्थूलस्य स्थव् । स्थवयति । स्थवयांचकार । लुङ् । ञेरङ् । शसात् । अङि लघौ । अतिस्थवत् । दूरं करोति । ञिः । दूरस्य दव । दवयति । दवयांचकार । लुङ् । सर्वं कार्यं भवति । अदीदवत् । प्रियं करोति । ञिः । प्रियस्य प्रादेशः । रातो ञौ पुक् च । प्रापयति । प्रापयांचकार । लुङ । अपिप्रपत् । अपिप्रपतां । अपिप्रपन् । गुरुं करोति । ञिः । गुरोर्गरादेशः । गरयति । गरयांचकार । अजगरत् । अल्लोप्यपंधातुः । स्थिरं करोति । ञिः । स्थिरस्य स्थादेशः । पुक् । स्थापयति । स्थापयांचकार । लुङ्कार्ये । अतिस्थपत् । ऊढिं करोति । ञिः । टिलोपः । ऊढयति । ऊढयांचकार । लुङ् । ञेरङ् । स्वरादेः परः । ञेः । स्वरादेः । औढिढत् । अङि पूर्वस्य ढस्य वा जः । औजिढत् । ऊढं करोति । ञिः । टेर्लोपः । ऊढयति । ऊढयांचकार । लुङ्कार्ये । श्लोकक्रमेण साधनं कार्यं । औजढत् । औजढतां । औजढन् । इत्यादीनि । सूत्रम् ।

कर्तुर्यङ् । कर्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति । श्येन इव आचरतीति श्येनायते काकः । पण्डितायते मूर्खः ।

कर्तुर्यङ् । कर्तुः (पं० ए०) यङ् (प्र० ए०) कर्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति । ङकार आत्मनेपदार्थः । श्येन इव आचरति । इति विग्रहे । अनेन सूत्रेण यङ् । ये । अन्यत्पूर्ववत् । श्येनायते । श्येनायांचक्रे । लुङ्लकारे । अश्येनायिष्ट । काकः श्येनायते । पंडित इव आचरति । यङ् । ये । पंडितायते । पंडितायांचक्रे । लुङ् । अपंडितायिष्ट । अप्सरा इव आचरति । यङ् । सूत्रम् ।

**यङि सलोपो वाच्यः । पयसस्तु विभाषया । अप्सरायते ओजायते पयायते पयस्यते सुमनायते ।**

यङि । यङि परे सकारस्य लोपो वाच्यः । द्वितीयं पयस्शब्दस्य विकल्पेन भवति । ये । अप्सरायते । अप्सरायांचक्रे । स्वरादेः । आप्सरायिष्ट । ओज इव आचरति । यङ् सकारलोपः । ये । पयायते । वा ग्रहणात् । पयस्यते । पयायांचक्रे । पयस्यांचक्रे । यलोपो वा । पयसां चक्रे । अपयायिष्ट । अपयस्यिष्ट । अपयसिष्ट । इत्यादीनि । सुमना इव आचरति । यङ् । सलोपः । ये । अन्यत् पूर्ववत् । सुमनायते । लिट् । कासादि० । सुमनायांचक्रे । लुङ् । असुमनायिष्ट । सूत्रम् ।

**नाम्न आचारे क्विप् वाच्यः । कृष्ण इव आचरति कृष्णति । क्विपो लोपः ।**

नाम्नः । नाम्नः पदात् आचारेऽर्थे क्विप् प्रत्ययो वाच्यः । कृष्ण इव आचरतीति । क्विप् प्रत्ययः । क्विपो लोपः । क्विप्प्रत्ययस्य लोपो भवति । स धातुः । पश्चात् । लोपः कार्यः । अप्कर्त्तरि । कृष्णति । लिट् । कासादि० । कृष्णांचकार । कृष्ण्यात् । सिसता० । कृष्णिता । लुङ् । अकृष्णीत् । सूत्रम् ।

**आचार उपमानात् । कर्माधारयोरुपमानात् यः प्रत्ययो भवति आचारेऽर्थे । आकारस्येकारः । पुत्रीयति शिष्यमुपाध्यायः । प्रासादीयति कुड्याम् ।**

आचारे उपमानात् । आचारे (स० ए०) उपमानात् (पं०ए०) कर्माधारयोरुपमानात् आचारेऽर्थे यप्रत्ययो भवति । अकारस्य ईकारः । पुत्र इव आचरति । अनेन यः प्रत्ययः । अकारस्य ईकारः । अन्यत्साधनं तु पूर्ववत् । पुत्रीयति शिष्यमुपाध्यायः । प्रासाद इव आचरतीति यः प्रत्ययः । अकारस्य ईकारः । प्रासादीयति कुड्यं भिक्षुः । लिट् । प्रासादीयांचकार । लुङ् । अप्रासादीयीत् । सूत्रम् ।

**भृशादिभ्योऽभूततद्भावे यङ् वाच्यः । अभृशो भृशो भवतीति भृशायते । श्यामायते इत्यादि ।**

भृशादिभ्यः । भृशादिभ्यः शब्देभ्योऽभूततद्भावे यङ्प्रत्ययो वाच्यः । अभृशो भृशो भवतीति यङ् । ये । भृशायते । लिट् । भृशायांचक्रे । लुङ् । अभृशायिष्ट । अश्यामः श्यामो भवतीति यङ् । ये । श्यामायते । लिट् । श्यामायांचक्रे । लुङ् । अश्यामायिष्ट । सूत्रम् ।

**अश्ववृषयोर्मैथुनेच्छाया यः प्रत्ययः सुगागमश्च । अश्वस्यति वडवा । वृषस्यति गौः ।**

अश्ववृषयोः । अश्ववृषयोः शब्दयोर्मैथुनेच्छायां यः प्रत्ययो भवति । सुगागमश्च भवति । अश्व इव आचरतीति । यः । सुगागमः । अश्वस्यति । अश्वस्यांचकार । आश्वसीत् । वृष इव आचरतीति । यः । सुक् । वृषस्यति गौः । पुरुष इव आचरतीति । यः । सुक् । पुरुषस्यति कामातुरा । सूत्रम् ।

**सुखादिभ्यो ज्ञापनायां यङ् । सुखं ज्ञापयति सुखायते । इति नामधातुप्रक्रिया ।**

सुखादिभ्यः । सुखादिभ्यः शब्देभ्यो ज्ञापनायां यङ्प्रत्ययो भवति । सुखं ज्ञापयतीति । यङ् । ये । सुखायते । सुखायांचक्रे । असुखायिष्ट । इत्यादीनि । इति नामधातुप्रक्रिया समाप्ता ।

**अथात्मनेपदव्यवस्था ।**

अथात्मनेपदव्यवस्था कथ्यते । सूत्रम् ।

**निविशादेः । नीत्याद्युपसर्गपूर्वकाद्विशादेर्धातोरात्मनेपदं भवति । निविशते ।**

निविशादेः । निपूर्वो विश् आदिर्यस्य स निविशादिः । तस्य निविशादेः ( पं० ए० ) । निपूर्वस्य विशादेर्धातोः परस्मैपदिनोऽपि आत्मनेपदं भवति । विश् प्रवेशने । निपूर्वः । अनेन सूत्रेण आत्मनेपदं भवति । ते इत्यादयः प्रत्यया भवंति । निविशते । तुदादेरः । अनेनात्र अः प्रत्ययो भवति । सूत्रम् ।

**विपराभ्यां जेः । विजयते पराजयते ।**

विपराभ्यां । विपराभ्यामुपसर्गाभ्यां परस्य जयतेर्धातोरात्मनेपदं भवति । विजयते । पराजयते । इत्युदाहरणम् । सूत्रम् ।

**समो गमादिभ्यः । संगच्छते ।**

समः । समुपसर्गात् गमादिभ्यो धातुभ्य आत्मनेपदं भवति । संगच्छते । सूत्रम् ।

**गमः परौ सिस्यौ आत्मनेपदे वा कितौ वाच्यौ । लोपस्त्वनुदात्ततनाम् । संगसीष्ट । लोपो ह्रस्वाज्झसे । समगत, समगंस्त । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । समृच्छते, संपृच्छते । स्वृ शब्दोपतापयोः । संस्वरते, संस्वृषीष्ट, संस्वरिषीष्ट । समियृते, संशृणुते, संवित्ते, संविदाते । वित्तेरन्तो वा रुट् आति । संविद्रते, संविदते, संपश्यते, गम ऋच्छ प्रच्छ स्वृ ऋ श्रु विद दृश एते गमादयः ।**

गमः । गमधातोः परौ सिस्यौ वा कितौ वाच्यौ आत्मनेपदे । तस्मादाशिषि नकारस्य लोपो वा भवति । संगंसीष्ट । संगसीष्ट । लुङ् । लोपो ह्रस्वाज्झसे । अनेन स्यकारस्य वा लोपः । समगत । समगंस्त । इत्यादीनि रूपाणि । आदिशब्दात् । समृच्छते । संपृच्छते । संशृणुते । समियृते । इत्यादीनि । स्वृ शब्दोपतापयोः । संस्वरते । अस्येड्विकल्पः । उः अनेन गुणनिषेधः । संस्वृषीष्ट । संस्वरिषीष्ट । संवित्ते । अंतो वा रुट् आत्मनेपदे । संविद्रते । संविदते । गमादयो मूले उक्ताः । सूत्रम् ।

**आङो दोऽनास्यविहरणे । आङ्पूर्वाद्ददातेरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे । आदत्ते । मुखं व्याददाति । अत्र न ।**

आङोदोनास्य विहरणे । आङः ( पं० ए० ) दः ( प० ए० ) अनास्यविहरणे ( स० ए० ) । आस्यस्य मुखस्य विहरणं प्रसारणं आस्यविहरणम् । न आस्यविहरणमनास्यविहरणं तस्मिन् अनास्यविहरणे । आङ्पूर्वात् ददातेर्धातोरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे । आदत्ते । मुखप्रसारणे तु । मुखं व्याददाति । अत्रात्मनेपदं न भवति । सूत्रम् ।

क्रीडोऽनुसंपरिभ्यश्च। अनुसंपरिभ्यः क्रीडतेरात्मनेपदं स्यात्। क्रीड विहारे शब्दे च। अनुक्रीडते संक्रीडते परिक्रीडते। शब्दे तु न। संक्रीडति चक्रम्।

क्रीडोऽनुसंपरिभ्यश्च। क्रीडः (ष० ए०)। अनुसंपरिभ्यः (पं. ब.) च (प्र० ए०) अव्ययम्। अनुसंपरिभ्य उपसर्गेभ्यः क्रीड विहारे इत्यस्य धातोरात्मनेपदं भवति। क्रीड विहारे शब्दे च। अनुक्रीडते। संक्रीडते। परिक्रीडते। इत्युदाहरणानि। शब्दे तु नात्मनेपदं भवति। संक्रीडति चक्रम्। अत्र न भवति। सूत्रम्।

समवप्रोपविभ्यः स्थः। एभ्यस्तिष्ठतेरात्मनेपदं भवति। संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, उपतिष्ठते, वितिष्ठते।

समवप्रोपविभ्यः स्थः। समवप्रोपविभ्यः (पं० ब०)। स्थः (ष. ए.)। सम् अव् प्र उप वि एभ्य उपसर्गेभ्यः ष्ठा गतिनिवृत्तौ इत्यस्य धातोरात्मनेपदं भवति। संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। उपतिष्ठते। वितिष्ठते। इत्युदाहरणानि। सूत्रम्।

आङो यमहनः। आङ्परयोर्यमहनोरात्मनेपदं भवति। आयच्छते, आहते।

आङो यमहनः। आङः (ष० ए०) यमहनः (ष० ए०) आङ्परयोर्यमहनोर्धातोरात्मनेपदं भवति। आयच्छते। आहते। सूत्रम्।

अकर्मकयोरात्माङ्गकर्मकयोर्वा। आयच्छते पाणिम्। आहते शिरः। अन्यथा परशिर आयच्छति। शत्रुमाहन्ति।

अकर्मकयोः। अकर्मकयोरात्मांगकर्मयोर्यमहनोर्वा आत्मनेपदं भवति। आयच्छते रूपाणि। आहते स्वशिरः। अन्यथा परशिर आयच्छति। शत्रुमाहन्ति सूत्रम्।

हन्तेरात्मनेपदे सिः किद्वाच्यः। नो लोपः। आहत। लोपस्त्वनुदात्ततनाम्। हन्तेः स्याशीर्यादाद्योर्वधादेश आति वा। अवधिष्ट।

हंते०। हंतेर्धातोरात्मनेपदे सिः किद्वाच्यः। लोपः। अनेन नकारलोपः। आहत। हंतेः स्याशीर्यादाद्योर्वधादेश आत्मनेपदे वा भवति। अवधिष्ट। इत्यादीनि। सूत्रम्।

उद्विभ्यां तपः । उद्विभ्यां परस्याकर्मकस्यात्माङ्गकर्मकस्य वा तपतेरात्मनेपदं भवति । उत्तपते वितपते पाणिम् । अन्यथा महीं वितपत्यर्कः ।

उद्विभ्यां तपः । उद्विभ्यां ( पं० द्वि० ) तपः ( ष० ए० ) उत् वि एताभ्यामुपसर्गाभ्यां तपतेरकर्मकस्य आत्मांगकर्मकस्य च आत्मनेपदं भवति । उत्तपते वितपते स्वपाणिम् । अन्यथा महीं वितपत्यर्कः । अत्र न भवति । सूत्रम् ।

उदश्चरस्त्यागे । उत्पूर्वाच्चरतेस्त्यागेऽर्थे आत्मनेपदं भवति । धर्ममुच्चरते । त्यजतीत्यर्थः । त्यागे किम् । मन्त्रमुच्चरति ।

उदश्चरस्त्यागे । उदः ( पं०ए० ) चरः ( ष०ए० ) त्यागे ( स०ए० ) उदुपसर्गपूर्वस्य चरतेर्धातोस्त्यागेऽर्थे आत्मनेपदं भवति । धर्ममुच्चरते त्यजति इत्यर्थः । त्यागाभावे मंत्रमुच्चरति । सूत्रम् ।

समस्तृतीयायुक्ताच्च । संपूर्वाच्चरतेस्तृतीयान्तेन पदेन युक्तादात्मनेपदं भवति । अश्वेन संचरते ।

समस्तृतीयायुक्तात् । समः ( पं० ए० ) तृतीयायुक्तात् ( पं० ए० ) संपूर्वाच्चरधातोस्तृतीयांतोपपदयुक्तात् आत्मनेपदं भवति । चर गतिभक्षणयोः । संपूर्वस्यास्य आत्मनेपदं । संचरते अश्वेन । अश्वेन इति तृतीयांतमुपपदम् । अन्यथा संचरति अश्वः अत्र न भवति । सूत्रम् ।

व्यवपरिभ्यः क्रीञः । एभ्यः क्रीणातेरात्मनेपदं भवति । विक्रीणीते, अवक्रीणीते, परिक्रीणीते ।

व्यवपरिभ्यः । ( पं० ब० ) क्रीञः ( ष० ए० ) वि अव परि एभ्य उपसर्गेभ्यः डुक्रीञ्धातोरात्मनेपदं भवति । उदाहरणानि । विक्रीणीते । अवक्रीणीते । परिक्रीणीते । शप उपालम्भे । आक्रोशे च । सूत्रम् ।

शप उपालम्भे । उपालम्भेऽर्थे शपतेरात्मनेपदं भवति । वाचा शरीरस्पर्शनमुपालम्भः । विप्राय शपते । विप्रशरीरं स्पृशति, शपथं करोतीत्यर्थः । उपालम्भे किम् । दुष्टं शपति । शापं ददातीत्यर्थः ।

उपालंभेऽर्थे शपथकरणेऽर्थे शपधातोरात्मनेपदं भवति । वाचा शरीरस्पर्शनमुपालंभः। विष्णोः शपते। शपथं करोति इत्यर्थः । सत्यमेतदिति कथयति। उपालंभे किं। दुष्टं शपति । शापं ददाति । अत्रात्मने पदं न भवति। शत्रुं शपति। आक्रोशति इत्यर्थः। सूत्रम्।

ज्ञाश्रुस्मृदृशां सान्तानामात् । सप्रत्ययान्तानामेषामात्मनेपदं भवति। यः से । जिज्ञासते, शुश्रूषते, सुस्मूर्षते, दिदृक्षते।

ज्ञाश्रुस्मृदृशां सांतानामात्। सप्रत्ययांतानामेतेषां धातूनां आत्मनेपदं भवति। तेषां साधनं तु पूर्वं कृतम्। सः प्रत्ययः। यः से। इत्यादि। जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते। इत्यादीन्युदाहरणानि। सूत्रम्।

अनुपसर्गाज्जानातेरात्मगामिनि फले आत्मनेपदं वाच्यम्। गां जानीते।

अनुपसर्गात्। जानातेर्धातोरात्मगामिनि क्रियाफले सति आत्मनेपदं वाच्यम्। अनेनात्मनेपदम्। गां जानीते इत्युदाहरणम्। सूत्रम्।

कर्मव्यतिहारेऽन्यत्र हिंसादेरात्। कर्मव्यतिहारेऽर्थे वाच्ये हिंसार्थान्गत्यर्थान्पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावे सर्वेभ्यो धातुभ्य आत्मनेपदं भवति। परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते । परस्परं भवतीत्यर्थः। व्यतिस्ते। विवदन्ते वादिनः। अन्यत्रेति किम्। व्यतिघ्नन्ति, व्यतिगच्छन्ति, व्यतिपठन्ति, व्यतिजल्पन्ति, व्यतिहसन्ति। इतरेतरं परस्परं अन्योन्यं वा व्यतिलुनन्ति।

कर्मव्यतिहारेऽन्यत्र हिंसादेरात्। कर्मव्यतिहारे (स० ए०) कर्मणो व्यतिहारः। विनिमयः। पराभवतो वा कर्मव्यतिहारः। तस्मिन् कर्मव्यतिहारे। अन्यत्र हिंसादेः। आत् कर्मव्यतिहारेऽर्थे वाच्यमाने सति हिंसार्थान् गत्यर्थान् धातून् पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावेऽपि सर्वेभ्यो धातुभ्य

आत्मनेपदं भवति । परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते परस्परं भवति इत्यर्थः । अस् भुवि । व्यतिस्ते । विवदंते वादिनः । इत्युदाहरणानि ज्ञातव्यानि । अन्यत्रेति किं । व्यतिघ्नंति । व्यतिगच्छंति । व्यतिपठंति । व्यतिजल्पंति । व्यतिहसंति । एतेषु आत्मनेपदं न भवति । सूत्रे-निषेधात् । इतरेतरम् अन्योन्यं परस्परं व्यतिलुनंति । इत्यत्रापि आत्मनेपदं न भवति । सूत्रम् ।

भुजो भोजने आत्मनेपदं वाच्यम् । भुङ्क्ते ओदनम् । भुनक्ति महीं नृपः । इत्यात्मनेपदव्यवस्थाप्रक्रिया ।

भुजो भोजने । भुज पालनाभ्यवहारयोः । अस्य भोजनेऽर्थे आत्मनेपदं भवति । उदाहरणम् । देवदत्त ओदनं भुंक्ते । भोजनाभावे तु भुनक्ति महीं नृपः । अत्रात्मनेपदं न भवति । इत्यात्मनेपदव्यवस्थाप्रक्रिया समाप्ता ।

अथ भावकर्मणोर्यकि प्रक्रिया ।

अथ भावकर्मणोर्यकि प्रक्रिया कथ्यते । भावश्च कर्म च भावकर्मणी तयोः भावकर्मणोः । बालबोधनार्थमिदं समाससूत्रम् ।

यक् चतुर्षु । धातोर्भावे कर्मणि च यक् प्रत्ययो भवति चतुर्षु पूर्वोक्तेषु परतः । ककारो गुणप्रतिषेधार्थः ।

यक् चतुर्षु । यक् ( प्र० ए० ) चतुर्षु ( स० ब० ) धातोर्भावे कर्मणि च चतुर्षु पूर्वोक्तेषु तिबादिषु परेषु यक्प्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः । अयकि इति सूत्रविशेषणार्थः । अनेन धातोर्यक् । यकि सति पदनियममाह ।

आद् भुवि कर्मणि । अकर्मकेभ्यो भुवि भावे सकर्मकेभ्यश्च कर्मण्यात्मनेपदं भवति । ये कर्मनिरपेक्षां क्रियामाहुस्ते अकर्मकाः । भूएध्आस्शीङ्प्रभृतयः । तदुक्तम् ।

आद् भुवि कर्मणि । आत् ( प्र० ए० ) भुवि ( स० ए० ) कर्मणि ( स० ए० ) । अकर्मकेभ्यो न विद्यते कर्म येषां ते अकर्मकाः तेभ्यः अकर्मकेभ्यो धातुभ्यो भुवि भावोक्तौ ।

लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ॥ शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥ १ ॥

भावस्यैकत्वादेकवचनमेव भवति प्रथमपुरुषस्य । भूयते,भविता, भूयेत, भूयताम्, अभूयत, बभूवे ।

अकर्मका लज्जासत्ताद्यर्थवाचकाः । तथा सकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति । अयं भावः । भावोक्तौ तृतीयांतः कर्त्ता । अकर्मकधातोः आत्मनेपदं भवति। दशानामपि विभक्तीनां प्रथमपुरुषैकवचनम् । कर्मोक्तौ च तृतीयांतः कर्त्ता, प्रथमांतं कर्म । क्रियायाश्चात्मनेपदं भवति । विभक्तिचतुष्टयेऽपि यक्प्रत्ययांतमेव । कर्मण एकवचने सति क्रियाया एकवचनं । कर्मणो द्विवचने सति क्रियाया द्विवचनम् । कर्मणो बहुवचने सति क्रियाया बहुवचनं भवति । इति ज्ञातव्यम् । कर्त्तरि प्रथमा यत्र द्वितीया तत्र कर्मणि । धातोरुभे पदे स्यातामेतत् कर्त्रुक्तिलक्षणम् । कर्त्तरि तृतीया यत्र प्रथमा तत्र कर्मणि । यक्प्रत्ययांतं विज्ञेयं धातोश्चात्रात्मनेपदम् । भावे कर्त्ता तृतीयांतः कर्म चात्र भवेन्नहि । क्रियायाश्चैकवचनं भवेद्यक्यात्मनेपदम् । अथाकर्मकान् धातूनाह । ये कर्मेति । ये धातवः कर्मवांछारहितां क्रियां कथयंति । ते अकर्मकाः । ते धातवो लज्जासत्ता० । अनेन श्लोकेन कथिताः । ततोऽन्येपि ज्ञातव्याः । भावस्तु एक एव । भावलक्षणमाह । धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते । ततो भावस्यैकत्वात्प्रथमपुरुषस्य एकवचनमेव भवति । भू सत्तायां । ते आदयः प्रत्यया भवंति । यक् चतुर्षु अनेन यक्प्रत्ययो भवति । भूयते । भूयेते । भूयंते । इत्यादीनि रूपाणि भवंति । भूयेत । भूयेयातां । भूयेरन् । भूयतां । भूयेतां । भूयंतां । दिवादावट् । अभूयत । अभूयेतां । अभूयंत । भवता भूयते । इत्युदाहरणम् । लिट्लकारे तु पूर्ववत्साधनं कार्यम् । बभूवे इत्यादीनि रूपाणि भवंति । सूत्रम् ।

स्वरान्तानां हन्ग्रहदृशां च भावकर्मणोः सिसतासीस्यपामिट् वा इण्वद्वक्तव्यः । वाशब्दात्सेटां धातूनां नित्यमिट् स विकल्पेन णित् । अनिटां धातूनां विकल्पेन इट् स नित्यं णित् । एवं च हन्दृशोरनिटोर्वा इट् स च नित्यं णित् । ग्रहधातुस्तु सेट् । ततः परो नित्यमिट् स च वा णित् । णित्वाद्वृद्धिः । भाविषीष्ट । णित्वाभावे भविषीष्ट । भाविता भविता, भाविष्यते-भविष्यते, अभाविष्यत-अभविष्यत ।

स्वरांतानां । स्वरांतानां धातूनां हन्ग्रहदृशां च धातूनां भावकर्मणोः सिस तासीस्यपामिड् वा इणूवद्भक्तव्यः । वाग्रहणात्सेटां धातूनां नित्यमिट् स विकल्पेन णित् । अनिटां धातूनां विकल्पेन इड् भवति स नित्यं णिट् भवति । अन्यद् व्याख्यानं मूले कृतम् । तत्सुगममेव । लिङ् । अनेन इट् । स णिट् वा भवति । णित्त्वाद् वृद्धिः ' धातोर्नामिनः ' अनेन सूत्रेण । भाविषीष्ट । णिट्भावपक्षे । गुणः । ओअव् । भविषीष्ट । इत्यादीनि भवंति । भाविता । भावितारौ । भावितारः । णित्त्वाभावपक्षे । गुणः । भविता । भवितारौ । भवितारः । भाविष्यते । भाविष्येते । भाविष्यंते । इत्यादीनि । दिबादावट् । अभाविष्यत । अभाविष्येताम् । अभाविष्यंत । अभविष्यत । अभविष्येतां । अभविष्यंत । लुङ्लकारे । सूत्रम् ।

**इणू तन्यकर्त्तरि । धातोस्तनि परे भावे कर्मणि च इणू प्रत्ययो भवति । सेरपवादः । णो वृद्ध्यर्थः । लोपः ।**

इणू तन्यकर्तरि । इणू ( प्र० ए० ) तनि ( स० ए० ) अकर्त्तरि ( स० ए० ) धातोस्तनि परे । अकर्त्तरि भावे लोपः कर्मणि च । इणूप्रत्ययो भवति । भूते सिः । अस्यापवादोयम् । णित्त्वाद् वृद्धिः । धातोर्नामिनः । अनेन सूत्रेण । णकारस्तु वृद्ध्यर्थः । सूत्रम् ।

**इणूसंयोगे तनो लोपो भवति । अभावि । अकर्मकोऽपि कदाचित् सकर्मकतामनुभवति । उक्तं च ।**

इणूसंयोगे । इणः संयोगे सति तनः प्रत्ययस्य लोपो भवति । अनेन तनो लोपः । दिबादावट् । अभावि । अभाविषातां । अभविषातां । अभाविषत । अभविषत । इत्यादीनि रूपाणि भवंति । तानि सुगमान्येव अनेनैव प्रकारेण साध्यानि । विकल्पेन णित्त्वाद् वृद्धिविकल्पः । अकर्मकोऽपि धातुः कदाचिदुपसर्गबलात् सकर्मकतामनुभवति । उक्तं च ।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ॥
विहाराहारसंहारप्रतिहारप्रहारवत् ॥
धात्वर्थं बोधते कश्चित् कश्चित्तमनुवर्तते ॥
विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥

सुखमनुभूयते स्वामिना । अन्वभावि भवो भवता । अन्वभाविषाताम्-अन्वभविषाताम् अन्वभाविषत अन्वभविषत ।

उपसर्गेणेति । उपसर्गेण धातोरर्थोऽन्यत्र नीयते । अन्यस्मिन्नर्थे प्राप्यत इत्यर्थः । उदाहरणानि उत्तरार्द्धे संति । अन्योऽपि श्लोकोऽस्ति । कश्चिदुपसर्गो धातोरर्थं बाधते । कश्चिदुपसर्गो धातोरर्थमनुवर्त्तते । कश्चिदुपसर्गस्तमेवार्थं विशिनष्टि । अनया रीत्योपसर्गाणां त्रिधा गतिरस्ति । भूसत्तायां अयंधातुर्यद्यपि अकर्मकः तथापि यदानुपूर्वः तदा सकर्मकः । उदाहरणम् । सुखमनुभूयते स्वामिना । अन्वभावि भवो भवता । इदमप्युदाहरणम् । शीङ् स्वप्ने । यक् चतुर्षु । अनेनास्य यक्प्रत्ययः। शीयते । इति स्थिते । सूत्रम् ।

शीङो यङ् किति ङिति ये वक्तव्यः। शय्यते,शिश्ये,शायिषीष्ट, शयिषीष्ट, अशायि । अन्वशायि अन्वशायिषाताम् अन्वशयिषाताम् अन्वशायिषत-अन्वशयिषत । ये कर्मसापेक्षां क्रियामाहुस्ते सकर्मकाः । अथकि । घटः क्रियते देवदत्तेन । त्वं दुःखी क्रियसे रागैः । विरागैः सुखयहं क्रिये । चक्रे, कारिषीष्ट कृषीष्ट, कारिता-कर्ता, कारिष्यते, करिष्यते, अकारिष्यत-अकरिष्यत । अकारि अकारिषाताम् अकृषाताम् अकारिषत-अकृषत । चिञ् चयने । चीयते, चिच्ये, चायिषीष्ट-चेषीष्ट, चायिता-चेता, चायिष्यते-चेष्यते, अचायिष्यत अचेष्यत । अचायि अचायिषाताम् अचेषाताम् । दादेरिः । दीयते । ददे ददाते ददिरे ।

शीङो यङ् । शीङः ( ष० ए० ) अयङ् ( प्र० ए० ) शीङ्धातोः यक्ति परे सति अयङादेशो भवति । ङकारोंत्यादेशार्थः । तेनेकारस्य भवति । अकार उच्चारणार्थः । शय्यते शूद्रेण । केचिदाचार्याः इदं सूत्रं न पठंति । किंतु । शीङः सर्वत्र गुणो भवति । अनेन कित्यपि गुणः । क्वचित्स्वरवद् यकारः अनेन यकारस्य स्वरत्वात् णअप् । शय्यते । शय्येते । शय्यंते । शय्येत । शय्येयातां । शय्येरन् । शय्यतां । शय्येतां । शय्यंतां । दिवादावद् । अशय्यत । अशय्येतां । अशय्यंत । इत्यादीनि रूपाणि भवंति । लिट्लकारे । द्विश्च । जुधातोः । ह्रस्वः । अनेन पूर्वस्य ह्रस्वो भवति । शिश्ये । शिश्याते । शिश्यिरे । इत्यादीनि । स्वरांता० अनेनेट् । इटो वा णित्त्वम् । धातोर्नामिनः । अनेन वृद्धिः । ऐ आय् । शायिषीष्ट । णित्त्वाभावपक्षे गुणः । ए अय् । शयिषीष्ट । एवं सर्वत्र वा णित्त्वं ज्ञेयमस्य धातोः ।

शायिता । शयिता । शायिष्यते । शयिष्यते । दिबादावट् । अशायिष्यत । अशयिष्यत । लुङ्लकारे । इणूतन्यकर्त्तरि अनेन इण् । वृद्धिः । अशायि । अशायिषातां । अशयिषातां । अशायिषत । अशयिषत । यदा । अनुपूर्वोऽयं तदा । अन्वशायि । इत्यादीनि भवंति । सकर्मकधातुलक्षणमाह । ये कर्मसापेक्षा० । ये धातवः कर्मसापेक्षां क्रियामाहुस्ते धातवः सकर्मका ज्ञेयाः करोत्यादयः । डुकृञ् करणे अस्य धातोः यक् चतुर्षु अनेन यक् । अयकि । अनेन ऋकारस्य रिः । क्रियते । क्रियेत । क्रियतां । अक्रियत । लिट्लकारे । द्विश्च । रः । कुहोश्चुः । ऋरं । चक्रे । चक्राते । चक्रिरे । इत्यादीनि । स्वरांता अनेन इट् । अयं धातुरनिट् । तस्माद् विकल्पेन इट् । नित्यं णित् । ईटो णित्वात् धातोर्नामिनः अनेन वृद्धिः । कारिषीष्ट । इडभावे । नुः अनेन गुणनिषेधः । षत्वं । कृषीष्ट । कारिता । कारितारौ । कारितारः । इडभावे । गुणः । कर्त्ता । कर्त्तारौ । कर्त्तारः । कारिष्यते । कारिष्येते । कारिष्यन्ते । णित्वाभावपक्षे । हनृतः स्यपः । अनेन इट् । गुणः । करिष्यते । करिष्येते । करिष्यंते । अकारिष्यत । अकारिष्येतां । अकारिष्यंत । णित्वाभावपक्षे । अकरिष्यत । अकरिष्येतां । अकरिष्यंत । इत्यादीनि रूपाणि भवंति । लुङ्लकारे । इण् तन्यकर्त्तरि । धातोर्नामिनः । लोपः । अनेन तनो लोपः । अकारि । अकारिषाताम् । अकृषाताम् । अकारिषत । अकृषत । इत्यादीनि । देवदत्तेन त्वं सुखी क्रियसे । रोगैस्त्वं दुःखी क्रियसे । विरागैः सुख्यहं क्रिये । चिञ् चयने । यक् चतुर्षु अनेन यक्प्रत्ययः । ये अनेन दीर्घः । चीयते । चीयेते । चीयंते । चीयेत । चीयेयातां । चीयेरन् । चीयतां । चीयेतां । चीयंतां । दिबादावट् । अचीयत । अचीयेतां । अचीयंत । लिट् । द्विश्च । नुधातोः । चिच्ये । चिच्याते । चिच्यिरे । स्वरांतानां० अनेन इट् । णित्वात् वृद्धिः । धातोर्नामिनः । अनेन । ऐ आय् । चायिषीष्ट । इडभावपक्षे । गुणः । चेषीष्ट । चायिता । चेता । चायिष्यते । चायिष्येते । चायिष्यंते । इडभावपक्षे । चेष्यते । चेष्येते । चेष्यंते । दिबादावट् । अचायिष्यत । अचायिष्येताम् । अचायिष्यंत । इडभावपक्षे । अचेष्यंत । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । दिबादावट् । अचायिषातां । इडभावपक्षे । अचेषातां । अचायिषत । अचेषत । इत्यादीनि । दा दाने । यक् चतुर्षु । अनेन यक् । दादेरिः अनेन इकारः । ये । अनेन दीर्घः । दीयते । दीयेते । दीयंते । दीयेत । दीयेयातां । दीयेरन् । दीयतां । दीयेतां । दीयंताम् । दिबादावट् । अदीयत । अदीयेतां । अदीयंत । लिट् । द्विश्च । ह्रस्वः । आतोऽनपि । ददे । ददाते । ददिरे । दासीष्ट । इति स्थिते । स्वरांतानां० अनेन इट् । इटो णित्त्वं । सूत्रम् ।

आतो युक् । आकारान्ताद्धातोर्युगागमो भवति ञिति च

परे। दायिषीष्ट-दासीष्ट, दायिता दाता, दायिष्यते-दास्यते। अदायि अदायिषाताम्। दाधास्थामित्वम्। अदिषाताम्। धीयते, अधायि, अधायिषाताम्। अधिषाताम्। स्थीयते, अस्थायि। स्तूयते, तुष्टुवे, अस्तावि अस्ताविषाताम्-अस्तोषाताम् हरिहरौ भक्तेन। हन्यते। हनो घ्ने। जघ्ने, घानिषीष्ट, हंसीष्ट।

आतो युक्। आतः (पं० ए०) युक् (प्र० ए०) आकारांताद्धातोर्युगागमो भवति ञिति णिति च परे। अनेन युक्। उकार उच्चारणार्थः। ककारः कित्कार्यार्थः। दायिषीष्ट। इडभावपक्षे। दासीष्ट। दायिता। दायितारौ। दायितारः। इडभावपक्षे। दाता। दातारौ। दातारः। दायिष्यते। दास्यते। दिवादावट्। अदायिष्यत। अदायिष्यतां। अदायिष्यंत। इडभावपक्षे। अदास्यत। अदास्येतां। अदास्यन्त। लुङ्। इण्। युक्। तनो लोपः। अदायि। अदायिषातां। दाधास्थां। अनेन इडभावपक्षे इकारः। अदिषातां। अदायिषत। अदिषत। इत्यादीनि। डुधाञ् धारणपोषणयोः। यक् चतुर्षु। अनेन यक्। दादेरिः। अनेनाकारस्य इकारः। ये। अनेन पूर्वस्य दीर्घः। धीयते। धीयेत। धीयतां। अधीयत। इत्यादीनि भवंति। लिट्लकारे। द्विश्च। ह्रस्वः। झपानां। आतोऽनपि। अनेनाकारलोपः। दधे। दधाते। दधिरे। स्वरांतानां। इटो णित्त्वम्। आतो युक्। षत्वम्। धायिषीष्ट। इडभावे। धासीष्ट। धायिता। धाता। धायिष्यते। धास्यते। दिवादावट्। अधायिष्यत। अधास्यत। लुङ्लकारे। इण्। युक्। तनो लोपः। अधायि। अधायिषातां। इडभावपक्षे। दाधास्थां। अधिषातां। अधायिषत। अधिषत। इत्यादीनि। ष्ठा गतिनिवृत्तौ। षत्वम्। यक्। दादेरिः। ये। स्थीयते। स्थीयेत। स्थीयतां। अस्थीयत। लिट्लकारे तु साधनं पूर्ववत्। तस्थौ। तस्थतुः। तस्थुः। स्वरांतानां। आतो युक्। स्थायिषीष्ट। इडभावे। स्थासीष्ट। स्थायिता। स्थाता। स्थायिष्यते। स्थास्यते। अस्थायिष्यत। अस्थास्यत। लुङ्लकारे। इण्। युक्। तनो लोपः। अस्थायि। अस्थायिषातां। इडभावे। दाधास्थां। अनेनेत्त्वम्। अस्थिषातां। इत्यादीनि। ष्टुञ् स्तुतौ। सत्वम्। यक्। ये। स्तूयते। स्तूयेत। स्तूयताम्। अस्तूयत। इत्यादीनि। लिट्लकारे। द्वित्वादिकम्। अन्यत्साधनं पूर्ववत्। तुष्टुवे। तुष्टुवाते। तुष्टुविरे। स्वरांतानां०। अनेनेट्। इटो णित्त्वम्। वृद्धिः। स्ताविषीष्ट। इडभावपक्षे गुणः। षत्वम्। स्तोषीष्ट। स्ताविष्यते। स्तोष्यते। अस्ताविष्यत। अस्तोष्यत। लुङ्लकारे। इण्। वृद्धिः। तनो लोपः। अस्तावि। अस्ताविषाताम्।

इडभावपक्षे । अस्त्रीयानां । इत्यादीनि । हन् हिंसागत्योः । यक् । हन्यते । हन्येत । हन्यतां । अहन्यत । ल्लिट्कारे । द्वित्वम् । कुहोश्चुः । गयां स्वरे । हनो घ्ने । जघ्ने । जघ्नाते । जघ्निरे । इत्यादीनि । स्वरांतानां । हनो घ्ने । घानिषीष्ट । इडभावपक्षे । नश्चा० । हंसीष्ट । सूत्रम् ।

हन्तेः स्याशीर्यदाद्योर्वधादेशो वक्तव्यः आति वा । वधिषीष्ट, घानिता हन्ता, घानिष्यते-हनिष्यते, अघानिष्यत-अहनिष्यत, अघानि अघानिषाताम् ।

हन्तेः । हंतेर्धातोः स्याशीर्यदाद्योर्वधादेशो वक्तव्यः । आत्मनेपदे वा भवति । जनिवध्योः । अनेन वृद्धिनिषेधः । वधिषीष्ट । घानिता । नश्चा० हंता । घानिष्यते । हनृतः । हनिष्यते । अघानिष्यत । अहनिष्यत । लृङ्कारे । इण् । हनोघ्न । अत उपधायाः । अघानि । अत्र हनो घत् । अनेन घत्रादेशो न भवति । तत्र सूत्रे इणिनिषेधः । अघानिषातां । सूत्रम् ।

हन आत्मनेपदे सिः किद्वाच्यः । लोपस्त्वनुदात्ततनाम् । अहसातां अघानिषत-अहसत । अवधि अवधिषाताम् । ग्रहां क्ङिति च । गृह्यते, जगृहे, ग्राहिषीष्ट । इटो ग्रहाम् । ग्रहीषीष्ट, ग्राहिता-ग्रहीता ग्राहिष्यते-ग्रहीष्यते, अग्राहिष्यत, अग्राहि अग्राहिषातां अग्रहीषाताम् । दृश्यते, ददृशे, दर्शिषीष्ट-दृक्षीष्ट, दर्शिता-द्रष्टा, दर्शिष्यते-द्रक्ष्यते, अदर्शि अदर्शिषातां-अदृक्षाताम् । डुपचष् पाके । पच्यते, पेचे, पक्षीष्ट, पक्ता, पक्ष्यते,अपक्ष्यत,अपाचि अपक्षाताम् ।

हनः । हनो धातोरात्मनेपदे सिः प्रत्ययः किद्वाच्यः । लोपः । अनेनेकारलोपः । अहसातां । अघानिषत । अहसत । इत्यादीनि । हंतेः । अनेन वा वधादेशः । वृद्धिनिषेधः । अवधि अवधिषातां । अवधिषत । अवधिष्टाः । इत्यादीनि रूपाणि भवंति । ग्रह उपादाने । यक् चतुर्षु । अनेन यक्प्रत्ययः । ग्रहांक्ङिति च । अनेन संप्रसारणम् । गृह्यते । गृह्येत । गृह्यतां । दिवादावट् । अगृह्यत । ल्लिट्कारे । संप्रसारणम् । ततो द्वित्वम् । रः । कुहोश्चुः । जगृहे । जगृहाते । जगृहिरे । इत्यादीनि । स्वरांतानां । अनेन इट् । इटो णित्त्वम् । अत उपधायाः अनेन वृद्धिः । ग्राहिषीष्ट । इटोग्रहां । अनेन इट इकारो भवति । ग्रहीषीष्ट । ग्राहिता । अत्र दीर्घो न भवति । अनिट-

त्वात्। ग्रहीता। ग्राहिष्यते। ग्रहीष्यते। दिबादावत्। अग्राहिष्यत। अग्रहीष्यत। इत्यादीनि। लुङ्लकारे। इण्। वृद्धिः। तनोर्लोपः। अग्राहि। अग्राहिषातां। अग्रहीषातां। अग्राहिषत। अग्रहीषत। इत्यादीनि भवंति। दृशिर् प्रेक्षणे। यक् चतुर्षु। अनेन यक्। दृश्यते। दृश्येते। दृश्यंते। इत्यादीनि। दृश्येत। दृश्यतां। अदृश्यत। इत्यादीनि। लिट्लकारे। द्विश्च। रः। ददृशे। ददृशाते। ददृशिरे। स्वरांतानां अनेन इट्। इटो णित्त्वम्। णित्त्वाद् वृद्धेरप्राप्तत्वाद् गुणः। दर्शिषीष्ट। इडभावपक्षे। छशष अनेन षत्वम्। षढोः कः से। षत्वम्। कषसंयोगे। सिस्योः। अनेन गुणनिषेधः। दृक्षीष्ट। अन्यानि सुगमानि। दर्शिता। इडभावे षत्वम्। गुणः रारोऽसे। द्रष्टा। दर्शिष्यते। द्रक्ष्यते। दिबादावत्। अदर्शिष्यत। अद्रक्ष्यत। इत्यादीनि रूपाणि भवंति। लुङ्लकारे इण्। गुणः। तनोर्लोपः। अदर्शि। अदर्शिषातां। इडभावपक्षे 'सिस्योः' अनेन गुणनिषेधः। षत्वम्। अदृक्षातां। अदर्शिषत। अदृक्षत। इत्यादीनि भवंति। डुपचष् पाके। यक् चतुर्षु। अनेन यक्। पच्यते। पच्येत। पच्यतां। दिबादावत्। अपच्यत। इत्यादीनि रूपाणि भवंति, तानि सुगमानीति। लिट्लकारे। द्विश्च। पूर्वस्य। 'लोपः पचां' अनेनैत्वपूर्वलोपौ भवतः। पेचे। पेचाते। पेचिरे। इत्यादीनि। चोः कुः। षत्वम्। कषसंयोगेक्षः। पक्षीष्ट। चोः कुः। पक्ता। पक्तारौ। पक्तारः। पक्ष्यते। अपक्ष्यत। लुङ्लकारे। इण्। अत उपधायाः। अनेन वृद्धिः। तनोर्लोपः। अपाचि। अपक्षातां। अपक्षत। इत्यादीनि रूपाणि भवंति। तनु विस्तारे। यक् चतुर्षु। अनेन यक्। सूत्रम्।

**तनोतेर्नो वा। तनोतेर्नकारस्य वा आकारो भवति यकि परे। तायते, तन्यते, तेने, अतानि अतानिषातां-अतनिषाताम्। भञ्जो आमर्दने। नो लोपः। भज्यते। अकित्वात् बभञ्जे, भङ्क्षीष्ट, भङ्क्ता, भंक्ष्यते।**

**तनोतेर्नोवा।** तनोतेः (ष. ए.) नः (ष. ए.) वा (प्र. ए.) अव्ययम्। तनोतेर्धातोर्नकारस्य वा आकारो भवति यक्प्रत्यये परे सति। सवर्णे। तायते। तायेत। तायताम्। अतायत। आत्वाभावपक्षे। तन्यते। तन्येत। तन्यतां। अतन्यत। इत्यादीनि रूपाणि भवंति। लिट्लकारे। द्विश्च। पूर्वस्य। लोपः पचां। अनेनैत्वपूर्वलोपौ भवतः। तेने। तेनाते। तेनिरे। इत्यादीनि। स्वरांतानां। अस्य सूत्रस्य व्याख्यानात्। इट्। वा णित्। तानिता। अत उपधायाः। अनेन वृद्धिः। णित्त्वाभावपक्षे। तनिता। तानिष्यते। तनिष्यते। दिबादावत्। अतानिष्यत। अतनिष्यत। इत्यादीनि रूपाणि भवंति। लुङ्लकारे। इण्। वृद्धिः। तनो लोपः। दि-

बादावत् । अतानि । अतानिषातां । अतनिषातां । अतानिषत । अतनिषत । इत्यादीनि रूपाणि भवंति । भंजो आमर्दने । यक् चतुर्षु । अनेन यक् । नोलोपः । अनेन नकारस्य लोपः । भज्यते । भज्येत । भज्यतां । दिबादावत् । अभज्यत । लिट्लकारे । अकित्त्वात् नकारस्य लोपो न भवति । द्वित्वादिकं कार्यं । झपानां । पूर्वस्य । बभंजे । बभंजाते । बभंजिरे । इत्यादीनि । भंज्सीष्ट । इति स्थिते । चोः कुः । खसे० । षत्वम् । कषसंयोगे क्षः । भंक्षीष्ट । चोः कुः । खसे० । भंक्ता । भंक्ष्यते । दिबादावत् । अभंक्ष्यत । लुङ्लकारे । इण्तन्य० अनेन इण् । सूत्रम् ।

भञ्जेरिणि वा नलोपो वाच्यः । अभञ्जि-अभाजि । शम उपशमे । शम्यते मुनिना । धातोः प्रेरणे । मितां ह्रस्वः । ञेः । शम्यते मोहो हरिणा । शमयांचक्रे ।

भंजेः । भंजेर्धातोरिरिणि वा नकारस्य लोपो वाच्यः । अनेन वा नकारस्य लोपः । अत उपधायाः । तनो लोपः । अभाजि । नकारलोपाभावपक्षे । अभंजि । अभंक्षातां । अभंक्षत । इत्यादीनि । शम उपशमे । धातोः प्रेरणे । अनेन ञिः । अत उपधायाः । अनेनवृद्धिः । मितांह्रस्वः । अनेनह्रस्वः । यक्चतुर्षु । अनेनयक् । ञेः । अनेन ञिलोपः । शम्यते मोहो हरिणा । शम्येत । शम्यतां । दिबादावत् । अशम्यत । कासादि० । अनेनआम् । अन्यत्साधनं पूर्ववत् । शमयांचक्रे । सूत्रम् ।

ञ्यन्तानां मितामिणि णिद्दिटि च वा वृद्धिर्वाच्या णिद्दिटि ञिलोपश्च । अशमि अशामि अशामिषातां-अशमिषाताम् । णिद्दिडभावपक्षे अशमयिषाताम् । गुणोर्तिसंयोगाद्योः । अर्यते, स्मर्यते । यत्कर्म गुणसंयोगात्कर्तृत्वेन विवक्ष्यते स कर्मकर्ता । तदुक्तम् ।

क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति ॥
सुकरैः स्वैर्गुणैर्यस्मात्कर्मकर्तेति तद्विदुः ॥

तत्राप्येतदेवोदाहरणम् ।

ञ्यंतानां मितां धातूनां । इणि णिद्दिटि च वा वृद्धिर्वाच्या। णिद्दिटि ञेर्लोपो वाच्यः । अनेन ञेर्लोपः । वावृद्धिः । शामिषीष्ट । वृद्ध्यभावपक्षे । शमिषीष्ट । शामिता । शमिता । शामिष्यते । शमिष्यते । अशामिष्यत । अशमिष्यत । लुङ्लकारे । इणूतन्य० अनेन इण् । ञेर्लोपः । वावृद्धिः । अशामि। अशमि । अशामिषातां । अ-

शमिषातां । अशामिषत । अशमिषत । इत्यादीनि रूपाणि भवंति । तानि अनेनैव क्रमेण साध्यानि । ऋ गतौ । यक् चतुर्षु । अनेन यक्प्रत्ययः । गुणोर्त्तिसंयोगाद्योः । अनेन गुणः । अर्यते । अर्येत । अर्यतां । दिबादावट् । स्वरादेः । अनेन द्वितीयोऽडागमः । सवर्णे । आर्यत । इत्यादीनि रूपाणि भवंति । लिट्लकारे । साधनं पूर्ववत् । आर । आरतुः । आरुः । इत्यादीनि । आरिषीष्ट । ऋषीष्ट । आरिता । अर्त्ता । आरिष्यते । आरिष्यत । लुङ्लकारे । आरि । आरिषातां । इत्यादीनि । एवं स्मृ स्मरणे । यक् । गुणोर्त्ति० अनेन गुणः । स्मर्यते । स्मर्येत । स्मर्यतां । अस्मर्यत । लिट्लकारे । सस्मरे । स्मारिषीष्ट । स्मृषीष्ट । स्मारिता । स्मर्त्ता । इत्यादीनि । लुङ्लकारे । अस्मारि । अस्मारिषातां । अस्मृषातां । इत्यादीनि । अथ । कर्मोक्ताधिकारे कर्मकर्तृलक्षणम् । तस्योदाहरणं चाह । यत्कर्मेति । यत्कर्मापि गुणयोगात् वस्तुमध्यस्थितसुकरादिमार्दवादिगुणस्य संयोगात् । उपचारात् कर्तृत्वेन विवक्ष्यते सः कर्मकर्तेत्युच्यते । यतः । क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैर्यस्मात् कर्मकर्तेति तद्विदः । तत्रापि एतदेव यक्प्रत्ययांतस्यैवोदाहरणमुच्यते । सूत्रम् ।

**कर्मवत्कर्मणा तुल्यक्रियः । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति । लूयते केदारः स्वयमेव । लुलुवे, अलावि, अलाविषाताम् । पच्यते ओदनः स्वयमेव । भिदिर् विदारणे । भिद्यते काष्ठं स्वयमेव । अभेदि ।**

**कर्मवत्कर्मणातुल्यक्रियः।** कर्मवत् (प्र०ए०) कर्मणा (तृ०ए०) तुल्यक्रियः (प्र० ए०, कर्मस्था या क्रिया तया क्रियया तुल्यक्रियः कर्त्ता कर्मवद् भवति । अनेन कर्त्तुः कर्मत्वं भवति । लूञ् छेदने । देवदत्तः केदारं लुनाति । स एवं वदति । नाहं लुनामि किंतु केदारः स्वयमेव लूयते । लूञ्धातोः 'यक्चतुर्षु' अनेन यक्प्रत्ययो भवति । लूयते । लूयेत । लूयतां । दिबादावट् । अलूयत । लिट्लकारे । द्विश्च । नुधातोः । लुलुवे । लुलुवाते । लुलुविरे । स्वरांतानां० अनेन इट् । इटो वा णित्त्वम् । णित्त्वाद् वृद्धिः । लाविषीष्ट । लविषीष्ट । णित्त्वाभावपक्षे । इदं रूपम् । लाविता । लविता । लाविष्यते । लविष्यते । दिबादावट् । अलाविष्यत । अलविष्यत । लुङ्लकारे । इण् । वृद्धिः । तनो लोपः । अलावि । अलाविषातां । अलविषातां । अलाविषत । अलविषत । इत्यादीनि रूपाणि भवंति । डुपचष् पाके । पच् ते । यक्प्रत्ययो भवति । कश्चिद् वक्ति देवदत्त ओदनं पचति । स एवं वदति नाहं पचामि किंतु ओदनः स्वयमेव पच्यते । अत्र ओदनस्य स्वयमेव पाकसिद्धौ सामर्थ्यं ततः कर्मकर्त्तृत्वम् । कर्म एव कर्त्ता जातः । न पुनस्तृतीयांतः कर्त्ता भवति । पच्यते । पच्येत । पच्यताम् । अपच्यत ।

लिट्लकारे । द्विश्च । पूर्वस्य । लोपः पचां । पेचे । पेचाते । पेचिरे । चोः कुः । प-त्वम् । कषसंयोगे । पक्षीष्ट । पक्ता । पक्ष्यते । अपक्ष्यत । लुङ्लकारे । इण् । अत उपधायाः । तनोर्लोपः । अपाचि । अपक्षातां । अपक्षत । इत्यादीनि । भिदिर् वि-दारणे । कश्चिदेवं वक्ति । देवदत्तः काष्ठं भिनत्ति । स एवं वक्ति नाहं भिनद्मि । किंतु काष्ठं स्वयमेव भिद्यते । यक्चतुर्षु । भिद्यते । भिद्येत । भिद्यतां । अभिद्यत । लिट्लकारे । द्विश्च । पूर्वस्य । बिभिदे । बिभिदाते । बिभिदिरे । भित्सीष्ट । भेत्ता । भेत्स्यते । अ-भेत्स्यत । लुङ् । इण् । गुणः । तनोर्लोपः । अभेदि । अभित्सातां । अभित्सत । सूत्रम् ।

दुहस्नुनमां कर्मकर्तरि यगिणौ न । दुग्धे स्नुते गौः स्वय-मेव । नमते दण्डः स्वयमेव । अदुग्ध, अस्नोष्ट, अस्नाविष्ट, अनंस्त । अथ द्विकर्मकाः ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ॥
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥
न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ॥
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥

निन्ये विजनमजागरि रजनीमगमि
मदमयाचि संभोगम् ॥ गोपीहास्य-
मकार्यत भावश्चैनामनन्तेन ॥

कर्तुरिष्टतमं प्रधानं कर्म । अन्यदप्रधानम् । नगरं नीयते नागरिकैर्वनेचरः । भोजनं याच्यते यजमानो याचकेन । पृच्छ्यते पन्थानं पथिकेन पान्थः । शिष्येणाचार्यस्तत्त्वं पृ-च्छ्यते । कटश्चिकीर्ष्यते देवदत्तेन । यतः । बोभूयते । अ-नपि च हसात् । पापच्यते । तेन पापचिता अपापचि इ-त्यादि । इति भावकर्मप्रक्रिया ।

दुहस्नुनमां । दुह । स्नु । नम । एतेषां धातूनां कर्मकर्त्तरि यगिणौ न भवतः। तेषां धातूनां रूपाणि पूर्ववत् ज्ञेयानि । आत्मनेपदे । दुग्धे । दुहाते । दुहते । इ-त्यादीनि रूपाणि ज्ञेयानि । स्नुधातोः । स्नुते । स्नुवाते । स्नुवते । इत्यादीनि । नम-धातोः । नमते । नमेते । नमंते । त्रयाणां लुङ्लकारे । अदुग्ध । अधुक्षातां अधु-

क्षत। अस्नोष्ट। अस्नाविष्ट। अनंस्त। अनंसातां। अनंसत। अथ द्विकर्मका धातवः कथ्यंते। द्वे कर्मणी यस्य स द्विकर्मकः। यस्य धातोः कर्मद्वयापेक्षत्वं भवति स द्विकर्मकः। ते धातवः श्लोकेन गणिताः॥ दुह्याच्पचदंडरुधिप्रच्छिचिब्रूशासुजिमथ्मुषां॥ कर्मयुक् स्यादकथितं तथास्यान्नीहृकृष्वहां। दुह्। याच्। पच्। दंड्। रुधि। प्रच्छि। चि। ब्रू। शास्। जि। मथ्। मुष्। नी। हृ। कृष्। वह् एतेषां धातूनां द्विकर्मकत्वं स्यात्। न्यादयोऽप्यंतनिष्कर्मगत्यर्था मुख्यकर्मणि॥ प्रत्ययं यांति दुह्यादिर्गौणेऽन्ये तु यथारुचि। न्यादयः। अप्यंतनिःकर्मगत्यर्थाः धातवः मुख्यकर्मणि प्रत्ययं यांति दुह्यादिर्गौणे कर्मणि प्रत्ययं याति। अन्ये तु यथारुचि प्रत्ययं यांति। गौणे वा मुख्ये वा। उभयत्रापि वा। तत्र द्विकर्मके कर्मद्वयं। एकं मुख्यं कर्म। अपरं च गौणं कर्म। यदर्थं क्रिया आरभ्यते। तत् मुख्यं कर्म। अन्यद् गौणं। न्यादीनां मुख्ये कर्मणि प्रथमा। याच्यादीनां तु गौणे कर्मणि प्रथमा। प्रच्छ्यादीनां तु मुख्येऽमुख्ये वा पि कर्मणि प्रथमा। निन्ये विजनमजागरि रजनीमगमि मदमयाचि संभोगं॥गोपी हास्यमकार्यंत भावश्चैनामनंतेन। अस्य व्याख्या। अनंतेन गोपी विजनं निन्ये। अनंतेन गोपी रजनीमजागरि। गोपीमदमगमि। त्रिषु स्थानेषु गोपी मुख्यं कर्म। गोपी संभोगमयाचि। गोपी हास्यमकार्यंत। एनां भावोऽकार्यंत। अथ दुह्यादीनामुदाहरणानि आह। मूले तु कर्त्तुरिष्टतमं प्रधानं कर्म। अन्यदप्रधानमिति व्याख्यातं। तदपि समीचीनं। नगरं नीयते नागरिकैर्वनेचरः। अत्र वनेचरस्य मुख्यत्वम्। नगरस्य गौणत्वम्। तेन वनेचर इति प्रथमा। यदा मुख्ये कर्मणि प्रथमा तदा गौणे द्वितीया। यदा गौणे प्रथमा तदा मुख्ये द्वितीया भवति। इति विवेकः। यदा मुख्यामुख्ये द्वे अपि प्रत्यये न अभिधीयेते तदोभयत्रापि प्रथमा। भोजनं याच्यते यजमानो याचकेन। अत्र मुख्ये द्वितीया। गौणे प्रथमा। पृच्छ्यते पंथानं पथिकेन पांथः। अत्रापि मुख्ये द्वितीया गौणे प्रथमा। शिष्येणाचार्यस्तत्त्वं पृच्छ्यते। अन्यान्यपि उदाहरणानि यथासंभवं ज्ञेयानि। सप्रत्ययांतात् कृधातोर्यक्। चिकीर्ष्यते। चिकीर्ष्येत। चिकीर्ष्यतां। अचिकीर्ष्यत। लिट्लकारे। चिकीर्षांचक्रे। चिकीर्षिषीष्ट। अचिकीर्षि। कटः चिकीर्ष्यते देवदत्तेन। यङंतात् भूधातोर्यक्। यक्चतुर्षु। अनेन यतः। अनेनाकारलोपः। बोभूय्यते। बोभूय्येत। बोभूय्यतां। दिवादावट्। अबोभूय्यत्। बोभूयांचक्रे। इत्यादीनि। लुङ्लकारे। अबोभूयिषीष्ट। यङंतात् पचधातोर्यक्। पापच्यते। पापच्येत। पापच्यतां। अपापच्यत। अनपिचहसात्। अनेन अनपि विषये। यङो लोपः। पापचांचक्रे। पापचिषीष्ट। पापचिता। पापचिष्यते। अपापचिष्यत। अपापचि। इत्यादीनि रूपाणि भवंति तानि सुगमानि। इति भावकर्मप्रक्रिया समाप्ता।

## अथ लकारार्थप्रक्रिया।

अथ लकारार्थप्रक्रिया कथ्यते । सूत्रम् ।

**हठपौनःपुन्ययोर्लोण्मध्यमपुरुषैकवचनान्तता निपात्यते सर्वकाले सर्वपुरुषविषये अतीते काले ।**

**पूरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि**
**हरामराङ्गनाः ॥ विगृह्य चक्रे नमुचिद्विषा वशी**
**यं इत्थमस्वास्थ्यमहर्निशं दिवः ॥**

**हठपौनःपुन्ययोः** । हठात्कारेऽर्थे । पौनःपुन्यार्थे च धातोर्लोण्मध्यमपुरुषस्य एकवचनं ततो हिः निपात्यते । सर्वकाले । सर्वपुरुषविषये । अतीते काले । अस्योदाहरणानि । पुरीमवस्कंद अस्मिन् श्लोके उक्तानि ज्ञेयानि । तत्र परोक्षे काले लोण्मध्यमपुरुषस्यैकवचनान्तानि रूपाणि प्रदृश्यन्ते । श्लोकार्थः सुगमोऽस्ति । सूत्रम् ।

**वर्तमानार्थाया अपि विभक्तेः स्मयोगे भूतार्थता वक्तव्या ।**

**आह स्म हारीतः । यजति स्म युधिष्ठिरः ।**

**वर्तमानार्थायाः** । वर्तमानार्थाया अपि त्यादिविभक्तेः स्मइत्यस्य योगे भूतार्थता वक्तव्या । अस्योदाहरणम् । आह स्म हारीतः । अत्र वर्त्तमानेऽपि स्मयोगेन भूतार्थता । द्वितीयमुदाहरणम् । यजति स्म युधिष्ठिरः । अत्रापि वर्त्तमाने स्मयोगेन भूतार्थता भवति । सूत्रम् ।

**वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः । सुप्तोऽहं किल विललाप । नाहं कलिङ्गं जगाम ।**

**वैचित्त्यापह्नवयोः** । वैचित्त्यापह्नवयोरल्पकालेऽपि णादिर्वक्तव्यः । अस्योदाहरणम् । वैचित्ये । सुप्तोऽहं किल विललाप । अपह्नवे । नाहं कलिंगं जगाम । इत्युदाहरणं । सूत्रम् ।

**यावत्पुरानिपातयोर्योगे भविष्यदर्थे तिबादयः लट् । पुरा करोति । यावत्करोति । करिष्यतीत्यर्थः ।**

**यावत्पुरानिपातयोः** । यावत् पुरा अनयोर्निपातयोर्योगे भविष्यदर्थे तिबादयः प्रत्यया भवंति । लिट्लकारश्च । अस्योदाहरणं । पुरा करोति । पुरा करिष्यति इत्यर्थः । यावत् करोति । करिष्यति इत्यर्थः । सूत्रम् ।

**स्मृत्यर्थधातुयोगे भूतेऽर्थे लृट् । स्मरसि मित्र यदुपकरिष्यसि उपकुरुथा इत्यर्थः ॥ इति लकारार्थप्रक्रिया ॥**

स्मृत्यर्थधातुयोगे । स्मृत्यर्थधातुयोगे सति भूतेऽर्थेपि लट्लकारो भवति । स्मरसि मित्र यदुपकरिष्यसि उपकुरुथाः । इति लकारार्थप्रक्रिया समाप्ता ।

धातूनामप्यनन्तत्वान्नानार्थत्वाच्च सर्वथा ॥
अभिधातुमशक्यत्वादाख्यातख्यापनैरलम् ॥
इति श्री अनुभूतिस्वरूपाचार्यविरचितायां सार-
स्वतीप्रक्रियायामाख्यातप्रक्रिया समाप्ता ॥

अथ आख्यातोपसंहारमाह धातूनामिति । यतो धातवोऽनंता यद्यपि कविकल्पद्रुमादौ चतुःपंचाशदधिकसप्तदशशतानि (१७५४) धातुसंख्या प्रतिपादिता । तथापि प्रयोगाणां बहुत्वदर्शनात् धातवोऽनंता एव । तथा एकैकस्य धातोः अनेकेऽर्थाः । यथा दिव् क्रीडाविजीगीषाव्यवहारद्युतिस्तुतिमदमोदस्वप्नकांतिगतिषु । इत्यादि । एवमेकैको धातुरनेकेष्वर्थेषु वर्त्तते । तथा ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्च इत्यनेकार्थत्वं । तथा उपसर्गयोगादप्यनेकार्थत्वं तत उक्तं। धातूनामनंतत्वात् नास्ति अंतो येषां तेऽनंतास्तेषां भावोऽनंतत्वं तस्मात् अनंतत्वात् । तथा प्रत्येकं धातूनां नानार्थत्वात् नानाबहुप्रकारेण अर्थो येषां ते नानार्थास्तेषां भावो नानार्थत्वं तस्माच्चकारात्सर्वथा सर्वप्रकारेण संपूर्णतयाभिधानं कथनं शब्दशास्त्रं अभिधातुं वक्तुं कथयितुं वा अशक्यं। यदि बृहस्पतिः स्वयं वक्ता। इंद्रः स्वयं श्रोता तथापि वर्षसहस्रेणापि धातूनामंतं न गच्छति। लोकाच्छेषस्य सिद्धिरिति सर्वैर्वैयाकरणैरुक्तत्वात् तेषां प्रक्रियाप्रयोगानुसारेण प्रकारांतरेण वा ज्ञातव्या मया वक्तुं न शक्यते इति कारणात्। आख्यातस्य व्याकरणनवमाधिकारस्य ख्यापनैः कथनैरलं पर्याप्तं पूर्यतामिति यावत् ।

---

॥ श्रीगणेशायनमः ॥

निजजनैर्विधिना निखिलापदो झटिति यो
विनिवर्तयति स्मृतः ॥ जलधिजापरिरम्भणला-
लसो नरहरिः कुरुतां जगतां शिवम् ॥ १ ॥

अथ कृदन्तप्रक्रिया निरूप्यते ॥

अथेत्याख्यातकथनानन्तरं कृत्प्रत्यया निरूप्यन्ते । तृतीयवृत्तिस्थप्रत्ययानां 'कृत्' इति संज्ञास्ति ते निरूप्यन्ते प्रकाश्यंते । यद्वा कृदन्तप्रक्रिया निरूप्यते । कृत्संज्ञकाः

प्रत्यया येषां ते कृदन्ताः शब्दास्तेषां प्रक्रिया निरूप्यते । द्वितीयवृत्तौ धातवः साधितास्ते भवन्त्याद्यन्ताः अत्र तु भ्वादीनां कृत्प्रत्यययोगेन निष्पन्नाः स्याद्यन्ताः शब्दाः साध्यन्ते तत्र चेदमादिसूत्रम् ।

**कृत्कर्तरि च ।** वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि च भवन्ति । चकाराद्भावकर्मणोरपि । स्वतन्त्रः कर्ता । क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । शुद्धो धात्वर्थो भावः कर्तुरीप्सिततमं कर्म । कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । तथायुक्तं चानीप्सितम् । ईप्सिततमवदनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । विषं भुङ्क्ते देवदत्तः । अन्नं भुङ्क्ते देवदत्तः ।

**कृत् कर्तरि ।** कृत् ( प्र० ए० ) हसे पः । कर्तृ ( स० ए० ) करोतीति कर्त्ता तस्मिन् ङौ इति र् स्वर० । अत्र ये प्रत्यया वक्ष्यन्ते ते कृत्संज्ञकाः कृन्नामानो ज्ञेयाः । अत्र जातावेकवचनमिति वचनाद्वक्ष्यमाण इति कथितं स च कृत्प्रत्ययः प्रायः कर्तरि कर्त्रुक्तावेव भवति चकारात् विशेषविधाने भावकर्मणोरपि । सूत्रम् ।

**तृवुणौ ।** धातोस्तृवुणौ प्रत्ययौ भवतः । डुपचष् पाके । पच् तृ इति स्थिते । चोः कुः । पक् तृ इति स्थिते । कृत्तद्धितसमासाश्च । प्रातिपदिकसंज्ञा इति केचित् । इति नामत्वम् । नामसंज्ञायां स्यादिर्विभक्तिर्भवति । स्तुरार् । सेरा । पचतीति पक्ता पक्तारौ पक्तारः । पक्तारम् । पुल्लिङ्गे पक्ता । ङ्यां तः । स्त्रियां पक्त्री । नपुंसके पक्तृ पक्तृणी पक्तॄणि इत्यादि । डुकृञ् करणे । करोतीति कर्ता । हृञ् हरणे । हरतीति हर्ता । मृङ् प्राणत्यागे । म्रियते इति मर्ता । डुभृञ् धारणपोषणयोः । बिभर्तीति भर्ता ।

**तृवुणौ ।** तृश्च वुण्च तृवुणौ ( प्र० द्वि० ) स्वर० । धातोरग्रे तृवुणौ इत्येतौ द्वौ प्रत्ययौ भवतः कर्तरि वुण् इत्यत्र णकारो वृद्ध्यर्थः । उदाहरणम् । डुपचष् पाके पच् तृप्रत्ययः । चोः कुः स्वर० पक्तृ इति जातं कृत्तद्धितसमासाश्चेति नामसंज्ञायां । ( प्र० ए० ) स्तुरार् यदादेशस्तद्वद्भवति इति न्यायात् । सेरा सच ङित्

ङित्वाट्टिलोपः। स्वर०। पक्ता पक्तारौ। स्तुरार् स्वर० पक्तारः। एवं कृ तृप्र० गुणः राद्यपोद्विः। कर्तृ (प्र० ए०) स्तुरार् तेरा स्वर०। कर्त्ता कर्त्तारौ। एवं सप्तसु विभक्तिषु रूपाणि ज्ञेयानि। एवं हृ हर्त्ता। पचतीति पक्ता। करोतीति कर्त्ता। हरतीति हर्त्ता एवं भर्त्ता भर्त्तारौ भर्तारः। भोक्ता दाता पाता स्थाता माता गंता वक्ता भंक्ता मंक्ता इत्यादि स्त्रीलिंगे पक्त्री हर्त्री कर्त्री ऋण् ईप् इतीप् ऋरं नपुंसकलिंगे पक्तृ पक्तृणी पक्तृणि इत्यादि। सूत्रम्।

कृतः। सेट्धातोः परस्य कृत्प्रत्ययस्य वसादेरिडागमो भवति। कृत इदं सूत्रं सेट्धातुविषयम्। स्वृसूतिसूयतिधूञ्रधादीनां इड्वा वक्तव्यः। षूञ् प्राणिप्रसवे। सूते वा सूयतेऽसौ सोता-सविता। स्वृ शब्दे। गुणः। वा इट्। स्वरतीतिं स्वरिता-स्वर्ता। ष्टुञ् स्तुतौ। स्तौतीति स्तोता। एधृ वृद्धौ। एधतेऽसौ एधिता। यु मिश्रणे। यौतीति यविता। रु शब्दे। रौतीति रविता। णु स्तुतौ। नौतीति नविता। भू सत्तायाम्। भवतीति भविता। गुपू रक्षणे।

कृतः। कृत् (ष० ए०) स्वर० लो० एकपदं सूत्रम्। सेट्धातोः परस्य वसादेः कृत्प्रत्ययस्य इडागमः स्यात्। वसप्रत्याहार आदौ यस्य तस्यैव कृत्प्रत्ययस्येडागमः नत्वन्यस्य। उदाहरणम्। भू तृ० प्र० कृत इति इडागमः। गुणः। ओअव्। स्वर०। भवितृ (प्र० ए०) कर्तृशब्दवत्साधना। भवतीति भविता। एधृवृद्धौ एधृतृ कृतः एधिता। सूत्रम्।

ऊदितो वा। ऊदितो धातोरिड्वा भवति। गोपायतीति गोपिता-गोपायिता-गोप्ता। षिधू शास्त्रे माङ्गल्ये च। सेधिता सेद्धा। इषुसहलुभरिषरुषामनापि नस्येड्वा भवतिं। इषु इच्छायाम्। इच्छतीति एषिता-एष्टा। लुभ् विमोहने। लुभ् गार्द्ध्ये। लुभ्यतीति लोभिता। इडभावपक्षे। झबे जबाः। तथोर्धः। लुभ्यतीति लोब्धा। रिष् बन्धने। रेषतीति वा रिष्यतीति रेषिता। रेष्टा। रुष क्रोधे। रोषतीति रोषिता। रोष्टा। षह मर्षणे। आदेः ष्णः स्नः। हो ढः। तथोर्धः।

ष्टुभिः ष्टुः । ढि ढो लोपः । सहिवहोरोदवर्णस्य । सहिवहोधात्वोरकारस्य ओकारो भवति । सहतेऽसौ सोढा । वह् प्रापणे । वहति इति वोढा ।

ऊदितो वा । ऊत् ऊकारः इत् यस्य स ऊदित् तस्मात् ( पं० ए० ) स्रो० वा ( प्र० ए० ) अव्य० हवे ऊदिताद्धातोः गुपूरक्षणे षिधू मांगल्ये इत्यादेर्वा इडागमः वसूप्रत्याहारादेः कृत्प्रत्ययस्यैव । उदा० गुपू रक्षणे गुपू तृतृणौ तृप्र० उपधाया लघोर्गुणः ऊदितो वा इति इडागमः स्वर० । उभयत्रापि ( प्र० ए० ) स्तुरार् सेरा डित्त्वा० स्वर० गोपिता गोप्ता गोपायतीति गोपिता गोप्ता। षिधू शास्त्रे मांगल्ये च । षिधू 'आदेः ष्णः स्नः' सिध् तृप्र० । उपधायाः लघोः । (प्र०ए०) ऊदितोवेत्येकत्रेडागमः द्वितीये तथोर्द्धः तृस्थानेधू झबेजबाः स्वर० उभयत्रापि ( प्र०-ए० ) सेरा स्तुरार् ढ्लिोपः स्वर० सेधिता सेद्धा वा शब्दादेव इषु इच्छायामित्यस्य एष्टा एषिता षहूमर्षणे सहने 'आदेः ष्णः स्नः' सहते इति षोढा तृप्रत्ययः होढः तथोर्द्धः 'ष्टुभिः ष्टुः' ढि.ढो लोपो दीर्घश्च सहिवहोरिति सहिवहोः षहूमर्षणे वहूप्रापणे इत्येतयोः धात्वोः संबंधिनोऽवर्णस्य अकारो भवति ढकारलोपे सति न । दुःसहं सह्यं भारवाड् इत्यादौ अकारो न भवति अनेन सा इत्यस्य सो सोढ् ( प्र. ए. ) स्तुरार् सेरा इत्यादि कर्तृशब्दवत् एवं वहप्रापणे वहतीति वोढा । सूत्रम् ।

युवोरनाकौ । यु वु इत्येतयोरन अक इत्येतावादेशौ भवतः यथासंख्येन णित्त्वाद्वृद्धिः । अत उपधायाः । पचति वा पाचयतीति पाचकः पाचकौ पाचकाः । देवशब्दवत् । पठति वा पाठयतीति पाठकः । एवं याचते वा याचयतीति याचकः । भवति वा भावयतीति भावकः । लुनाति वा लावयतीति लावकः । पुनाति वा पावयतीति पावकः । श्रुञ् श्रवणे । शृणोति वा श्रावयतीति श्रावकः । यु मिश्रणे । औ आव् यौति वा यावयतीति यावकः । वध हिंसायाम् । वधतीति वधकः । हनो घत् । हन्ति वा घातयतीति घातकः । जायते वा जनयतीति जनकः । जनिवध्योर्न वृद्धिः । मितां ह्रस्वः । घटते वा घटयतीति घटकः । आतो युक् । आकारान्ताद्धातोर्युगागमो भवति ञिति णिति

च परे। डुदाञ् दाने। ददाति वा दत्तेऽसौ दायकः। दैप् शोधने। सन्ध्यक्षराणामा०। दायतीति दायकः। वुण्स-युटौ हित्वा दरिद्रातेरनप्यालोपो लुङि वा वक्तव्यः। दरिद्रा दुर्गतौ। दरिद्राति वा दरिद्रायतीति दरिद्रायकः। दरिद्रिता। नृतिखनिरञ्जिभ्यो वुर्वक्तव्यः। नृती गात्रविक्षेपे। उप-धाया लघोः। राद्यपो द्विः। नृत्यतीति नर्तकः। न दादेः। नर्तकी। खनकः, खनकी। रञ्जेर्नलोपो वा। रञ्जकः-रजकः, रजकी। युवोरनाकौ इति तद्धितयुप्रत्ययस्य नेति वक्तव्यम्। तेन ऊर्णायुः।

युवोरनाकौ। युश्चवुश्चयुवौ तयोः (ष. द्वि.) उवं स्वर स्रो० अनाक। अनश्च अ-कश्च (प्र० द्वि०) ओऔओ पश्चात्नामिनोरः। स्वर० द्विपदम्। यु वु इत्येतयोः प्रत्य-ययोः क्रमेण अन अक इत्यादेशौ भवतः यु इत्यस्य अन वुइत्यस्य अकः। उदाहर-णम्। पच् तृवुणौ इति वुण् णकारो वृद्ध्यर्थः अत उपधाया इति युव्वोरिति वु इत्यस्य अकादेशः स्वर० पचतीति पाचकः। (प्र० ए०) स्रो० एवं पठ् पठति पाठयति वा पाठकः डुकृञ् करणे तृवुण् धातोर्नामिनः कार वु इत्यस्य अक स्वर० करोति कारयति वा कारकः। (प्र० ए०) स्रो०एवं भू वुण् उकारस्य औ-कारो वृद्धिः औ आव् अक० स्वर० भवतीति भावकः। एवं लूञ् छेदने लुनातीति लावकः। यु मिश्रणे यौतीति यावकः।श्रु श्रवणे शृणोतीति श्रावकः। एतेषां रूपाणि देवशब्दवत्।तद्धितसंबंधियुप्रत्ययस्यानादेशो न। तेन उर्णायुः। शयुः।

नाम्युपधात्कः। नाम्युपधाद्धातोः कः प्रत्ययो भवति। ककारो गुणाभावार्थः। क्षिप् प्रेरणे। क्षिपतीति क्षिपः। छिदिर् द्वैधीकरणे। छिनत्तीति छिदः। भिदिर् विदारणे। भिनत्तीति भिदः। दुह् प्रपूरणे। द्रवद्रव्यविभागानुकूलो व्यापारः प्रपूरणम्। कामान् दोग्धि सा कामदुघा॥ दुहः के वा घो वाच्यः। तेन कामदुहा। दुहः-दुघः। तुद् व्य-थने। तुदतीति तुदः। विद ज्ञाने। वेत्तीति विदः। द्विष् अप्रीतौ। द्वेष्टीति द्विषः। पुर ऐश्वर्यदीप्त्योः। सुरतीति

सुरः । शुभ् शोभायाम् । शोभते तत् शुभं कल्याणम् ।

नाम्युपधात्कः । नामी उपधा यस्य सनाम्युपधस्तस्मात् ( पं० ए० ) इसि-रत् । सवर्णे० क ( प्र० ए० ) स्रो० नामी अवर्णवर्जाः। स्वर० इकारादिः स उपधा-यस्य तस्माद्धातोः कप्रत्ययो भवति ककारो गुणप्रतिषेधार्थः । क्षिप् प्रेरणे क्षिप् अत्र नाम्युपधात् कप्रत्ययः । स्वर० स्रो० क्षिपः क्षिपते प्रेरयतीति क्षिपः । एवं भिदिर् विदारणे भिनत्तीति भिदः छिदिर् द्वैधीकरणे छिनत्तीति छिदः ।

जानातेश्च । जानातेर्धातोरपि कः प्रत्ययो भवति । जानातेश्चेति चकारात्कृगृदृधृप्रीब्रुवामपि कः प्रत्ययो भवति । कृ विक्षेपे ।

जानातेश्चेति ज्ञा अवबोधने इत्येतस्यापि धातोः कप्रत्ययो भवति ज्ञा अकित्त्वा-दातोऽनपीत्याकारलोपः । स्वर०( प्र० ए० )स्रो० ज्ञः जानातीति ज्ञः । चकारात्कृत् प्रत्ययोरऽपि कप्रत्ययः किर ।

ऋत इत् । दीर्घऋकारान्तस्येर् नान्यस्य । किरतीति किरः। धृञ् धारणे । धरतीति ध्रः । प्रीञ् तर्पणे । प्रीणाति वा प्रीणीतेऽसौ प्रियः । नु धातोः । गृ निगरणे । गिरतीति गिरः । स्वरे परे गिरस्य लत्वं वा वाच्यम् । गिले परेऽगि-लस्य । गिलशब्दं विहाय पूर्वस्य मुम् वक्तव्यः । तिमिं गिल-तीति तिमिंगिलः । अगिलस्येति किम् । गिलगिलः । ब्रूञ् व्यक्तायां वाचि । नु धातोः । ब्रवीतीति ब्रुवः । अपिशब्दात्कर्तरि ग्रहेरपि कः प्रत्ययो भवति। गृह्णातीति गृहम् । तात्स्थ्यात् गृह्णन्ति ते गृहा दाराः ।

ऋतइर् । प्रियः प्रीञ् कप्र० नुधातोरिति इय् । सूत्रम् ।

पचिनन्दिग्रहादेरयुणिनि । पचादेर्नन्दादेर्ग्रहादेश्च अयुणि नि इत्येते प्रत्यया भवन्ति यथासंख्येन । पचतीति पचः । वक्तीति वचः । वेत्तीति वेदः । वपतीति वपः । चरिचलिप-तिहनिवदीनां वा द्वित्वं पूर्वस्यागागमश्च अप्रत्यये परे। हसादशेषाभावः । चर गतिभक्षणयोः । चरतीति चरा-

चरः-चरः । चल चलने । चलतीति चलाचलः-चलः । पत्लृ पतने । पततीति पतापतः-पतः । वदतीति वदावदः-वदः । हन्तेर्घनश्च । हन्तीति घनाघनः-हनः । चकाराद्धन शब्दे । घनतीति घनाघनः-घनः इत्यादि । णद अव्यक्ते शब्दे । नदतीति नदः । प्लुङ् गतौ । प्लवतेऽसौ प्लवः । चरतेऽसौ चरः । क्षमूष् सहने । क्षमतेऽसौ क्षमः । पचादिषु देवट् नदट् इति टकारानुबन्धत्वादीप् । दीव्यतीति देवी । षिवु तन्तुसन्ताने । षेवृ सेवने । सेवतेऽसौ सेवः । सीव्यतीति सेवः । व्रण क्षते । व्रण रुजि । व्रण शब्दे । व्रणतीति व्रणः । अन प्राणने । प्राणितीति प्राणः । दृशिर् प्रेक्षणे । पश्यतीति दर्शः । सृप्लृ गतौ । सर्पतीति सर्पः । भृञ् भरणे । भरते वा भरतीति भरः । डुभृञ् धारणपोषणयोः । बिभर्ति वा बिभृतेऽसौ भरः । सहतेऽसौ सहः । पचादिराकृतिगणः । पचादेरप्रत्ययो निरुपपदस्यैव ज्ञातव्यः ।

इति पचादिः ।

पचिनंदिग्रहादेरयुणिनि । पचिश्च नंदिश्च ग्रहश्च पचिनंदिग्रहं तदादिर्यस्य स पचनंदिग्रहादिस्तस्मात् ( पं० ए० ) ङिति ङस्येत्यलोपः । स्रो० अयुणिनि अश्च युश्च णिनिश्च अयुणिनि ( प्र० ए० ) नपुंसकात् स्यमोर्लुक् पश्चात् नामिनोरः स्वर० वृत्तिः कंच्या।पचादेः अप्रत्ययः नंद्यादेर्युः प्रत्य० ग्रहादेर्णिनिः प्र० णकारो वृद्ध्यर्थः इकार उच्चारणार्थः उदा० पच् अप्र० स्वर० स्रो० पचः । एवं वदतीति वदः । दिव क्रीडा० दिव् दीव्यतीति देवः अप्र० उपधाया लघोः स्वर० ( प्र० ए० ) स्रो० । एवं षिव् सेवायां ' आदेः ष्णः स्नः ' सिव् सेवः सेवते इति सेवः । पच् वद् देव् सेव् चप् नंद् भष् प्लुव् चर् जर् मर् क्षर् वेद् सेध् क्रोध् कोप् नर्त्त् व्रण् सर्प् भद् स्वप इत्यादिपचादयः ।

अथ नन्द्यादिर्निरूप्यते । टुणदि समृद्धौ । इदितो नुम् । नन्दति वा नन्दयतीति नन्दनः । नन्दतीति नन्दकः । रमु क्रीडायाम् । रमतेऽसौ रमणः । वाम क्रम संहर्षे । वा-

मतीति वामनः । क्रामतीति क्रमणः । वासृ शब्दे । वासयतीति वासनः। मितां ह्रस्वः।मादि हर्षे । माद्यतीति मदनः। दुष वैकृत्ये दुषेर्णौ कृति च दीर्घो वक्तव्यः। दूषयतीतिदूषणः। राध् साध् संसिद्धौ । राध्यतीति वा राधयतीति राधनः, साधनः। वृधुङ् वृद्धौ । वर्धयतीति वर्धनः। रु शब्दे । रोर्युण् । रु शब्द इत्येतस्माद्धातोर्युच् प्रत्ययो भवति। रौति वा रावयतीति रावणः। रुशब्दात् युरपि वक्तव्यः। तेन रवणः। ऋकारान्ताच्च। युण्प्रत्ययो भवति। करोतीति वा कारयतीति कारणः, कारकः। शुभ् शोभने रोचने च । शोभयतीति शोभनः । रुच् दीप्तौ । रोचयतीति रोचनः । विभीषयतीति विभीषणः । णश् अदर्शने । चित्तं विनाशयतीति चित्तविनाशनः । युध्यते इति योधनः । एते ण्यन्ताः । सहतेऽसौ सहनः । तपतीति तपनः । ज्वल दीप्तौ । ज्वलतीति ज्वलनः । शम् दम् उपशमे । शाम्यतीति शमनः । दाम्यतीति दमनः । जल्पतीति जल्पनः । तृप् प्रीणने । तृप्यतीति तर्पणः । रमणः । दृप् संदर्पे । दृप्यतीति दर्पणः । क्रन्द आक्रन्दने । क्रदि आह्वाने रोदने च । संपूर्वः । संक्रन्दति वा संक्रन्दयतीति संक्रन्दनः । कृष् निष्कर्षे । कृष् आमर्षणे । संकर्षतीति संकर्षणः । अर्द मर्द अर्दने । अर्द गतौ याचने च । जनान् अर्दयतीति जनार्दनः । मर्दयतीति मर्दनः । घृष् संघर्षणे । संघर्षतीति संघर्षणः । पुनातीति पवनः । पवतेऽसौ पवनः । षूद क्षरणे । षूद निबर्हणे । सूदी हिंसायाम् । मधुं सूदयतीति मधुसूदनः । लुनातीति लवणः । अत्र णत्वं निपात्यते । शत्रून् दाम्यतीति वा दामयतीति शत्रुदमनः । इति नन्द्यादिः ।

टुणदि समृद्धौ। णद् 'आदेः ष्णः स्नः' नद्प्रचनंदीतियुप्र०। इदित इति नुमागमः।.नश्चा० युवोरनाको। अन स्वर० नंदयति वर्द्धयति कुलमिति नंदनः (प्र०ए०) स्रो० रम् यु युवो स्वर० ष्टुर्णोणो० रमते इति रमणः नंदनः रमणः वासनः वसनः मदनः दूषणः साधनः शोभनः रोचनः तपनः जल्पनः दर्प्पणः हर्षणः अर्द्दनः यवनः लवणः मधुसूदनः विचक्षणः इत्यादि नंद्यादयः।रोर्युण् रु शब्दे इत्यस्य धातोर्युण् प्रत्ययो भवति णकारो वृद्ध्यर्थः। रु युणित्वाद्धातोर्नामिनः। रौ युवो० अन औआव् स्वर० ष्टुर्णोणो० (प्र०ए०) स्रो० रौति रावयति वा रवणः। युरपि। तेन रवणः।

अथ ग्रहादिर्निरूप्यते। ग्रह उपादाने। इनां शौ सौ। हसे पः सेर्लोपः। णिनिप्रत्ययान्ताः सर्वे दण्डिवत्। गृह्णातीति ग्राही उत्साही। आस् उपवेशने। उदास्तेऽसौ उदासी। दासृ दाने। उत्पूर्वः उद्दासी। भासृ दीप्तौ। उद्भासतेऽसौ उद्भासी। आतो युक्। छो छेदने। छ्यतीति छायी। तिष्ठतीति स्थायी। मन्त्रि गुप्तभाषणे। मन्त्रि अवधारणे। मन्त्रयतीति मन्त्री। मृद मर्दने। मर्द आमर्दने। मृदु आर्जवे। संमर्दति वा संमर्दयतीति संमर्दी। निस्तौतीति निस्तावी। निशृणोतीति निश्रावी। रक्ष् पालने। निरक्षतीति निरक्षी। वस् निवासे। निवसतीति निवासी। टुवप् बीजसन्ताने। निवपतीति निवापी। शो तनूकरणे। निश्यतीति निशायी॥ नञ्पूर्वेभ्यः कृहणीयाचृवदिभ्यो णिनिश्च। न करोति वा कुरुतेऽसौ अकारी। इनां शौ सौ। न हरतीत्यहारी। णीञ् प्रापणे। न नयतीत्यनायी। न याचतेऽसौ अयाची। न वदतीत्यवादी। रध हिंसायाम्। णिनिश्चेति चकारादपावपरिविभ्यो णिनिः। अपराध्यतीत्यपराधी। रुधिरावरणे। अवरुणद्धीत्यवरोधी। परिभवतीति परिभावी। विपूर्वः। विचरतीति विचारी। विशेषेण रौतीति विरावी। इति ग्रहादयः।

ग्रह उपादाने गृह्णातीति ग्राही। ग्रहादित्वात् णिनि प्र० इन् उपधाया स्वर०।

इर्गा शौ सौ । दीर्घः । हसे पः । नाम्नो० । रुशब्दे । रु विपूर्वः। विशेषेण रौतीति विरावी। णिन् प्र० इन् णित्त्वाद्धातोर्नां० औ आव् स्वर० ( प्र० ए० ) दंडिन् शब्दवत् । उदासी उद्भासी स्थायी यायी संमर्दी वादी परिभावी निःश्रावी निवासी इत्यादि ग्रहादयः । सूत्रम् ।

अथ दृशादिर्निरूप्यते । दृशादेः शः । दृश् हन् धेट् ध्मा घ्रा पा दा धा विद् एभ्यः शः प्रत्ययो भवति।शकारः शिति चतुर्वत्कार्यार्थः ।

दृशादेःशः । दृश्आदिर्यस्य स दृशादिः तस्मात् ( पं० ए० ) ङितिङस्येत्यलोपः। सो० श् ( प्र० ए० ) स्रो०दृश् धेट् पा ध्मा हन् इत्यादेर्धातोः शप्रत्ययो भवति। शकारः शित्कार्यार्थः । शित्प्रयोजनमाह ।

शिति चतुर्वत् । शिति प्रत्यये परे तिबादिषु परेषु यत्कार्यमुक्तं तद्भवति । दृशादेः पश्यादिः । अप् अदे । पश्यतीति पश्यः । उत्पूर्वः। उत् ऊर्ध्वं पश्यतीति उत्पश्यः । हन् हिंसागत्योः । अप् । अदे । अदादित्वादपो लुक् । अपित्तादिर्ङित् । गमां स्वरे । हनो घ्ने । गां हन्तीति गोघ्नः । पापघ्नः । धेट् पाने । अप् । अदे । धयतीति धयः । ध्मा, धमादेशः । धमतीति धमः । उद्धमतीति उद्धमः । घ्रा, जिघ्रादेशः । जिघ्रतीति जिघ्रः । पा पाने । पिबादेशः । पिबतीति पिबः । अप् । अदे । ह्वादेर्द्विश्च । दादेः । इत्याकारलोपः । ददाति वा दत्तेऽसौ ददः । दधाति वा धत्तेऽसौ दधः । मुचादेर्मुम् । तुदादेरः । विद्लृ लाभे । गां विन्दतीति गोविन्दः ।

शितिचतुर्वत् । श् शकार इत् यस्य स शित् तस्मिन् ( स० ए० ) स्वर० चतुर्भिस्तुल्यं चतुर्वत् ( प्र० ए० ) अव्य० वृत्तिः सुकरा नवरं । शिति प्रत्यये परे तिबादिः वर्त्तमाना १ विधिसंभावना २ आशीः प्रेरणा ३ अनद्यतनाख्य ४ विभक्ति चतुष्टयस्य यत्कार्यं दृशादेः पश्यादिः अप् कर्त्तरीत्यादि । तद्भवतीति । उदा० दृश् पश्यतीति पश्यः शप्र० चतुर्वत्त्वात् अप्कर्त्तरि । दृशादेः पश्यादिरिति पश्यादेशः ।

स्वर० अदे० स्वर० ( प्र० ए० ) सि स्रो० धेट् पाने। धे धयतीति धयः शप्र० अप्-कर्त्तरि एअय् स्वर०अदे०स्वर० एवं स्तनंधयः। एवं पिबः।ध्मा शब्दाग्निसंयोगयोः। धमादेशः उत्पूर्वः। उत् प्राबल्येन धमतीति उद्धमः। शप्र० अप्कर्त्तरि अदे०स्वर०। उद्धमः ( प्र० ए० ) स्रो०। हन् हिंसागत्योः हन्। गोपूर्वः। गां हंतीति गोघ्नः। शप्र० अ अपूकर्त्तरि अदादेर्लुक् पश्चात् हनोघ्ने हस्यघः पूर्वं गमां स्वरे स्वर० स्रो० एवं कृतघ्नः। सूत्रम्।

ज्वलादेर्णः। ज्वलादेर्गणात् णः प्रत्ययो भवति। ज्वलादेर्णो वेति केचित्। पक्षे पचादित्वादः। ज्वल् दीप्तौ। ज्वालः ज्वलः। तपतीति तापः तपः। पथि गतौ। चुरादिः। इ-दित् पान्थयतीति वा पन्थतीति पान्थः- पथः। अत्र वृ-द्ध्यनन्तरं नुमागमः। ज्वलादिगणपाठसामर्थ्यात्। पत्लृ गत्यैश्वर्ययोः। पततीति पातः--पतः। क्रथ् पचने। क्रथतीति क्राथः क्रथः। पथ् गत्याम्। पथतीति पाथः-पथः। मथ् गाहे। मथतीति माथः-मथः। सहतेऽसौ साहः-सहः। । इति ज्वलादिः। अथाऽण्।

ज्वलादेर्णः। ज्वल आदिर्यस्य स ज्वलादिस्तस्मात् ( पं० ए० ) ङितिह्रस्ये-त्यलोपः स्रो० नामिनोरः राद्यपोद्विः जलतुं० ज्वलादेः ज्वल् तप् पथि पद् इत्यादे-र्धातोः णप्रत्ययो भवति। णकारो वृद्ध्यर्थः ज्वल् दीप्तौ ज्वल् णप्र० अ स्वर० अत उपधायाः ( प्र० ए० ) स्रो० एवं तप् संतापे तापः। पद् गतौ पदः। पथि गतौ पथ् णप्र० वृद्धिः स्वर० पंथति गच्छतीति पांथः। लक्ष्यमुद्दिश्य लक्षणस्य प्रवृत्तिरिति प्रथमवृद्धिस्तत इदित इति नुमागमः नश्चापदां०। सूत्रम्।

कार्येऽण्। धातोः कर्मणि प्रयुज्यमाने अण् प्रत्ययो भवति कुंभकारः। ग्रंथकारः।

कार्येऽण्। कार्यं ( स० ए० ) अइए अण् ( प्र० ए० ) हसे पः यत् क्रियते तत् कर्म तस्मिन् कर्मणि पूर्वं प्रयुज्यमाने धातोः अण्प्रत्ययो भवति। कृ कुंभपूर्वः कुंभं करोतीति कुंभकारः। अण्प्र० धातो० इति वृद्धिः। कार स्वर० ( प्र० ए० ) स्रो०। एवं ग्रंथपूर्वः ग्रंथं करोतीति ग्रंथकारः। एवं शास्त्रकारः। एवं तंतुवायः। सूत्रम्।

आतो डः । आकारांताद्धातोः कर्मणि प्रयुज्यमाने डप्रत्ययो भवति । गोदः । धनदः । जलदः ।

आतो डः । आत् ( पं० ए० ) स्वर० स्रो० ड ( प्र० ए० ) स्रो० हवे ओ· औ सिद्धं आकारोऽन्ते येषां तेषां धातूनां डप्रत्ययो भवति कर्मणि प्रयुज्यमाने डकारष्टिलोपार्थः । डुदाञ् दाने । दा गोपूर्वः । गां ददातीति गोदः डप्र० टिलोपः स्वर० । एवं धनं ददातीति धनदः । एवं जलदः । सूत्रम् ।

नाम्नि च । नाममात्रे प्रयोक्तव्ये डप्रत्ययो भवति कर्तरि भावे च । आखूत्थं । द्वाभ्यां पिबतीति द्विपः । द्वौ वारौ जायतेऽसौ द्विजः । गृहैर्दारैः सह तिष्ठतीति गृहस्थः । शीङ् स्वप्ने । गिरिशः । पादैः पिबतीति पादपः । द्रु गतौ । शुचं द्रवतीति शूद्रः ।

नाम्नि च । नामन् ( स० ए० ) अल्लोपः स्र० स्वर० स्वर० च ( प्र० ए० ) अव्य० । नाम्नि नाममात्रे कर्मादिनियमरहिते प्रयुज्यमाने डप्रत्ययो भवति कर्तरि चकाराद्भावेऽपि । यथा आखूनां मूषकाणां उत्थानं आखूत्थं ष्ठा । आदेः ष्णः स्नः । स्था उत्पूर्वः उदः स्थादेरिति सलोपः । ससेचपाः । आखुपूर्वः सवर्णे० डप्र० टिलोपः स्वर० ( प्र० ए० ) तोऽमित्यादौ उदा० पा पाने पा द्विपूर्वः द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपः डप्र० अ टिलोपः स्वर० ( प्र० ए० ) उदा० एवं द्विवारं द्वाभ्यां वा जन्मसंस्काराभ्यां एकं जन्मतो द्वितीयं दीक्षासंस्कारेण जायते इति द्विजः जनी प्रादुर्भावे जनेर्जा आदेशः डप्र० टिलोपः स्वर० ष्ठा गति० ष्ठा० आदेः ष्णः स्नः । स्था षस्य स निमित्ताभावे इति ठस्य थः । गृहपूर्वः । गृहे तिष्ठतीति गृहस्थः डप्र० टिलोपः स्वर० । द्रु गतौ शुच्पूर्वः शुचं शोकं द्रवति गच्छति प्राप्नोति हीनजातित्वादिति शूद्रः डप्र०आ टिलोपः ।

शुचः शूद्रे । शुचः शूरादेशो भवति द्रे परे ।

शुचः शूद्रे । शुच्शब्दस्य द्रे इति डप्रत्ययांते द्रुधातौ परे शूइत्ययमादेशो भवति अनेन शुचः शू । शूद्रः ।

उरसः सलोपो मुम्वा । उरसः सकारस्य लोपो भवति डप्रत्ययान्ते गमौ मुमागमश्च वा । उरसा गच्छतीत्युरगः, उरङ्गः सर्पः ।

उरसः० । उरस्शब्दस्य उपपदस्य गमिधातौ परे सकारस्य लोपो भवति वा विकल्पेन नुगागमो भवति । गम् उरस्पूर्वः उरसा हृदयेन गच्छतीति उरगः उरंगो वा। नाम्नीति डम०थ टिलोपः स्वर०उरस् इति सलोपः एकत्र मुमागमः नश्चा० एवं विहायसा आकाशेन विहायसि आकाशे वा गच्छतीति विहगः विहंगः ।

विहायसो विहश्च । विहायस्शब्दस्य विहादेशो भवति चकारान्मुम्वा डान्ते गमौ । विहायसि आकाशे गच्छतीति विहगः विहङ्गः । भुजस्य च मुम्वा डप्रत्ययान्ते गमौ । भुजो वक्रार्थे । भुजं वक्रं गच्छतीति भुजगः भुजङ्गः । विहायसो विहश्चेति चकारात् तरस्तुरादेशः । मुम्वेति अनुवर्तनीयम् । तरसस्तुरादेशः तुरस्य मुम्वा डान्ते गमौ । तरसा वेगेन गच्छतीति तुरगः-तुरङ्गः ।

विहायसो विह च । विहायस्शब्दस्य विहादेशः मुमागमश्च वा । डम० चकारात् भुजं कुटिलं गच्छतीति भुजगः । भुज् कौटिल्ये भुजगः भुजंगः, प्लवगः प्लवंगः, तुरगः तुरंगः इत्याद्यपि । सूत्रम् ।

अटौ । नाम्नि कार्ये च उपपदे सति अटौ प्रत्ययौ भवतः। अस्थि हरतीति अस्थिहरः कः श्वा । कवचं हरतीति कवचहरः कुमारः । धृञ् धारणे । धनुर्धरतीति धनुर्धरः क्षत्रियो वा राजा । चर गतौ । कुरुषु देशेषु चरतीति कुरुचरः । ट ईबर्थः । ङ्कितः । स्त्री चेत् कुरुचरी, महीचरी, सेनाचरी, भिक्षाचरी, दीक्षाचरी । अप्रत्ययः सर्वधातुसाधारणः। टप्रत्ययस्तु चरादेरेव भवति। शोकं करोतीति शोककरी कन्या। यशः करोतीति यशस्करी विद्या। सृ गतौ। पुरः सरतीति पुरःसरः। अग्रे सरतीति अग्रेसरः। पार्श्वे शेतेऽसौ पार्श्वशयः। तथैव पृष्ठे शेतेऽसौ पृष्ठशयः। उदरशयः। उत्तानादिषु कर्तृषु। उत्तानः शेतेऽसौ उत्तानशयः । स्तम्बे रमतेऽसौ स्तम्बेरमः हस्ती । जप जल्प व्यक्तायां वाचि । कर्णेजपः । ग्रह उपादाने । शक्तिं गृह्णा-

तीति शक्तिग्रहः । लाङ्गलग्रहः।एष्टिग्रहः । अङ्कुशग्रहः। तोमरग्रहः।घटीग्रहः।धनुर्ग्रहः।सूत्रग्रहः।पुष्पग्रहः । फलग्रहः । कामग्रहः मधुरग्रहः । शंपूर्वः कृञ् । शं सुखं वा कल्याणं करोतीति शंकरः । शंवदः भारंवहः । अत्र कर्मणि अणपि वक्तव्यः । भारवाहः श्वेतवाहः इत्यादि ।

अटौ । अश्च टश्च अटौ (प्र.द्वि. )ओऔऔ औ नाम्नि कार्येच वाच्यमाने अकारटकारौ प्रत्ययौ यथायोग्यं भवतः । टप्रत्यये टकार ईबर्थः । पचिनंदीति पचादीनां निरुपपदानां अप्रत्ययः उक्तः । अटावित्यत्र तु सोपपदानां अप्रत्यय इति न पौनरुक्त्यम् । उदाहरणं हृहरणे अस्थिपूर्वः अप्र० गुणः, स्वर० अस्थीनि हरतीति अस्थिहरः श्वा कुर्कुरः । एवं कवचं सन्नाहं हरतीति कवचहरः कुमारः इंद्रः वा । एवं धृ धनुष्पूर्वः दोषामितिषस्य रः राद्यपोद्विः अवेजवाः जल० धनुर्द्धरतीति धनुर्द्धरः कुमारः इत्यादयः अप्रत्ययांताः। चर् गतिभक्षणयोः । चर् कुरुपूर्वः। कुरुषु देशेषु चरतीति कुरुचरः। स्त्री चेत् कुरुचरी। टप्रत्य० अ स्वर० एकत्र (प्र. ए.) सो० द्वितीये टित्त्वात् ष्णित इतीप् । यस्य लोपः ( प्र. द्वि. ) हसेपः नदीशब्दवत् । सूत्रम् ।

इखखि । धातोर्नाम्नि कार्ये च सति इ ख खि एते प्रत्यया भवन्ति । खकारः खिति पदस्येति सूत्रस्य विशेषणार्थः ।

इखखि । इश्च खश्च खिश्च इखखि (प्र० ब०) सांकेतिकम् । यद्वा । (प्र०ए०) नपुंसकात्स्यमोर्लुक् । धातोर्नाम्नि कार्ये च सति इखखि एते त्रयः प्रत्यया भवंति यथायोग्यं । उदा० कृ स्तंबपूर्वः स्तंबं करोतीति विग्रहे इप्रत्ययः गुणः स्वर० ( प्र० ए० ) सो० स्तंबकरिः व्रीहिः शालिः । एवं शकृत्करिर्वत्सः ।आप्लृ व्याप्तौ। आप् देवपूर्वः देवानाप्नोतीति देवापिः, इप्र० स्वर० । एवं वातापिः, एवं फलेग्रहिः, नाथहरिः, दृतिहरिः पशुः । सूत्रम् ।

खिति पदस्य । खिति प्रत्यये परे पूर्वपदस्याव्ययवर्जितस्य मुमागमो भवति । तेन दोषामन्यमहः । आत्मानं दोषा मन्यते तद्दोषामन्यं अहः ।

शकृत्स्तम्बात्कृञः फलरजोमलाद्ग्रहो हृञः ।
दृतिनाथाद्देववातादापः कर्तरि वाच्य इः ॥

वत्सव्रीह्योरेव । डुकृञ् करणे । शकृत्करोतीति शकृत्करिः । कः वत्सः । स्तम्बं करोतीति स्तम्बकरिः । कः व्रीहिः । फले गृह्णातीति फलेग्रहिः । वा फलानि गृह्णातीति फलेग्रहिः वृक्षः । फलस्यैदन्तत्वं निपातनात् । रजो गृह्णातीति रजोग्रहिः मलग्रहिः । दृतिं हरतीति दृतिहरिः । नाथहरिः । आप्लृ व्याप्तौ । देवान् आप्नोतीति देवापिः । वातं आप्नोतीति वातापिः ।

करीषकूलसर्वाभ्रात्कषः प्रियवशाद्वदः ॥
ऋतिमेघभयात्कृञः क्षेमभद्रप्रियात्तु वा ॥

कष निष्कर्षे । करीषं कषतीति करीषंकषः । 'तत्तु शुष्कं करीषोऽस्त्री' इत्यमरः । कूलं कषतीति कूलंकषः । सर्वं कषतीति सर्वंकषः । अभ्रं कषतीति अभ्रंकषः । खकारो मुमागमार्थः । वद व्यक्तायां वाचि । प्रियं वदतीति प्रियंवदः । वशंवदः । ऋतिं करोतीति ऋतिंकरः, मेघंकरः, भयंकरः । विकल्पपक्षे कार्ये अण् । क्षेमं करोतीति क्षेमंकरः-क्षेमकारः । भद्रं करोतीति भद्रंकरः-भद्रकारः । प्रियं करोतीति प्रियंकरः-प्रियकारः ॥

आशिताच्च भुवो भावे करणे चतुराद्गजात् ।
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात् ॥
गच्छतेः प्रत्ययः खः स्यात्कृञो धातोस्तु खिर्भवेत् ।
आत्मन्कुक्ष्युदरेभ्यः स्युस्तथा वाचंयमादयः ॥

आशितेन भूयते इति आशितंभवम् । भावे नपुंसकता वाच्या । आशितो भवत्यनेनेति आशितंभव ओदनः । तुरं गच्छतीति तुरंगमः । भुजंगमः, विहंगमः, सुतंगमः, उरंगमः, हृदयंगमः, जनंगमः । प्लवेन गच्छतीति प्लवंगमः ।

डुभृञ् धारणपोषणयोः । आत्मानं बिभर्तीति आत्मंभरिः, कुक्षिंभरिः, उदरंभरिः । लुप्तविभक्तेश्च पदान्तत्वं विज्ञेयम् । अतःपरं वाचंयमान् कथयति । वाचंयमादयो निपात्याः । वाचं यच्छतीति वाचंयमः । अत्र अकारो निपात्यते । दॄ विदारणे । पुरं दारयतीति पुरंदरः । तप संतापे । द्विषं तापयतीति द्विषंतपः । परंतपः । सर्वं सहतेऽसौ सर्वंसहः । विश्वं बिभर्तीति विश्वंभरः । भगं दारयतीति भगंदरः । तॄ प्लवनतरणयोः । रथं तरतीति रथंतरः । वृञ् वरणे । पतिं वृणोतीति वा वृणुते सा पतिंवरा । जि जये । धनं जयतीति धनंजयः । धृञ् धारणे । वसूनि वा वसु धरति वा धरतेऽसौ वसुंधरा । शत्रुं सहतेऽसौ शत्रुंसहः । अरिं दाम्यतीति अरिंदमः । शत्रुंतपः । एते वाचंयमादयः ।

खित्तिपदस्य । ख इत् यस्य स खित् तस्मिन् ( स० ए० ) स्वर० पद ( ष० ए० ) ङस्य खिति खकारेत्प्रत्यये पूर्वपदस्य मुमागमो भवति । उकार उच्चारणार्थः । कृ क्षेमपूर्वः क्षेमंकरः इखखि इति खप्रत्ययः अ खकारो मुमागमार्थः खित्तिपदस्येति मोनु० गुणः स्वर० । एवं प्रियं वदतीति प्रियंवदः, वशंवदः, कूलंकषः, अभ्रंलिहः, वाचंयमः, पुरंदरः, भयंकरः, परंतपः, सर्वंसहः, विश्वंभरः, मितंपचः, विधुंतुदः, सूर्यंपश्यः, ललाटंतपः इत्यादि । डुभृञ् आत्मन्पूर्वः आत्मानं बिभर्तीति आत्मंभरिः खिप्रत्ययः इ नाम्नो० खिति पदस्य मोऽनु० स्वर० ( प्र० ए० ) स्रो० । एवं उदरंभरिः कुक्षिंभरिः इत्यादयोऽपि ज्ञेयाः । सूत्रम् ।

एजा खश् । एजृ कंपने इत्यादीनां खश् प्रत्ययो भवति । खकारो मुमागमार्थः । शकारः शिति चतुर्वत्कार्यार्थः । धातोः प्रेरणे । इति ञिः प्रत्ययः । जनान् एजयतीति जनमेजयः ।

ञ्यन्तैर्जेर्मन्यतेर्मुञ्जकूलास्यपुष्पतो धयेः ॥
नाडीमुष्टिशुनीपाणिकरस्तनात्सनासिकात् ॥

मनु अवबोधने । दिवादेर्यः । आत्मानं पंडितं मन्यते स पंडितंमन्यः । धेट् पाने । मुञ्जं धयतीति मुञ्जंधयः । कूलंधयः, आस्यंधयः, पुष्पंधयः । ध्माधेटोस्तुल्योपपदत्वं ज्ञेयम् । ध्मा शब्दाग्निसंयोगयोः । नाडीं धयतीति नाडिंधयः, नाडिंधमः । खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः । मुष्टिंधयः, मुष्टिंधमः, शुनिंधयः, शुनिंधमः, पाणिंधयः, पाणिंधमः, करंधयः, करंधमः, स्तनंधयः, स्तनंधमः, नासिकां धयतीति नासिकंधयः, नासिकंधमः ।

ध्माखारीवातघटीतो रुजवहौ तु कूलतः ॥
अरुर्विधुतिलात्तुद् स्यादसूर्योग्राद्दृशिस्तपिः ॥
ललाटतो वहाभ्राल्लिह् मितमाननखात्पचिः ॥
वातादजिरिरायामद् जहातिः शर्धतस्तथा ॥

खारीं धमतीति खारिंधमः, वातंधमः, घटिंधमः । रुजो भङ्गे । वह प्रापणे । उत्पूर्वः । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहतीति कूलमुद्वहः । अरुः किं मर्मस्थानम् । अरुस्तुदतीति अरुंतुदः, विधुंतुदः, तिलंतुदः । दृशिर् प्रेक्षणे । न सूर्यं पश्यंतीति असूर्यंपश्याः । के राजदाराः । उग्रंपश्यः, ललाटंतपः । लिह् आस्वादने । वहं लेढीति वहंलिहः, अभ्रंलिहः । मितं पचतीति मितंपचः, प्रस्थंपचः, मानंपचः, नखंपचः । अज गतौ क्षेपणे च । वातमजतीति वातमजः । मदी गर्वग्लपनयोः । इरया माद्यतीति इरंमदः । ओहाक् त्यागे । शर्धं जहतीति शर्धंजहा माषाः । इति खश्प्रत्ययः ।

एजांखश् । एज् ( ष० ब० ) स्वर० मोनु० खश् ( प्र० ए० ) हसे पः एजृ कंपने इत्यादीनां धातूनां खश्प्रत्ययो भवति । खकारो मुमागमार्थः । शकारश्चतुर्वत्कार्यार्थः । उदा० एज् जनपूर्वः जनं लोकं एजयति कंपयतीति विग्रहे धातोः प्रेरणे ञिप्रत्ययः स्वर० तत एजां खशिति खश् अखितिपदस्येति पूर्वस्य मुम् स्वर०

चतुर्वत्त्वात् अप् कर्तरि गुणः एअय् स्वर० अदेइत्यकारलोपः स्वर० जनमेजयः मनु ज्ञाने मन् पंडितपूर्वः आत्मानं पंडितं मन्यते इति पंडितंमन्यः खश्प्रत्ययः अशिच्वादिवादेर्यः खित्त्वान्मुमागमः स्वर० अदे स्वर० एवं सुभगं मन्यः इत्यादि सूत्रम् ।

ख्युट् करणे । धातोः करणेऽर्थे ख्युट् प्रत्ययो भवति ।

ख्युट्करणे । ख्युट् ( प्र० ए० ) हसे पः । करण ( स० ए० ) अइए अक्तस्य निष्पादनं करणमुच्यते । तस्मिन्नर्थे । धातोः ख्युट् प्रत्ययो भवति खकारो मुमागमार्थः । टकार ईबर्थः ।

अभूततद्भावे । आढ्यसुभगस्थूलपलितनग्नांधप्रियेषु कृञः ख्युट् वाच्यः । अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यंकरणं द्यूतम् । सुभगंकरणम् । स्थूलंकरणं किं दधि । पलितंकरणं किं शीतवस्तुसेवनम् । अनग्नः नग्नः क्रियते अनेनेति नग्नंकरणं द्यूतम् । अन्धंकरणं किं सूर्यावलोकनमसकृत् । अप्रियः प्रियः क्रियते अनेनेति प्रियंकरणं मैत्र्यम् । दार्वाहनो अण् वक्तव्यः । तकारस्य च टः । घदादेशो वक्तव्यः । उवम् । दारु आहन्तीति दार्वाघाटः । चारौ वा । चारुं आहन्तीति चार्वाघाटः-चार्वाघातः । कर्मणि संपूर्वाच्च । वर्णान् संहन्तीति वर्णसंघातः । जायापत्योष्टक् । जायापत्योरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति लक्षणवति कर्तरि । जायां हन्तीति जायाघ्नः ना । पतिं हन्तीति पतिघ्नी स्त्री । अमनुष्यकर्तृके च । जायाघ्नः तिलकालकः, कपाले भ्रमरः । पतिघ्नी पादरेखा । पाणिघताडघौ शिल्पिनि निपात्येते । राजघ उपसंख्यानम् ।

कृ नग्नपूर्वः । अनग्नो नग्नः क्रियते अनेनेति विग्रहे ख्युट् युम० खितिपदस्येति खित्त्वान्नुम् समासप्रत्यययोरिति विभक्तिलोपे मुमागमः युवोरनाकाविति अनादेशः गुणः स्वर० पूर्नोणो० ( प्र० ए० ) नपुंसकांतं नग्नंकरणं द्यूतं एवं अस्थूलः थूल : क्रियते अनेनेति स्थूलंकरणं दधि । कृ स्थूलपूर्वः । सूत्रम् ।

भजां विण्। भजसहवहां कर्तरि विण् प्रत्ययो भवति। णकारो वृद्ध्यर्थः।

भजां विण्। भज् (प० व०) स्वर० मोनु० विण् (प्र० ए०) हसे पः। भजां भजादीनां भज् वह्, षह्, शम् इत्यादीनां धातूनां विण्प्रत्ययो भवति कर्त्रुक्तौ विषये। णकारो वृद्ध्यर्थः। भज् सेवायां भज् अर्द्धपूर्वः अर्द्धं भजतीत्यर्द्धभाक् वि- विण्प्रत्ययः णित्त्वादतउपधायावृद्धिः भा अर्द्धभाज् वि इति स्थिते। सूत्रम्।

वेः। वेर्लोपो भवति। भज् सेवायाम्। अर्धं भजतीति अर्धभाक्। चोः कुः। सुखभाग्-दुःखभाक्। वह् प्रापणे। भारं वहतीति भारवाट्-भारवाड् भारवाहौ भारवाहः। भारवाहम् भारवाहौ।

वेः। वि (ष० ए०) ङ्क्तिङस्य स्रो० विप्रत्ययस्य लोपो भवति इत्यनेन वेर्लोपः (प्र० ए०) स् चोः कुः हसे पः वावसाने। अर्द्धभाक् अर्द्धभाजौ अर्द्धभाजः इत्यादि। स्त्रीलिंगेऽप्येवम्। नपुंसकलिंगे तु अर्द्धभाक् अर्द्धभाजी अर्द्धभांजि इत्यादि। अत्र केचित् तत्त्वं पृच्छतीति तत्वप्राट् इत्युदाहरणं पठंति। तदत्र न युज्यते। अग्रे क्विप्रत्ययाधिकारे साधितत्वात्। इह तु भ्रमात् पठंति। वह् भारपूर्वः। भारं वहतीति विग्रहे विण्प्रत्ययः वृद्धिः विलोपः (प्र० ए०) होढः हसेपः वावसाने ढस्यटः भारवाट्-ड्। मधुलिह्शब्दवत् शसादौ स्वरे परे विशेषः।

वाहो वौ। वाहो वाकारस्य औकारादेशो भवति शसादौ स्वरे परे। भारौहः। भारौहा भारवाड्भ्याम् भारवाड्भिः। षह मर्षणे। हो ढः। वावसाने। सहादेः सादिः। इति सूत्रेण त्वरायास्तुरादेशः। तुरां शत्रूणां वेगं सहतेऽसौ तुराषाड्।

वाहोवौ। शसादौ स्वरे वाह इति विण्प्रत्ययांतस्य वहधातोः शसादौ स्वरे परे वा इत्यक्षरस्य कृत्स्नस्य औकारो भवति वा इत्यस्य औ। ओऔऔ। भारौहः भारौहा भारवाड्भ्याम्। होढः झवेजबाः स्वर० भारवाड्भिरित्यादि। षह मर्षणे सहनं आदेः ष्णः स्नः सह विण् प्र० वृद्धिर्वेर्लोपः। (प्र० ए०) होढः।

सहेः षः सो ढि। सहेः सकारस्य षकारो भवति ढि सति।

तुरासाहौ तुरासाहः शसादौ तु अम्बूहः । अन उः । अनकारादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे । शालिवाट्, शाल्यूहः ।

सहेःषःसोढि । सहेः ( ष० ए० ) षः ( प्र० ए० ) सो ( ष० ए० ) ढि ( स० ए० ) सहेर्धातोः सकारस्य षकारो भवति ढकारे परे । कथंभूते ढकारे रसे पदांतेच परे अनेन सस्य षः हसेपः वावसाने तुरां शत्रुवेगं सहते इति तुराषाड् इंद्रः । तुराषाड् तुरासाहौ तुरासाहः भकारादौ सुपि च तुराषाड्भ्या तुराषाड्भिः इत्यादि रूपाणि ज्ञेयानि ।

शमेरपि विण् वक्तव्यः ।

शम् उपशमे । शम् प्रपूर्वः प्रकर्षेण शाम्यतीति प्रशान् विण्‌प्र० वृद्धिः वेर्लोपः ( प्र० ए० ) ।

मो नो धातोः । मान्तस्य धातोर्मकारस्य नकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । शम दम उपशमने । प्रकर्षेण शाम्यतीति प्रशान् प्रशामौ प्रशामः ।

मोनोधातोः । धातोर्मकारस्य नकारो भवति रसे पदांते च वमोश्च इति मस्य नः हसेपः प्रशान् प्रशामौ प्रशामः प्रशान्भ्यां प्रशान्भिः वमोस्तु जंगन्मि जंगन्वः जंगन्मः ।

अभूतद्भावे कृभ्वस्तियोगे नाम्नश्चिवः । अभूतद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नश्चिवः प्रत्ययो भवति । संपद्यकर्तरीति वक्तव्यम् । तेन अगृहे गृहे भवतीति गृहेभवति । चकारश्च्वौ दीर्घ इति विशेषणार्थः । वा चकारः प्रत्ययभेदज्ञापनार्थः । वेः ।

अभूतेत्यादि । न प्रागभूतं अभूतं तस्य तेनैव स्वात्मना भवनं तद्भावः तस्मिन्नर्थे अतथात्वस्य तथाभावे सति कृ भू अस् इत्येतेषां त्रयाणां धातूनां मध्ये एकतरयोगे नाम्नश्चिवप्रत्ययो भवति । चकारः च्विदीर्घईचास्येति सूत्रविशेषणार्थः ।

च्वौ दीर्घ ई चास्य । च्वौ प्रत्यये परे अकारस्य ईकारादेशो भवति, अन्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य । अ-

मिथुनं मिथुनं संपद्यमानं तथा करणं इति मिथुनीकरणम् किं पाणिग्रहणम् । च्व्यन्तत्वादव्ययम् । अव्ययाद्विभक्तेर्लुक् । असहायः सहायः संपद्यमानस्तथा स्यात् इति सहायीस्यात् । अकृष्णः कृष्णः यथासंपद्यमानस्तथाकरोतीति कृष्णीकरोति । हेतूकृतम् । अव्ययस्य न दीर्घत्वम् । अस्वस्ति स्वस्ति यथा संपद्यमानस्तथा स्यादिति स्वस्तिस्यात् । संपद्यकर्तरि किम् । अगृहे गृहे भवतीति गृहेभवति । अलुक् क्वचित् । इति विभक्तेरलुक् ।

च्वौ दीर्घ ईचास्य । च्वौ परे सति अकारव्यतिरिक्तस्वराणां दीर्घ अकारस्य च यद्वा अस्य अवर्णस्य ईकारो भवति अनव्ययस्य तु न उदा० कृ मिथुनपूर्वः अमिथुनं मिथुनं क्रियते इति विग्रहे भावे युट् यु अभूततद्भावे कृ अनेन मिथुनस्याग्रे च्विः ईचास्येति अकारस्य ईकारः युवोरनाकौ गुणः स्वर० वेर्लोपः पुर्नोणो० भावत्वान्नपुंसकलिंगत्वं ( प्र० ए० ) कुलशब्दवत् एवं मिथुनीकरोति मिथुनीभवति । मिथुनीस्यात् । भू शुक्लपूर्वः शुक्लभवनं शुक्लीभावः । घञ् भावे घञ् अ ञित्वाद्वृद्धिः औ भाव स्वर० च्वि अकारस्य ई वेर्लोपः एवं भूयोगे च्वि ( प्र० ए० ) सो० अस् भुवि विधिसंभावनयोः यात् अपृक्त० अदादेर्लुक् नमसोऽस्येत्यलोपः सहायपूर्वः असहायः सहायः स्यादिति विग्रहे च्वि प्र०ईचास्य वेरिति वेर्लोपः सहायी स्यात् क्रियापदं अत्रअस् योगे च्विः कृहेतुपूर्वः अहेतु हेतुतया कृतं हेतूकृतं क्तक्तवतू तम०प्र० च्वौ दीर्घः इति दीर्घः उकारस्य ऊकारः नपुंसकेति ।

च्वौ सलोपश्च । मनस् महस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे । द्वौ नञौ प्रकृत्यर्थमनुसरतः । उत्सुकं मनो यस्यासौ उन्मनाः । न उन्मनाः अनुन्मनाः । अनुन्मनाः उन्मनाः संपद्यमानस्तथाभाव इति उन्मनीभावः । विगतं मनो यस्याऽसौ विमनाः । न विमनाः अविमनाः । अविमना विमनाः संपद्यमानः तथाभाव इति विमनीभावः । न विद्यते मनो यस्यासौ अमनाः । न अमनाः अनमनाः । अनमनाः अमनाः संपद्यमानस्तथा भाव इति अमनीभावः ।

तथा सुमनीभावः सुचेतीभावः महीकरोति अरूकरोति चक्षूकरोति ।

च्वौ । सलोपश्च च्विप्रत्यये परे अरुर्मनश्चक्षुश्चेतोरहोरजसां सकारस्य लोपो भवति सलोपे च कृते पूर्वस्य च दीर्घः अकारस्य ईकारः स्थिरस्य मनसः अमनस्त्वेन भवनं अमनीभावः अरूकरोति, चक्षूकरोति, चेतीकरोति, विरहीकरोति, विरजीकरोति । भू मनस्पूर्वः घञ्भावे अत्र च्विप्रत्यये कृते च्वौ सलोपश्चेति सलोपे कृते अकारस्य च ईकारः। एवं अपरिखा परिखा कृता परीखीकृता कृ कप्र० परिखापूर्वः च्विप्र० च्वौ दीर्घः ईचास्येति अवर्णस्य ईकारः । वेरिति विलोपः ( प्र० ए० ) स्तो० ।

डाच् क्वचिद्व्यक्तव्यः । अभूततद्भावेऽर्थे क्वचित् डाच् प्रत्ययो भवति । अदुःखं दुःखं संपद्यते तत् करोतीति दुःखाकरोति । तथा भद्राकरोति ।

क्वचित्प्रयोगांतरे । कृभ्वस्तियोगे च्व्यर्थे नाम्नो डाच् प्रत्ययो भवति डकारष्टिलोपार्थः चकारः प्रत्ययभेदज्ञापनार्थः । अदुःखिनं दुःखिनं करोतीति दुःखाकरोति सिद्धमेव दुःखिन् पूर्वः डाच् टिलोपः स्वर० एवं सुखाकरोति सपत्राकरोति प्रियाकरोति । भद्राकरणम् । सूत्रम् ।

आतो मनिप्क्वनिप्वनिपः । प्रादौ नाम्नि च प्रयुज्यमाने आकारान्ताद्धातोर्मनिप् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति । सुष्ठु ददातीति सुदामा । राजन्शब्दवद्रूपम् । खसे चपा झसानाम् । अश्वे तिष्ठतीति अश्वत्थामा ।

आतोमनिप्क्वनिप्वनिपः । आत् ( प० ए० ) स्वर० स्तो० मनिप् च क्वनिप् च वनिप् च मनिप्क्वनिप्वनिपः ( प्र० ब० ) स्वर० स्तो० आकारांताद्धातोर्मनिप् क्वनिप् वनिप् एते त्रयः प्रत्यया भवंति कर्तरि । पकारः पित्कार्यार्थः इकार उच्चारणार्थः क्वनिप् इत्यत्र ककारः कित्कार्यार्थः । डुदाञ् दाने दा सुपूर्वः सुष्ठु ददातीति सुदामा मनिप् प्र० सुदामन् ( प्र० ए० ) नोपधायाः हसेपः नाम्नो नोलो० राजन्शब्दवत् साधनार्थः । सूत्रम् ।

स्थामी । इश्च ईश्च ई । दासोमास्थां ह्रस्व इकारो भवति । धागैहाक्पिबतीनां दीर्घ ईकारो भवति तकारादौ किति हसे परे न क्यपि क्विपि वा । क्वनिप्प्रत्ययः । सुष्ठु पिबतीति सु-

पीवा। भूरि ददातीति भूरिदिवा। घृतं पिबतीति घृतपीवा धनदिवा मलसिवा मार्गास्थिवा। घनधीवा सुगीवा दोषहीवा। क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते। सुष्ठु करोतीति सुकर्मा। सुष्ठु शृणोतीति सुशर्मा। अन प्राणने। अत्र क्विप्। प्राणितीति प्राण् प्राणौ प्राणः। हेप्राण्। अनः। पदान्ते वर्तमानस्यापि अनो नस्य णत्वं स्यात्। अधौ इति विशेषणान्नलोपो न शंकनीयः। इण् गतौ। ह्रस्वस्य पितीति नुगागमः। प्रातरेतीति प्रातरित्वा। वनिपि ऽमस्याऽऽत्वं वाच्यम्। जनी प्रादुर्भावे। विजायतेऽसौ विजावा। केवलेभ्योऽपि वनिप्। ओणृ अपनयने। ओणतीति अवावा अवावानौ। ङ्पि वनो नस्य रो वाच्यः। व्रण ङीप्। ओणति सा अवावरी। पारं पश्यतीति पारदृश्वा। पारं पश्यति सा पारदृश्वरी। केवलेभ्योऽपि क्वनिप्। षुञ् अभिषवे। षूङ् प्राणिगर्भविमोचने। सुनोतीति सुत्वा। तुक्। धेट् पाने। धयतीति धीवा। गै शब्दे। गायतीति गीवा। जहातीति हीवा। पीवा।

स्थामी। स्था (ष० ब०) आतो धातोर्लोपः स्वर० मोनु० ई (प्र० ए०। सांकेतिकं। अथवा स्था (ष० ब०) इ (प्र० ए०) ई (प्र० ए०) त्रिपदं अव्ययाद्विभक्तेर्लुक् इश्च ईश्च ई स्था, पा(पाने) गा,मा,हादीनां ईकारो भवति क्विप्प्रत्ययव्यतिरिक्ते किति परे। स्थादीनामाकारस्य इकार ईकारश्च भवति क्वचित्प्रयोगानुसारेण ह्रस्व इकारः। यथास्थितं, सहितं, मितं,प्रमितं, दो अवखंडने, दितं षोंतकर्मणि अवसितं, शोतनूकरणे निशितमित्यादौ। क्वचिद्दीर्घः पापाने पा सुपूर्वः सुष्ठुपिबतीति विग्रहे आतो मनिप् इत्यादिना क्वनिप् प्रत्ययः कित्त्वादाकारस्य ईकारः पाइत्यस्य पी सुपीवन् (प्र०ए०) नोपधायाः हसेपः नाम्नोनो० सुपीवाइति क्वनिबंतः डुदाञ् दाने भूरि पूर्वः भूरिप्रचुरं स्वर्णं वा ददातीति भूरिदा। वा वनिप् प्र० कित्त्वाभावात् स्थामी इतीकारो न राजन्शब्दवत् प्रक्रिया। सूत्रम्।

क्विप्। उपपदे सति असति च सर्वधातुभ्यः क्विप् प्रत्ययो भवति। क्विपः सर्वापहारित्वाल्लोपः। कपावितौ। वेः।

क्विप् । क्विप् ( प्र० ए० ) इसेपः एकपदं । सर्वधातुभ्यः क्विप् प्रत्ययो भवति । ककारो गुणप्रतिषेधार्थः तुग्विधानार्थश्च अन्ये तु प्रत्यया उदाहरणार्थानुसारेण यथायोग्यं धातुभ्यः प्रयोज्याः । क्विप्प्रत्ययस्तु सर्वधातुभ्यो भवतीत्यर्थः । कृ कर्मन्पूर्वः कर्म करोतीति विग्रहे क्विप्र० वि । सूत्रम् ।

ह्रस्वस्य पिति कृति तुक् । ह्रस्वस्य पिति कृति परे तुगागमो भवति । कृति तुक् । कर्म करोतीति कर्मकृत् । अग्निं चिनोतीति अग्निचित् । देवान् स्तौतीति देवस्तुत् । सोमं पिबतीति सोमपाः । सर्वं पश्यतीति सर्वदृक् । दिशाम् । इति कुत्वम् । दिश् अतिसर्जने । दिशतीति दिक् । क्विप् ।

ह्रस्वस्य पिति कृति तुक् । ह्रस्व ( ष० ए०) ङस् स्य पित् ( स० ए० ) स्वर० कृति० (स० ए०) तुक् ( प्र० ए० ) हसेपः। पिति कृति परे ह्रस्वस्य स्वरस्य तुगागमो भवति अनेन धातोः पुरतस्तुगागमो भवति क्विपः सर्वापहारीलोपः इति क्विप्लोपः ( प्र० ए०) हसेपः कर्मन् इत्यत्र नाम्नो० कर्मकृत् । एवं अग्निं चिनोतीति अग्निचित् चिञ्चयने, देवान् स्तौति देवस्तुत् ष्टुञ्स्तुतौ आदेः ष्णः स्नः निमित्ताभावे इति टस्य तः देवपूर्वः क्विप्प्रत्ययः तुगागमः क्विपः सर्वापहारीलोपः। पापाने सोमपूर्वः क्विप्प्र० सोमं पिबतीति सोमपा अत्र दीर्घत्वान्न तुगागमः ( प्र० ए० ) स्तो०। दृशिर्, प्रेक्षणे दृश् सर्व पूर्वः सर्वं पश्यतीति सर्वदृक् क्विप् प्र० क्विपः सर्वापहारी लोपः दिशामिति शस्य कः ( प्र० ए० ) हसे पः सर्वदृक् सर्वदृशौ इत्यादि । श्रिञ्धातुः सेवायां श्रिः सुपूर्वः सुष्ठु श्रयतीति विग्रहे क्विप् ।

वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घः संप्रसारणाभावश्च वक्तव्यः । वक्त्यनया सा वाक् वा उच्यते अनया सा वाक्। प्रच्छ ज्ञीप्सायाम् । तत्त्वपूर्वः । तत्त्वं पृच्छतीति तत्त्वप्राट्। छशषराजादेः षः। छ्वोः शऊ वाच्यौ किति ङिति झसे परेऽनुनासिके क्वौ च। तेन तत्त्वप्राच्छौ तत्त्वप्राच्छः। ष्टुञ् स्तुतौ। आयतं स्तौतीति आयतस्तूः । प्रुङ् गतौ। कटं प्रवतेऽसौ कटप्रूः । जु गतौ । जवतेऽसौ जूः । सुष्ठु श्रयतीति सुश्रीः । वा सुष्ठु श्रीर्यस्यासौ सुश्रीः । श्रयन्ते जना यामिति श्रीः । नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विबन्तेषु पूर्वपदस्योपसर्ग-

स्यान्ते दीर्घो वाच्यः। णह् बन्धने। आदेः ष्णः स्नः। नहो धः। उप समीपे नह्यतीति उपानत्। नितरां वर्ततेऽसौ नीवृत्। व्यध ताडने। ग्रहां क्ङिति च। मर्माणि विध्यतीति मर्मावित्। वृष वृष्टौ। प्रकर्षेण वर्षतीति प्रावृट्। रुचि दीप्तौ। नितरां रोचतेऽसौ नीरुक्। गम्यम्नम्हन्तनादीनां क्विपि अमस्य लोपो वाच्यः क्यपि वा। तुक्। परितः तनोतीति परितत्। कटं चिकीर्षतीति कटचिकीः। चिकीर्षतेः क्विप्। यतः। इत्यकारलोपः। दोषाम्। इति षस्य रेफः। रिलोपो दीर्घश्च। इति मध्यमरेफस्य लोपः। न तु संयोगान्तस्य लोपः। रसे पदान्ते चेति चकारात् रात्सस्य रेफादुत्तरस्य सस्यैव लोपो भवति नान्यहसस्य। स्रोर्विसर्गः। कटचिकीर्षौ कटचिकीर्षः। वह् प्रापणे। यञां यवराणाम्। अनो वहतीति अनड्वान्। क्विबन्ते वह्यनसो, डान्तादेशो वाच्यः। अनड्वाहौ अनड्वाहः। राजृ दीप्तौ। क्विबन्ते राजतौ परे समो मस्यानुस्वाराभावो वाच्यः। तेन सम्यक् राजतेऽसौ सम्राट्। ध्यै चिन्तायाम्। ध्यायतेः क्विपि संप्रसारणं दीर्घता च वक्तव्या। सुष्ठु ध्यायतीति सुधीः। द्युतिगमिजुहोतीनां क्विपि क्वचित् द्वित्वं वाच्यम्। हसादिशेषाभावः। द्योततेः क्वचित्पूर्वस्य क्विपि संप्रसारणं वाच्यम्। द्योततेऽसौ दिद्युत्। गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति जगत्। जुहोतेर्दीर्घश्च जुहोत्यनया सा जुहूः।

वचीति। वच् प्रच्छ स्तुकट प्रुजुश्रीणां दीर्घता भवति चकारात् संप्रसारणाभावः इति स्वरस्य दीर्घः। क्विपः लोपः। सुश्री (प्र० ए०) स्रो० प्रच्छ तत्त्वपूर्वः क्विप् प्र० प्रच्छादेरिति दीर्घः (प्र० ए०) संयोगांतस्यलोपः। छशाष राजादेः षः षोडः हसेपः वावसाने तत्त्वं पृच्छतीति तत्त्वप्राट् तत्त्वप्राच्छौ तत्त्वप्राच्छः। णह् बंधने नह उपपूर्वः उपनह्यते पादयोरिति उपानत् क्विप्र० क्विपि परे नहेर्धातोः

पूर्वस्य उपसर्गस्य दीर्घता च वक्तव्या क्विप्परे इति पाठे क्विप् परो यस्मात् स क्विप्परः ईदृशे नहि धातौ परे उपसर्गस्य दीर्घता च वक्तव्या ( प्र० ए० ) नहोधः हस्य धः हसेपः वावसाने उपानत्-द् उपानहौ इत्यादि हसांतस्त्रीलिंगे चकारात् प्रावृट् प्रवर्षतीति प्रावृट् मर्मावित् गीरुक् इत्यादावपि दीर्घता नहीत्युपलक्षणात् नहिवृतिवृद्धि व्यधिसहितनयका गृह्यंते । कृ कट पूर्वः कटं चिकीर्षतीति विग्रहे इच्छायामिति स प्रत्ययः । ऋत् इर् किर् द्वित्वं पूर्वस्य हसादिशेषः रलोपः कुहोश्चुः चिकिर् य्वोर्विहसे इति दीर्घः किला० कटं चिकीर्ष अग्रे क्विप् यत इति सप्रत्ययस्य अकारस्य लोपः क्विपः सर्वापहारी लोपः (प्र० ए०) संयोगांतस्यलोपः हसेपः स्रो० कटचिकीः कटचिकीर्षौ कटचिकीर्षः । केचित्तु कटचिकीर्ष क्विप् यतः इत्यकारलोपः दोषांरः रिलोपोदीर्घश्च स्रो० एवं साधयंति । ध्यै चिंतायाम् । ध्यै सुपूर्वः । सुष्ठु ध्यायतीति सुधीः । क्विप् । प्र० ध्यायते ध्यै चिंतायामित्यस्य धातोः क्विपि परे संप्रसारणं भवति दीर्घस्य दीर्घ ईकारः ध्यै इत्यस्य धी क्विप्लोपः ( प्र० ए० ) स्रो० सुश्री शब्दवत् । सूत्रम् ।

**दृशेष्टक्सकौ चोपमाने कार्ये । दृशेर्धातोः सर्वादिषु टक्सकौ प्रत्ययौ भवतः उपमाने कार्ये सति । चकारात् क्विप् वक्तव्यः ।**

**दृशेष्टक्सकौ चोपमाने कार्ये** । दृश् ( पं० ए० ) ङितिङस्य स्रो० टक् च सक् च ( प्र० ए० ) स्वर० पश्चाद्विसर्जनीयस्यसः ष्टुभिः ष्टुः च ( प्र० ए० ) अव्य० उपमान ( स० ए० ) अइए सिद्धम् । दृशेर्धातोः टक्सकौ प्रत्ययौ भवतः चकारात् तृतीयरूपे क्विप् प्रत्ययोऽपि भवति कार्ये कर्मोक्तौ उपमाने वाच्ये सति दृश् अन्य इव दृश्यते इति विग्रहे एकत्र टक् प्र० टकारोऽनुबंधार्थः । ककारो गुणनिषेधार्थः । सूत्रम् ।

**आ सर्वादेः । एतेषु प्रत्ययेषु परेषु सर्वादेः पूर्वस्य टेरात्वं भवति । दृशिर् प्रेक्षणे । अन्य इव दृश्यतेऽसौ अन्यादृशः । छशषराजादेः षः। षढोः कः से । क्विन्नात् । अन्यादृक्षः, अन्यादृक् । स इव दृश्यतेऽसौ तादृशः-तादृक्षः-तादृक् । य इव दृश्यतेऽसौ यादृशः-यादृक्षः-यादृक् । एष इव दृश्यतेऽसौ एतादृशः-एतादृक्षः-एतादृक् ।**

**आ सर्वादेः**। ( प्र० ए० ) सांके० सर्वादि ( ष० ए० ) ङितिङस्य एतेषु टक्सक् क्विप् प्रत्यये परे सर्वादेः सर्वादि शब्दगुणस्य पूर्वपदस्य धातोरादौ वर्तमानस्य

सतः टेः आत्वं भवति स्वर० (प्र० ए०) स्रो० अन्यादृशः द्वितीये सक् प्र० टेरात्वं। दिशामिति शस्य कः किला० कषसंयोगे क्षः (प्र०ए०) स्रो० अन्यादृक्षः तृतीयरूपे क्विप्प्र० टेरात्वं क्विप्लोपः (प्र०ए०) दिशां हलेपः अन्यादृक् टित्त्वादीप् अन्यादृशी। एवं स इव दृश्यते इति तादृशः तादृक्षः तादृक् तत्पूर्वः। सूत्रम्।

किमिदमः कीश्ईशौ। किम्शब्दस्य इदम्शब्दस्य च कीश् ईश् इत्येतावादेशौ भवतः टकारादिषु प्रत्ययेषु परेषु। शकारः सर्वादेशार्थः। क इव दृश्यतेऽसौ कीदृशः-कीदृक्षः-कीदृक्। अयमिव दृश्यतेऽसौ ईदृशः-ईदृक्षः-ईदृक्। ईदृशी वार्ता। सर्वादित्वाट्टेरात्वम्। भवदादिषु दृशेष्टकारादयः पूर्वस्य टेर्दीर्घता च वक्तव्या। भवानिव दृश्यतेऽसौ भवादृशः-भवादृक्षः-भवादृक्। चकारात् एतेषु प्रत्ययेषु परेषु समानशब्दस्य सो वाच्यः। समान इव दृश्यतेऽसौ सदृशः-सदृक्षः-सदृक्।

किमिदमः कीश्ईशौ। किं च इदं च किमिदम् तस्य (ष० ए०) स्वर० स्रो० की च ई च की कीपूर्वः शकारः कीश् शकारोऽनुबंधः उभयत्रापि योज्यते कीश् (प्र० ए०) हलेपः केचित्तु किमिदमः कीशीश् एवं सूत्रं पठंति। एतेषु प्रत्ययेषु परेषु दशिधातोः पूर्वयोः किम् इदम् शब्दयोः कीश् ईश् इत्येतावादेशौ भवतः यथासंख्येन किम्शब्दस्य कीश् इदम्शब्दस्य ईश्। शकारः सर्वादेशार्थः आदेशभेदज्ञापनार्थः। दृश् किम्पूर्वः क्रमेण टक्सक्क्विप्प्रत्ययाः। क इव दृश्यते इति विग्रहे किमः की आदेशः। कीदृशः कीदृक्षः कीदृक् शेषं प्राग्वत्। एवं इदम्पूर्वः इदमः ई आदेशः। अयमिव दृश्यते ईदृशः ईदृक्षः ईदृक्। भवदादिषु प्राक्पदेषु सत्सु इवार्थे उपमानेऽर्थे दृशेर्धातोः टक्सक्क्विप्प्रत्यया भवंति पूर्वपदस्य टेः आत्वं भवतीत्यर्थः। भवानिव दृश्यते भवादृशः भवादृक्षः भवादृक् अहमिव दृश्यते इति मादृशः मादृक्षः मादृक्। दृश् अस्मद् पूर्वः त्वन्मदेकत्वे इति मदादेशे कृते पश्चाट्टेराकारः। एवं त्वमिव दृश्यते इति त्वादृशः त्वादृक्षः त्वादृक्। चकारात् समान इत्यस्य स आदेशः समान इव दृश्यते इति सदृशः सदृक्षः सदृक्। वयमिव दृश्यते इति अस्मादृशः अस्मादृक्षः। यूयमिव दृश्यते इति युष्मादृशः। सूत्रम्।

अदसोऽमू आदेशः। अदस् शब्दस्य ठगादिषु सत्सु अमू-

आदेशो भवति किति परे । असाविव दृश्यतेऽसौ अमूदृशः-अमूदृक्षः अमूदृक्-ग् । प्रत्ययोत्तरपदयोः परतो युष्मदस्मदोरेकत्वे त्वत् मत् इत्येतावादेशौ भवतः । त्वमिव दृश्यते ऽसौ त्वादृशः-त्वादृक्षः-त्वादृक्-ग् । अहमिव दृश्यतेऽसौ मादृशः-मादृक्षः-मादृक्-ग् । त्यादेष्टेरस्यादौ इत्यकारः । यूयमिव दृश्यतेऽसौ युष्मादृशः-युष्मादृक्षः-युष्मादृक् । वयमिव दृश्यतेऽसौ अस्मादृशः-अस्मादृक्षः-अस्मादृक् । टकारानुबन्धत्वादीप् । तादृशी यादृशी एतादृशी त्वादृशी मादृशी अन्यादृशी युष्मादृशी अस्मादृशी भवादृशी इत्यादि । णिनिरतीते । धातोरतीते काले शीलेऽर्थे च णिनिप्रत्ययो भवति ।

णिनिरतीते । णिनि ( प्र० ए० ) सो० अतीत ( स० ए० ) अइए पश्चात्यामिथोरः स्वर० धातोः अतीते गते काले णिनिप्रत्ययो भवति शीले स्वभावे ऽर्थे । णिनिरित्यत्र णकारो वृद्ध्यर्थः । इकारः प्रत्ययभेदज्ञापनार्थः ।

करणे उपपदे यजेर्णिनिर्वाच्यः । इनां शौ सौ । अग्निष्टोमेन इयाज इति वा अग्निष्टोमेन अयाक्षीत् इति अग्निष्टोमयाजी । वा अग्निष्टोमं यष्टुं शीलं यस्य सः अग्निष्टोमयाजी । अश्राद्धं भुङ्क्ते इत्येवंशीलः अश्राद्धभोजी । अर्धं भुङ्क्ते इत्येवंशीलः अर्धभोजी । सुखभोजी । उष्णं भुङ्क्ते इत्येवंशीलः वा भुक्तवान् इति उष्णभोजी । हनो घत् । हन्तेर्निन्दायां णिनिर्वाच्यः । पितरं जघान वा अवधीत् इत्येवंशीलः पितृघाती । दण्डिन्शब्दवद्रूपं ज्ञेयम् । कर्तर्युपमाने णिनिर्वाच्यः । अभ्र इव पततीति अभ्रपाती । मत्त इव करोतीति मत्तकारी । हंस इव गच्छतीति हंसगामी । स्त्री चेत् हंसगामिनी । ईप् ।

कर० । यज् पूजा० यज् अग्निष्टोमपूर्वः । अग्निष्टोमं इष्टवान् यष्टुं शीलमस्येति

वा अग्निष्टोमयाजी णिनिप्र० इन् णित्त्वाद्वृद्धिः स्वर० इनां शौ सौ हसेपः नाम्नोनो० दंडिन् शब्दवत् । सूत्रम् ।

क्विप्क्वनिप्डाः । धातोरतीते काले शीलेऽर्थे च क्विप्क्वनिप्डा इत्येते प्रत्यया भवन्ति । क्विप् । वृत्र ब्रह्म भ्रूण एतत्पूर्वकादेव हन्तेः क्विप् स्यात् । अतीते एव । वृत्रं हतवानिति वृत्रहा । ब्रह्महा । भ्रूणहा । अन्यत्र शत्रुघातीत्यत्र णिनिः । शत्रुं हन्तीत्येवंशीलः शत्रुघाती । सुष्ठु करोतिस्मासौ सुकृत् । कर्मकृत् पापकृत् पुण्यकृत् शास्त्रकृत् । सोमं सुनोति स्मासौ सोमसुत् । अग्निं चिनोतिस्मासौ अग्निचित् । इत्येते क्विबन्ताः । क्वनिप् । युधि संप्रहारे । राजानं युध्यतेस्मासौ राजयुध्वा । राजानं करोतीत्येवंशीलः राजकृत्वा । सह युध्यतेस्माऽसौ सहयुध्वा । सहकृत्वा । षुञ् प्राणिप्रसवे । क्वनिप् तुक् । कित्त्वाद्गुणाभावः । सुनोति स्मासौ सुतवान् इति सुत्वा । स्तुत्वा । यजतिस्मासौ यज्वा । पारमद्राक्षीत् इति पारदृश्वा । इत्येते क्वनिबन्ताः । जनी प्रादुर्भावे ।

क्विप्वनिप्डाः । क्विप्च कनिप्च डश्चक्विप्क्वनिप्डा ( प्र० ब० ) सवर्णे० स्रो० वृत्तिः सुगमा हन् हिंसागत्योः हन वृत्रपूर्वः वृत्रं वृत्रासुरं हतवान् इति विग्रहे क्विप्प्र० क्विपः सर्वापहारी लोपः ( प्र० ए० ) इनांशौसौ हसेपः नाम्नो० वृत्रहा वृत्रहणौ । एवं ब्रह्महा भ्रूणहा पूर्वं क्विप्प्रत्ययो वनिप् प्रत्ययश्च वर्त्तमाने काले उक्तः अत्र तु अतीते काले इति न पौनरुक्त्यम् । यज् वनिप् प्र० वन् स्वर० यज्वन् ( प्र० ए० )। नोपधायाः। हसेपः नाम्नोनो इष्टवान् इति यज्वा यज्वानौ ।

सप्तम्यां जनेर्डः । सप्तम्यां जनेर्धातोर्डः प्रत्ययो भवति अतीते काले । सरसि जायते स्म तत् सरसिजं पद्मम् । अलुक् क्वचित् । सरसि जातं सरोजम् । संस्कारजः प्रजा अजः द्विजः । परितः खाता इति परिखा । प्रकर्षेण जाय-

तेस्मेति प्रजा । सर्वं गतवान् इति सर्वगः वा सर्वं गच्छतिस्मासौ सर्वगः । गै शब्दे । साम गीतवान् गायतिस्मासौ सामगः । इति डप्रत्ययान्ताः । इति कर्त्रर्थप्रक्रिया ।

जनी प्रादुर्भावे । जन् सरसिपूर्वः डप्र० अडित्त्वाट्टिलोपः स्वर० सरसिजातं सरसिजं अलुक् क्वचिदिति सप्तम्या अलुक् नपुंसके कुलशब्दवत् ज्ञाअवबोधने ज्ञा सर्वपूर्वः डप्र० टिलोपः स्वर०( प्र०ए० ) स्तो० सर्वं ज्ञातवान् इति सर्वज्ञः । गम्लृगतौ गम् सामन्पूर्वः साम वेदं गतवान् ज्ञातवान् गीतवानिति विग्रहे ये गत्यर्थास्ते ज्ञानार्था इति डप्र० टिलोपः स्वर० नाम्ना० सामगः । एवं सर्वत्र गतवान् सर्वगः । इति कर्त्रर्थप्रक्रिया ।

अथ निष्ठाप्रक्रिया । क्तक्तवतू । धातोरतीते काले क्तक्तवतू प्रत्ययौ भवतः । भावकार्ययोः क्तः । क्तवतुः कर्तर्येव । कृतो घटः । कृतवान् घटम् । उकारो नुम्विधानार्थः । आगतं स्थितं देवदत्तेन । भावे नपुंसकान्तम् ।

अथ निष्ठाप्रक्रिया।सूत्रम्।क्तक्तवतू क्तश्च क्तवतुश्च क्तक्तवतू(प्र०द्वि०)औपू सवर्णे०। धातोः अतीते गते काले क्तक्तवतू इत्येतौ प्रत्ययौ भवतः । तत्र क्तप्रत्ययो भावे कर्मणि च भवति क्तवतुश्च कर्तरि । ककारो गुणप्रतिषेधार्थः । डुकृञ् करणे। कृ क्त प्र० त ( प्र० ए० ) स्तो० कृतः कटः कारुकेण अत्र कर्मणिक्तः क्तवतु उकारो नुम्विधानार्थः तवत् ( प्र० ए० ) त्रितोनुम् अत्वसोः सौ दीर्घः हसेपः संयोगांतस्यालोपः चकार इति कृतवान् ष्ट्रितः स्त्रीचेत् कृतवती अत्र कर्त्तरि क्तवतुः गम् कृत दात्तानामितिम लोपः देवदत्तेन आगतं अत्र भावे क्तः नपुंसकलिंगे भावे विहितस्य क्तप्रत्ययस्य नपुंसकलिंगता व० ष्ठा आदेः ष्णःस्नः स्था क्त प्र० स्थामीति ह्रस्व इकारः । देवदत्तेन स्थितम् । सूत्रम् ।

गत्यर्थादकर्मकाच्च कर्तरि क्तः । गत्यर्थादकर्मकाच्च धातोः कर्तरि क्तः प्रत्ययो भवति चाद्भाव कर्मणोः । स्थितः । शान्तः । दान्तः ।

गत्यर्थादकर्मकात्कर्तरि क्तः । गतिरर्थोयस्य स गत्यर्थस्तस्मात् (पं०ए०) हसिरत् सवर्णे । न विद्यते कर्मेत्यकर्मकः तस्मात् ( पं० ए० ) हसिरत् मध्ये

चपा० स्वर० । च ( प्र० ए० ) अव्य० पश्चात् स्तोश्चुभि० स्वर० । कर्त्तृ ( स० ए० ङौरः स्वर० क्त ( प्र० ए० ) स्रो० गत्यर्थो धातुरठ गतावित्यादिः अकर्मकश्च लज्जा-सत्तादिः एवं द्विविधादपि धातोः कर्त्तरि क्तप्रत्ययो भवति । उदा० अट् क्तप्र० कृत इतीडागमः। अटित ( प्र० ए० ) स्रो० अत्र गत्यर्थत्वात् क्तप्र० ष्ठा स्था क्त स्यामीति इकारः स्थितः । अत्र अकमर्कत्वात् क्तप्र० शम दम उपशमे शम् क्त शमादीर्घः न-श्चा० शांतः । एवं दम् दांतः । टुवम् वांतः । अकर्मकत्वात् कर्त्तरि क्तः । मदेर्न दीर्घता तेन मत्त इति रूपम् । सूत्रम् ।

क्तो वा सेट् । क्तः प्रत्ययो वा किद्भवति । द्युत द्योतने । प्रद्योतितः । प्रद्युतितः । रोदितः । रुदितः । मोषितः । मुषितः । ग्रहीतः । ग्रहीतः ।

क्तोवासेट् । क्त ( प्र० ए० ) स्रो० वा ( प्र० ए० ) अव्य० हवे उओ । सेट् सह इटा वर्त्तमानः सेट् ( प्र० ए० ) हसेपः । इट्सहितः क्तप्रत्ययो वा किद्भवति कित्त्वे सत्यपि विकल्पेन कित्त्वं कल्पनीयं कित्त्वाद्गुणप्रतिषेधः । यत्र कित्त्वं न तत्र गुणो भवति । द्युत दीप्तौ । द्युत् २ प्रपूर्वः कर्त्तरि क्तः कृतइतीडागमः एकत्र कित्त्वाभावस्तत्र गुणः उपधाया लघोः कित्त्वपक्षे गुणाभाव । प्रद्योतितः प्रद्युतितः। रुदिर् अश्रुविमोचने। रुद् रोदितः रुदितः। मुष् स्तेये मोषितः मुषितः। एवं नोदितः नुदितः। वेदितः विदितः। ग्रह क्तक्तवतू इति क्त प्र० ग्रहां क्ङिचेति संप्रसारणं कृतइतीडागमः इटोग्रहामिति इ-कारस्य ईकारः स्वर० ( प्र० ए० ) स्रो० गृहीतः । सूत्रम् ।

वृतः । उवर्णान्तादृवर्णान्ताच्छ्रियश्च धातोः क्तप्रत्ययस्येड् न भवति । वृतः । मृतः । भृतः । श्रितः ।

वृत् । ( ष० ए० ) स्वर० स्रो० एकपदं वुः से इति सूत्रात् वुरित्यनुवर्त्तते क्वापि वृ । श्रितः कितः इति सूत्रं दृश्यते। उवर्णान्तात् ऋवर्णांतात् श्रिञश्च धातोरिति वचनात् कृत इति सूत्रेण प्राप्तस्य इटो निषेधः । एवं नुतः मृतः । सूत्रम् ।

आदीदितः । आदित ईदितश्च परस्य क्तस्येड् न भवति ।

आदीदितः। आच्च ईच्च आदीतौ तौ इतौ यस्यस आदीदित् तस्मात् ( पं०ए० ) स्वर० स्रो० आकारानुबंधात् ईकारानुबंधाच्च धातोः परस्य कितः प्रत्ययस्य इडा-गमो न भवति ।

ञीतां तक् वर्तमानेऽपि । ञीतां धातूनां मतिबुद्धिपूजार्था-

नां च वर्तमानेऽपि तक्प्रत्ययो भवति । अपिशब्दाद्भाव-
कर्मणोश्च ।

ञीतां । ञि इत् येषां ते ञीतस्तेषां धातूनां वर्त्तमाने काले अर्थेऽपि शब्दा, दतीतेऽप्यर्थे तक् प्रत्ययो भवति। ञिमिदाधातुः स्नेहने भ्रक्षणे । ञिकार आकारश्च अनुबंधौ । मिद् ञ्यनुबंधत्वात् तक् प्र० आकारानुबंधत्वात् इट् निषेधः । मिद् त इति स्थिते । सूत्रम् ।

दस्तस्य नो दश्च । दकारादुत्तरस्य कितस्तस्य नत्वं भवति । चकाराद्दकारस्य नकारो भवति । ञिमिदा स्नेहने । मिन्न-मन्नं तैलेन वर्तते । ञिष्विदा गात्रप्रक्षरणे । आयासेन प्र-स्विन्नः । ञिक्ष्विदा संचूर्णने । क्ष्विण्णः ।

द् (पं० ए०) स्वर०लो० तत् (ष० ए०) ल्सुस्य पश्चाद्विसर्जनीयस्सः । न (प्र० ए०) लो० द् (ष० ए०) स्वर० लो० च (प्र० ए०) अव्य० दकारात्साद्धातोः परस्य कितस्तकारस्य नकारो भवति धातुसंबंधिनो दकारस्यापि नकारः इति तक्संबधितस्य नः दस्य च नः स्वर० (प्र० ए०) अतोऽम् नपुंसकांतं । अन्नं तैलेन मिन्नं स्निग्धं वर्त्तते इत्युदाहरणं । एवं ञिष्विदा धातुः गात्रप्रक्षरणे प्रस्वेदने । ष्विद् । आदेः ष्ण स्नः। स्विद् ञ्यनुबंधत्वात्तक् आदीदित इति आकारानुबंधत्वादिट् निषेधः। दस्तस्येति दकारतकारयोर्नकारः। प्रपूर्व । आयासेन खेदेन प्रस्विन्नः। ञिक्ष्विदा संचूर्णने पेषणे । क्ष्विद् तक्प्र० दकारतकारयोर्नकारः पूर्नो० अवकुप्यतरेपीति धातोर्नस्य णत्वे ष्टुभिः ष्टुरित्युत्तरनकारस्य णकारः स्वर० क्ष्विण्णः चूर्णित इत्यर्थः मदी हर्षे इत्यस्य तु दकारतकारयोर्नकारो न । तेन मत्तः इति रूपम् ।

अदो जघुः । जग्धम् ।

अदो० । अद् भक्षणे इत्यस्य धातोर्जघुरित्ययमादेशो भवति तकारादौ किति परे । अद् क्त प्र० जघ् आदेशः तयोर्द्धः झभेजबाः घस्यगः स्वर०( प्र० ए० अतो अम् अमूशसो० मोनु० जग्धमन्नं । सूत्रम् ।

रः । रेफादुत्तरस्य तकारस्य नत्वं भवति । कॄ विदारणे । कॄ हिंसायां । ऋत इर् य्वोर्विहसे । विकीर्णः । जॄष् झॄष् वयोहानौ । जीर्णं झीर्णं शरीरम् ।

रः । (पं० ए०) स्वर० लो० रेफात् रकारात् परस्य कितः तकारस्य

कारो भवति। उदा० कॄ विक्षेपे विकरणे हिंसायां वा तम० त ऋतइर् र इति सूत्रेण त-स्य नः विपूर्वः य्वोर्विहसे इति दीर्घः रावपोद्धिः जलतुंबि० विकीर्णं ( प्र० ए० ) अतोऽम् जॄष्धातुझॄष्धातुश्च वयोहानौ वार्द्धक्ये। षकारो षित्कार्यार्थौ। जॄ क्तम० ऋतइर् रकारांतत्वात् रः इति सूत्रेण तस्य नः य्वोर्विहसे गुनोणो० रावपोद्धिः जल० जीर्णं शरीरं एवं झॄष् झीर्णं। क्तक्तवतू०। क्तक्तवतू (प्र० द्वि० ) निष्ठा (प्र०ए०) क्त-क्तवतू निष्ठा संज्ञकौ स्तः। सूत्रम्।

ल्वाद्योदितः। ल्वादेरोदितश्च धातोस्तो नो भवति। लूनः। क्षि क्षये। क्षीणः। ग्लानः। म्लानः। हीनः।

ल्वाद्योदितः। लू ओदित्। लू आदिर्यस्य स ल्वादिः ओकार इत् यस्य सः। ओदित्। ल्वादिश्च ओदितश्च ल्वाद्योदित् तस्मात् ( पं० ए० ) स्वर० स्रो० ल्वादयो धातुपाठोक्ताः ओदितश्च ओहाक्त्यागे ओहाङ् गतौ ओप्यायी वृद्धौ इत्यादयस्तेभ्यः परस्य कितस्तकारस्य नकारो भवति। उदा० लूञ् छेदने लू क्तक्तवतु त ल्वाद्योदितइति तस्य नः ( प्र० ए० ) स्रो० लूनः। क्षिक्षये क्षि क्तम० शमां दीर्घः। केचित्तु भच्छादे दीर्घता च ल्वाद्यो०इति तस्य नः। णु० क्षीणः। ग्लै हर्षक्षये ग्लै क्तम० संध्यक्षराणामा इत्यस्य ग्ला ल्वाद्यो० इति तस्य नः ( प्र० ए० ) ग्लानः। एवं म्लै गात्रविनामे म्लानः। ओहाक् त्यागे हा क्तम० स्थामी ल्वाद्यो इति तस्य नः। हीनः। ओप्यायी धातुर्वृद्धौ प्याय् क्तम०। प्यायःपी। प्यायी इत्यस्य धातोः पी इत्यादेशो भवतीति प्या स्थाने पी। ल्वाद्यो० इति तस्य नः। पीनः एवं दीनः लीनः उड्डीनः मीनः दूनः मग्नः। सूत्रम्।

दोदत्ति। दा इत्यस्य दद्भवति किति तकि परे। दत्तः दत्तवान्।

दोदत्ति। दो ( ष० ए० ) आतो धातोरित्यालोपः स्वर०. स्रो० दत् (प्र० ए० ) हसेपः त् ( स० ए० ) स्वर० दाञ्दाने इत्यस्य धातोस्तकारादौ किति परे दत् आदेशो भवति दा क्त दत् आदेशः स्वर० स्रो० दत्तः। क्तवतुप्रत्ययो दत्तवान् भवच्छब्दवत्। सूत्रम्।

स्वरात्तो वा। स्वरादुत्तरस्य दाइत्यस्य तो वा भवति किति परे। प्रत्तः। प्रदत्तः। अवत्तं। अवदत्तं नाम्यन्तोपसर्गस्य दीर्घो भवति। ददातेस्तो वाच्यः। नितरां दीयते स्म तत् नीतं, नीदत्तम्। पर्यासमन्ताद्भावेन दीयते स्म

तत् परीत्तं । परीदत्तं । दधाते र्हिर्निष्ठायां वाच्यः । धीयते स्मासौ हितः । दधाति स्मासौ हितवान् । जहातेश्च किति । जहातेर्धातोः किति प्रत्यये परे हिरादेशः स्यात् । तेन पूर्वं हित्वा हीयते स्मासौ हितः । अहासीदिति हितवान् । यजां यवराणां संप्रसारणं । छशषराजादेः षः । इष्टं । टुवप् बीजतंतुसंताने । उप्तं बीजं । वह् प्रापणे । संप्रसारणं । होढः । ढत्वं । तथोर्धः । ष्टुत्वं । ढि ढो लोपः । ऊढोऽनडुहा पंगुः । व्येञ् संवरणे । संवीतः । ह्वेञ् आह्वाने । आहूतः । वद व्यक्तायां वाचि । उदितः । उक्तः ।

स्वर० । ( पं० ए० ) इतिरत् सवर्णे० त ( प्र० ए० ) स्लो० वा (प्र० ए०) अव्य० सस्वरात् उपसर्गात्परस्य दाधातोः त् इत्यादेशो वा भवति पक्षे वा दत् इत्यादेशो भवति तकारादौ किति परे । दा प्रपूर्वः एकत्र त् एकत्र दत् क्तप्र० । प्रत्तं प्रदत्तं । एवं अवपूर्वः अवत्तं अवदत्तं चेति रूपद्वयं । प्रादायि इति प्रत्तं प्रदत्तं । एवं उपात्तं उपादत्तं । यज् देवपूजासंगति० यज् क्तप्र० त । यजां यवराणामिति संप्रसारणं । यकारस्य इकारः छशषराजादेरिति षत्वं । ष्टुभिः ष्टुः । इष्टं क्तवतुप्रत्यये इष्टवान् । टुवप्धातुः बीजसंताने अन्नादिवपने इत्यर्थः । टुकारः ड्वितोथुरिति कार्यार्थः। वप् क्तप्र० यजामिति वस्य उः। स्वर०(प्र०ए०) अतो अम् उप्तं बीजं अवापि इत्यर्थः । वह प्रापणे। वह क्तप्र० यजामिति वस्य उः। होढः तथोर्द्धः ष्टुभिः ष्टुः ढि ढो लोपो दीर्घश्च ढलोपः उकारस्य ऊकारः ( प्र० ए० ) स्लो० ऊढः अनडुहा वृषभेण पंगुः खंजः पुमान् ऊढः। व्येञ् संवरणे। व्ये संपूर्वः क्तप्र०किन्त्वात् यजामिति संप्रसारण० सस्वरस्य संप्रसारणं दीर्घे च दीर्घ इति व्ये इत्यस्य वी। संवीतः। ह्वेञ् आह्वाने आङ्पूर्वः। क्तप्र० संप्रसार० ह्वे इत्यस्य हू ( प्र० ए०) स्लो० आहूतः एवं आहूतवान् । आहूयते स्म इत्याहूतः। आजुहाव इत्याहूतवान्। वद व्यक्तायां वाचि। वद क्तप्र०कृत इतीडागमः। किन्त्वात् संप्रसारणं वस्य उः ( प्र०ए०) अतोअम् उदितं। वच क्तप्र० संप्रसारणं चोः कुः स्वर० उक्तः ।

वसिक्षुधोरिट् । वसिक्षुधोर्द्वयोर्धात्वोरिडागमो भवति क्ते क्तवतौ च । उषितः । क्षुधितः । सुप्तः ॥

वसिक्षुधो० । ( प० द्वि० ) इट् ( प्र० ए० ) यद्यपि धातुपाठे वसिक्षुधो

एतौ द्वौ धातू अनुदात्तौ अनिटौ कथितौ, तथापि तयोरिडागमो भवति। वस् निवासे क्तप्र० संप्रसा० वसिक्षुधोरितीडागमः षत्वादेशः अवात्सीदिति उषितः। एवं क्षुध् बुभुक्षायां क्षुधितः। ञिष्वप् शये आदेः ष्णः स्नः स्वप् क्तप्र० संप्रसा० सुप्तः।

त्राणाद्या निपात्यंते। त्राणः। त्रातः। ह्रीणः। ह्रीतः। निर्वाणः। निर्वातः। घ्राणः घ्रातः। परिवृढः। जनेर्जा। जातः।

त्राणाद्याः शब्दाः अतीते काले अर्थविशेषे सिद्धा एव वा निपात्यंते त्रै रक्षणे इत्यस्य त्राणः त्रातः इति रूपद्वयं। त्रै क्तप्र० संध्यक्षराणामा त्रात्वपक्षे क्तप्रत्ययेन सहैव त्राण इति निपात्यते। एवं ह्रीलज्जायामित्यस्य ह्रीणः ह्रीतः। वा धातुः गतिगंधनयोः निर्पूर्वः निर्वाणः निर्वातः। एवं घ्राणः घ्रातः वित्तः विन्नः उत्तः उन्नः नुत्तः नुन्नः।

संपर्युपेभ्यः करोतेर्भूषणे सुट्। संस्कृतः। परिष्कृतः। उपस्कृतः।

संपर्युपेभ्य इति। सम्, परि, उप् इत्येतेभ्य उपसर्गेभ्यः परस्य करोतेर्धातोः भूषणे अलंकरणेऽर्थे सुडागमो भवति टित्त्वादादौ उकार उच्चारणार्थः कृतः क्रमेण संपरि उप् पूर्वः क्तप्र० सर्वत्र सुडागमः स्वर० संस्कृतः परिष्कृतः, उपस्कृतः अलंकृत इत्यर्थः। जनेर्जा जनी प्रादुर्भावे इत्यस्य जा आदेशः क्तप्र० जातः। एवं खन् खन् इत्यस्य खा आदेशः। खातः।

पचो वः। पक्वः।

पचो वः। पचेर्धातोरतीतेऽर्थे व प्रत्ययो भवति क्तप्रत्ययार्थे यद्वा क्त प्रत्ययस्यैव व इत्यादेशो भवति। चोः कुः। पक्वः।

शुषेः कः। शुष्कः।

शुषेःकः। शुष्शोके इत्यस्य क्तप्र० शुष्कः।

स्फायः स्फी। स्फीतः।

स्फायः स्फी। स्फायेर्धातोः क्तप्रत्यये परे स्फी इत्यादेशो भवति। स्फायी वृद्धौ स्फाय क्त प्र० स्फी आदेशः स्फीतः। क्षै क्षये संध्याक्षराणामा० क्षायतेर्मप्र० क्षामः। इति।

क्वसुकानौ णबेवत्। धातोः क्वसुकानौ प्रत्ययौ भवतः अतीते काले। तौ च णप् ए इति वद्भवतः। णवादिवद्भावो नः। बिभिद्वान्। चकृवान्। चक्राणः।

क्वसुकानौणबेवत् । क्वसुश्च कानश्च क्वसुकानौ ( प्र० द्वि० ) ओऔऔ णप्च एच णबे णबेभ्यां तुल्यौ वर्तेते इति णबेवत् ( प्र० ए० )अव्य० धातोरतीते काले क्वसुकानौ प्रत्ययौ भवतः तौच णप् एवत् भवतः यथा आख्यातपरस्मैपदिनां धातूनां परोक्षे णप् तथा अत्रापि तेषां परस्मैपदिनां क्वसुः। यथा चात्मने पदिनां ए आते तथात्र कानः उभयपदिनां उभावपि आख्याते तु णप् ए इत्येतयोः प्रथमपुरुषः ककारो गुणनिषेधार्थः क्वसोः उकारो नुम्विधानार्थः णबादित्वाद्विर्वचनं नतु वृद्धिः उदा० विद्ज्ञाने क्वसुकानाविति परस्मैपदित्वात् क्वसुप्र० वस् णबादित्वाद्वित्वं नामसंज्ञायां स्यादिर्विभक्तिः। निविद्वस् स् इति स्थिते उकारानुबंधित्वाद्वितोनुमिति नुमागमः। न्संमहत इति दीर्घः हसेपः संयोगांतस्येति सलोपः। विविद्वान् विविद्वांसौ विविद्वांसः । विविद्वांसं विविद्वांसौ शसादौ स्वरे तु वसोर्वंउः किलात्षः सः स्वर०विविदुषः विविदुषा भकारादौ वसांरसे विविद्वद्भ्यामित्यादि विवेद इति विविद्वान् । एवं भिदिर् विदारणे भिद् क्वसु द्वित्वं चपानां जबचपाः भस्य बः शेषं पूर्ववत् ।बिभेद इति बिभिद्वान् कृ क्वसु प्र० वस् णबादित्वात् द्वित्वं रइति पूर्वऋकारस्य अकारः कुहोश्चुः चकृवत् ( प्र०ए०) न्वितोनुम् न्संमहतोदीर्घः हसेपः संयोगानास्यलोपः।चकृवान् चकार इत्यर्थः। चकृवांसौ इत्यादि शसादौ स्वरे तु वस्य उत्वे कृते ऋरं स्वर० किला० चक्रुषः चक्रुषा। इत्यादि आत्मनेपदे कानप्र० आन द्वित्वं रः कुहोश्चुः ऋरं०स्वर० षुर्नो० ( प्र० ए० ) सो० चक्राणः चक्रे इत्यर्थः देववत् । षद्लृविशरणे आदेः ष्णः स्नः आङ्पूर्वः वसुप्र० द्वित्वं लोपः णपांकित्येचास्येति पूर्वपदस्य लोपः अकारस्य च णकारः। क्रादेर्णादेः कृत इति इडागमः स्वर० ( प्र०ए०) नुमादिकं प्राग्वत् । आसेदिवान् आसेदिवांसौ इत्यादि । शसादौ वसोर्वंउः निमित्ताभावे नैमित्तिकस्याप्यभावः इति वचनात् ढिढोलोपः स्वर० किला० आसेदुषः आसेदुषा आसेदिवद्भ्यां आसेदिवद्भिरित्यादि। एवमन्येऽप्यूह्याः। क्वसुप्रत्यये सू एकस्वर० ऋइण् आकारांतानां इट् वक्तव्यः य क्षिवान् पेचिवान् वाशब्दव्यवस्थार्थः विविस्वान् आरिवान् ईयिवान् उपेयिवान् ददिवान् विदहन्गमृदृशां वा इट् इडभावे गम् धातोर्मकारस्य नकारः । यथा कचिदपदांतेपि पदांततेति मोनोधातोः विविद्वान् विविदिवान् जघन्वान् जघ्निवान् जगन्वान् जग्मिवान् ददृश्वान् ददृशिवान् वाशब्दव्यवस्थार्थः। विविस्वान् विविशिवान्। सूत्रम्।

शतृशानौ तिप्तेवत्क्रियायां । क्रियापदे गम्यमाने । शतृशानौ प्रत्ययौ भवतः । तौच । तिप् ते इति वत्परस्मैपदात्मनेपदयोर्भवतः । पचन्नास्ते । पठंस्तिष्ठति । गायन्नागच्छति ।

शतृश्च शानश्च शतृशानौ । ( प्र० द्वि० ) ओश्चौऔ तिप्रेवत् ( प्र० ए० ) अव्य० क्रिया ( स० ए० ) आम्ङे ङितांयट् सवर्णे० क्रियापदे गम्यमाने प्रोच्यमाने धातोः शतृशानौ प्रत्ययौ भवतः। तौच तिप्तेवत् भवतः। परस्मैपदिनां शतृ आत्मने पदिनां च शान उभयपदिनां उभावपि इत्यर्थः। शकारः शित्कार्यार्थः।ऋकारश्च नुम् ईप्विधानार्थः पच् शतृप्र० अत् चतुर्थत्वात् अप् कर्त्तरि स्वर० अदेइति अलोपः स्वर० (प्र०ए०) त्रितोनुम् हसेपः संयोगां० पचन् आस्ते । एवं पठ् व्यक्तायां वाचि । पठन् तिष्ठति नः सकृच्छते नश्चा०पठंस्तिष्ठति गैशब्दे गैशतृप्र० अत् अप् कर्त्तरि ऐआय् स्वर० अदे स्वर० त्रितोनुम् हसेपः संयोगां० गायन् गच्छति ।एवं कुर्वन् कुर्वाणः। सूत्रम् ।

मुमानेतः । अकारस्याने परे मुमागमो भवति । पचमानः पिबति । यजमानः स्तौति । मन्वानः पिबति ।

मुमानेतः । मुम् ( प्र० ए० ) हसेपः आन ( स०ए० ) अइए अत ( ष०ए० स्वर० स्रो० अकारस्य शानसंबंधिनि आने परे मुमागमो भवति । ककारः स्थाननियमार्थः । उकार उच्चारणार्थः। डुपचष्पाके पच उभयपदित्वादात्मनेपदित्वात् शानप्र० आनशिति चतुर्वत् इति अप् कर्त्तरिमुमानेति मुमागमः किस्वात्पच् अग्रे म स्वर० स्रो० पचमानः पानीयं पिबति एवं यजदेवपूजा० यजमानः सन् पूजां कुर्वन् सन् स्तौति । मन् ज्ञाने शानप्र० तनादेरुप् उप् प्र० स्वर० उवं स्वर०( प्र० ए० ) स्रो० मन्वानः मनुतेइति मन्वानः । आस् उपवेशने आस् शतृशानौ तिप्रे इति शानप्र० आन् अप् कर्त्तरि अदादेर्लुक् । सूत्रम् ।

आसेराने ई । आसीनः ।

आसेरानई । आसि ( ष० ए० ) ङिति ङस्य स्रो० आ ( ष० ए० ) सांके० आन् ( ष० ए० ) स्वर० स्रो० ई ( प्र० ए० ) सांके० चतुःपदं आस्उपवेशने इत्यस्य धातोः परस्य आनप्रत्ययसंबधिन आकारस्य ईकारो भवति स्वर। आसीनः० सूत्रम् ।

वादीपोः शतुः । अवर्णात्परस्य शतुर्वा नुमागमो भवति । ईकारे परे । तुदत् । तुदती । तुदंती । स्त्री तुदती । तुदतीवच्चान्ताः।

वा ( प्र० ए० ) अव्य० अ ( पं० ए० ) ङसिरत् सवर्णे० ईश्चईप्च ईपौ तयोः ( स० ए० ) स्वर० पश्चात्वपाअवेजबाः शतृ ( ष० ए० ) ऋतोङ्उः टिलोपः स्वर० चतुःपदं अवर्णात्परस्य शतुः शतृप्रत्ययस्य वा नुमागमो भवति नपुंसके ईपौ इतिसूत्रो-

त्पन्ने ईकारेपरे तथा ङितइति सूत्रोत्पन्ने ईपि परे। तुद् व्यथने तुद् शतृप्र० अत् तुदादेः स्वर० अदे स्वर० तुदत् नपुंसकात् स्यमोर्लुक् द्विवचने तुदत् अ इति स्थिते ईमौ औस्थाने ई। वादीपोःशतुरिति एकत्र नुमागमः मिदंत्यात्स्वरात्परो वक्तव्यः नश्चा० स्वर० तुदंती पक्षे तुदती वा कुले तुदंति। पुनरपि तुदत् तुदती तुदंती तुदंति। स्त्रीलिंगे तुदत् ऋकारानुबंधत्वात् ङितइतीप् वादीपोः शतुरितिएकत्र नुमागमः। तुदंती तुदती वा स्त्री वर्तते तुदंत्यो तुदत्यौ तुदंत्यः तुदत्यः। एवं पक्षद्वयेऽपि नदीशब्दवत्। सूत्रम्।

अप्श्ययोरान्नित्यं। अप्प्रत्ययायप्रत्ययसंबन्धिनोऽकारात्परस्य शतुर्नित्यं नुमागमो भवति। पठन्ती। दीव्यन्ती दृश्यते। द्विरुक्तानां जक्षादीनां च शतुर्नुम्प्रतिषेधो वक्तव्यः। ददतः। दधतः। जक्षतः। जाग्रतः। दरिद्रा दुर्गतौ। दरिद्रतः। चकासतः। अनुशासत्।

अप्श्ययोरान्नित्यम्। अप् च यश्च अपौ तयोः (ष० द्वि०) ओसि, ए अय् स्वर० स्रो० अ (पं०ए०) ङसिरत् सवर्णे० पश्चान्नामिनो रः स्वर० नित्यं (प्र.ए.) अव्य० अमेऽमावा स्वर० अप्कर्तरि इति अप्प्रत्ययः दिवादेर्यः इति यप्र०। एतयोः संबंधिन अकारात्परस्य शतृप्रत्ययस्य नित्यं नुमागमो भवति नतु विकल्पेन ईकारे ईपिच परे। मकारःस्थानविध्यर्थः। भू शतृप्र० अत् अप्कर्तरि गुणः ओअव् स्वर० अदे०स्वर० ङित इति ईप् प्र०अप्श्ययोरान्नित्यं नुमागमः नश्चापदांते भवंती एवं पचंती पठंती दिव् दिवादेर्यः शतृ य्वोर्विहसे दीर्घः अदे स्वर० अप्श्ययोरान्नित्यं इति नुमागमः दिव्यंती दृश्यते। एवं श्लिष् आलिंगने श्लिष्यंती। द्विरुक्तानां धातूनां विशेषमाह। द्विरुक्तानां ह्वादीनां जक्षभक्षहसनयोः जक्षजागृदरिद्राचकासृशास् इत्यादीनां च संबंधिनः शतृप्रत्ययस्य मित्तोनुमिति प्राप्तो यो नुम् तस्य निषेधो वक्तव्यः नुमागमो न भवतीत्यर्थः। उदाहरणं दा शतृ अत् अप्कर्तरि ह्वादेर्द्विश्चेति अप् लुक्द्वित्वंच ह्रस्वः दादेरिति आलोपः स्वर० द्विरुक्तात् नुम् निषेधः (प्र० ए०) हसेपः ददत् ददतौ ददतः इत्यादि स्त्रीलिंगे ददती ददत्यौ ददत्यः। नपुंसके ददत् ददती ददंति द्विरुक्तानां नपुंसके शौ परे वानुम् तेन ददंति ददति इति रूपद्वयम्। दधत् दधतौ दधतः एवं बिभ्रत् डुभृञ् शतृप्र० अत् अप्कर्त्तरि ह्वादेर्द्विश्च झपानां जबचपाः भृञांलुकि ऋरं स्वर० ञिभीभये भी अत् अप् ह्वादेर्द्विश्च झपानां० ह्रस्वः य्वौवा अनेकस्वरस्येति यकारः बिभ्यत् एवं जुह्वत् विदधत् इत्यादयो अन्येपि ह्वादितुल्या यङ्लुगंताश्च ज्ञातव्याः जक्षधातुः भक्षहसनयोः जक्ष शतृप्र० अप्कर्त्तरि अदा-

देर्लुक् स्वर० ( प्र० ए० ) जक्षादित्वान्नुम्निषेधः हसेरः जक्षत् जक्षतौ जक्षतः। जागृ निद्राक्षये जागृ अत् अप्कर्त्तरि अदादेर्लुक् ऋरं स्वर० ( प्र०ए० ) हसेपः जाग्रत् जाग्रतौ जाग्रतः। दरिद्रा दुर्गतौ दरिद्रा अत् अप् अदादेर्लुक् दरिद्रादेरिदालोपश्चेत्याकारलोपः। स्वर० हसेपः दरिद्रत् चकासृ दीप्तौ चकास् शतृप्र० अप् अदादे०स्वर० चकासत्। शास्अनुशिष्टौ शास अनुपूर्वः शतृ अनुशासत् एषु द्विरुक्तानां जक्षादीनामिति नुम्निषेधः इत्यादि जक्षादयः। आनप्रत्यये बिभ्राणः विदधानः इत्यादि। सूत्रम्।

विदेर्वा वसुः। विदेर्धातोः शतृविषये वा वसुप्रत्ययो भवति। विद्वान्। विदन्। अत्रभवत्तत्रभवच्छब्दौ पूजार्थे निपात्येते। अत्रभवन्तो भट्टमिश्राः। तत्रभवद्भिर्भगवत्पादैर्भणितं।

विदेर्वा वसुः। विदि ( ष० ए० ) ङितिङस्य ङ्गो० वा ( प्र० ए० ) अ०प्र० वसु ( प्र० ए० ) स्रो० सिद्धं विद्ज्ञाने इत्यस्य धातोः शतृविषये शतृप्रत्ययार्थे वा विकल्पेन वसुप्रत्ययो भवति उदा०विद् एकत्र वसुप्रत्ययः विद्वस् हसांतपुल्लिंगवत्। न्नितो०न्संमहतोदीर्घः संयोगांतस्यलोपः विद्वान् विद्वांसौ इत्यादि द्वितीयेतु शतृप्रत्यये कृते भवत्शब्दवत् प्रक्रिया। विदन् विदंतौ इत्यादि। अर्ह पूजायां शतृप्रत्ययः अत्-अप् अदे स्वर० ( प्र० ए० ) न्नितोनुम् संयोगांतस्यलोपः हसेपः अर्हतीत्यर्हन् अत्रभवत् तत्रभवत् इत्येतौ द्वौशब्दौ उकारानुबंधौ पूजार्थे पूज्यत्ववाचकत्वे निपात्येते। शतृप्रत्ययंविनापीत्यर्थः। पूज्ये तत्रभवांश्चात्रभवांश्च भगवानपीत्यभिधानचिंतामणिवचनात् ( प्र० ए० ) उकारानुबंधत्वात् नुम् अत्वसोः साविति नभवति अत्रभवत् स्यादिः न्नितोनुम् अत्वसोःसौ अत्रभवान् अत्रभवंतौ अत्रभवंतः इत्यादि। अत्रभवंतः पूज्याः। एवं तत्रभवान् तत्रभवंतौ तत्रभवंतः भट्टमिश्राः एते। तत्रभवद्भिः पूज्यैर्भगवत्पादैर्युष्माभिर्भणितं कथितं शतृप्रत्ययरहितावेतौ निपात्यौ। सूत्रम्।

शीले तृन्। धातोस्तृन्प्रत्ययो भवति शीले स्वभावेऽर्थे। करणशीलः कर्ता। हर्ता। इति।

शीले तृन्। शील ( स० ए० ) अइए तृन् ( प्र० ए० ) हसेपः शीले स्वभावेऽर्थे धातोः तृन्प्रत्ययो भवति नकारःप्रत्ययभेदज्ञापनार्थः कृ तृन्प्र०गुणः जलतुं० ( प्र० ए० ) ऋतुरार् सेरा डित्त्वाट्टिलोपः स्वर० करणशीलः कर्त्ता। एवं हरणशीलो हर्त्ता। भरणशीलो भर्त्ता। इति क्त्वादिप्रक्रिया।

अथ शीलार्थप्रक्रिया। इष्णुस्नुक्नुः। धातोः शीले स्वभावेऽर्थे इष्णु स्नु क्नु इत्येते प्रत्यया भवन्ति। कृञ् अलंपूर्वः।

अलंकृञ् निराकृञ् प्रजन उत्पच् उत्पत् उत्पद् ग्रस् उन्मद् रुच् अपत्रप् वृतु वृधु सह चर भू भ्राज् ञ्यन्त एभ्य इष्णुः । अलंकरोतीत्येवंशीलः अलंकरिष्णुः । निराकरिष्णुः । प्रजायते इत्येवंशीलः प्रजनिष्णुः । उत्पचतीत्येवंशीलः उत्पचिष्णुः । पत्लृ पतने । उत्पततीत्येवंशीलः उत्पतिष्णुः । पद् गतौ । उत्पद्यते इत्येवंशीलः उत्पदिष्णुः । ग्रस् अदने । ग्रसतीत्येवंशीलः ग्रसिष्णुः । उन्माद्यतीत्येवंशीलः उन्मदिष्णुः । रुचि दीप्तौ । रोचतीत्येवंशीलः रोचिष्णुः । त्रपूष् लज्जायाम् । अपत्रपति वा अपत्रपते इत्येवंशीलः अपत्रपिष्णुः । वृतु वर्तने । वर्तते इत्येवंशीलः वर्तिष्णुः । वृधुङ् वृद्धौ । वर्धते इत्येवंशीलः वर्धिष्णुः । सहति सहते वेत्येवंशीलः सहिष्णुः । चरतीत्येवंशीलः चरिष्णुः भविष्णुः । भ्राजृ दीप्तौ । भ्राजते इति भ्राजिष्णुः । इष्णुप्रत्यये परे ञ्यन्तानां ञिलोपाभावो वाच्यः । कारयतीत्येवंशीलः कारयिष्णुः । एते इष्णुप्रत्ययान्ताः ।

इष्णुस्नुक्नुः । इष्णुश्च स्नुश्च क्नुश्च इष्णुस्नुक्नुः नपुंसकात्स्य० धातोः शीलेऽर्थे इष्णु स्नु क्नु एते त्रयः प्रत्यया भवंति यथायोग्येन । भ्राज् भू सह रुच चर वृध वृत् प्रजन अपत्रप अलंकृञ् निराकृञ् उन्मद उत्पद उत्पच एभ्य इष्णुः उदा० कृअलंपूर्वः अलंकरणशीलो अलंकरिष्णुः इष्णुप्र० गुणः स्वर० निराङ्पूर्वः निराकरिष्णुः निराकर्त्तुं शीलमस्येति निराकरिष्णुः भानुशब्दवत्। ग्रस्अदने ग्रसिष्णुः सहिष्णुः उत्पतिष्णुः उन्मदिष्णुः इत्यादि ।

ग्ला जि स्था भू म्ला क्षि पच् यज् परिमृज् एभ्यः स्नुः । ग्लै हर्षक्षये । ग्लायतीत्येवंशीलः ग्लास्नुः । जयतीत्येवंशीलः जिष्णुः । भवतीत्येवंशीलः भूष्णुः । जिभ्वोः स्नौ गुणाभावो न इट् क्षेश्च तथा । तिष्ठतीत्येवंशीलः स्थास्नुः । क्षि क्षये । क्षयतीत्येवंशीलः क्षिष्णुः । पचतीत्येवंशीलः पक्ष्णुः । यजतीत्येवंशीलः यक्ष्णुः । मृजूष् शुद्धौ । मृजेर्गुण-

निमित्ते प्रत्यये परे वृद्धिर्वाच्या । परिमार्ष्टीत्येवंशीलः परिमार्ष्णुः ।

ग्ला क्षि स्था म्ला यज् पच परिमृज् जि भू एभ्यः स्नुः।जिभुवोगुणेट्प्रभावश्च जि जये इष्णुप्र० क्रिला० नस्य णः जिष्णुः। एवं भूष्णुः स्थास्नुः ग्लास्नुः पक्ष्णुः म्लास्नुः।

विष्लृ त्रस् गृध् धृष् क्षिप् एभ्यः नुः । विष्लृ व्याप्तौ । वेवेष्टि इत्येवंशीलः विष्णुः । त्रसी उद्वेगे । त्रसी भये । त्रस्यतीत्येवंशीलः त्रस्नुः । गृध अभिकांक्षायाम् । दिवादिः। गृध्यतीत्येवंशीलः गृध्नुः । ञिधृषा प्रागल्भ्ये । स्वादिः । धृष्णोतीत्येवंशीलः धृष्णुः । क्षिप् प्रेरणे । क्षिपतीत्येवंशीलः क्षिप्नुः । ककारो गुणनिषेधार्थः ।

क्षप्त्रसगृध्विषृएभ्यः क्नुः । विषृव्याप्तौ वेवेष्टि जगदित्येवं शीलो विष्णुः स्नुप्र० ककारो गुणनिषेधार्थः ष्णुनौ० गृध् धातुः अभिकांक्षायां वांछायां गृध् नु०नु स्वर० गर्द्धनशीलो गृध्नुः क्षिप्नुः त्रस्नुः । सूत्रम् ।

षाकोकणः । धातोः शीलेऽर्थे षाक उ उकण् इत्येते प्रत्यया भवन्ति ।

षाकोकणः । षाकश्च उश्च उकण् च ( प्र०ब० ) स्वर०स्रो० शीले स्वभावेऽर्थे षाक उक उकण् एते त्रयः प्रत्यया भवंति ।

जल्प भिक्ष कुट्ट लुठ् वृङ् एभ्यः षाकः प्रत्ययो भवति । जल्प व्यक्तायां वाचि । जल्पतीत्येवंशीलः जल्पाकः । भिक्ष याच्ञायाम् । भिक्षतीत्येवंशीलः भिक्षाकः । कुट्ट ताडने वा छेदने । कुट्टतीत्येवंशीलः कुट्टाकः । लुण्ठ चौर्ये । लुण्ठत्येवंशीलः लुण्ठाकः । वृङ् संभक्तौ । वृञ् संवरणे । वर निवारणे । वृणुते वा वरतीत्येवंशीलः वा वृणीत इत्येवंशीलः वराकः । ष ईबर्थः । वराकी ।

जल्प भिक्ष कुट्ट लुठ् वृञ् वर एभ्यः षाकः।षाक इति षकार ईबर्थ. । वर निवारणे वर आकप्र० स्वर० ( प्र०ए० ) स्रो०।स्त्री चेत् वराकी ङ्वितः यस्यलोपः स्वर०

वारयति इत्येवंशीलो वराकः । भिक्ष् याञ्चायां भिक्ष षाकप्र० आक स्वर० स्रो० । एवं जल्प जल्पने कुट्टकुट्टने, लुठिस्तेये, जल्पाकः कुट्टिकः लुंठाकः ।

सान्ताशंस् भिक्ष् एभ्य उः प्रत्ययो भवति । सान्ताशंसयोश्च । सप्रत्ययान्तादाङ्पूर्वात् शंसु स्तुतावित्यस्माद्धातोश्च शीलार्थे विनापि उः प्रत्ययो भवति । वच् परिभाषणे । विवक्षतीति विवक्षुः । इच्छायामात्मनः सः । द्वित्वम् । पूर्वस्य ह्रसादिः शेषः ऋत इर् । य्वोर्विंहसे । कुहोश्चुः । चिकीर्षतीत्येवंशीलः चिकीर्षुः । जिघृक्षतीत्येवंशीलः जिघृक्षुः । आङ्पूर्वः शंसु स्तुतौ । शंस् कथने । आशंसतीत्येवंशीलः आशंसुः । भिक्षतीत्येवंशीलः भिक्षुः । पिपासतीत्यवंशीलः पिपासुः । तितीर्षतीत्येवंशीलः तितीर्षुः ।

सांत आशस् भिक्ष उः । एभ्यः उः । भिक्ष उप्र० स्वर० भिक्षुः सांताशंसयोश्च इच्छार्थस्य सप्रत्ययांतस्य धातोः आङ्पूर्वस्य शंसः शंसुस्तुतावित्यस्य च धातोः शीलार्थे विनापि उप्रत्ययो भवति । वच परिभाषणे वच वक्तुमिच्छुर्विवक्षुः इच्छायामात्मनः सः द्विश्च यःसे अकारस्य ईकारः चोः कुः किला० कषसंयोगेक्षः विवक्षइति सिद्धं उप्र० यत इत्यलोपः स्वर० ( प्र०ए०) स्रो० विवक्षुः शंस् स्तुतौ कथनेच शंस् आङ्पूर्वः उप्र० स्वर० ( प्र० ए० ) स्रो० आशंसुः ग्रह उपादाने ग्रह इच्छार्थे सप्र० द्विश्च पूर्वस्य० कुहोश्चुः यःसे० ग्रहक्ङितिसंप्रसारणं होढः आदिजबानामिति गस्यजः षढोःकः से किला० कषसंयोगेक्षः उप्र० यतइति अलोपः स्वर० ( प्र० ए० ) स्रो० जिघृक्षुः ग्रहीतुमिच्छुर्जिघृक्षुः । पा पाने पा सप्र० द्वित्वं ह्रस्वः यःसे उप्र० पिपासुः भिक्षुः ।

लष पत पक्ष भिद स्था भू वृष हन् कम् गम् शृ एभ्य उकण् प्रत्ययो भवति । लष कान्तौ । लषतीत्येवंशीलः लाषुकः । पततीत्येवंशीलः पातुकः । भिक्ष याञ्चायाम् । भिक्षतीत्येवंशीलः भिक्षुकः । पद गतौ । णित्त्वाद्वृद्धिः । पद्यतीत्येवंशीलः पादुकः । तिष्ठतीत्येवंशीलः स्थायुकः । भवतीत्येवंशीलः वा भवितुं शीलमस्यास्तीति भावुकः । वृष वृष्टौ । वृषु सेचने । वर्षतीत्येवंशीलः वर्षुकः । हन्तीत्येवं-

शीलः घातुकः। कमु कान्तौ। कामयते इत्येवंशीलः वा कामितुं शीलमस्यास्तीति कामुकः। गम्लृ गतौ। गच्छतीत्येवंशीलः गामुकः। शॄ हिंसायाम्। शृणातीत्येवंशीलः शारुकः। शॄवन्द्योरारुः। शॄवन्द्योर्धात्वोरारुः प्रत्ययो भवति। शरारुः वन्दारुः। स्पृहि गृहि पति शीङ् एभ्य आलुर्वाच्यः। स्पृह ईप्सायाम्। ईप्सा इच्छा। गृह ग्रहणे। पत ऐश्वर्ये। त्रयश्चुरादयोऽदन्ताः। आलौ ञिलोपाभावो वाच्यः। स्पृहयतीत्येवंशीलः स्पृहयालुः। गृहयतीत्येवंशीलः गृहयालुः। पतयतीत्येवंशीलः पतयालुः। शीङ् स्वप्ने। शेते इत्येवंशीलः शयालुः।

भू, स्था हन्, गम्, लष्, वृष्, पत, पद, एभ्यः उकण् कम्धातुःकांतौ अभिलाषे कामयतीति कामुकः कम् उकण् प्र०णकारो वृद्ध्यर्थः अतउपधायाः स्वर०(प्र०ए०) स्रो० एवं भिक्षुकः भू सत्तायां भू उकण् प्र० धातोर्नामिनइति वृद्धिः औआव् स्वर० ( प्र० ए० ) स्रो०भावुकः, स्थायुकः, आतो युक् हनो घत् घातुकः, अभिलाषुकः, वार्षुकः, पातुकः, पादुकः, आगामुकः, इत्यादि ॥ नम्।

नमादे रः। नम् कंपि स्मिङ् नञ्पूर्वो जस् कम् हिंस् दीप् एभ्यो रः प्रत्ययो भवति शीलेऽर्थे। णम् प्रह्वत्वे शब्दे च। नमतीत्येवंशीलः नम्रः। कपि चलने। कम्पतीत्येवंशीलः कम्प्रः। स्मिङ् ईषद्धसने। स्मयते इत्येवंशीलः स्मेरः। जसु मोक्षणे। जसु गतिनिवृत्तौ। दिवादिः। न जस्यतीत्येवंशीलं अजस्रम्। कामयते इत्येवंशीलः कम्रः। हिसि हिंसायाम्। हिनस्तीत्येवंशीलः हिंस्रः। दीपी दीप्तौ। दीप्यते इत्येवंशीलः दीप्रः।

नमादिः ( ष० ए० ) ङितिङस्य० स्रो० र० ( प्र०ए० ) स्रो० मध्ये नामिनोर, रिलोपो दीर्घश्च नम्, कम्, स्मिङ्, अजस्, कंप, दीप, हिंस्, एभ्यो रः प्रत्ययः स्यात् णम् प्रह्वीभावे आदेः ष्णः स्नः नम् रप्र० स्वर० ( प्र० ए० ) स्रो० नमनशीलो नम्रः। एवं कम् कांतौ कम्रः स्मेरः अजस्रं कंप्रः दीप्रः हिंस्रः। सूत्रम्।

घसादेः क्मरः । घस् सृ अद् एभ्यः क्मरः प्रत्ययो भवति शीलेऽर्थे । घस्लृ अदने । घसतीत्येवंशीलः घस्मरः । सृ गतौ । सृ सरणे । सृ हिंसायाम् । सरतीत्येवंशीलः सृमरः । अद् भक्षणे । अत्तीत्येवंशीलः अद्मरः । भिदि छिदि विदि एभ्यः कुरङ्वाच्यः शीलेऽर्थे । भिनत्तीत्येवंशीलः भिदुरः । विद् ज्ञाने । वेत्ति इत्येवंशीलः विदुरः । छिदिर् द्वैधीकरणे । छिनत्तीत्येवंशीलः छिदुरः । भासादेर्घुरः । भास् भञ्ज् भिद् एभ्यो घुरः प्रत्ययो भवति शीलेऽर्थे । घकारो घित्कार्यार्थः । भासृ दीप्तौ । भासतीत्येवंशीलः भासुरः ।

घसादेः क्मरः । घस् आदिर्यस्यासौ घसादिस्तस्य ( ष० ए० ) क्मरः ( प्र० ए०) सू० घसादेर्धातोः अदेश्च क्मरप्रत्ययो भवति शीलार्थे ककारो गुणनिषेधार्थः घस्लृ अदने घस् क्मरप्र० स्वर० ( प्र० ए० ) सू० सृगतौ मरप्र० सू० अद् भक्षणे अद् मर प्र० स्वर० अद्मरः भासादेर्घुरः भासदीप्तौ भंजभंगे ञिमिदास्नेहने एभ्यो धातुभ्यो घुर प्रत्ययो भवति शीलेऽर्थे । घकारो घित्कार्यार्थः । भास्उरः स्वर० (प्र०ए०) सू०भासनशीलो भासुरः भंजू आमर्दने भंज् भासादेरिति उरप्र० ।

चजोः कगौ घिति । धातोश्चकारजकारयोः ककारगकारौ भवतः घिति प्रत्यये परे । भञ्जो आमर्दने । भनक्तीत्येवंशीलः भङ्गुरः । ञिमिदा गात्रविक्षेपे । मेद्यते इत्येवंशीलः मेदुरः । यङ ऊकः । यज् जप् दंश् वद् एभ्यो यङ्प्रत्ययान्तेभ्य ऊकः प्रत्ययो भवति शीलेऽर्थे ।

चजोः कगौ घिति । जस्य गः स्वर० ( प्र०ए०) सू० भंगुरः स्वयमेव भज्यते इत्येवं शीलो भंगुरः मेद्यतीति शीलो मेदुरः छिदिभिदिविदां कुरः ककारो गुणनिषेधार्थः छिदुरः, भिदुरः, विदुरः, एते सर्वे प्रत्ययाः शीलार्थाः । सूत्रम् ।

यङो लुक् तत्सन्नियोगेन धातोर्द्विर्वचनम् । यज् देवपूजासं-

गतिकरणदानेषु । अतिशयेन यजतीति वा इज्यते इत्येवंशीलः यायजूकः । जप व्यक्तायां वाचि । जमजपां नुक् । जञ्जप्यते इत्येवंशीलः जञ्जपूकः । दश् दंशने । दंदशूकः । वावद्यते इत्येवंशीलः वावदूकः ।

यङ् ऊक यङ् (पं०ए०) स्वर०स्रो०ऊक(प्र०ए०)स्रो० अतिशयार्थे यङ् प्रत्ययांताद्धातोः शीलेऽर्थे ऊक् प्रत्ययो भवति। यज्, जप्, जागृ, वद, दंशिभ्यः इति वक्तव्यं । वक्तव्यस्य प्रयोगानुसारित्वात् यङंतस्यापि जागर्त्तेः ऊकप्रत्ययो भवति । लुक् । ( प्र०ए० ) हसेपः तस्य ऊकस्य सन्नियोगेन यङ्प्रत्ययस्य लुक् भवति । उदा० यज् अतिशयेन यजनशीलो यायजूकः । अतिशये हसादेर्यङ् द्वित्वं पूर्व० आत् इत्यकारस्य आकारः यायज्यइतिस्थिते ऊकप्र० लुक् इतियङो लुक् स्वर० स्रो० दंश् दशने दंश् अतिशयेन दशतीत्येवं शील इति विग्रहे यङ्प्र० नोलोपः द्वित्वं जमजपां नुक् नश्चा० ऊक० लुगिति यङोलुक् दंदशूकः सर्पः एवं जप् व्य०जंजपूकः। वद व्यक्ता० यायजूकः । वावदूकः ।

जागर्तेरूको वाच्यः । जागर्तीत्येवंशीलः जागरूकः । इणूनशूजिसृगमिभ्यः करप् वाच्यः । इण् गतौ । ह्रस्वस्य पिति । एतीत्येवंशीलः इत्वरः । णश अदर्शने । नश्यतीत्येवंशीलः नश्वरः । जयतीत्येवंशीलः जित्वरः । सरतीत्येवंशीलः सृत्वरः । गत्वरो निपात्यते शीलेऽर्थे । गच्छतीत्येवंशीलः गत्वरः । भियः क्रुक्लुकौ वक्तव्यौ । बिभेतीत्येवंशीलः भीरुः भीरुकः । इषेरुश्छश्च । इषेरुः प्रत्ययो भवति छान्तादेशश्च इच्छतीति इच्छुः वरः । स्था ईश् भास् पिस् कसादिभ्यो वरः प्रत्ययो भवति शीलेऽर्थे । तिष्ठतीत्येवंशीलः स्थावरः । ईश् ऐश्वर्ये । ईष्टे इत्येवंशीलः ईश्वरः । भासृ दीप्तौ । भासतीत्येवंशीलः भास्वरः। पिसृ गतौ पिसतीत्येवंशीलः पिस्वरः । कस् गतौ । कसतीत्येवंशीलः कस्वरः ।

अयङंतस्यापि जागर्त्तेः ऊकप्र० जागरूकः । यातेर्यङंताद्वरप्रत्ययः तत्सन्नियोगे यङोलुक् अतिशयेन कुटिलं वा यातीत्येवंशीलो यायावरः इत्यादि । सूत्रम् ।

आदृतः किर्द्विश्च भूते । आकारान्तादृकारान्ताद्धातोर्जनिनमिगमिभ्यश्च शीलेऽर्थे भूतकाले किः प्रत्ययो भवति णबादिवद्धातोश्च द्विर्वचनं भवति । आतोऽनपि ।

रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् ॥
याजकान् वव्रिराजह्रिः पौण्डरीके महाद्विजान् ॥ १ ॥
तदा जज्ञिर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ॥
ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा ॥ २ ॥

॥ इति श्रीकृदन्तप्रक्रियायां शीलार्थप्रक्रिया ॥

आदृतः किर्द्विश्च भूते । आच्च ऋच्च आदृत् ( पं० ए० ) स्वर० स्रो० कि ( प्र० ए० ) स्रो० द्विः द्वित्रिभ्यांसुः ( प्र० ए०) अव्य० च ( प्र० ए०) अव्य० भूत ( स० ए०) अइए-आकारांतादयः ऋकारांताः डुकृञ् करणे हृञ्हवरवणे वृञ्रणे इत्यादयस्तेभ्यो धातुभ्यः शीले स्वभावेऽर्थे अतीते काले कीप्रत्ययो भवति ककारो गुणनिषेधार्थः। तत्सन्नियोगे धातो र्द्विर्वचनं। पा पाने पा किप्र० इ द्वित्वं पूर्वस्य ऱ्हस्वः आतोऽनपीत्याकारलोपः स्वर० ( प्र० ए० ) स्रो० पपिः । एवं डुदाञ्दाने ददिः डुकृञ् करणे कृ किप्र० इद्विश्चरः इति पूर्वऋकारस्य अकारः कुहोःश्चुः ऋरं स्वर० (प्र० ए० ) स्रो० चक्रिः एवं वृञ्करणे वव्रिः हृञ् हरणे हृ० आङ्पूर्वः किप्र० इ द्वित्वं रः कुहोश्चुः जस्य झपानां जबचपाः झस्य जः ऋरं स्वर०(प्र०ए०) स्रो० आजह्रिः। श्लोकश्चात्र । रामः सोमं पपिः यज्ञे व्याख्या० रामः पौंडरीके नाम्नि यज्ञे सोमं अमृतं पपिः पीतवान् पपौ इत्येवं शीलो पपिः पुनः धेनूः ददिः दत्तवान् पुनः अद्भुतं आश्चर्यं चक्रिः कृतवान् पुनः याजकान् यज्ञकर्तॄन् वव्रिः ववार इत्येवं शिलो वव्रिः । पुनः महाद्विजान् ब्राह्मणान् आजह्रिः आहूतवान् आजहार इत्येवं शील इत्यर्थः । इति श्लोकव्याख्या । चकारादुपधालोपानामपि किः प्रत्ययः । गम् जग्मिः हन् जघ्निः ज्ञा जज्ञिः। सहिवहिचलिपतिभ्यो यङंतेभ्यः किः। सासहिः, वावहिः, चाचलिः, पापतिः, इत्यादि। इति शीलार्थप्रक्रिया ।

अथोणादयो निरूप्यन्ते ॥

सदोणादयः । सर्वस्मिन्काले उणादयः प्रत्यया भवन्ति ।

कृ वा पा जिमि स्वदि साधि अशूङ् एभ्य उण् प्रत्ययो भवति । णकारो वृद्ध्यर्थः । करोतीति कारुः कारुकः । वा

गति०। आतो युक्। वातीति वायुः। पा पाने। पिबतीति पायुः। जयति अनेनेति जायुः। डुमिञ् प्र०। मि कौटिल्ये। मिनोतीति मायुः। स्वादे आस्वादने। स्वद्यते इति स्वादुः। साध्यतीति साधुः। अश्नोतीति आशु। सि तनि गमि मसि सचि अवि हि धा क्रुशि एभ्यस्तुन् प्रत्ययो भवति। षिञ् बन्धने। सिनोतीति सेतुः। तनोतीति तन्तुः। गच्छतीति गन्तुः। मसि परिणामे रक्षणे च। मस्यतीति मस्तुः। षच संबन्धे। सचतीति सक्तुः। अव रक्षणे। अवतेर्वकारस्य उकारः। अवतीति ओतुः। हि गतौ वृद्धौ च। हिनोतीति हेतुः। दधातीति धातुः। क्रुश आह्वाने। क्रुशि रोदने च। आक्रोशे। छशषराजादेः षः। ष्टुभिः ष्टुः। क्रोशतीति क्रोष्टा। अव रक्षणे पालने च। कित्त्वात्संप्रसारणमुकारः।

सदोणादयः। सदा (प्र०ए०) अव्य० उण् आदिर्येषां ते उणादयः (प्र०ब०)ए ओ जसि एअय् स्वर०स्लो० पश्चात् ओ। सर्वस्मिन् भूतभविष्यद्वर्त्तमाने काले उणादयः प्रत्यया भवंति। उदा०करोतीति कारुः कृ उण् प्रत्ययः णित्त्वाद्वृद्धिः कृस्थाने कार स्वर० (प्र०ए०) स्लो० कारुः। वा गतिगंधनयोः। वा अयं धातुर्गतौ गंधने च। गंधनमपकारप्रयोगो हिंसा च। वा उण् आतो युक् स्वर०(प्र०ए०)स्लो० वातीति वायुः पा पिबतीतिपायुः मिनोति हिनस्तीति मायुः गोपूर्वकत्वे गोमायुः क्रुश आव्हाने क्रुश् उणादय इत्यादि शब्दात् तु प्र० उपधायालघोर्गुणः छशषराजादेःषः ष्टुभिःष्टुः स्वर० क्रोशति आव्हयति फूत्करोतीति वा क्रोष्टा शृगालः। साधना स्वरांतपुल्लिंगे कथितास्ति। जायते जन्यते वा जंतुः। जन तु प्र०। कामयति अभिलषतीति कंतुः।

अवतेर्मुक्। अवतेर्धातोर्मुक्प्रत्ययो भवति। अवतीति ओम् ओमौ ओमः।

अव रक्ष पालने। अवधातुः रक्षधातुश्च द्वावपि पालनार्थे। अव मुक् प्र० कित्त्वात्संप्रसारणं कित्त्वकरणसामर्थ्यादेव व्यंजनस्यापि वकारस्य संप्रसारणं भवति वस्य उः उ

ओ मानुस्वारेः ओं अवतीति ओं जन्पूर्वः जनान् अवतीतिजनौं, विश्वमवतीति विश्वौं, जनौं जनौमौ जनौमः इत्यादि यथा अवतीति अव्ययमेतत् ।

अतिबृहिभ्यां मनिण् । अत सातत्यगमने । सततं अततीति आत्मा वा अतति अखिलजनान्तर्निवासित्वेन सुकृतदुष्कृतकर्माणि पश्यतीति आत्मा । बृहि वृद्धौ ।

अतधातुः सातत्यगमने निरंतरगमने इत्यर्थः । अतति सातत्येन गच्छति तांस्तान् भावानिति आत्मा अत् मनिण् प्र० इकार उच्चारणार्थः णकारो वृद्ध्यर्थः । मन् अतउपधायाः स्वर० आत्मन् ( प्र० ए० ) नोपधाया दीर्घः हसेपः नाम्नो० ।

मन्युपधाया ऋ रः । मनिण्प्रत्यये परे उपधाया ऋकारस्य रेफो भवति बृंहतीति ब्रह्म ।

बृहबृहिवृद्धौ बृह बृहति बृंहति वेति ब्रह्म मन्प्र० मन्युपधाया ऋरः मन्युपधायाः ( ष०ए० ) ऋरः मनि परे उपधायां उपधासंबंधिन ऋकारस्य रो भवति बृइत्यस्य ब्र ब्रह्मन् इति सिद्धं ( प्र० ए० ) नपुंसकात् स्यमो०नाम्नोनो० पुंल्लिंगेतु ब्रह्मा स्वयं बृहत्त्वात् अन्येषां बृंहणत्वाद्वा महत्त्वाद्व्यापकत्वाद्वा ब्रह्म आगमजमनित्यमिति न्यायात् इदित इति न नुम् ।

घृधृपदो मः । घृ क्षरणे दीप्तौ च । घरतीति वा घ्रियते इति घर्मः । धृ धारणे । धरतीति वा ध्रियतेऽसौ धर्मः । पद गतौ । पद्यते तत् पद्मम् ॥ ऋ स्तु सु हु हृ मृक्षि क्षु भा मा या वा जक्ष रै नी श्यैङ् पद एभ्यो मः प्रत्ययो भवति । ऋ गतौ । ऋच्छतीति अर्मः नेत्ररोगः । स्तौतीति स्तोमः । षूङ् प्रसवे । सूतेऽसौ सोमः । हर्मः । जुहोतीति होमः । म्रियते इति मर्मः । क्षि निवासगत्योः । क्षयतीति क्षेमः । टुक्षु शब्दे । क्षौतीति क्षोमः । भातीति भामः । मामः । यातीति यामः । वातीति वामः । जक्ष भक्षहसनयोः । जक्ष्मः । रायतीति रामः नेमः । श्यैङ् दीप्तौ । श्यायति इति श्यामः । पद्मः । भीध्व्योर्वा मक् । बिभेत्यस्मादिति भीमः । धूयतेऽसौ धूमः ।

धृधारणे धृ मम० गुणः रायपोह्विः जलतुं०( म०ए०) ओ० धारणाद्धर्मः।

ध्वादेरुलिक्। ध्वादेर्धातोरुलिक् प्रत्ययो भवति। धुनोति वा धूयतेऽसौ धूलिः। अगि लघि रघि गत्यर्थाः। इदितः। अङ्गते सा अङ्गुलिः।

ध्वादेरुलिः ( म० ए० ) ध्वादेर्धातोः उलिप्रत्ययो भवति किच्च। धूञ् कंपने उलि० सवर्णे० धूलिः धूयते वातादिना इति धूलिः। अगि, रगि, लगि, गत्यर्थाः। अग् उलि० इदित इति नुमागमः नश्चा० स्वर० ओ० अंगुलिः।

भविष्यदर्थे णिनिः। आगमिष्यतीति आगामी। भविष्यतीति भावी। शसादेः करणे त्रक्। शसादेर्धातोः करणेऽर्थे त्रक् प्रत्ययो भवति। सर्वधातुभ्यस्त्रमनौ। शसु हिंसायाम्। शंसति वा शस्यते अनेनेति शस्त्रम्। शास् अनुशिष्टौ। शिष्यते अनेनेति शास्त्रम्। असु क्षेपणे। अस्यते अनेनेति अस्त्रम्। पा पाने। पीयते अनेनेति पात्रम्। नीयते अनेनेति नेत्रम्। दा लवने। दीयते अनेनेति दात्रम्। युवह्यगिभ्यो निः। एभ्यो धातुभ्यो निः प्रत्ययो भवति। यु मिश्रणे। यौति इति योनिः। वहतीति वन्हिः। अङ्गतेऽसौ अग्निः॥ इदिचदिकिरुदिभ्यो रः। एभ्यो रप्रत्ययो भवति। इदि चदि आल्हादने दीप्तौ च। इन्दतेऽसौ इन्द्रः। चन्दतेऽसौ चन्द्रः। शक्नोतीति शक्रः। रोदितीति रुद्रः।

पुष्पादेरः। पुष्पादेर्धातो रः प्रत्ययो भवति। पुष्प विकसने। पुष्पति तत् पुष्पम्। फल निष्पत्तौ। फलति तत् फलम्। मूल व्याप्तौ। मूलति तत् मूलम्। रघ सामर्थ्ये। उप्रत्ययः। रघते शास्त्राणां शत्रूणां च अन्तं गच्छति प्राप्नोतीति रघुः।

गम्लृगतौ गम् आङ्पूर्वः भविष्यदर्थे णिन् प्रत्ययः णित्त्वाद्वृद्धिः स्वर० (प्र०ए०) इनांशौसौहसेपः नाम्नोनो० आगमिष्यतीति आगामी भू णिन् वृद्धिः औआव्भविष्यती-

ति भावी। ईश् ऐश्वर्ये ईष्टे ऐश्वर्यं करोति इति ईश्वरः ईश् वर प्र० स्वर० ( प्र०ए० ) स्त्रो० एवं तिष्ठतीति स्थावरः ष्ठा गतिनिवृत्तौ आदेः ष्णः स्नः। स्था वरप्र० ( प्र० ए० ) स्त्रो० भास्वरः। इण्णशूजिसरतिभ्यः करप्। पित्त्वात्तुक्। गत्वरः इति निपातः। जयति इत्येवंशीलो जित्वरः। एति इत्येवं शीलो इत्वरः। नश्यतीत्येवंशीलो नश्वरः।

राजादेः कन्। राजादेर्धातोः कन् प्रत्ययो भवति। राज् धन्व यु द्यु प्रतिदिव् वृष् तक्ष् दंश् पचि षप् अशूङ् नु मह एते राजादयः। राजृ दीप्तौ। राजतेऽसौ राजा। धन्व गतौ। धन्वतीति धन्वा। यु मिश्रणे। यौतीति युवा। द्यु गतौ। द्यौतीति द्युवा। प्रतिदीव्यतीति प्रतिदिवा। वृषु वृद्धौ। वर्षतीति वृषा। तक्षू तनूकरणे। तक्ष्णोतीति तक्षा। दंशतीति दश। पचि विस्तारे। पचि संख्याने। इदित्। जस्शसोर्लुक्। पञ्चतीति पञ्च। षप् संबन्धे। षप् गणने। अशूङ् व्याप्तौ। षपेरशेः किति तुक् वक्तव्यः। सपन्ति ते सप्त। अश्नुवते इति अष्ट। णु स्तुतौ। अस्य गुणः। नुवन्ति ते नव। मह पूजायाम्। अस्य धान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे। मह्यते इति मघवा। इति राजादयः। इस्मन्त्रासुकः सर्वधातुभ्यः। सर्वधातुभ्यः इस् मन् त्र असुक् इत्येते प्रत्यया भवन्ति।

राजादेरिति राजृदीप्तौइत्यादेर्धातोः अन्प्रत्ययो भवति। राजते राजा राज् अन्प्र० स्वर० नोपधायाः हसेपः नाम्नो० यु मिश्रणे यु अन् नुधातोरित्युव० स्वर० यौतीति युवा।

वचादेरस्। वचादेर्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्योऽसुप्रत्ययः। उच्यते इति वचः। मह्यते इति महः। पीङ् पाने। पीयते तत् पयः। पिबतेरपि। पिबतेर्धातोरसुन्प्रत्ययो भवति इकारान्तादेशश्च। पीयते इति पयः। तिज् निशाने क्षमायां च। तितिक्षतीति तेजः। तप्यते इति

तपः । रञ्ज् रागे । असि नलोपो वाच्यः । रजते तत् रजः । रक्ष हिंसायाम् । रक्षतीति रक्षः । अर्चिरुचिशुचिहु-सृपिच्छादिच्छृदिभ्य इस् प्रत्ययो भवति । अर्चिरुची-दीप्तौ । अर्चतीति अर्चिः । गुणः । रोचिः शोचिः । हूयते इति हविः । सर्पिः। छादेरिस्मन्त्रन्क्विप्सु ह्रस्वो वाच्यः । छद संवरणे । चुरादिः । छादयतीति छदिः। उछृदिर् दीप्तिदेवनयोः । छृण-त्तीति छर्दिः । सर्वधातुभ्यस्त्रमनौ । तनु विस्तारे । तनोति तत् तन्त्रम् । मन ज्ञाने । मन्यते इति मन्त्रः । यम उप-रमे । यच्छतीति यन्त्रः । छदि संवरणे । ण्यन्तः । छाद-यतीति छत्रम् । क्रियते तत्कर्म । वृञ् आच्छादने । वृणो-तीति वर्म । मर्म दाम घर्म । छादयतीति छद्म । धनार्ति-चक्षिङ्पॄवपितपिजनियजिभ्य उस् प्रत्ययो भवति । धन शब्दे । धनतीति धनुः । ऋ गतौ । गुणः अरुः । चक्षिङ् व्यक्तायां वाचि । चष्टे इति चक्षुः । पिपर्तीति परुः । वपतीति वपुः । तपतीति तपुः। जायते इति जनुः। यजतीति यजुः। अव-तॄस्तॄञ्तन्त्रिकण्ठिभ्य ईः । अवतीति अवीः । तरतीति तरीः। स्तॄञ् आच्छादने । स्तृणोतीति स्तरीः । तन्त्रि धारणे । कण्ठ अवधारणे । तन्त्रयति वा तन्त्रयते सा तन्त्रीः । क-ण्ठयतीति कण्ठीः ।

वचादेरस् वचादेर्धातोः असुप्रत्ययो भवति । वच् अस् प्र०। (प्र० ए०) नपुंसका-त्स्यमो० सो० वचः वचसी वचांसि । एवं मह दीप्तौ महः। उच्यते इति वचः । मह्यते इति महः ।

सौकर्ये केलिमः । सुखेन भिद्यते तत् भिदेलिमं, वा भेत्तुं सुकरं भिदेलिमं किं काष्ठम् । सुखेन पच्यन्ते इति पचे-लिमाः आढक्यः, वा पक्तुं सुकराः पचेलिमाः किं तन्दुलाः । सौकर्य्ये केलिमः । सुखेन क्रियते इति सुकरं तस्य भावः सौकर्य्यं तस्मि-

अर्थे केलिमप्रत्ययो भवति। ककारो गुणनिषेधार्थः। एलिम इति। भिदिर् विदारणे भिद् सुखेन भिद्यते इति विग्रहे एलिमप्र० स्वर० ( प्र० ए० ) अतोऽम् भिदेलिमं काष्ठम्। पच् एलिमप्र० स्वर० आवतः स्त्रियां ( प्र० द्वि० ) अस् सवर्णे० स्रो० सुखेन पच्यंते इति पचेलिमा आढक्यः। आढकी धान्यविशेषः।

गमेर्डौः। गमेर्धातोर्डौः प्रत्ययो भवति। गच्छतीति गौः॥

गमेर्डौः। गम् डौप्र० टिलोपः स्वर० ( प्र० ए० ) गौः स्वर० स्रो०। गच्छतीति गौः।

ग्लानुदिभ्यां डौः। ग्लायतीति ग्लौः। नुदतीति नौः। नुद प्रेरणे।

नुदिग्लैभ्यांडो। नुदति नुद्यते वा नौः ग्लायतीति ग्लौः चंद्रः।

कादीनामिः। स्पष्टं। कविः। रविः। पविः। इत्यादि। मनेरत उच्च। मनधातोरकारस्योकारो भवति। मुनिः। पुः कुषन्। पृधातोः कुषन्नादेशो भवति। पोरुः। पुरुषः। मा प्रभृतिभ्यः सः। मासः। दासः। मादिभ्यो यः। माया। जाया। दधातेर्नुट्। धान्यं। पतिचडिभ्यामालञ्। पातालं। चाण्डालः।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे॥
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥ १॥
उणादयोऽपरिमिता येषु संख्या न गम्यते॥
प्रयोगमनुसृत्याद्वा प्रयोक्तव्यास्ततस्ततः॥ २॥

॥ इति कृदन्ते उणादिप्रक्रिया॥ ५॥

कादीनामिः। कुशब्दे इप्र० गुणः कौतीति कविः रौतीति रविः पुनातीति पविः हरतीति हरिः मनेरुच्च मनज्ञाने इत्यस्य इः प्रत्ययः अकारस्य वोकारः मनुते तत्त्वमिति मुनिः मुहेः षः सुरादेशश्च मुह्यतीतिमूर्षः पुःकुषन् पृपालनपूरणयोः इत्यस्य कुषन्प्रत्ययः उवं पोरुट् पिपर्ति पूर्यते वा पुरुषः मामभृतिभ्यः सः मीयते इतिमासः ददात्यात्मानं दासः मान्तेभ्यो यः मातीति माया जन्यतेऽपत्यमस्यामितिजाया जनेर्जा आदेशः दधातेर्यौनुट् दधातिसत्वानितिधान्यं। पतिचडिभ्यामालञ्। वृद्धिः। पतंत्यस्मिन्निति पातालं। चडिकोपे चंडनशीलश्चांडालः। पर्ज्यादिभ्य ऊः। पर्ज्जूः वहे-

घेश्च वहेर्द्धातोर्हकारस्य घकारादेशो भवति।वहति गृहभारं वधूः।अवितृस्तृतंत्रिभ्य ईः। अवीतरीतंत्रीऊतियूतिसातिहेतिकीर्तयश्च निपात्याः। अवनं ऊतिः युमिश्रणे यूतिः कीर्त्तनं कीर्त्तिः कृतसंशब्दे: हन्यते अनयेति हेतिः षोंतकर्मणि षिञ्बंधने वा सातिः। शृवंघोरारुः हिंसायां हिंसनशीलः शरारुः वंदनशीलो वंदारुः वद्आरु प्र० इदित इति नुम् स्वर०। भृञादिभ्यो यण्। डुभृञ् यण्प्र० वृद्धिः राद्यपोद्विः जलतुं० भ्रियते इति भार्या एवं ऋगतौ आर्या स्त्रीत्वादाप्। सु वह अगिभ्यो निः। योनिः वन्हिः अग्निः। इदि, चदि, शकि रुदिभ्यो रः। इंद्रः चंद्रः शक्रः रुद्रः इत्यादि। उपसंहारमाह। उणादयः प्रत्यया अपरिमिताः संख्यारहिता इत्यर्थः। यो यत्र प्रयोगः संभवति तत्र तं प्रयोगं श्रित्याश्रित्य प्रयोगानुसारेण प्रयोक्तव्याः इत्यर्थः। इति उणादयः।

---

तुम् तदर्थायां भविष्यति। धातोर्भविष्यति काले तुम् प्रत्ययो भवति तदर्थायां क्रियायां प्रयुज्यमानायाम्। भुज पालनाभ्यवहारयोः। भोक्ष्यतीति भोक्तुं व्रजति। पठिष्यतीति पठितुं ईष्टे। स्तोष्यतीति स्तोतुं ईहते। स्थातुं ईहते॥ तुमर्थे वुण् वक्तव्यः। द्रक्ष्यतीति द्रष्टुम्। कृष्णं द्रष्टुं व्रजति। कृष्णदर्शको व्रजति।

तुम् तदर्थायां भविष्यति। तुम (प्र० ए०) हसेपः स एवार्थोयस्यां सा तदर्था तस्यां (स० ए०) आम्डे ङितांयट् स्वर० भविष्यत् (स० ए०) स्वर० धातोर्भविष्यति काले तुम् प्रत्ययो भवति यस्याग्रे तुम्प्रत्ययो भवति स एव धात्वर्थ एवार्थः प्रयोजनं यस्याः सा तस्यां तत्संबंधार्थवाचिकाया तत्प्रयोजनायां क्रियायां सत्यां। भुज् पालनाभ्यवहारयोः भुज् तुम् प्र० चोः कुः उपधाया लघोर्गुणः ससेचपाः स्वर० तुम्प्रत्ययांतं अव्ययं (प्र० ए०) अव्य० भोक्तुं व्रजति अत्र भुज्धात्वर्थप्रयोजने व्रजतीति क्रिया प्रयुज्यते। पठ तुम् कृत इतीडागमः स्वर० पठितुं इष्टे समर्थो भवति ष्णा शौचे आदेः ष्णः स्नः स्ना तुम् प्र० स्नातुं ईहते वांछति।

कालसमयवेलासु तुम्। भोक्तुं कालः। अध्येष्यतीति अध्येतुं समयः। स्तोष्यतीति स्तोतुं वेला।

कालवेलासमयेषु च तुम् वक्तव्यः। भोक्तुं कालः। भोक्तुं वेला। भोक्तुं सयमः। सूत्रम्।

घञ् भावे। धातोर्भावे घञ् प्रत्ययो भवति। चजोः कगौ

घिति । पच्यते तत् पचनं पाकः । त्यज् वयोहानौ । त्यज्यते तत् त्यजनं त्यागः । भज्यते तत् भजनं भागः । इज्यते तत् यजनं यागः । विभज्यते तत् विभजनं विभागः । युजिर् योगे । अनुप्रयुज्यतेऽसौ अनुप्रयोगः । अनूच्यते तत् अनुवचनं अनुवाकः । इण् गतौ । नन्द्यादित्वाद्युः । ततोऽनादेशः । गुणः वृद्धिः । अयनं आयः । भूयते तत् भवनं भावः । आतो युक् । दीयते तत् दानं दायः । पानं पायः । भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः । रज्यते अनेनेति रञ्जनं वा रागः । भावे किम् । रज्यतेऽस्मिन्निति रङ्गः । रभ राभस्ये । रभलभोः स्वरेणाद्यपौ विना नुम् वाच्यः। आरम्भः । अञ्चु गतिपूजनयोः । परितोऽञ्चतीति प्राङ्कः।

घञ्भावे । घञ् ( प्र० ए० ) हसेपः। भाव ( स० ए० ) अइए धातोर्भावे कर्मरहिते अर्थे केवलधात्वर्थे एव घञ्प्रत्ययो भवति । ञकारोवृद्ध्यर्थः । घकारो घित्कार्यार्थः । डुपचष्पाके पच् घञ्प्र० अतउपधायाः पाच् अ इति स्थिते । चश्च जश्च चजौ तयोः ( ष० द्वि० ) स्वर० स्रो० कश्च गश्च कगौ ( प्र०द्वि० ) ओऔऔ घइत् यस्यसघित्तस्मिन्घिति ( स० ए० ) स्वर० घिति परे चकारस्य ककारः जकारस्य गकारः अनेन चस्य कः स्वर०पचनं पाकः त्यज् हानौ त्यज् घञ्प्र० आवृद्धिः चजेरिति जस्य गः स्वर० त्यजनं त्यागः । भज सेवायां विपूर्वः चजोः घञ् कगौ वृद्धिः स्वर० विभजनं विभागः । इण् गतौ इञ् अ वृद्धिः इ इत्यस्य ऐ । ऐ आय् स्वर० ( प्र० ए० ) स्रो० अयनं आयः । अय गतौ अयनं आयः । ये गत्यर्थास्ते प्राप्त्यर्थाः । एवं भवनं भावः डुदाञ् दा घञ् आतोयुक् स्वर० ( प्र० ए० ) स्रो० दानं दायः पानं पायः एवं स्तृविस्तारे विस्तरणं विस्तारः । सूत्रम् ।

संज्ञायामकर्तरि च । धातोः कर्तृवर्जिते कारके भावे कर्मणि च घञ् प्रत्ययो भवति संज्ञायां विषये । कार्यं कार्यं प्रति आह्रियते इति प्रत्याहारः । दीयते अस्मिन् इति दायः । दीयतेऽसौ दायः । पीयते अस्मिन् इति पायः । विक्रियते अनेनेति विकारः । मृजूष् शुद्धौ । अपामृज्यते अनेनेति

अपामार्गः। लिख् आलेखने। लिख्यतेऽस्मिन्निति लेखः। आचर्यतेऽस्मिन्निति आचारः। उपाधीयतेऽस्मादिति। उपाध्यायः।

संज्ञायामकर्तरि। संज्ञा (स० ए०) आम्ङेः ङितांयट् सवर्णे० अकर्त० न कर्त्ता अकर्त्ता तस्मिन् (स० ए०) ङौइति अर् स्वर० च (प्र० ए०) अव्य० संज्ञायां विषये कस्यापि नाम्नि वाच्ये सति अकर्तरि कर्तृवर्जिते कारके भावेऽर्थे कर्मार्थे च घञ् प्रत्ययो भवति। अनुबंधादिः प्राग्वत् उदा० ह्व प्रत्याङ्पूर्वः प्रतिकार्यं आह्रियते आनीयते इति प्रत्याहारः घञ् प्र० वृद्धिः स्वर० (प्र०ए०) स्रो० एवं विक्रियते विकारः। दीयते इति दायः। वस्यते अस्मिन्निति वासः।

स्वरादः। इउऋवर्णान्तेभ्यो धातुभ्यो अः प्रत्ययो भवति भावादौ। घञोऽपवादः। संचीयतेऽसौ संचयः। चयनं चयः। जीयते इति जयः। नीयते तत् नयनं नयः। उन्नीयते इति उन्नयः। नूयते तत् नवनं नवः। लवणं लवः। स्तूयते तत् स्तवनं स्तवः। कॄ विक्षेपे। कीर्यते इति करः गरः। नॄ विक्षेपे। त्रियते विक्षिप्यते कामादिभिरिति नरः। षिञ् बन्धने। विशेषेण सीयते बद्ध्यते अनेनेति विषयः।

स्वरा० (पं० ए०) ङसिरत् सवर्णे० अ (प्र० ए०) स्रो० चपाअवेजबाः स्वर० वृत्तिः सुगमा। चिञ् चयने चि अप्रत्ययः गुणः एअय् स्वर० (प्र० ए०) स्रो० चयनं चयः अत्र भावे संपूर्वः संचीयत इति संचयः अत्र कर्मणि ष्टुञ् स्तुतौ आदेःष्णास्नः स्तु स्वरादेः इति अप्र०अ गुणः ओ अव् स्वर० (प्र० ए०) स्रो० स्तवनं स्तवः। एवं भवनं भवः, अनुभवनमनुभवः, णु स्तुतौ नवनं नवः, णीञ् प्रापणे आदेः ष्णास्नः नी उत्पूर्वः उत्प्राबल्येन ऊर्ध्वं वा नयनं प्रापणं उन्नयः, अप्र० गुणः स्वर० (प्र० ए०) स्रो० नॄ विक्षेपे निरयते विक्षिप्यते प्रेर्यते कर्मादिभिरथ वा कामादिभिरिति नरः। स्वरादेः अप्र० गुणः स्वर० स्रो०। सूत्रम्।

मदामः। मदादीनां अःप्रत्ययो भवति भावादौ कर्तृवर्जिते। मदी हर्षे। मद्यते तत् मदनं मदः। प्रमद्यते अनेनेति प्रमदः। प्रमद्यते पुरुषोऽनया सा प्रमदा। पण्यते तत्

पणनं पणः । शमु दमु उपशमे । शम्यतेऽसौ शमः । दमनं दमः । श्रम खेदे । श्रम्यते इति श्रमः । भ्रमः । यमु उपरमे । यम्यते इति यमः । दीव्यति विश्वमनेनेति देवः । जङ्गम्यतेऽसौ जङ्गमः । हिंसि हिंसायाम् ।

मदादामः । मद् ( ष० ब० ) स्वर० मोनु० मदादीनां धातूनां अमत्ययो भवति भावे कर्त्तरि च । मदी हर्षे मद अम० स्वर० ( प्र०ए० ) सो० मदनं मदः अत्र भावे एवं प्रमधते प्रकर्षेण हृष्टः क्रियते पुरुषोऽनयेति प्रमदा स्त्रीत्वादाप् । अत्र कर्मणि पण्धातुः व्यवहारे स्तुतौ च पण् अम० स्वर० पणः। शम् दम् उपशमे शमः दमः । यम् उपरमे यमः विस्तरः । दीव्यते विश्वमनेनेति देवः षिञ् बंधने आदेःष्णःस्नः। सि विपूर्वःविशेषेण सिनीते बध्नाति पुरुष ईश्वरो वा अनेनेति विषयः। अम० गुणः स्वर० मादेश्च तथा तौ सुनमां ( प्र० ए० ) सो० । सूत्रम् ।

मूर्त्तौ घनः । मूर्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्तेरः प्रत्ययो भवति भावादौ हन्तेर्घनादेशश्च । दधिकाठिन्यं हन्यते इति दधिघनः । परिच्छिन्नं सैन्धवं हन्यते इति सैन्धवघनः ।

मूर्त्तौ घनः । मूर्त्ति ( स० ए० ) ङेरौ डित् टिलोपः स्वर० घनः ( प्र० ए० ) सो० मूर्त्तौ कोऽर्थः काठिन्येऽर्थे पुनः परिच्छेदे परिमाणेऽर्थे वा ज्ञानविशेषे वा अभिधेये वाच्ये सति हंतेर्द्धातोः अप्रत्ययो भवति हंतेश्च घनादेशः । हन् ५ एकत्र दधिपूर्वः द्वितीये सैंधवपूर्वः अप्र० घनादेशः आदे० स्वर० ( प्र०ए० ) सो० कठिनं दधि दधिघनः परिछिन्नं एतावत् स्तोकं वा सैंधवं सैंधवघनः ।

सिंहे वर्णविपर्ययश्च । चकारादः प्रत्ययः । हिनस्तीति सिंहः ।

हनो वधादेशश्चाप्रत्ययः । हन्यते इति वधः ।

हिंसतेर्द्धातोः अप्रत्ययो वर्णविपर्ययश्च भवति सिंहे वर्णविपर्ययः इत्युक्तत्वात् । हिंस हिंसायां हिंस् हिनस्तीति हिंसः अत्र वर्णविपर्ययः हस्य स्थाने सः सस्य स्थाने हः इति स्वर० ( प्र० ए० ) सो० । सिंहः । सूत्रम् ।

ट्वितोऽथुः । ट्वितो धातोरथुः प्रत्ययो भवति भावादौ । टुवेपृ कम्पने । वेप्यते अनेनेति वेपथुः । टुणदि समृद्धौ ।

नन्द्यते अनेनेति नन्दथुः। टुवप् बीजतन्तुसन्ताने। उप्यते इति वपथुः। टुक्षेपृ क्षेपणे। क्षेप्यते अनेनेति क्षेपथुः। टु-ओश्वीगतिवृद्ध्योः। श्वयथुः। टुक्षु शब्दे। क्षूयते इति क्षवथुः। टुवम् उद्गिरणे। वमथुः।

ट्वितोऽथुः।ट्वइत् यस्य स ट्वित् तस्मात्(पं०ए०)स्वर०स्तो०अथु०(प्र०ए०)स्तो०अतोत्युः उओ एदोतोतः टु इत् यस्य तस्य धातोः अथुप्रत्ययो भवति भावे। टुवेपृकंपने वेप् अथुप्र० स्वर० (प्र० ए०) स्तो० वेपथुः। टुक्षेपृ क्षेपणे प्रेरणे। क्षेपथुः। टुणदि समृद्धौ नंदथुः। टुदुउपतापे दवथुः। टुक्षु शब्दे क्षवथुः। टुओश्वि गतिवृद्धौ श्वयथुः। टुवम् उद्गिरणे वमथुः। सूत्रम्।

ड्वितस्त्रिमक्। ड्वितो धातोस्त्रिमक् प्रत्ययो भवति। तेन धात्वर्थेन कृतेऽर्थेवाच्ये सति। क्रियया निर्वृत्तः कृत्रिमः घटः। संभारेण संभृतं वा निर्वृत्तं संभृत्रिमं युद्धम्। पाकेन निर्वृत्तं पक्त्रिमं फलम्। याचनेन निर्वृत्तं याचित्रिमं किं विप्रधनम्।

ड्वितः त्रिमक् तत्कृते।ड्वित् (पं० ए०) स्वर० स्तो० त्रिमक् (प्र०ए०) हसेपः तत्कृत (स० ए०) अइए डु इत् अनुबंधो यस्य स ड्वित् तस्माद्धातोः त्रिमक् प्रत्ययो भवति। तेन धात्वर्थेन साधनभूतेन कृते निःपादिते पदार्थे वस्तुनि अर्थे वाच्ये सति। कृ क्रियया करणेन निर्वृत्तो निष्पन्नः कृत्रिमोऽस्वाभाविको घटः। अत्र कृधातोरर्थः करणं तेन कृतो निष्पन्नो यो घटरूपो अर्थः पदार्थो अस्मिन् वाच्ये त्रिमक् प्र० ककारो गुणनिषेधार्थः (प्र० ए०) स्तो०। एवं डुभृञ् संपूर्वः त्रिमक् प्र० (प्र० ए०) अतोऽम् संभारेण मनुष्यसमूहेन निर्वृत्तं संभृत्रिमं युद्धं। डुपचष् पाके पच् त्रिमक् प्र० चोःकुः स्वर० (प्र० ए०) अतोऽम् पाकेन निर्वृत्तं निष्पन्नं पक्त्रिमं फलं। एवं पक्त्रिमः ओदनः। सूत्रम्।

नङ्की। धातोर्नङ् की इत्येतौ प्रत्ययौ भवतः भावादौ। यज् याच् यत् विच्छ प्रच्छ स्वप् एभ्यो नङ्प्रत्ययो भवति। स्तोः श्चुभिः श्चुः। असंप्रसारणम्। इज्यते अनेनेति यज्ञः। याच्यते सा याच्या। यती प्रयत्ने। यत्यते तत् यतनं यत्नः।

नङ्की। नङ्च किश्च नङ्की ( प्र० द्वि०) औङ्. सवर्णे० । धातोर्नङ् कि इत्येतौ प्रत्ययौ भवतः भावादौ।स्वपरक्षयतप्रच्छविच्छियाचयज एभ्यो नङ्यतौ धातुः प्रयत्ने यत् नङ् प्र० स्वर० ( प्र० ए० ) स्रो० यतनं यत्नः प्रच्छ ज्ञीप्सायां प्रछ् नङ् प्र०

छः श्ने । छकारस्य शकारादेशो भवति नप्रत्यये परे भावादौ। शकारादेशः संप्रसारणबाधार्थः । विच्छि गतौ । विच्छ्यते इति विश्नः । प्रच्छ ज्ञीप्सायाम् । प्रच्छ्यतेऽसौ प्रश्नः । रक्ष्यतेऽसौ रक्ष्णः । सुप्यते इति स्वप्नः ।

उपसर्गकर्माधारेषु दाधोः किः । उपसर्गे कर्मण्युपपदे आधारे च दाधोः किः प्रत्ययो भवति । अन्तर्धीयते इति अन्तर्धिः । आधिः आदिः विधिः । आधीयते तत् आधानं आधिः । आदीयते तत् आदानं आदिः । आतोऽनपि इत्याकारलोपः । विधीयते तत् विधानं विधिः । संधीयते तत् संधानं संधिः । उदकं धीयतेऽस्मिन्निति उदधिः । उदकस्य । उदकशब्दस्य उदादेशो भवति अधिकरणे । पयोधिः । अम्भो निधीयते यत्र स अम्भोनिधिः ।

प्रच्छः श्ने । प्रछ्धातोः ने परे छकारस्य शकारो भवति संप्रसारणाभावश्च स्वर० ( प्र०ए०) स्रो० पृच्छनं प्रश्नः विछश्च विछ गतौ विश्नः याचनं याच्ञा यज्. देव० यजनं यज्ञः नङ् प्र० स्तोश्चुभिश्चुः जञोर्ज्ञः ( प्र ए ) स्रो० स्वपनं स्वप्नः टकार ईवर्थस्तेन द्रवति द्रोणी। राज्ञाधीयते राजधानी डुधाञ्.धारणे विपूर्वः किप्र० ककारः कित्कार्यार्थः इ आतोनपीत्याकारलोपः स्वर०( प्र ए) स्रो० विधिः विधानं विधिः । एवं निधिः आधिः संधिः । अंभो निधीयते यत्र स अंभोनिधिः । आदीयते इति आदिः, ग्रथि ग्रंथने ग्रथ् कि प्र० इ इदितः नश्चा० स्वर० ( प्र० ए०) स्रो० ग्रंथिः, विधिः, निधिः, संधिः, आधिः । समाधिः, अंभोनिधिः, एते सर्वेऽपि किप्रत्ययांताः, पुल्लिंगे हरिशब्दवत् साध्याः । सूत्रम् ।

भावे युट् । धातोर्भावे युट् प्रत्ययो भवति । युवोरनाकौ । ज्ञायते तत् ज्ञानम् । क्रियते तत् करणम् । दीव्यते तत् देवनम् । दीयते तत् दानम् । भूष अलंकारे । भूष्यते तत्

भूषणम्। ह्रियते तत् हरणम्। हूयते तत् हवनम्। उह्यते तत् वहनम्। भाष व्यक्तायां वाचि। भाष्यते तद्भाषणम्। दुष वैचित्त्ये। दूष्यते तत् दूषणम्। गीयते तत् गानम्। पीयते तत् पानम्। मीयते तत् मानम्।

युट्। युट् ( प्र० ए०) हलेपः इतिः कंख्या युट्प्रत्ययांता नपुंसकलिंगे भवंति। कृ युट्प्र० यु० युवोरनाकौ गुणः स्वर नुर्णो० क्रियते इति करणं हू दानादनयोः हूयते इति हवनं दुष वैकृत्ये दूष्यते इति दूषणं दुषश्च ण्यंतस्यकृतिच। क्वचिदिति दीर्घः। डुदाञ् दाने। एवं भाषणं उद० इति उत् उपसर्गात् पूर्वात् स्थादेर्धातोर्युट् प्रत्ययो भवति सलोपश्च भवति। ष्ठा गतिनिवृत्तौ।आदेः ष्णः स्नः। स्था उत्पूर्वः। युम० युवो०।

उदः स्थास्तम्भोः सलोपश्च। उत् उपसर्गात्परयोः स्थास्तम्भयोः सकारस्य लोपो भवति। उत्थीयते तत् उत्थानम्। स्तम्भ रोधने। उत्तम्भ्यते तत् उत्तम्भनम्।

उदःस्था० इति सकारलोपः। उत्थानं। एवं स्तंभूस्तंभे निरोधे ष्टंभू अवष्टंभे। उत्तंभनं उत्थितिः। सूत्रम्।

साधनाधारयोर्युट्। साधने आधारे चार्थे युट् प्रत्ययो भवति। पच्यते अनेनेति पचनः अग्निः। पच्यतेऽस्यां स्थाल्यां सा पचनी स्थाली।

साधनाधारयोर्युट्। साधनं च आधारश्च साधनाधारौ तयोः ( स०द्वि० ) ओसि एअय् स्वर० स्नो० साध्यं येन कृत्वा तत्साधनकरणं यत्र आधाय साध्यते स आधारः तयोः अर्थे युट् प्र० पच्यु युवोरनाकौ स्वर० ( प्र० ए० ) स्नो० पच्यते अन्नमनेनेति पचनोऽग्निः अत्र साधने युट् स्थाली। स्थाल्युषापि वरं कुंडं इत्यभिधानचिंतामणौ। टित्त्वादीप्। अत्राधारे युट्। एवमन्येप्यूह्याः। सूत्रम्।

ईषद्दुःसुषु खल्यू। ईषदादिषु प्रयुज्यमानेषु खल् यू इत्येतौ प्रत्ययौ भवतः भावादौ। लकारः प्रत्ययभेदज्ञापनार्थः। खकारो गुणविधानार्थः, मुमागमार्थश्च। ईषत्सू अकृच्छ्रार्थौ। दुः कृच्छ्रार्थः। ईषदनायासेन भूयते इति ईषद्भवः। दुर्भवः सुभवः। ईषदनायासेन क्रियते इति ईषत्करः प्रपञ्चो हरि-

णा । दुःखेन क्रियते इति दुष्करः । सुखेन क्रियतेऽसौ सुकरः । ईषदाढ्यः क्रियते अनेनेति ईषदाढ्यंकरः। दुराढ्यंकरः। आढ्यंकरश्चैत्रो भवता । ईषत् पीयते असौ ईषत्पानः सोमो भवता । दुःपानः सुपानः । युध संप्रहारे । दुःखेन योधयितुं शक्यः दुर्योधनः । सुखेन योधयितुं शक्यः सुयोधनः । ईषत् शासनः । दुःखेन शासयितुं शक्यः दुःशासनः । इति कृदन्ते भावाधिकारप्रक्रिया ।

ईषद्दु० ईषच्च दुश्च सुश्च ईषद्दुःसवस्तेषु ( स० व० ) क्लिा० खल् च युश्च खयू (प्र० द्वि०) औयू सवर्णे० ईषदादिषु ईषत्दुःसुएतेषु त्रिषु पूर्वपदेषु सत्सु धातोः खल् यू एतौ प्रत्ययौ भवतः। खकार ईषदाढ्यां भवः इत्यादौ खिति पदस्येति मुमागमार्थः । लकारो इस्वखीति खप्रत्ययात् भेदज्ञापनार्थः । भू ईषत्दुःसुपूर्वाः खल् प्र० अ० गुणः ओअव् स्वर० (प्र० ए०) स्रो० ईषद्भवतीति ईषद्भवः एवं दुःखेन भवतीति दुर्भवः सुखेन भवतीति सुभवः एवं करोति ईषत्क्रियते इति ईषत्करः, दुःकरः, सुकरः, एवं दुर्जयः, सुजयः, दुर्लभः, सुलभः, । युध् धातुः संप्रहारे । संग्रामे युध् दुः पूर्वः । युम० युवो० इति अनादेशः उपधाया लघोर्गुणः स्वर० ( प्र० ए० ) स्रो० दुर्योधनः दुःखेन युध्यते इति दुर्योधनः । एवं सुयोधनः । इति कृदन्ते भावप्रक्रिया ।

॥ अथ कृत्यप्रक्रिया ॥ तव्यादीनां कृत्यसंज्ञा पाणिनीयानाम् । कृत्यादिर्भावकर्मणोरेव । तव्यानीयौ । धातोस्तव्यानीयौ प्रत्ययौ भवतः भावादौ । एध वृद्धौ । एध्यते वा एधितुमर्हमेधितव्यं एधनीयं धनं त्वया । भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भूयते वा भवितुमर्हं भवितव्यं भवनीयम् । क्रियते वा कर्तुमर्हं कर्तव्यं करणीयम् । आस्यते वा आसितुमर्हमासितव्यम् आसनीयम् । कर्तव्यः करणीयो वा धर्मस्त्वया । या प्रापणे । प्रयातुमर्हं प्रयातव्यं प्रयाणीयम् । ईटो ग्रहाम् । गृह्यते तत् ग्रहीतव्यं ग्रहणीयम् । वृङ् संभक्तौ । व्रियते वा वरितुं योग्यं वरितव्यं

वरीतव्यं वरणीयम्। वृञ् वरणे। व्रियते तत् वरितव्यं वरीतव्यं वरणीयम्।

तव्यश्च अनीयश्च तव्यानीयौ (प्र० द्वि०) औऔ औ धातोस्तव्यानीयौ प्रत्ययौ भवतः अकर्त्तरि कर्मादिकारके भावे च भू तव्य प्र० कृत इतीडागमः गुणः स्वर०( प्र० ए० ) अतो अम् भवनं भवितव्यं अत्र भावे तव्यप्र० आस् उपवेशने आनीयप्र० स्वर० ( प्र० ए० ) अतो अम् कृ २ एकत्र तव्यः एकत्र आनीयः एकस्वरांतत्वान्नेट् गुणः स्वर० कर्त्तव्यं करणीयम्। अत्र कर्मणि क्रियते इति कर्त्तव्यं करणीयं। ग्रह तव्य० कृत इतीडागमः गृहीतव्यमिति स्थिते। सूत्रम् ई ( प्र० ए० ) सांकेति० इट् ( ष० ए०) स्वर०स्रो० ग्रह (ष० ब०) स्वर० मोनु० ग्रहादीनां ग्रह वृङ् वृञ् ऋकारांता इत्यादीनामिटः ईकारो भवति नतु णादौ तेन जगृहिष्वेत्यादौ न। तथा आशीर्लिङ् परस्मैपदे सौ च परे च न अनेन इकारस्य ईकारः ग्रहीतव्यं वृञ् धातुः संभक्तौ संसेवायां तव्य प्र० कृत इतीडागमः गुणः स्वर० ( प्र० ए० ) अतो अम् ईटो ग्रहां। वरीतव्यं।

स्वराद्यः। स्वरान्ताद्धातोर्यः प्रत्ययो भवति भावादौ। चीयते वा चेतुमर्हं चेयं नेयं जेयम्। भीयते तत् भेयम्। असरूपोऽपवादः प्रत्ययोऽस्त्रियां वा बाधकः सरूपस्तु नित्यम्। चीयते वा चेतुमर्हं चेतव्यं चयनीयम्। चिकीर्ष्यते वा चिकीर्षितुमर्हं चिकीर्ष्यम्। दातुमिच्छतीति दित्सति वा दित्स्यते इति दित्स्यम्।

स्वर० ( पं० ए० ) ङसिरत् सवर्णे० य ( प्र० ए० ) स्रो० चपा० स्वर० सिद्धं० उदा० चिञ् चि स्वराद्यः य प्र० गुणः ( प्र० ए० ) अतो अम मोनु० चेयम्। एवं णीञ् प्रापणे आदेः ष्णः स्नः नीय प्र० गुणः नेयं। क्षय्य जय्यौ एतौ द्वौ शक्येर्थे निपात्येते क्षेतुं शक्यंक्षय्यं एवं जेतुं शक्यं जय्यं एतौ निपात्यौ केचित्तु क्रय्य जय्यौ निपात्यौ तन्मते क्रेतुं शक्यं क्रय्यं पक्षे क्षेतुं योग्यं क्षेयं जेतुं योग्यं जेयं क्रेतुं योग्यं क्रेयं सर्वत्र य प्र०। सूत्रम्।

पुशकात्। अकारोपधात् पवर्गान्तात् शकादेश्च यः प्रत्ययो भवति भावादौ। शप् उपालम्भे। आक्रोशे च। शप्यते इति शप्यम्। जप्तुं योग्यं जप्यम्। सरूपत्वात् पक्षे न घ्यण्। शक्यम्। शक् सह् गद् मद् चर् यम् तक् शस्

चत् यत् पत् जन् हन् शल् रुच् एते शकादयः। षह मर्षणे। सोढुं शक्यं सह्यम्। सह्यते वा सोढुमर्हं सह्यम्। गद्यते वा गदितुमर्हं गद्यम्। मद्यते वा मदितुमर्हं मद्यम्। चरितुमर्हं चर्यम्। यम्यम्। तक् हसने। तक्यते वा तकितुमर्हं तक्यम्। शसु हिंसायाम्। शसितुमर्हं शस्यम्। चते माने। चते कान्तौ। चत्यते इति चत्यं यत्यं पत्यं जन्यम्। हनो वधादेशो ये। हन्यते वा हन्तुमर्हं वध्यम्। शल् शोभायाम्। शल्यम्। रोचितुं शक्यं रुच्यम्। डुलभष् प्राप्तौ। लब्धुं योग्यं लभ्यम्। यभ् मैथुने। यब्धुं शक्यं यभ्यम्। शक् सामर्थ्ये। शक्लृ शक्तौ। शक्यते तत् शक्यम्।

पुशक (पं० ए०) ङसिरत् सवर्णे० पवर्गांताः पफबभम एते तदंतात् शक्यादेश्च धातोर्यप्रत्ययो भवति भावादौ। यभ् मैथुने यभ् यभ्यत इति यभ्यं कलत्रं पवर्गांतत्वात् यः (प्र० ए०) अतो अम् मोनु० एवं लभ्यं, जप्यं, नम्यं, इत्यादयः। एवं पवर्गांताः। शक्लृ शक्तौ शक् यप्रत्ययः शक्यं मह पूजायां मह य० स्वर० (प्र० ए०) अतो० मोनु० मह्यं। एवं षह मर्षणे सह्यम्। सूत्रम्।

ईच्चातः। आकारान्ताद्धातोर्यः प्रत्ययो भवति आकारस्य च ईकारादेशः। दीयते वा दातुमर्हं देयम्। ज्ञातुं योग्यं ज्ञेयम्। गीयते तत् गेयं ग्लेयं पातुमर्हं पेयम्। धीयते तत् धेयम्।

ई। (प्र० ए०) सांके० च (प्र० ए०) अव्य० आत् (प्र० ए०) स्वर० स्रो० सिद्धम्। वृत्तिः सुगमा। आकारस्य चैकारः डुदाञ् दा ईच्चातः इति यप्र० आकारस्य एकारः गुणः स्वर० (प्र० ए०) अतो अम् मोनु० देयं दीयते इति देयं। एवं गेयं पेयं गै संध्यक्षराणामा० खनेश्च खनेर्धातोः यः प्रत्य० टेश्च ईकारः खनु् सनने यप्र० खन् इत्यस्य खि गुणः खेयं (प्र० ए०) अतो० मोनु०। सूत्रम्।

ऋहसात् ध्यण्। ऋवर्णान्ताद्धसान्ताच्च धातोर्घ्यण् प्रत्ययो भवति भावादौ। घकारो घित्कार्यार्थः। णकारो वृद्ध्यर्थः।

क्रियते वा कर्तुमर्हं कार्यम्। वृञ् वरणे। व्रियते तत् वार्यं धार्यं चार्यम्। हस् हसने। हास्यम्। ह्रियते तत् हार्यम्। हनो घत्। हन्यते तत् घात्यम्। चजोः कगौ घिति। पक्तुं योग्यं पाक्यम्। याच्यते तत् याच्यम्। रुच्यते तत् रोच्यम्। वच परिभाषणे। वचेः शब्दसंज्ञायां कुत्वं वाच्यम्। तेन वाक्यम्। अन्यत्र वाच्यम्। यज्याच्रुच्प्रवच्अर्च्त्यज्पूज्गर्ज्भुजां घ्यणि कुत्वाभावः। याज्यं याच्यं वाच्यं रोच्यं प्रवाच्यं अर्च्यं त्याज्यं पूज्यम्। गर्ज शब्दे। गर्ज्यते तत् गर्ज्यम्। भुज्यते तत् भोज्यम्। बाधृ हिंसायाम्। बाधितुं योग्यं बाध्यम्। भजितुं योग्यं भाज्यम्।

ऋहसा०। ऋश्च हसश्च ऋहसं ऋहसं अंते यस्य स ऋहसांतः तस्मात् (पं० ए०) हसिरल् सवर्णे० घ्यण् (प्र० ए०) हसेपः ऋवर्णांतात् हसांताच्च धातोः घ्यण् प्रत्ययः स्यात् भावादौ। घकारो घित्कार्यार्थः। कृ घ्यण् प्र० यः णित्वाद्धातोर्नामिनः इति वृद्धिः। रात्यपोद्धिः जलतु० (प्र० ए०) अतो अम् करणाय अर्हं क्रियते वा यत्कार्यं एवं वृञ् वरणे वार्यं वच् परिभाषणे वचनाय योग्यं उच्यते वा यत्तत् वाच्यं बधू बंधने बध् घ्यण् प० वृद्धिस्वर० बंधनाय योग्यं बाध्यं हस् हसने घ्यण् प्र० वृद्धिः स्वर० (प्र० ए०) अतो अम् हास्यं, डुपचष् पाके पच् घ्यण् प्र० चजोः कगाविति चस्य कः। वृद्धिः पाक्यं एवं वच् वाक्यं घित्वात् ककारोपि भवतीत्यपि शब्दात् कुत्रचित् चजोः कगौ धितीति भवति कुत्रचिन्नभवति कुत्र चिद्विकल्पः तेन वाच्यं वाक्यं भोज्यं भोग्यं इत्यादौ विकल्पः त्याज्यं,पूज्यं,रुच्यं,अर्च्यं,इत्यादौ न। एवं प्रयोगानुसारेण कुत्वाभावो ज्ञेयः। अमापूर्वस्य वसतेर्घ्यणि वा वृद्धिः वक्तव्या। कर्त्तरि घ्यण्च अमा सह वसतश्चंद्रार्कौ अस्यामिति अमावास्या अमावस्या इति विकल्पेन वृद्धिः पुनर्विशेषमाह।

एते भावकार्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्याः। रारोऽसे दृशाम्। दर्शनार्हो द्रष्टव्यः। द्रष्टुमर्हः दर्शनीयः दृश्यः। इङ् अध्ययने। स्वाध्यायोऽध्येतव्यः। स्वाध्यायो नाम वेदः। श्रु श्रवणे। श्रवणार्हः श्रोतव्यः।

श्रोतुं योग्यं श्रवणीयम् । मान पूजायाम् । मानितुं योग्यो मानितव्यः-माननीयः । ध्यै चिन्तायाम् । ध्यानार्हो ध्यातव्यः । ध्यातुं योग्यो ध्यानीयः । मन ज्ञाने । मननार्हो मन्तव्यः । मन्तुं योग्यो माननीयः । सप्रत्ययान्तादपि एते प्रत्यया भवन्ति । नितरां ध्यातुमेष्टव्यो निदिध्यासितव्यः । भवितुमेष्टव्यो बुभूषितव्यः बुभूषणीयः ।

एते इति । ये एते पूर्वोक्तास्तव्यादयः तव्य, अनीय, य, घ्यण् एते प्रत्यया भावकार्ययोर्भावोक्तौ कर्मोक्तौ विहिताः कृतास्ते अर्हे योग्यत्वार्थे विधौ च कर्त्तव्यार्थोपदेशे च वक्तव्याः कर्त्तव्या इत्यर्थः । दृशिर् प्रेक्षणे । दृश् दर्शनार्हो द्रष्टव्यः इति तव्यप्र० गुणाः रारोझसे दृशामिति द्र छशषराजादेः षः ष्टुभिः ष्टुः दर्श अनीयप्र० गुणः जलतुं० स्वर० दर्शनीयः पुनः दृश ऋ हसांतादिति घ्यण् प्र० य स्वर० दृश्यः ईङ् अध्ययने ई अधिपूर्वः अध्येति विधेयो अर्हो वाध्येतव्यः तव्य प्र० गुणः इयं स्वरे स्वर० स्वाध्यायोऽध्येतव्यः । एवं श्रु श्रवणे । श्रोतुं योग्यः श्रूयते वा इति श्रोतव्यः। मन् ज्ञाने मंतव्यः । ध्यै चिंतायां ध्यै संध्यक्षराणामा ध्यातव्यः । सप्रत्ययांता इच्छार्थे सप्रत्ययांताद्वा तैरपि तव्यादयः प्रत्यया भवंति । ध्यै चिंतायां संध्यक्षराणामा ध्या नितरां ध्यातुमेष्टव्य इति विग्रहे इच्छार्थे सप्रत्ययः द्विश्च पूर्वस्य हसादिशेषः यः से इति पूर्वाकारस्य इकारः झपानां जबचपाः धस्य दः ततः सप्रत्ययान्तात्तव्यप्र० कृत इतीडागमः यतः इत्यकारलोपः निपूर्वः निदिध्यासितव्यः । ज्ञा अवबोधने ज्ञा सप्रत्ययदित्वादि प्राग्वत् । विजिज्ञासितव्यः विशेषेण ज्ञातुमेष्टव्यः ।

ओरावश्यके घ्यण् । उवर्णान्ताद्धातोरावश्यकेऽर्थे घ्यण् प्रत्ययो भवति । ओदौतोर्यः प्रत्ययः स्वरवत् । धातोरोकारौकारयोर्निमित्तं वा संबन्धी यः प्रत्ययः स स्वरवत् स्यात् । समासे अवश्यमादीनामन्तलोपमिच्छन्ति शाब्दिकाः ।

उ ( पं० ए० ) ङसि ङस्य सो० आवश्यके ( स० ए० ) अइए उवर्णांताद्धातोः आवश्यकेऽर्थे निश्चयार्थे घ्यण् प्रत्ययो भवति भावादौ । भू घ्यण् प्रत्ययः घ णकारोवृद्ध्यर्थः भो अवश्यं पूर्वः ओदौतो० ओच औच ओदौत् तस्मात् ओकारौकाराभ्यां परो यः प्रत्ययस्य यकारः स्वरवज्ज्ञेयः स्वरवत्त्वात् औ आव स्वर० अवश्यं भाव्यं । एवं, लूञ् छेदने अवश्यं लाव्यं मकारलोपार्थमाह समासे सति अवश्यमादीनां अवश्यम्, तुम्, सम्, मांसानां मलोपमिच्छन्ति । म् च अश्च इति समासस्तेन अवश्यमादीनां मकारस्य लोपः । मांसस्याकारस्य लोपः । यद्वा अन्तलोपमिच्छन्तीति पठन्ति । श्लोकश्चात्र ।

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ॥
समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥ १ ॥

लूञ् छेदने। लूयते वा लवितुं योग्यः लाव्यः। अवश्यं लाव्यो अवश्यलाव्यः। भोक्तुं कामो यस्य स भोक्तुकामः। श्रोतुं मनो यस्य स श्रोतुमनाः। सम्यक् प्रकारेण हितं सहितं-संहितम् । संततं-सततम् । मांसस्य पचनं मांसपचनम्। युड्घञोः पचि परे मांसस्याकारो वा लुम्पेत्। मांसस्य पचनं मांसपचनम्। मांसस्य पाकः मांस्पाकः मांसपाकः ।

लुंपेदिति। कृत्प्रत्यये परे अवश्यंशब्दस्य षष्ठीनिर्दिष्टस्येति अन्त्यो मकारो लुंपेत्। तव्य १ अनीय २ य ३ ध्यण् ४ क्यप् ५ एतेषां पंचप्रत्ययानां कृत्यसंज्ञा तथा काममनसोः शब्दयोः परयोः तुम्शब्दस्य प्रत्ययस्य अन्तं मकारं लुंपेत् तुम् षष्ठ्यन्तमव्ययं हि एतत्। एतयोः परयोः सतोः सम इत्यस्य मकारं वा लुंपेत् युट्प्रत्ययसहिते घञ्प्रत्ययसहिते च पचिधातौ परे मांसशब्दस्य अन्त्यं अकारं वा लुंपेत्। विकल्पेन कृत्यसंज्ञायां संमतमाह। तव्यादीनां पाणिनीयानां मते तव्यादीनां कृत्य इति संज्ञा। अवश्यलाव्यमित्यत्र तव्यप्रत्ययपरत्वात् अवश्यंशब्दस्य मकारस्य लोपः। अवश्यलाव्यमिति सिद्धं अवश्यं निश्चयेन लावितुं योग्यो अवश्यलाव्यं तथा भुज तुम् स्वसेचपाञ्जसानां गुणः चोः कुः स्वर० भोक्तुं कामो अभिलाषो यस्य स भोक्तुकामः। तथा श्रु श्रवणे तुम् प्र० गुणः श्रोतुं मनो यस्य स श्रोतुमनाः। अत्रोभयत्रापि काममनसोः परयोः सतोः तुमो मकारलोपः डुधाञ् धारण० दधातेर्हिः क्तादौ परे संपूर्वः क्तक्तवतू इति क्तप्रत्यय० संहित २ समो वाइति विकल्पेन समो मकारलोपः संहितं सहितं तनु विस्तारे क्त० लोपस्त्वनुदात्तानां संपूर्वः संततं सततं अत्रापि ततशब्दे परे विकल्पेन समो मकारलोपः संततं सततं। पच् युट् प्र० युव्वो० स्वर० मांसपूर्वः २ युट्प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्य अकारलोपः। मांसपचनं मांस्पच पुनः पच् घञ् भावे इति घञ् प्र० अवृद्धिः चजोः कगौ घिति स्वर० पाक २ मांसपूर्वः अत्र घञ् प्रत्ययसहिते पचिधातौ परे विकल्पेन मांसशब्दस्याकारलोपः। मांसपाकः मांस्पाकः इति रूपद्वयं केचित्तु मांसशब्दस्य मकारलोपः मासपाकः तथा मास्याकारस्यचोभयोरपि लोपमिच्छंति यथा मास्पाकः इति। सूत्रम्।

ऋदुपधात् क्यप्। ऋकारोपधाद्धातोः क्यप् प्रत्ययो भवति भावकार्ययोः। कृती छेदने। कर्तितुमर्हं कृत्यम्। नितरां कर्तितुं योग्यं निकृत्यं वृश्च्यम्। वृत्यते तत् वृत्यम्। कृपिचृत्योर्न क्यप्। कृपू सामर्थ्ये। कृपो रो लः। कल्प्यम्। चृत दीप्तौ। चर्त्यम्। मृजो वा क्यप्। मृज्यं मार्ग्यम्। ह्रस्वाच्च क्यप्। ह्रस्वान्ताद्धातोर्भावे क्यप् प्रत्ययो भवति। तस्य ग्रहणे तदन्तस्य ग्रहणम्। क्रियते तत्कृत्यम्। कृञः क्यपि वा रिङ् वक्तव्यः तुगभावश्च। कृत्या क्रिया। ङ्विनेकाक्षरोऽप्यादेशस्तदन्तस्यैव वक्तव्यः। गुप्गुहोः क्यप्। गोप्तुं योग्यं गुप्यम्। गूहितुं योग्यम्। वदेः क्यप् भावादौ। वदेर्धातोः क्यप् प्रत्ययो भवति भावादौ। मृषा उद्यते इति मृषोद्यम्। ब्रह्मणा उद्यते या कथा सा ब्रह्मोद्या। ग्रहेः क्यप्। अर्जुनगृह्या सेना। इण् स्तु वृ दृ भृ शास् जुष् खन् एभ्यः क्यप् वाच्यः। तुक्। ईयते इति इत्यः स्तुत्यः वृत्यः। दृङ् आदरे। दृत्यः भृत्यः। शासेरिः। शिष्यः। जुष् प्रीतिसेवनयोः। जुष्यः। खन एत्वं क्यपि वाच्यम्। खन्यते इति खेयम्। भिद्योद्ध्यौ नदे निपात्येते। भिनत्ति कूलमिति भिद्यः। उज्झ उत्सर्गे। उज्झति जलमिति उद्ध्यः नदः। नदे किम्। भेत्ता उज्झिता। कृवृष्योर्वा क्यप्। क्रियते तत् कृत्यम्। कर्तुं योग्यं कार्यम्। वृष वृष्टौ। वृष्यं वर्ष्यम्।

कृत्याः पञ्च समाख्याता घ्यण्क्यपौ भावकर्मणोः ॥
तव्यानीयौ स्वराद्यश्च शब्दशास्त्रविचक्षणैः ॥

॥ इति कृत्यप्रक्रिया ॥

ऋदुपधात् क्यप्। ऋदुपधात् ऋत् ऋकारः उपधा यस्य स ऋदुपधः

तस्मात् ( पं० ए० ) ङसिरत् सवर्णे० क्यप् ( प्र० ए० ) हसेपः ऋकारोपधात् वृत् वर्त्तने इत्यादेर्द्धातोः क्यप् प्रत्ययो भवति प्रवादौ ककारो गुणनिषेधार्थः। कृती छेदने। कृत् क्यप् प्र० य० स्वर० ( प्र० ए० ) अतो अम् निपूर्वः निकृत्यं वृत् वर्त्तने वृद्धं ह्रस्वाच्च क्यप् ह्रस्वादपि धातोः क्यप्प्रत्ययो भवति पित्वात् ह्रस्वस्य पि ति कृति तुगागमः डु कृञ् कृ क्यप् प्र० तुगागमः स्वर० ( प्र० ए० )अतोऽम् कृत्यं एवं वृञ् वरणे वृत्य ष्टुञ् स्तुतौ आदेः ष्णः स्नः स्तु क्यप् प्र० य ह्रस्वस्य पिति तुक् स्तुत्यं। इति कृत्यप्रक्रिया।

अथ स्त्र्यधिकारः। स्त्रियां यजां भावे क्यप्। यजादेर्धातोः स्त्रियां भावे क्यप् प्रत्ययो भवति। यज् व्रज् समज् निषद् निपत् मन् नम् विद् षुञ् शीङ् इण् कृ इषु परिसृप परि-चर अटाट्य आस् चर जागृ हन् एते यजादयः। कित्त्वा-त्संप्रसारणम्। इज्यते सा इज्या स्त्रीत्वादाप्। व्रज्यते सा व्रज्या। अज गतौ क्षेपणे च। समज्यते सा समज्या। का शिबिका। प्रकर्षेण व्रज्यते अस्यामिति प्रव्रज्या। षद्लृ विश-रणगत्यवसादनेषु। निषद्यते सा निषद्या। निपत्या। मन ज्ञाने। मन्यते सा मन्या। नम्या। विद्यते सा विद्या। सुत्याशीङोऽयङ् क्विति ये वक्तव्यः। शय्या। भृत्या। ईयते सा इत्या कृत्या। कृञो यक् वा वाच्यः। अयकि। क्रियते सा क्रिया। इषेश्छान्तादेशो यलोपश्च। इष्यते सा इच्छा। सर-तेर्गुणः। परिसर्या परिचर्या अटाट्या आस्या चर्या। जा-गर्तेर्गुणः। जागर्या हनस्तकारान्तादेशो हिंसायामर्थे। ह-न्यते सा हत्या। हन्तेस्तः। हन्तेर्नकारस्य तकारादेशो भ-वति क्यपि स्त्रियाम्। ब्रह्म हन्यते इति ब्रह्महत्या।

स्त्रियां पुरयजां ( ष० ब० ) भावे ( स० ए० ) यजादेः यज्, अज्, हन्, शीङ्, व्रज,विद, आस्, मन्, चर,भृ, अटाट, निनद, नियत, इत्यादेर्द्धातोःस्त्रीलिंगे भावे नाम्नि च क्यप् प्रत्ययो भवति ककारः संप्रसारणार्थः। यजनं इति क्यप् प्रत्ययः य यजां यवराणां स्वर० स्त्रीत्वादावतः स्त्रियां सवर्णे दीर्घः ( प्र० ए० )

आपः। एवं अज् गतौ क्षेपणे च अज् सम् पूर्वः स्वर० क्यप् स्वर० स्त्रीत्वादाबतः समज्या परिषत्। हन् ब्रह्मन्पूर्वः क्यप् प्र० लोपस्त्वनुदात्तानामिति तुशब्दात् रसाभावेऽपि नकारस्य लोपः ह्रस्वस्यपिति तुक् स्वरही० ब्रह्महत्या ब्रह्मणो ब्राह्मणस्य हननं ब्रह्महत्या। शीङ् शय्या व्रज् व्रज्या, विद् विद्या, षद् निषद्या, आस्या, मन्या, चर्य्या, भृत्या, अटाट्या, कृञो वा रिङ्, कृत्या, क्रिया।

स्त्रियां भावे क्तिः। धातोः स्त्रियां भावे क्तिः प्रत्ययो भवति। क्रियते सा कृतिः। बुद्ध्यते सा बुद्धिः। स्मृङ् चिन्तायाम्। स्मर्यते सा स्मृतिः। पच्यते सा पक्तिः। पचि विस्तारे। पञ्च्यते तत् पङ्क्तिः। संप्रसारणं। उह्यते सा ऊढिः संविद्यते सा संवित्तिः।

क्तिः। क्ति (प्र० ए०) स्रो० धातोः क्तिः प्रत्ययो भवति स्त्रीलिंगे भावे ककारो गुणनिषेधार्थः संप्रसारणार्थश्च। पचि विस्तारे पच् क्ति प्र०ति चोः कुः स्वर० इदितः इति नुम् नश्चा० (प्र० ए०) स्रो० पंचनं पंक्तिः। डुपचष् पाके पक्तिः वह प्रापणे क्ति०ति होढः तथोर्धः ष्टुभिःष्टुः यजामिति संप्रसारणं वस्यउः ढिढोलोपो दीर्घश्चेति ढलोपः उकारस्य ऊकारः (प्र० ए०) स्रो० ऊढिः विद् संपूर्वः क्तिप्र० ति खसेचपा० दस्य तः स्वर० संवित्तिः। शम् क्तिप्र०ति।

शमां दीर्घः। शमादीनां दीर्घो भवति क्तिप्रत्यये परे। शम्यते सा शान्तिः। दम्यते सा दान्तिः। गम्यते सा गतिः। हन्यते सा हतिः। भ्रमु चलने। भ्रम्यते सा भ्रान्तिः। अनुभूयते तत् अनुभवनं अनुभूतिः। विशिष्टा भूतिः विभूतिः प्रभूतिः भवनं भूतिः। शुध शौचे। शोधनं शुद्धिः।

शमांदीर्घः नश्चा० (प्र० ए०) स्रो० शांतिः भ्रांतिः ग्लै संध्यक्षराणामा ग्ला क्ति प्र० ति ल्वाद्योदितः तस्य नः ग्लानिः म्लै म्लानिः भू क्तिप्र० अनुपूर्वः अनुभवनमनुभूतिः (प्र० ए०) स्रो० गमनं गतिः लोपस्त्वनुदात्ततनामिति मलोपः।

ईश्शीङोर्वरक्तिप्रत्ययो नेट् गुणश्च। ईश्शीङोर्वरक्तिप्रत्ययौ स्तो वरप्रत्ययस्य च इट् न। शीङो गुणोऽपि न भवति। संशय्यते तत् संशयनम्। संशीतिः। ईष्टेऽसौ ईश्वरः। ह्री गतौ। ह्रीयते इति ह्रीतिः। जागरणं जागृतिः। नि-

गृह्यते सा निगृहीतिः। कुच संकोचने । कुच संपर्चनकौटिल्यप्रतिष्ठम्भविलेखनेषु। तुदादिः। निकुचितिः । निपठितिः। स्निहू आस्कन्दने। उपस्निहितिः । निपतितिः । विशेषेण ध्रियते सा विधृतिः॥ ग्लाम्लाज्याहाकृत्वरिभ्यः क्तेरर्थे निः प्रत्ययो भवति। ग्लायते सा ग्लानिः ज्योनिः हानिः ञित्वरा संभ्रमे। त्वरतेर्वस्य उत्वं वाच्यम् । त्वर्यते सा तूर्णिः। कृल्वादिभ्यश्च क्तेरर्थे निः प्रत्ययो भवति। ऋत ईर्। कीर्यते सा कीर्णिः लूनिः धूनिः पूर्णिः। संपदादेः क्विप् वा वाच्यः। संपत् संपत्तिः।

शीङो गुणाभावो वक्तव्यः। ईशूशीङोर्वरक्तिप्रत्ययेनेट् गुणश्च न भवति। बुध् अवगमने बुध् तिप्र० तथोर्द्धः झषेजवाः स्वर० बुद्धिः अनुभूतिः इत्यादौ कृत इतीडागमः प्राप्त इट्निषेधार्थः हवल्योर्नेट् इति सूत्रं पठंति किंचित् हकारवकारादेः प्रत्ययस्य क्तिप्रत्ययस्य च इडागमो न भवति इति ग्रहादेस्तु क्तिप्रत्यये इटो न निषेधः। गृहीतिः भणितिः इत्यादि।

कर्तरि क्तिश्च संज्ञायाम्। कर्त्रर्थे धातोः क्तिः प्रत्ययो भवति संज्ञायां विषये। डुकृञ् करणे प्रकुरुते सा प्रकृतिः । धृञ् धारणे। विपूर्वः विशेषेण धरतीति विधृतिः।

कर्त्तरिक्तिश्च। कर्त्तर्य्यपि क्तिः प्रत्ययो भवति तन् क्ति तन्ति संपूर्वः लोपस्त्वनु० संतनोति कुलमिति संततिः एवं कृति प्रपूर्वः प्रकुरुते इति प्रकृतिः प्रधानपुरुषः धृ धारणे विपूर्वः तिप्र० विधृतिः पत्तिः (प्र० ए०) स्त्री०। सूत्रम्।

इक्श्तिपौ धातुनिर्देशे। धातुनिर्देशे वाच्ये सति इक्श्तिपौ प्रत्ययौ भवतः। शकारः शिति चतुर्वत्कार्यार्थः। पच् इत्ययं धातुः पचिः। श्रयतिः पचतिः भवतिः।

इक्श्तिपौधातुनिर्देशे। इक्च श्तिप् च इक्श्तिपौ (प्र०द्वि०) उओ ओ धातुनिर्देश (स० ए०) धातोर्निर्देशो धातोर्नामग्रहणे नामोच्चारणे अर्थे इक् श्तिप् इत्येतौ प्रत्ययौ भवतः। श्तिपः शकारश्चतुर्वत् कार्यार्थः पच्२ एकत्र इप्र० स्वर० (प्र०

ए०) स्त्री० पचिः पचधातुरित्यर्थः द्वितीयश्तिप् प्र०शित्वात् अप्कर्त्तरि स्वर० पचतिः एवं पठिः पठतिः गमिः गच्छतिः करोतिः । सूत्रं ।

षिद्भिदामङ् । षितो धातोर्भिदादेश्च स्त्रियामङ् प्रत्ययो भवति भावादौ । पच्यते सा पचा । मृज्यते सा मृजा । जृषु वयोहानौ । जरादौ ङानुबन्धरहितो अः प्रत्ययो भवति । जीर्यत्यनया सा जरा । इषु इच्छायामिति निर्देशाज्ज्ञापकादिच्छा इत्यादि निपात्यते । इच्छा । इषादेरङर्थे युट् । एषणमिति एषणा । भिद्यते अनया सा भिदा । छिद्यतेऽनया सा छिदा । क्षिपा । गुहू संवरणे । गुहा । मेधृ हिंसायाम् । मेधृ वधमेधासंगमेषु । मेध्यते इति मेधा । कृपा । पीड बाधायाम् । पीडा । बाध पीडायाम् । बाधा क्षपा रात्रिः ।

षिद्भिदादिभ्योऽङ् । षू इत् यस्य स षित् षिद् भिदादयश्च षिद्भिदादयस्तेषां (ष० ब०) स्वर०अङ् (प्र० ए०) हसे पः षितः षकारेतो धातोर्भिदादेश्च धातोः स्त्रीलिंगे अङ् प्रत्ययो भवति भावादौ ङकारो गुणनिषेधार्थः । डुपचष् षित्त्वात् अङ् प्र० स्वर० स्त्रीत्वादाप् पचनं पचा । मृजूष् शुद्धौ मृज् अङ् स्वर० आप् मार्जनं मृजा एवं भेदनं भिदा । छेदनं छिदा जर इत्यत्र ङकारानुबंधरहितो अप्रत्ययो वक्तव्यः । तेन गुणप्राप्तिर्भवति । केचित्तु नोक्तमनित्यमिति न्यायेन कुर्वंति जृष् वयोहानौ जृ अ०गुणः स्वर० स्त्रीत्वादाप् जरा । साधना स्वरांतस्त्रीलिंगे प्रतिपादितास्ति । एवं लेषा रेषा । सूत्रम् ।

गुरोर्हसाव । गुरुमतो हसान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ न क्तिः । ईह चेष्टायाम् । ईह्यते सा ईहा । ऊह्यते सा ऊहा । ईक्ष दर्शनाङ्कनयोः । ईक्ष्यते तत् ईक्षणं ईक्षा । एध्यते सा एधा । गुरोः किम् । भक्तिः। हसात्किम् नीतिः । लिख् रिख् लेखने । लिख्यते तल्लेखनं लेखा । रिख्याते तद्रेकणं रेखा । गुध परिवेष्टने । गुध्यते इति गोधा । धेट् पाने । सुष्टु धीयते इति सुधा । डुधाञ् धारणपोषणयोः । श्रद्धीयते सा श्रद्धा । क्तिरापादिभ्यः । आप्तिः । दीप्यते सा दीप्तिः । राध्यते सा राद्धिः । प्रशास्तिः ।

गुरोर्हसात् । गुरु ( पं० ए० ) ङितिङस्येत्यकारलोपः स्रो० हस ( पं० ए० ) ङसिरत् सवर्णे० पश्चान्नामिनोरः गुरुमतो गुरूपधात् हसांतात् धातोः अकर्त्तरि भावेर्थे अप्रत्ययो भवति उदा० एधृ वृद्धौ एधृ गुरूपधत्वात् हसांतत्वाच्च अप्रत्ययः स्वर० स्त्रीत्वादाप् (प्र०ए०) आपः। एधा। एवं ईहा। ईह वांछायां। ऊह वितर्के। ऊहा। ईक्ष दर्शनांकनयोः। ईक्षा। सूत्रम्।

प्रत्ययान्तात् । प्रत्ययान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ । चिकीर्ष्यते सा चिकीर्षा । आत्मनः कर्तुमिच्छा चिकीर्षा । आत्मनः पुत्रेच्छा वा । पुत्रीयते सा पुत्रीया । अशितुमिच्छा अशनाया । लोलूयते सा लोलूया । अटाट्या । कण्डूञ् गात्रविघर्षणे । कण्डूयते सा कण्डूया । मुमूर्षणं मुमूर्षा ।

ण्यन्तासग्रन्थ्अर्थग्रन्थघट्विद्वादिइषिभ्यः स्त्रियां युर्वाच्यः । डुकृञ् करणे । युवोरनाकौ । कारणा आसना । अर्थ याञ्चाप्रकाशनयोः । अर्थना । ग्रन्थ संदर्भे । ग्रथ्यते । तद्ग्रन्थनमिति ग्रन्थना । उपासनमिति उपासना । श्रथि शैथिल्ये श्रन्थना । घटनमिति घटना । विद्यते वेदनमिति वेदना । वन्द्यते सा वन्दना । एषणमिति एषणा । इञ् अजादिभ्यः । अज गतौ । आजिः । अत सातत्यगमने आतिः ।

इक् कृष्यादिभ्यः भावादौ । कृष्यते सा कृषिः। गिरिः। किरिः। सर्वधातुभ्य इः । कविः । रविः । इति स्त्र्यधिकारप्रक्रिया ।

प्रत्ययांतात् । प्रत्ययांतः ( पं० ए० ) ङसिरत् सवर्णे० सादयः प्रत्यया अंते यस्य स प्रत्ययांतस्तस्मादपि धातोः अप्रत्ययो भवति उदा० कृ इच्छायामात्मनः सः ऋतइर् किर् द्विश्च कुहोश्चुः य्वोर्विहसे इति दीर्घः किला० जलतुं० चिकीर्ष इति जातं ततः प्रत्ययादिति अप्रत्ययः यतः इत्यलोपः स्वर० आवतः स्त्रियां ( प्र० ए० ) आपः । चिकीर्षा । एवं जिहीर्षा बुभूषा पुत्र नाम्नो य ईचास्येति यप्र० तत्सन्नियोगे अकारस्य ईकारः पुत्रीय इति जातं स धातुः ततः प्रत्ययान्तादिति सूत्रेण अप्रत्ययः यतः इत्यलोपः स्वर० आवतः स्त्रियां ( प्र० ए० ) आपः आत्मनः पुत्रेच्छा पुत्रीया एवं पुत्रकाम्या कंडूया इत्यादि । इति स्त्र्यधिकार प्रक्रिया ।

अथ क्त्वादयः प्रत्ययाः । पूर्वकाले क्त्वा । धातोः क्त्वा प्रत्ययो भवति पूर्वकाले सामानकर्तृके धातौ प्रयुज्यमाने । देवदत्तः स्नात्वा भुङ्क्ते । भुक्त्वा व्रजति ।

पूर्वकाले क्त्वा । पूर्वकाले ( स० ए० ) अइए । क्त्वा ( प्र० ए० ) अव्यया० धातोः समानकर्तृके एककर्तृके धातौ क्रियापदे अग्रे प्रयुज्यमाने सति पूर्वकाले प्रथमकाले क्त्वाप्रत्ययो भवति । उदा० ष्णा शौचे आदेः ष्णः स्नः क्त्वा प्र० स्वाइति ( प्र० ए० ) सु अव्य० क्त्वाद्यन्तं चेत्यव्ययसंज्ञा । स्नात्वा भुंक्ते अत्र स्नानभोजनलक्षणक्रियाद्वयमध्ये स्नानक्रियायाः पूर्वकालीनत्वात् प्रत्ययः । भुज् पालनाभ्यवहार० भुज् क्त्वा प्र० एवं कृत्वा दोदत्तिः इति सूत्रेण दा इत्यस्य दात् आदेशः लात्वा, शयित्वा, सुप्त्वा, उक्त्वा, गृहीत्वा, भंक्त्वा । णश् अदर्शने नष्ट्वा नंष्ट्वा हित्वा जग्ध्वा इत्यादि । सूत्रम् ।

न क्त्वा सेट् । सेट् क्त्वा किन्न भवति । वर्तित्वा शयित्वा भवित्वा । सेट् किम् । कृत्वा । रलो व्युपधाद्धलादेः संश्च । उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । विद ज्ञाने । विदित्वा-वेदित्वा लिखित्वा-द्युतित्वा । व्युपधात्किम् । वर्तित्वा । रलः किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा । मृड्मृद्गुधुगुह्कुष्क्लिश्वद्वस्मुष्ग्रहिभ्यः । सेट् किद् भवति । मृड सुखने । मृडित्वा । मृद क्षोदे । मृदित्वा । गुधू रोचने । गुधू रोषे । गुधित्वा । गुह रोगे । गुहू संवरणे । गुहित्वा । कुष् निष्कर्षे । कुषित्वा । क्लिश् विबाधे । क्लिशित्वा । वद व्यक्तायां वाचि । उदित्वा । वस् निवासे । उषित्वा । मुषित्वा । गृहीत्वा । नोपधात् थपान्ताद्वा कित् । नकारोपधात् थपान्ताद्धातोः सेट् क्त्वा वा किद्भवति । ग्रन्थ संदर्भे । नो लोपः । ग्रथित्वा-ग्रन्थित्वा । गुम्फ् ग्रन्थने । गुफित्वा-गुम्फित्वा इत्यादि । अलंखल्वोः प्रतिषेधे क्त्वा । प्रतिषेधार्थयोरलंखलुशब्दयोः पूर्वपदयोः सतोः

पूर्वकालं विनापि क्त्वा प्रत्ययो भवति । अत्रालंखलुशब्दौ निषेधार्थौ तयोरुपपदत्वात्। अलं भुक्त्वा। न भोक्तव्यम् । भोजनं मा कुरु इत्यर्थः । खलु भुक्त्वा । न भोक्तव्यम् ।

न [प्र० ए०] अव्य० क्त्वा अव्य० सेट् [प्र० ए०] हसेपः कित् वा [प्र० ए०] अव्य० इट्सहितः क्त्वा प्रत्ययो विकल्पेन कित्संज्ञको भवति कित्त्वपक्षे गुणनिषेधः कित्त्वाभावे गुणः विद् ज्ञाने विद् क्त्वाप्रत्य० कृतइतीडागमः एकत्र कित्त्वान्न गुणः द्वितीये कित्त्वाभावादुपधाया लघोरिति गुणः स्वर० [प्र० ए०] अव्य० विदित्वा, वेदित्वा, वृतित्वा, वर्तित्वा, अलंखल्वोः अलं, खलु, एतयोः पूर्वपदयोः सतोः पूर्वकालं विनापि निषेधार्थे धातोः क्त्वाप्रत्ययो भवति। भुज् क्त्वाप्र० चोः कुः खसेचपाः अलंपूर्वः स्वर० [प्र० ए०] अव्य० अलं भुक्त्वा भोजनेनालं भोजनं माकुर्वित्यर्थः। वच् परिभाषणे। वच् क्त्वा० यजां यवराणामिति संप्रसारणं चोः कुः स्वर० खलुपूर्वः सवर्णे० खलूक्त्वा वचनेन अलंभावदेत्यर्थः । सूत्रम् ।

उदितः क्त्वा वेट् । उदितो धातोः परस्य क्त्वा प्रत्ययस्य वा इडागमो भवति । एषित्वा-इष्ट्वा । भ्रमु चलने । भ्रमित्वा-भ्रान्त्वा । अदो जग्धुः । जग्ध्वा ।

उदित् [पं० ए०] स्वर० स्तो० क्त्वा [ष० ए०] अव्यय० पद्वा धातो धातोर्लोपः स्वर० वा [प्र० ए०] अव्य० इट् [प्र० ए०] हसेपः उत्उकारः इत् यस्य स उदित् तस्मात् उदितो धातोः परस्य क्त्वाप्रत्ययस्य वा इडागमो भवति। इष् इच्छायां इष् क्त्वा प्र० क्तो वेडिति एकत्र इडागमः स्वर० उपधाया लघोरितिगुणः। इडभावे कित्त्वान्न गुणः ष्टुभिःष्टुः [प्र० ए०] अव्य० एषित्वा इष्ट्वा । सूत्रम् ।

समासे क्यप् । समासे सति पूर्वकाले क्यप् प्रत्ययो भवति तत्कर्तृके धातौ प्रयुज्यमाने । ह्रस्वस्य पिति कृति तुक् । डुभृञ् धारणपोषणयोः । संभृत्वा करोतीति संभृत्यकरोति । णमु प्रह्वत्वे शब्दे च । प्रकर्षेण कायवाङ्मनोभिर्नत्वा इति ।

अजित्वा शात्रवान्सर्वानकृत्वा विमलं यशः ॥
अदत्वा वित्तमर्थिभ्यः कथं जीवन्ति भूभृतः ॥

क्यपि ञेर्गुणश्च । क्यपि लघुपूर्वस्य ञेरयादेशोऽपि वाच्यः। परिणमयित्वा इति परिणमय्य भुङ्क्ते। विगमय्य। निगणय्य।

अलघुपूर्वस्य न । तेन ञेर्लोपो वाच्यः । प्रतार्य । संप्रधारयित्वा इति संप्रधार्य विचार्य करोति । आप्लृ व्याप्तौ । आप्नोतेर्वा । प्रापय्य-प्राप्य । दादीनां क्यपि इत्वाभावो वाच्यः । क्यपि 'स्थामी' इति ईकारो न भवति । दो अवखण्डने । प्रदाय प्रसाय प्रमाय प्रस्थाय । उप समीपे स्थित्वा इति उपस्थाय । पिबतेर्वा-प्रपाय प्रपीय । लोपस्त्वनुदात्ततनाम् । अमस्य क्यपि वा लोपः प्रकर्षेण नत्वा इति प्रणम्य प्रणत्य । आसमन्तात् ग्रामे आगम्य आगत्य । विपूर्वस्य दधातेः करोतेरर्थे क्यप् । विधाय प्रहाय । तत्कालेऽपि क्यप् दृश्यते । नेत्रे निमील्य हसति । मील संमीलने । मील संगमे । उभयपदी । अक्षिणी संमीलित्वा इति अक्षिणी संमील्य हसति । चक्षुषी संमील्य हसति । मुखं व्यादत्वा इति मुखं व्यादाय स्वपिति ।

समास [ स० ए० ] अइए० क्यप् [ प्र० ए० ] हसेपः समासे सति उपसर्गपूर्वकत्वे सति धातोः पूर्वकाले क्यप्प्रत्ययो भवति स एव कर्ता यस्य स तत्कर्तृकः तस्मिन् तत्कर्तृके एककर्तृके धातौ प्रयुज्यमाने सति उदा० डुभृञ् भृ क्यप्प्र० य० ह्रस्वस्य पिति कृति तुक्पूर्वः स्वर० [ प्र० ए० ] अव्य० संभृत्य मिलित्वा सं सम्यक् प्रकारेण भृत्वा वा करोति अत्र समुपसर्गेण समासः अत्र संभारकरणक्रिययोः एककर्ता ततः संभारक्रियायाः पूर्वकालीनत्वात्क्यप् प्रत्ययः । णम्प्रह्वीभावे आदेः ष्णः स्नः नम् प्रपूर्वः क्यप्प्र० मादेश्च तथा तौ इति नस्य णः स्वर० [ प्र० ए० ] अव्य० अत्र प्रकर्षेण नत्वा प्रणम्येति समासे क्यप्प्र० देवदत्तः प्रणम्य गच्छति अत्र प्रणामगमनरूपयोर्द्वयोः क्रिययोः एक एव कर्ता यः प्रणंता स एव गंता इत्येककर्तृत्वं ततः प्रणामस्य पूर्वकालीनत्वात् क्यप्प्र० अनञ् पूर्वे इति नञ्पूर्वकत्वे क्यप्प्रत्ययो न भवति इत्येके वदन्ति यथा कृ नञ्पूर्वः क्त्वा प्र० नाइति सूत्रेण तस्य आकारादेशः अकृत्वा गच्छति अत्र नञ्पूर्वकत्वात्क्यप्प्रत्ययो नायातः किंतु क्त्वाप्रत्यय एवायातः क्यपि ञेर्गुणः क्यप्प्रत्यये ञिप्रत्ययस्य गुणो भवति णम् परिपूर्वः ञिप्र० समासे क्यप् इति क्यप् प्र० स्वर० परिणमि य इति स्थिते क्यपिञेर्गुणः क्वचित्स्वरवद्यकारः एअय् स्वर० [ प्र० ए० ] अव्य० परिणमय्य भुंक्ते परितः सामस्त्येन नमयित्वा परिणमय्य पूर्वभुक्तं परिपाकं प्राप्य भुंक्ते इत्यर्थः । एवं उन्नमय्य, आकलय्य,

दत्कालत्वेऽपि द्वयोः क्रिययोः समकालत्वेपि क्यप्प्रत्ययो दृश्यते मील मीलने। संपूर्वात्क्यप्प्र० स्वर० [ प्र० ए० ] अव्य० नेत्रे संमील्य हसति समकालमेव नेत्रे संमीलति हसति च अत्र संमीलनहसनयोः समकालीनत्वात् पूर्वकालं विनापि तत्कालेऽपि क्यप्प्र० डुदाञ् दा विआङ्पूर्वः क्यप् प्रत्ययः इयंस्वरे० स्वर० विआङ्पूर्वको दाधातुर्मुखप्रसारणार्थस्तेन मुखं व्यादाय प्रसार्य स्वपिति अत्रापि मुखप्रसारणस्वप्नयोः समकालीनत्वात् समानकाले क्य० क्य० क्वचिद्भिन्नकर्तृकेपि क्यप्रत्ययो दृश्यते मत्प्रसूतिमनारभ्य प्रसूतिं त्वां शशाप सेति अवधार्य एवमेव सांद्रसंतमसमित्यादि। सूत्रम्।

पौनःपुन्ये णमुपदं द्विश्च। समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनःपुन्यार्थे धातोर्णम् प्रत्ययो भवति णमन्तस्य पदस्य द्विर्वचनं भवति। आतो युक्। पीत्वा पीत्वा इति पायंपायं गच्छति। आदरे वीप्सायां द्विर्भावः। भुक्त्वा भुक्त्वा इति भोजंभोजं व्रजति। स्मृत्वा स्मृत्वा इति स्मारंस्मारं नमति शिवम्। कथमादिषु स्वार्थे कृञो णम्। कथं इत्थं अन्यथा एवं एतेषु प्रयुज्यमानेषु स्वार्थे कृञो णम् प्रत्ययो भवति। कथंकारं इत्थंकारं अन्यथाकारं एवंकारं पठति। एवं पठतीत्यर्थः। समूलाकृतजीवेषु हन्कृञ्ग्रहां णम् वाच्यः, स्वार्थे तेषामनुप्रयोगश्च। समूलघातं हन्ति अकृतकारं करोति। जीवं गृहीत्वा इति जीवग्राहं गृह्णाति इत्यादि।

पुनःपुनर्भवतीति पौनःपुन्यं तस्मिन् ( स० ए० ) अइए० णम् ( प्र० ए० ) हसेपः पद ( प्र० ए० ) अतो अम् द्विः ( प्र० ए० ) अव्य० स्व० ( प्र० ए० ) पौनःपुन्ये वारंवारार्थे धातोः पूर्वकाले णम्प्रत्ययो भवति तस्य च णम्सहितस्य पदस्य द्वित्वं भवति समानकर्तृकेषु धातुषु प्रयुज्यमानेषु सत्सु पा पाने पा णम्प्र० अम् आतोयुक् स्वर० मोनु० द्वित्वं ( प्र० ए० ) अव्य० पायं पायं गच्छति पीत्वा पीत्वा यातीत्यर्थः। भुज् णम् अम् लघूपधत्वाद्गुणः स्वर० द्वित्वं ( प्र० ए० ) अव्य० भोजं भोजं व्रजति। पुनः पुनर्भुक्त्वा यातीत्यर्थः। एवं कारंकारं स्मारं स्मारं द्विश्चेति चकारात् समूलघातं हंति जीवग्राहं गृह्णाति केशग्राहं युध्यति इत्यादिष्वपि णम् कथमादिषु पूर्वपदेषु सत्सु स्वार्थे कथमादीनामेवार्थे कृञ् धातोः णम् प्रत्ययो भवति णित्त्वाद्वृद्धिः कृ कथं पूर्वः णम् प्र० अम् धातोर्नामिन इति वृद्धिः स्वर० ( प्र० ए०) अव्य० कथंकारं कथमित्यर्थः। एवं इत्थंकारं इत्थमित्यर्थः।

भुवो भावे क्यप्। नाम्नि उपपदे भुवो भावे क्यप् प्रत्ययो भवति। ब्रह्मणो भावः ब्रह्मभूयम्। स्त्यै ष्ट्यै शब्दसंघातयोः। स्त्यायतेर्ड्रट्। डित्त्वाट्टिलोपः। संयोगान्तस्य लोपः। टित्त्वादीप्। स्त्यायति समूहं करोति सा स्त्री। लक्ष दर्शनाशङ्कनयोः।

भुवो भावेक्यप्। भुवो भूधातोर्भावे शब्दप्रवृत्तिनिमित्ते क्यप्प्रत्ययो भवति। कित्त्वाद्गुणोन। भू क्यप् प्र० य ब्रह्मपूर्वः (प्र० ए०) अतो अम् ब्रह्मभूयं ब्रह्मणो भावं ब्रह्मत्वं गतः आप्त इत्यर्थः। एवं देवंभूयं देवत्वम्। स्त्यायतेः इति स्त्यायतेर्धातोः स्त्रीत्वे वाच्ये ड्रट् प्रत्ययो भवति। डकारः ष्टिलोपार्थः। ष्ट्यैस्त्यै धातू शब्दसंघातयोः शब्दार्थे समूहार्थे च स्त्यै ड्रट् प्र०र डित्त्वाट्टिलोपः संयोगांतस्येति यलोपः स्वर० ङ्कित इतीप् (प्र० ए०) हलेपः स्त्री।

लक्षतेरी मुट्च। लक्षतेर्धातोरीः प्रत्ययो भवति तस्य ईप्रत्ययस्य मुडागमश्च। लक्ष्यते पुमान् अनया सा लक्ष्मीः।

लक्षेरीर्मुट्च। लक्षेर्धातोः ईप्रत्ययो भवति तस्य च मुडागमः। लक्ष दर्शनांकनयोः लक्ष ईप् प्र० मुट् टित्त्वादादौ स्वर० (प्र० ए०) सो० लक्षते इति लक्ष्मीः। अत्र ईवंतत्वाभावात् सेर्लोपो नास्ति।

वर्णात्कारः। वर्णमात्रात्कारः प्रत्ययो भवति। क इति वर्णः ककारः। व इति वर्णो वकारः। अ इति वर्णः अकारः। वर्णसमुदायादपि कारो दृश्यते। अहंकारः ओंकारः टकारः पकारः तकारः इत्यादि।

वर्णात्कारः। वर्णनिर्देशे वाच्ये सति वर्णात् अकारादिक्षकारांतात् अक्षरात् अग्रे कारप्रत्ययो भवति। क अग्रे कार प्र० ककारः, खकारः, गकारः, अकारः, इकारः, अत्र बहुलमित्यनुवर्त्तते। तेन अ, इ, उ, ऋ, ऌ, ह, य, र, ल, व, इत्यादौ कारप्रत्ययः। वर्णनिर्देशे इति किं यथा अः कृष्णः इः कामः, को ब्रह्मा, खमाकाशं इत्यादौ न इत्यादि।

रादिफो वा। र इति वर्णः रेफः-रकारः।

रकारादीनि नामानि श्रुत्वा तत्रास रावणः।<br>
रत्नानि च रमण्यश्च संत्रासं जनयन्ति मे॥<br>
रकारादीनि नामानि शृण्वतो मम पार्वति।<br>
मनः प्रसन्नतामेति रामनामाभिशङ्कया॥

रादिफो वा। रात् राक्षरात् वा विकल्पेन इफप्रत्ययो भवति। र अग्रे इफ प्र० अइ ए रेफः ( प्र० ए० ) स्रो० पक्षे कार प्र० रकार इति प्रयोगे संमतिमाह रकारादीनि श्लोकः हे पार्वति रकारादीनि रकारः आदिर्येषां तानि नामानि शृण्वतः सतो मम मनः प्रसन्नतां नैर्मल्यं सानंदत्वं एति प्राप्नोति कया रामनामाभिशंकया रकारादीनि नामान्युच्चरन् कदाचिद्रामनामाप्युच्चरेदित्याशंकया इत्याकांक्षया। अथोपसंहारसूत्रमाह।

लोकाच्छेषस्य सिद्धिर्यथा मातरादेः। अस्य सारस्वतव्याकरणस्य ये शेषप्रयोगास्तेषां लोकात् अन्यव्याकरणात्सिद्धिर्भवति यथा मातरादेः। इत्यादि प्रयोगानुसारेण बोद्धव्यम्।

लोकाच्छेषस्य सिद्धिः। लोक ( पं० ए० ) ङसिरत् सवर्णे० शेष ( ष०ए० ) ङस्स्य सिद्धिः ( प्र० ए० ) स्रो० उक्तादन्यः शेषस्तस्य शेषस्य अत्र व्याकरणेऽनुक्तस्य सिद्धिः साधनं लोकादन्यव्याकरणात् ज्ञातव्या। यथा मातरपितरौ इत्यादीनां शब्दानां सिद्धिर्लोकात् ज्ञेया। शास्त्रांते च मंगलाचरणं युज्यते अतोऽत्र मातृपित्रोर्नामग्रहणेन मंगलमप्यस्ति। अथ कविः स्वनामगर्भमलंकारश्लोकमाह।

स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः॥
स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम्॥

स्वरूपांतइति। स मस्करी मस्करो वंशदंडो अस्त्यस्येति मस्करी सांन्यासिकः प्रक्रियां शुभां ऋज्वीं चक्रे कृतवान् कथंभूतां प्रक्रियां चतुरोचितां चतुराणां सुबुद्धीनां पुरुषाणां उचिता योग्या तां० स कः यत्र यस्मिन् मस्करिणि अनुभूत्यादिः अनुभूतिः इति आदौ यस्य स अनुभूत्यादिः तथा स्वरूपांतः स्वरूप इति शब्दो अंते यस्य स अर्थात् अनुभूतिस्वरूप इति वाचकः शब्द सार्थकः अनुभूतिर्ज्ञानमेव स्वरूपं यस्येत्यर्थसहितो अभूत् इत्यनेन अनुभूतिस्वरूपनामा सांन्यासिकः इमां प्रक्रियां शुभां ऋज्वीं सरलां चक्रे शुभां इत्यनेन स्वकपोलकल्पनानिरासः कृतः। अथ श्रावकश्रोतॄणामभीष्टसिद्धेष्टदेवताशिषमाह।

अवताद्वो हयग्रीवः कमलावर ईश्वरः।
सुरासुरनराकारमधुपापीतपत्कजः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभूतिस्वरूपाचार्यविरचितायां कृदन्तप्रक्रियायां क्त्वादिप्रत्ययप्रक्रिया समाप्ता॥
॥ समाप्ता चेयं तृतीया वृत्तिः॥ ॥ ॥ ॥





अवतादिति । हयग्रीवः ईश्वरो वो युष्मान् शिष्यान् अवतात् रक्षतु हयस्य ग्रीवा इव ग्रीवा यस्य स० अर्थात् पुरुषशरीरः अश्वमुखश्चतुर्विंशत्यवतार-मध्यस्थ एको भगवतो अवतारः । उक्तंच भागवते पंचमस्कंधे अष्टादशाध्याये षष्ठे काव्ये । वेदान् युगांते तमसा तिरस्कृतान् रसातलाद्यो नृतुरंगविग्रहः ॥ प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्ते वितथेहिताय ॥ २ ॥ सांप्रतं तु तां हयग्रीवमूर्त्तिं भद्राख्यखंडे धर्मपुत्रो राजा भद्रश्रवाः पूजयन्नस्ति इति पुराणोक्तिः । कथंभूतो हयग्रीवः कमलाकरः कमलां लक्ष्मीं करोतीति यद्वा कमलाया लक्ष्म्या आकरः पुनः कथंभूतः ईश्वरः इष्टे ऐश्वर्यं करोतीति ईश्वरः पुनः कथंभूतः सुरासुर० के पानीये जाते कजे पादावेव कजे कमले पत्कजे सुराश्च असुराश्च नराश्च सुरासुरनरास्ते एवाकारो येषां ईदृशा ये मधुपा भ्रमरास्तैः आपीते अत्यादरेणावलोकिते पत्कजे चरणकमले यस्य स इति कृत्प्रक्रियाव्याख्या ॥ सुबोधिकायां कृपायां सूरिश्रीचंद्रकीर्त्तिभिः॥कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥१॥ इति श्रीमन्नागपूरीयतपागच्छाधिराज-भट्टारकश्रीचंद्रकीर्त्तिसूरिविरचिता श्रीसारस्वतव्याकरणस्य दीपिका संपूर्णा ॥ इति सारस्वतीप्रक्रियादीपिका ॥ तीर्थे वीरजिनेश्वरस्य विदिते श्रीकोटिकाख्ये गणे श्रीमच्चंद्रकुले वटोरुहबृहद्गच्छे परिम्लान्विते ॥ श्रीमन्नागपुरीयकाव्हयतया प्राप्तावदातेऽधुनास्फूर्जद्भूरिगुणान्विता गणधरश्रेणी सदा राजते ॥ २ ॥ वर्षे वेदमुनीन्द्रशंकरमिते ११७४ श्रीदेवसूरिप्रभुज्जज्ञेभूत्तदनुप्रसिद्धमहिमापद्मप्रभःसूरिराट् ॥ तत्पट्टे प्रथितः प्रसन्नशशभृत्सूरिः सतामादिमः सूरींद्रास्तदनंतरं गुणसमुद्राव्हा बभूवुर्बुधाः ॥ तत्पट्टे जयशेखराख्यसुगुरुः श्रीवज्रसेनस्ततस्तत्पट्टे गुरुहेमपूर्वतिलकः शुद्धक्रियाद्योतकः ॥ तत्पट्टे प्रभुरत्नशेखरगुरुः सूरीश्वराणां वरस्तत्पट्टांबुधिपूर्णचंद्रमनसः श्रीपूर्णचंद्रः प्रभुः ॥ ४ ॥ तत्पट्टेजनि हेमहंससुगुरुः सर्वत्र जाग्रद्यशाः आचार्या अपि रत्नसागरवरास्तत्पट्टपद्मार्य्यमा ॥ श्रीमान् हेमसमुद्रसूरिरभवच्छ्रीहेमरत्नस्ततस्तत्पट्टे प्रभुसोमरत्नगुरवः सूरीश्वराः सद्गुणाः ॥ ५ ॥ तत्पट्टोदयशैलहेलि रमलश्रीजेसवालान्वयाऽलंकारः कलिकालदर्पदमनः श्रीराजरत्नप्रभुः ॥ तत्पट्टे जिनविश्ववादिनि वहागच्छाधिपाः संप्रति सूरिश्रीप्रभुचंद्रगुरवोगांभीर्यधैर्याश्रयाः ॥ ६ ॥ तैरियं पद्मचंद्राख्योपाध्यायाभ्यर्थनात्कृता ॥ शुभा सुबोधिकानाम्नी श्रीसारस्वतदीपिका ॥७॥ श्रीचंद्रकीर्त्तिसूरींद्रपादांभोजमधुव्रतः ॥ हर्षकीर्त्तिरिमां टीकां प्रथमादर्शकेऽलिखत् ॥ ॥ ८ ॥ अज्ञानध्वांतविध्वंसविधाने दीपिकानिभा ॥ दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरं॥ ९ ॥ स्वल्पस्य सिद्धस्य सुबोधिकस्य सारस्वतव्याकरणस्य टीकां ॥ सुबोधिकाख्यां रचयांचकार सूरीश्वरःश्रीप्रभुचंद्रकीर्त्तिः ॥१०॥ समाप्ता चेयं चंद्रकीर्त्तिनाम्नी श्रीसारस्वतव्याकरणस्य टीका ॥ ॥ ॥ ॥ ॥